अर्हम्

श्रीविजय स्मरणार्थे नमः ।

श्रीपद्मसागरगणिरचितं–

# जगद्गुरुकाव्यम् ।

---

नत्वा श्रीवलिज जिन जयकर श्रीपार्श्वनाथ पुन-
र्ध्यात्वा श्रीत्रिपुरा त्रिलोकमहिता स्मृ॰॰ऋद्धिसिद्धिश्रियम ।
काव्य वक्ति जगद्गुरो शिशुरसौ भावाऽवनिम्रस्त्रिधा
हीराह्वस्मृति पद्मसागरकवि सौराष्ट्रराष्ट्रस्थित ॥ १ ॥

जम्बूद्वीपभुवो विभूषणतरे क्षेत्रे वरे भारते
स्वर्णस्थालतलस्य दीपक इवोद्यन्मोदकक्षोदके ।
अस्ति स्वस्तिगृह द्विपोडशसहस्रोद्दामदेशोल्वण
खण्ड मध्यममुत्तमैर्नरवरैर्भोज्य सदाऽऽज्यान्नवत् ॥ २ ॥

देशस्तत्र च गूर्जरोऽजरजन स्वर्वत् सुवर्णान्वितो
गीर्वाणाऽचलवद् गुणादरकर काम धनुर्द्धारिवत् ।
साध्वीसाधुविशेपसंयमसुरत सद्रत्नवत्श्रीयुत
शश्वत् केशववद्विचित्ररचन शृङ्गारवद्राजते ॥ ३ ॥

श्रीप्रह्लादननामक पुरवर तत्राऽस्ति यत्रधते
श्रीप्रह्लादनपार्श्वनाथसदन चक्रेशसैन्य यथा ।
सद्रत्नाऽक्षतपूर्णनिधिक चित्राङ्गमातङ्गजो-
दाराश्व च पुराहिताङ्गसचिव वीराधिवीराश्रितम ॥ ४ ॥

कुरस्तत्र वणिक्कलासु निपुण सम्यक्त्वपूताऽभव-
दोकशान्वयभूषण रनवता मध्ये प्रतिष्ठा गत ।
जिग्ये येन सितोदर पटुधनैर्वर्गत्रयीसाधनै-
र्नोचेदेप तत कथ नरपुरे नामाऽवशिष्टोऽधुना ? ॥ ५ ॥

नार्था तस्य पतिव्रता कुलवधूर्धर्मादिता सुन्दरी
गेह भूपयतीव कल्पलतिका मरु सुपर्वात्सवम ।

यस्या शीलगुणेन नागरजनैः सीता स्मृतिं प्रापिता
शृङ्गारे कमला धिया भगवती रूपेण कामाङ्गना ॥ ६ ॥
सा स्वप्ने विपर्ययोत्थित निजपतिग्रस्त मयूरी यथा
वार्वाहार्पितमम्बु साकरहिताऽप्यास्वादयन्ती सती ।
सिंहस्वप्नमवाप्य पुत्रमनघं गर्भेऽवतीर्णं निजे
मन प्रस्तिदोहदहितफलप्राप्त स्वभर्तुर्गिरा ॥ ७ ॥
साऽसूतान्यदिने सुत दिनकरं पूर्वेव तर्जस्विनं
हंसी हंसमिवेन्दिरेव मदनं स्कन्दं पुनः पार्वती ।
यज्जन्मन्यभवन प्रसन्नवदना काष्ठा गृहान्तःस्थिता-
दीपा कान्तिविलापकार्भकभया मन्दा पतद्वृत्तय ॥ ८ ॥
वप्रा तत्र ददर्श बालमनघं विज्ञो यथा द्वराट्
जात तीर्थकरं सुलक्षणतया चक्रे विचार त्विमम् ।
दुष्प्राप्यावन्भणे एष भविता हीरो यथाऽमूल्यक-
स्तद्धीरेत्यभिधानमस्त्विति कुटुम्बाग्रेऽवदन्मादत ॥ ९ ॥
हीर कुरगृहाङ्गणेऽथ ववृधे कल्पद्रुमस्ताविषे
विन्ध्याद्राविव कुञ्जरो मणिगण श्रीरोहणे पर्वते ।
चन्द्र पक्ष इवाऽमले च कमलं काश शुचावम्बुद
कन्दोऽम्भोधितले प्रवालज इवाऽर्हद्धाम्नि धर्मक्रम ॥ १० ॥
हीरोऽध्यापकहृद्रतानि सकलान्यावत्तवान् बुद्धित
कुरस्तस्य ददौ च काञ्चनचयं हीराङ्कभारप्रमम् ।
विद्याप्राप्तिरिह त्रिधा हि विनयैरर्थं पुनर्विद्यया
जानन्नीतिमिमा विचारचतुर सर्वोचितार्थप्रद ॥ ११ ॥
हीरो द्वादशवार्षिकोऽभवदथ स्पष्टैर्गुणैर्दक्षतौ-
दार्याद्यैर्गुणवत्सु भारतभुवि प्राप्तैकरेख परम् ।
लोकाना नयनेषु रूपकमलारेखा अनेका ददौ
बुद्ध्यानन्त्यमशेषरोचकतया चित्तेषु चाश्चर्यत ॥ १२ ॥
अन्येद्युर्नगरान्निजान् स्वभगिनीगेहे समाजग्मिवान्
श्रीमद्गूर्जरपत्तने कविजनै स्व स्वण्डताख्यापिते ।
हीरस्तत्र मुनीश्वरान् विजयतो दानाऽभिधानान् मुदा

प्राप्त साधुगृहस्थितास्तपगणस्वामित्वमाप्तान् स्फुटम् ॥ १३ ॥
तेषां वाचमनेकवाङ्मयरसक्लिन्ना विरक्तात्मना
वैराग्याऽमृतवार्द्धिनी श्रुतिपुटद्वारा हृदि न्यस्तवान् ।
हीरो हीरकवद्भवाऽधिकरणैर्लोहैरभेद्यस्तत
शुद्धाचारतपोमहोद्यतमतिर्जात सुजाताङ्गवत् ॥ १४ ॥
वैराग्य भवरङ्गरूक्षहृदयाद्याविश्चकार स्वसु-
र्गत्वा धाम्नि पुरस्तथाविधवच श्रेण्याऽतिपुण्यास्थया ।
मृत्खण्डादिव काञ्चन रचनया स्वर्णभम शुद्धया
भूमध्यादिव वा जल खननकृच्छक्त्या करप्राप्तया ॥ १५ ॥
तं दीक्षापरमानस स्वसृवरा ज्ञात्वा कुटुम्ब निज
तत्राकार्य पितु पुरोऽवददिद मुक्ताश्रुभूभेदिनी ।
भ्राता मे भवभीरुरेष भवता पुत्रस्तपस्याग्रही
वार्यो वर्यधिया कुलाचल इवास्त्येको भवन्मन्दिरे ॥ १६ ॥
पुत्रीवाक्यमिद निशम्य जनक स्माख्याति हीर सुत
वत्स ! त्व मम जीवन मम गृहस्तम्भ समर्थ पुन ।
आशा ते महती ममास्ति मम तद्वृद्धस्थिति पालय
त्व मद्देहधुर वहाऽहमधुना धर्म करोमि स्थिर ॥ १७ ॥
श्रुत्वा वाक्यमिद पितु समवदद्धीर पवित्राशय
ससारो यमवन्ममाऽतिभयकृद्धात पित ! साम्प्रतम् ।
तत्त्व तारय मसृते सुजनको यत् सौख्यद सन्तत-

कृत्वा पञ्चमहाव्रतानि समितिप्रोद्दामगुप्त्यङ्किता-
न्येष प्रोद्गतमेरुमानवमहीसाम्य क्षमातोऽभजत् ।
साधूना विविधैर्गुणैर्धुरि तप कृत्येऽभवद्धैर्यवन्
शास्त्रेष्वध्ययने च देवगुरुवद्दर्भाग्रबुद्धिर्मुनि ॥ २१ ॥
विद्यासागरवाचकस्य गुणिभि शिष्यैवराधीस्मम
सार्द्ध सद्गतिधर्मसागरवर श्रीमद्गुरोरग्रत ।
सम्यग व्याकरण कवित्वरचनाग्रन्थास्तथाऽर्हन्मत-
न्याय कर्मविचारसग्रहणिका स्माध्यैत हीरा मुनि ॥२२॥
सर्वार्हन्मतशास्त्रपारमगमच्छ्रीहीरहर्षो मुनि-
र्जाताऽन्यागमदर्शनात्सुकमना श्रीमद्गुरानातिविन् ।
सार्द्ध धर्ममुनीश्वरेरिति गिरा विज्ञप्तिकामातनान्
स्वामिन् ! मत्परशासनागमवचायुक्तिप्रकाश मन ॥ २३ ॥
श्रुत्वत्याह गुरुस्ततो व्रज मुने ! श्रीदक्षिणाशा प्रति
योग्य धर्ममुनि सहायमधुनैवादाय रामो यथा ।
श्रीमल्लक्ष्मणमन्यशास्त्रपठन तत्रान्यपार्श्वे कुरु
स्पष्टा स्वागमयुक्तयो हि धनिना तत्रैव तद्वादिन ॥ २४ ॥
लब्ध्वाज्ञामिति सद्गुरो कविवर श्रीहीरहर्षो मुनि
सार्द्ध धर्ममुनीश्वरेण चलित श्रीदक्षिणाशा प्रति ।
गत्वा देवगिरौ सदाऽऽस्तिककृतद्रव्यव्ययाद्धृतो
मण्याद्यागमयुक्तिपाठमनघ प्रारब्धवानादृत ॥ २५ ॥
ग्रन्था न्यायविदा विवेचनकृता वैशेषिकाणा पुन-
र्भाट्टस्याऽपि तथागतस्य कपिलप्राभाकराणा पुन ।
मीमासाद्वयवादिनामपि परब्रह्माद्वयोत्सविदा
भट्टात्पण्डितचक्रिणोऽत्र पठिता श्रीहीरहर्षेण ते ॥ २६ ॥
सार्द्ध धर्ममुनीश्वरेण सकलग्रन्थार्थपारङ्गमी
भूत्वा श्रीगुरुसन्निधौ पुनरगात्तत्स्तोत्रपाठे पटु ।
शिष्याणा हि गुणार्थिना चिरतर दूरे गुरोर्न स्थिति
सिद्धेऽर्थे तु गुरुर्न शिष्यमनघ दूरे व्यवस्थापयेत् ॥ २७ ॥
योग्यत्व गुरुरेतयोर्निजधिया विज्ञाय शास्त्रश्रियो-

अक्के वाचकसञ्ज्ञित पदमुदारानेकसभ्याग्रहात् ।
शिष्य योग्यमवाप्य चेन्न पदवीमारोपयेद्यो गुरु
स स्यात्प्राज्यभवभ्रमी निजगुणध्वसी गुणोपेक्षणात् ॥ २८ ॥
गच्छैश्वर्यमथ प्रदातुमनयोर्मध्ये विशेष गुरु-
र्जिज्ञासुर्जिनशासनामरमसावाराधयत् साधनात् ।
मन्त्रस्योत्तमगच्छनाथजपनार्हस्याघविध्वासिन
षण्मासी तपसा विमुक्तवचनव्यापारदीप्तिस्पृशा ॥ २९ ॥
ध्यानाकृष्टतया ततोऽमरवर सद्य समाजग्मिवा-
न्नत्वा पादपयोरुह गणपतेराख्यद्विशिष्ट गुणै ।
श्रीहीर गुरुपङ्क्तिभूषणकर राजप्रबोधोदित
व्यक्त भाविनमत्र सूरिपदवीयोग्ये तपाख्ये गणे ॥ ३० ॥
दैव वाक्यमिद निशम्य मुमुदे श्रीमत्तपागच्छराद्
मोद कस्य भवेन्न यत् स्वपदवीयोग्ये सुशिष्ये श्रुते ।
मुक्त्वा ध्यानमथागमन्निजयतिश्राद्धौघपर्षद्ग्रह-
र्वक्त्रे भानुरिवोदयाऽद्रिशिरसि प्रोल्लासितेज स्थिति ॥ ३१ ॥
सङ्घाग्रे सुरवाक्यमेतदभवच्छ्रीमद्गुरुगौरवात्
सङ्घो यज्जिनसमतो गुरुतरैर्नोपेक्ष्यते बुद्धिमान् ।
कृत्वा सङ्घमत न्यवेशयदसौ श्रीहीरहर्ष निजे
पट्टेऽर्हन्मतसारसूरिपदवीयोग्ये मुहूर्त्ते सुधी ॥ ३२ ॥
सीरोहीनगरे बभूव विजयो हीरादतस्तद्गुरु-
र्नामास्याशु चकार हीरविजय सद्भिस्तदा स्वीकृतम् ।
इभ्यै सूरिपदोत्सवस्तु विविधश्चक्रे तथेन्द्रैर्यथा
श्रीवीरेण सुधर्मगौतमशिर पट्टप्रदानक्षणे ॥ ३३ ॥
आचार्यै सममेतके गुरुवरादेशात्तत प्रस्थिता-
आयाता अणहिल्लपत्तनपुरे तस्थुश्चतुर्मासकम् ।
पोता अम्बुनिधाविवोडुपभरैर्नीडि यथा पक्षिण
स्वापत्यैर्मुनिचक्रसेवितपदा ससारलेपोज्झिता ॥ ३४ ॥
गूढाम्नायजिनोक्तवाङ्मयरस श्रीहीरकोष्ठे गुरु-
र्याम्नीदुग्धमिव प्रकृष्टकनकामत्रेऽनिश क्षिप्तवान् ।

लब्धे शिष्यवरे हि य शुचितमा [illegible]
निर्विघ्न स भव परत्र भविता । [illegible] ॥ ३५ ॥
शुद्धांशे सकलग्रहपु पदवीमुच्चाङ्गतपुत्तम
लग्ने श्रीगुरुभूपतिर्वि[illegible] श्रीसारमन्त्र ददौ ।
लक्षैर्व्ययैर्विहितऽत्र हीरविजयाचार्याय कोटिव्यय
हीरार्थं कुरुते न कि वनिजन कोटिव्यय बुद्धिमान ? ॥३६॥
निश्चिन्ता गुरव स्वपट्टविबधारापणात् स्वांशाग्यऽभक
श्रीहीरे निजकार्यमावनपरा व्यापारमासूत्रितम ।
गच्छस्यास्य विमुच्य सयममुख मग्ना रस शान्तिके
जग्मुर्देवगृह विशुद्धमनसाऽर्हद्ध्यानलीनास्तत ॥ ३७ ॥
गच्छऽस्मिन्नथ चारुहीरविजया भट्टारकत्व गता-
निर्ग्रन्थान् द्विसहस्रमानगणितान सशिक्षयन्त्यादृता ।
वाक्यैर्हृद्युचितैर्मितैर्हितकरैर्जैनारिवाकर्कशै-
श्चारित्रोपकृतिप्रदानविधिना सन्तोषयन्ति क्रमात् ॥ ३८ ॥
देशे यत्र पुरेषु येषु विहृति चक्रुस्त्विमे सूरय
सप्तक्षेत्रधनव्ययो धनिकृतस्तत्राऽभवत्तेषु वा ।
जीवाऽमारिरहर्निश व्रतकृतिर्दीनोद्धृतिर्भाविना
प्रासादोद्धरण च भक्तिकरणं साधर्मिकाणा पुन ॥ ३९ ॥
अन्येद्युर्भुवि सूरिहीरविजया गन्धारपुर्या स्थिता
कृत्वाऽवग्रहमब्दमाससनियत साधुव्रजभ्राजिता ।
दिल्लीशेन यथा श्रुता कृतिनरैराकारिता सत्कृता-
जीवामारणवर्त्तनैरिति तथा सर्व मया प्रोच्यत ॥ ४० ॥
अस्ति श्रीमति भारतक्षितितले श्रीमध्यदेश शुचि-
प्रासादप्रतिमासुपुस्तकनिधिर्वर्यार्यलोकाश्रित ।
देशा सार्द्धकपञ्चविंशतिमिता सन्त्येव यत्र स्फुर-
च्चक्रिश्रीजिनविष्णुमुख्यपुरुषश्रेष्ठाऽवतारादिता ॥ ४१ ॥
अस्त्यत्र प्रवरा पुरी नरभरैरापूरिता काबिला-
भिख्या सत्खुरसानदेशनिकटे वीराधिवासोचिता ।
यस्या मुद्गललक्षमक्षतबल हिन्दूसुरत्रासक

स्वैरं द्रव्यशतानि सार्द्धघटिकामध्येऽत्ति भोगैर्धनैः ॥ ४२ ॥
आसीत्तत्र हमाउनामनृपतिर्दैत्यावतारोऽरिषु
म्लेच्छानामधिपः प्रतापतपनश्चक्रीव युद्धे जयी ।
यस्याश्वा इव राक्षसा गिरिशिरःस्फाला प्रलम्बानना-
स्वास हस्तिवरानपीव महिषान्नित्यं नयन्ति क्षणात् ॥ ४३ ॥
अन्येद्युः स सुतेऽष्टवर्षवयसि स्पष्टोदयेऽकब्बरा-
भिख्ये राज्यभरं निवेश्य चलितः कर्तुं महीमात्मसात् ।
अभ्यन्ता प्रलयाब्धिसैन्यकलितस्तावत् समेतः पुरे
दिल्लीनाम्नि भटालिदुर्घटतटे कोटीश्वराभ्याश्रिते ॥ ४४ ॥
तत्राभून्नवलक्षवाजिसुभटः सूरः प्रतिष्ठानपो
मत्तेभाद्विचतुःसहस्रगुणनः कोटग्रप्रपत्तीश्वरः ।
युद्धे येन च राष्ट्रकूटकुलभूः श्रीमल्लदेवो जितः
श्रीमद्योधपुरेश्वरो मरुपतिदुर्वारवीरावृतः ॥ ४५ ॥
तस्मै सूरनरेश्वराय निपुणं दूतं तदा प्राहिणो-
च्छ्रीमन्मुद्गलनायकः परिसरे स्थित्वा सुनीतिं वहन् ।
दूतोऽप्याऽऽख्यदिदं हमाउनृपते पादप्रणामं कुरु
श्रीदिल्लीश! भवाहवाय सुतरां सज्जोऽथवेतो व्रज ॥ ४६ ॥
श्रुत्वा दूतवचोऽवदन्नरपतिः सूरोऽतिगर्वोद्धुरः
कोऽयं मत्पुरतो हमाउनृपतिर्वाणिज्यकृद्दुम्भ्रमी ।
दत्त्वाऽश्वाश्चिरसञ्चितान्मणिगणान् स्वर्णं च रूप्यं वशा
वीराणां च शिरांसि यास्यति वपुःशेषः सुशेषीभवन् ॥४७॥
याहि त्वं वद दूत! मद्वच इदं तस्मै निजस्वामिने
भूयाः सज्ज इहाहवेऽहमनुगस्तेऽभ्यागतः सांप्रतम् ।
इत्युक्त्वा गलहस्तदानमकरोद्दूतस्य सूरो नृपः
कोपो यत्स्वविनाशकाग्निसमये दुष्टं विधिं कारयेत् ॥४८॥
दूतस्तद्वचनं स्वलाघवकृतिं स्माख्याति तन्मत्ततां
श्रुत्वा काबिलनायकोऽपि हृदयेऽप्युल्लासमुच्चैर्दधौ ।
नो भीतिं निजत्राणवीर्यचकितं नानन्नन्दय हरिः
किं पर्जन्यविगर्जनश्रवणतो बिभ्यति पाथःपतिः ? ॥४९॥

ढक्कावादनपूर्वकं नरपतिः सूरोऽपि सैन्यं निजं
सन्नद्धं विविधाऽस्त्रपङ्क्तिकिरणव्याप्तं प्रकाशगणम् ।
एकीकृत्य चचाल मुद्गलपतेः सैन्यं तृणप्रायकं
जानन् मत्तमतङ्गजावलिरणद्घण्टारवाडम्बरं ॥ ५० ॥
सङ्ग्रामाङ्गणमागतं क्षितिपतिं दृष्ट्वा हमाऊनृप-
स्तं वीरान् द्विसहस्रमानगणितान् युद्धार्थमाज्ञापयन् ।
प्राज्यान् यत्तृणपूलकान् शिखिकणा छित्वा न किं भस्मय-
न्त्येवं चेतसि चिन्तयन्निजबलस्कन्धं स्थितः साश्रमं ॥ ५१ ॥
तावद्धि सुभटैर्घनैरिव भृशं बाणाम्बुधाराश्चयान्
वर्षद्भिर्नवलक्षसैन्यममलं चक्रे विवशाकुलम् ।
छित्त्वा किं न मृगारिमत्तशिशवः कादाभिदापापहा-
छित्त्वा वाम्बुतबिन्दवः पृथुतराऽस्मान्यैकरागापहा ॥५२॥
तैः सैन्यं निजमाकुलं कृतमिदं वीक्ष्याशु सूरो नृपः
सङ्ग्रामाभिमुखोऽभवद्गजघटाध्यास्फालितारिव्रजः ।
निघ्नन् बाणगणैरलक्ष्यचरितैः कान्ताकटाक्षैरिव
त्यक्तास्त्रं द्विसहस्रमानगणितं सैन्यं चकारानुगम् ॥५३॥
सैन्ये तावति शस्त्रदर्परहिते पश्चात् समागच्छति
द्विट्चक्रे जयतीह सूरनृपतिश्चेत्युच्चकैर्गर्जति ।
श्रीमन्मुद्गलनायकोऽपि सुभटैर्लक्षप्रमैरुत्थितः
किं शेषः स्वफणावृतः क्षितितलादागादरिग्रासकृत् ? ॥ ५४ ॥
श्रीसूरोऽपि हमाउरप्यभिमुखं वीरैर्निजैर्वेष्टितौ
कुर्वाणाविव युद्धमुद्धतमिमावादित्यराहू क्षितौ ।
किं व्योम्नः पतितौ पुनः पुनरिवात्युत्यान्तरिक्षाशया-
यातोऽप्यूर्द्ध्वमितीह साधु कुरुतस्तर्कं मता मानसे ॥ ५५ ॥
तावत्काबिलनायकः करतलं धृत्वा धनुर्दोष्मता
मुख्यं सूरबलं ललाटतिलकं केषां विभिन्नं पुनः ।
केषाञ्चिद् हृदयं चकार जठरं मूत्रप्रदेशं पुनः
केषाञ्चित्करयामलं करयुगं केषाञ्चिदङ्घ्रिव्रजम् ॥ ५६ ॥
बाणासारमिति प्रवर्षति नृपे तस्मिन् स्वयं तद्भट-

श्रीविजयधर्मसूरिभ्यो नमः ।

# विजयप्रशस्तिः ।

## विजयप्रदीपिकाऽऽख्यया व्याख्यया सहिता ।

### प्रथमः सर्गः ।

स्वस्तिश्रीनाभिभूर्भूयाद् भूयसे श्रेयसे सताम् ।
तनयां जनयाञ्चक्रे यो ब्राह्मीं ब्रह्मचारिणीम् ॥ १ ॥
सिद्धये सोऽस्तु सिद्धार्थः श्रीसिद्धार्थजनिर्जिनः ।
अजडाऽपि यदीया वाग् विश्वपङ्कापहाऽद्भुतम् ॥ २ ॥
हंसः पक्ष्यपि दक्षोऽभूद् विवेके क्षीरनीरयोः ।
यत्सङ्गरङ्गतः साऽस्तु शारदा वरदा मम ॥ ३ ॥
नमः श्रीगुरवे तस्मै भुवनाम्भोजभानवे ।
यत्प्रसादादहं प्रापं विवर्णोऽपि सवर्णताम् ॥ ४ ॥
तं गुरुं गुरुताऽगारमनगारवरं स्तुमः ।
भवेन सह यः स्नेहं न चक्रे ब्रह्मचार्यपि ॥ ५ ॥
श्रीवृषभवीरवाङ्मयसुरीगुरून् प्रणयतः प्रणम्येति ।
विजयप्रशस्तिवृत्तिर्विधीयते शिष्टतुष्टिकृते ॥६॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ७ ॥

इह हि चतुरर्णववर्णितार्णवमेखलामण्डलाखण्डलशाहि-

श्रीमदकब्बरप्रमुखक्ष्मापालमल्लमौलिमौलिमणिगणज्योतिर्जला-
सारस्नापितपादानां, श्रीमत्तपागणगगनाङ्गणसमुद्भासनसहस्रपा-
दानां, निस्सीमसौम्यतासदनवदनप्रभाप्राग्भारपराभूतपीयूषपा-
दानां, सकलभट्टारकभट्टारकभट्टारक-श्रीहीरविजयसूरि-पादानां;
प्रकटपट्टपट्टलक्ष्मीललनाललाटस्थलीभामनभासुरमणयः, सङ्ख्या-
विषयातीतानूचानवितानवतंसायमानयुगप्रधानसमानातिजातस-
न्तानोपमानभट्टारक-श्रीविजयसेनसूरि-शर्वरीमणयः सम्प्रति वि-
जयन्ते । तेषां च सर्वतः संप्राप्तामितमहोदयेन महामहिमातिश-
येन समुल्लासितान्तःकरणस्तद्गुणगृहाङ्गणप्रोद्दीप्रप्रदीपानुकारिश्री-
मदाचार्यहर्यक्षरूप-श्रीगौतम-सुधर्मस्वामि-प्रतिरूपतपागच्छभूप-श्री
विजयदानसूरिवर-वितीर्णविशारदपद गारिनिर्जरनिर्झरिणीनिर्य-
न्निरर्गलनिर्मलजलप्रवाहपटलप्रक्षालितकैलासगिरिगौरतागर्वसर्व-
ङ्कषयशःपुञ्जजगन्मनोहारिनिरतिचारपञ्चाचारविचारचारुसामा-
चारीसंचारिभूर्भुवःस्वस्त्रयीविदितसुविहितपरम्पराप्रादुर्भूतप्रभूत -
महामुनीश्वरसब्रह्मचारिनिष्पारसंसारपारावारपतज्जन्तुजातपो -
तायमाननिरभिमानज्ञानगुणगर्भितक्रियाजाग्रज्जाङ्गुलीप्रबलब -
लेन विषमतरविषयविषधरविषतिरस्कारिपण्डितपदप्राप्तिप्रभृति-
यावज्जीवितव्यद्रव्यसप्तकातिरिक्ताहारविकृतिपञ्चकेक्षुरसोत्पन्नव-
स्तुपरिहारिनित्यैकभक्तैकशुष्कशाकमासिकोपवासपट्कप्रमुखाने-
कप्रत्याख्यानकारिसर्वान्तर्वागिश्रेणिशिरोमणिपण्डित-श्रीकमल -
विजयगणि-चरणारविन्दमकरन्देन्दिन्दिरः, कालिदासादिकवि-
कीर्त्तिलुण्टाककाव्यकलाकलापकेसरिकिशोरकक्रीडनकन्दरः, प-

ण्डितश्रीहेमविजयगणिसंज्ञकः कविपुरन्दरः; श्रीगुरुगुरुतरभक्ति-व्यक्तिप्ररूपकं, श्रीहीरविजयसूरिप्रभृतिभट्टारकात्रिकावदातकद-म्बकनिरूपकं, श्रीरघुवंशदेशीयतया विजयवंशापरपर्यायधारकं, विश्वविश्वावलयवर्त्तिचतुरचेतश्चमत्कारकारकं, विजयप्रशस्तिना-मकं काव्यं कर्तुमुपचक्रमे। क्रमेण च षोडशे सर्गे पूरिते सति स स्वर्गमधिजग्मिवान्। अथ च निजकाव्यविद्याविद्यागुरोस्तस्य पितृव्यगुरोरुत्तमर्णत्वमिच्छता मया मुग्धधियाऽप्यग्रेतनसर्गपञ्च-करचनेनैकविंशतिसर्गात्मकं तत्संपूर्णं निर्माय निर्मायमौलिरत्न-सुविहितसूरिसभानभोरत्नयुवराज–श्रीविजयदेवसूरीन्द्र-चन्द्रोपदे-शेन भाविनामल्पमेधसां विषमार्थसार्थप्रकाशकत्वेनोपकारकारि-का, विजयप्रदीपिकाऽभिधानधारिका तट्टीका प्रकटीक्रियते। तत्र प्रतिकाव्यमलङ्काराणां भूयस्त्वेन सर्वात्मना ते ग्रन्थगौरवभया-न्मया न विव्रियन्ते, ततस्तेऽलङ्कारमहोदधिप्रमुखालङ्कारग्रन्थे-भ्योऽवगन्तव्याः। तथा सर्वत्र लिङ्गादिनिर्णयो लिङ्गानुशासना-देरवसेय; अत्र तु कुत्रचिद् विशेषभूतस्य तस्य प्रतिपादनात्। छन्दोभेदस्तु प्रतिसर्गं प्रादुर्भावयिष्यते; कुत्रचिन्नोक्तश्चेत्तदा विशे-षविद्भिश्छन्दश्चूडामणिप्रभृतेः स्वयमेव सोऽभ्यूह्य इति तात्पर्यम्॥

अथ ग्रन्थारम्भे ग्रन्थकारः शिष्टसमयपरिपालनाय प्रत्यूहव्यूहप्रशमनाय च समुचितेष्टदेवताऽऽदिनमस्कारलक्षण मङ्ग-लमाचरन् प्रथमं पद्यमाह—

श्रेयांसि वः सृजतु नाभिभवो महेशः
सत्योपलक्षितपुरः पुरुषोत्तमः सः।

सर्वज्ञरागकृदवाप्तरसेशसङ्गा
गङ्गेव गौरजनि यस्य मनोज्ञवर्णा ॥ १ ॥

सः नाभेः सप्तमकुलकराद् भवो जन्म यस्य स नाभिभवो वृषभः पुरुषोत्तमोऽर्हन् वो युष्माकं 'श्रेयस्तु मङ्गले धर्मशस्तयोः' इत्यनेकार्थत्वात् श्रेयांसि मङ्गलानि, पुण्यानि वा, प्रशस्तानि वस्तूनि वा सृजतु करोतु इति क्रियाकारकसंपर्कः । नाभिभवः किंलक्षणः, महांश्चासावीशश्चेति महेशो महास्वामीत्यर्थः । पुनः किं० सत्योपलक्षितपुरः सत्येन सम्यग्धर्मेण उपलक्षितमलकृतं 'पुरं शरीरे नगरे गृह-' इतिश्रीहेमचन्द्राचार्यवर्यवचनात् पुरं शरीरं यस्य सः । यत्तदोर्नित्य सम्बन्धित्वात् स क इत्याकाङ्क्षायामाह-सर्वज्ञेति । यस्य गौः वाग् गङ्गेवाऽजनि जातेत्यन्वयः । अथ गोर्गङ्गायाश्च विशेषणद्वारा समानधर्मताऽभिधीयते-गौः गङ्गा च किं० सर्वेषां ज्ञानां पण्डितानां रागकारिणी, पक्षे सर्वज्ञो महादेवस्तस्य रागकारिणी । तेन हि गङ्गा मूर्द्धनि धृतेति श्रुतेः । पुनर्गौर्गङ्गा च किं० रसानां शृङ्गारादीनां ईशः स्वामी रसेशः शान्तनामा रसः तेन तस्य वाऽवाप्तः प्राप्तः सङ्गो यस्या यया वा सा । गङ्गापक्षे रसानां जलानां ईशो रसेशः समुद्रस्तेन तस्य वाऽवाप्तः सङ्गो यस्या यया वा सा । अथवा रसायाः पृथिव्या ईशो रसेशोऽर्थाद्भरतो राजा तेनावाप्तः सङ्गो यस्याः सा । यतो भरतस्य भगवतः पुत्रत्वेन श्रावकत्वेन च भगवद्गवां सङ्गः संगच्छत एवेति । गङ्गापक्षेऽपि दिग्विजयं कुर्वाणेन तेन नवनिधानाविर्भावावसरे शरदां सहस्रं यावन्नवनवैर्भोगैर्गङ्गा भुक्तेति तेन सह गङ्गायाः सङ्गः

सङ्गतिमङ्गतीति निर्गलितार्थः । पुनः किं० मनोज्ञा वर्णा अक्षराणि यस्यां सा । अथवा मनोज्ञा हृदयङ्गमा वर्णा गुणा यस्या सा 'पञ्च त्रिंशच्च वाग्गुणाः' इति श्रीहेमाचार्योक्तेः । तथा गङ्गापक्षे मनोज्ञो रम्यो वर्णो धवलत्वलक्षणो यस्याः सा । अथवा मनोज्ञो वर्णो यशो यस्या इति । यदनेकार्थः 'वर्णोऽक्षरे गुणे यशसि' इति । अत्र च प्रथमकाव्यपूर्वार्द्धे लौकिका अपि त्रयो देवाः स्मृता बोधितव्याः । तथाहि—नाभिभव इति ब्रह्मा, महेश इति महादेवः, पुरुषोत्तम इति विष्णुः । अथ प्रथितार्थत्रिकेणैकेन विशेषणेन क्रमेण त्रीनपि स्पष्टं विशिनष्टि-सत्येति । ब्रह्मपक्षे, तपोलोकात्परो लोकः सत्यो नाम लोकः स च ब्रह्मस्थानापराभिधानस्तत्र उपलक्षितं प्रतीतं पुरं गृहं यस्य स इति । महेशपक्षे, सत्या पार्वत्या उपलक्षितं पुरं शरीरं यस्य स इति । विष्णुपक्षे, भीमो भीमसेन इतिन्यायात् सत्या सत्यभामाऽभिधा प्रथमा पट्टराज्ञी तयोपलक्षितं पुरं गृहं यस्य स इति ।

अत्रादौ श्रेयःशब्दप्रयोगो मङ्गलवाचकः । यदुक्तं पूर्व-महाकविभिः—

'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि च'।।१।। इति दिक् ।

तथाऽत्र सर्गे वसन्ततिलकाख्यं छन्दः । तल्लक्षणञ्चेदम् 'उक्ता वसन्ततिलका तभजा जगौ ग.' काश्यपस्तु सिंहोद्धता-ऽभिधानामेनामभ्यधादिति प्रथमपद्यार्थः ।।१।।

शान्तिर्निशान्तमणिता तनुतां विभुर्वः
शान्त्यै समस्ततमसा स मनोनिशान्ते ।
योऽत्रोपभोग्यजनि जन्मनि सार्वभौम–
सार्वश्रियो शिव इवाद्रिसुताद्युनद्यो ॥ २ ॥

स शान्तिर्विभुः षोडशो जिनो वो युष्माकं मनोनिशान्ते हृदयमन्दिरे निशान्तमणिता गृहमणिता तनुता दीपभावं दधात्विति भावः । कस्यै, शान्त्यै शमनाय । केषां, समस्ततमसा सर्वपापानाम् । दीपो हि तमसामन्धकाराणामुपशान्त्यै गृहे भवतीति भगवानपि तथा भवत्विति तत्त्वम् । यत्तदोर्नित्याभिसंबन्धात्स क इत्याशङ्कायामाह– योऽत्रेति । यो भगवान् अत्र जन्मनि इहावतारे सार्वभौमसार्वश्रियोश्चक्रवर्तितीर्थकरलक्ष्म्योः उपभोगी भोक्ताऽजनि जातवानित्यन्वयः । क इव कयोरिति दृष्टान्तघटनामाटीकते-शिव इव । महेश्वरो यथा अद्रिसुताद्युनद्योः पार्वतीमन्दाकिन्योरिति भावार्थः ॥ २ ॥

नेमिः श्रियं दिशतु दर्पकदर्पसर्प-
सर्पासुहृत्स सुहृदां हरिवंशरत्नम् ।
यस्मिन् जगज्जयदजन्मनि जन्मतोऽपि
सद् ब्रह्मचारिणि शिवातनयत्वमासीत् ॥ ३ ॥

स नेमिररिष्टनेमिनामा द्वाविंशस्तीर्थङ्करः सुहृदां सुमनसां 'श्रीर्लक्ष्म्याम्' इत्याद्यनेकार्थवचनात् श्रियं लक्ष्मीं, मतिं, वाणीं, शोभां, त्रिवर्गसंपत्तिं वा दिशतु इत्यन्वयः । स किं० दर्पकेति ।

दर्पकः कन्दर्पस्तस्य यो दर्पोऽहङ्कारः स एव सर्पः पवनाशनस्तत्र सर्पासुहृद् गरुडः। सर्पारातिः सर्पकुलमिव भगवान कामं जिगायेति भावार्थः। पुनः किं० हरीति। हरिर्नाम राजा तस्य यो वंशोऽन्वयस्तत्र रत्नमिव रत्नं तस्योद्योतकत्वात्, विभूषकत्वाद्वा, अथवा 'रत्नं स्वजातिश्रेष्ठे स्यात्' इति श्रीहेमाचार्यवचनात् सर्वेष्वपि हरिवंश्येषु यदुषु श्रेष्ठ इति दिक्। स क इत्याह-यस्मिन् शिवातनयत्वं 'सत् सत्ये' इति वचनात् सत् सत्यमासीत्। शिवातनये हि भगवति शिवातनयत्वं सत्यमेवास्तीति तत्कथनं सिद्धसाधनादनर्थकमिति चेत् । न । उच्यते। अत्र हि शब्दच्छलत्वाच्छिवातनयत्वं कार्त्तिकेयत्वमित्यर्थः । तत्कथं यथार्थमिति हेतुभूतविशेषणद्वारेणाह-यस्मिन् किं० ब्रह्मचारिणि शीलव्रतशालिनि । कुतो जन्मतोऽपि 'आजन्मकामविजयी' इतिपुराणवचनादाबाल्यादपि ब्रह्मचारित्वाच्छिवातनयत्वं युक्तमेव। कार्त्तिकेयस्यापि लोके ब्रह्मचारित्वेन कविरूढ्या प्रतीतत्वाच्छिवातनयत्वमप्यस्तीति भावः। पुनः किं लक्षणे, जगदिति। जगतां लोकानां स्वर्गमर्त्यपाताललक्षणानां जयदं जन्मोत्पत्तिर्यस्य तस्मिन्निति । भगवज्जन्मकल्याणके हि सर्वत्र सर्वेषां सुखाद्वैतभवनात् सर्वदाऽनिष्टत्वेन पारमार्थिकरिपोर्दुःखस्य जयो भवतीति जगज्जयदजन्मत्वं युक्तमेवेति । कार्त्तिकेयपक्षेऽपि धर्मधर्मिणोरभेदाज्जगतां जगद्वर्त्तिनामधिकाराद्देवानां जयदायि जन्मावतारो यस्येति। इह श्रूयते हि पुरा सर्वेऽपि सुराः संभूय स्वयम्भुवं तारकासुरसंहाराय सेनान्यं याचितवन्तस्ततस्तद्वरमहिम्ना लब्धजन्मनः स्वामिनः साहाय्यात् तेषां तारकध्वंसेन जयो जात

इति। ततो विशेषणद्वयोक्तधर्मेण यः स्वामी स्वामिनः समानो बभूवेति भावार्थः ॥ ३ ॥

रत्नेषु सप्तसु शिरःस्थफणस्थितेषु
संक्रान्तमूर्त्तिरशुभद् युगपत्प्रभुर्यः ।
सङ्कल्पयोनिदहनार्थमिवाष्टमूर्त्ति-
र्जातः स वः सृजतु सम्पदमाश्वसेनिः ॥ ४ ॥

अश्वसेनस्य राज्ञः अपत्यमाश्वसेनिः 'अत इञ्'।६।१।३१। इति सूत्रेण सिद्धः। स पार्श्वनामा त्रयोविंशस्तीर्थकृद् वः सम्पदं पुत्रकलत्रमित्रजीवितयौवनधनधान्यरूपारोग्यादिसमृद्धिं सृजतु इत्यन्वयः। स क इत्याह-रत्नेष्विति। यः प्रभुर्युगपत्समकालं सप्तसु रत्नेषु संक्रान्तमूर्त्तिः प्रतिबिम्बिततनुः अशुभत् शुशुभे। रत्नेषु किं० शिरस्थाः शीर्षस्थिता ये फणास्तेषु स्थितेषु स्वशिरःस्थफणामणीषु प्रतिबिम्बासम्भवात् इह प्रणतस्य धरणिपतेरिति शेषो द्रष्टव्यः, तथाच सप्तसु फणरत्नेषु प्रतिबिम्बिताः सप्त मूर्त्तयोऽष्टमश्च भगवानिति भगवतोऽष्टमूर्त्तित्वं जातम्। स चाष्टमूर्त्तिर्लोके महेश्वरोऽतोऽत्र कविराशङ्कते— सङ्कल्पयोनेः कन्दर्पस्य दहनायाष्टमूर्त्तिर्महादेवो जात इवेत्युत्प्रेक्ष्यते। तेन हि स्मरो दग्ध इति श्रुतेरित्यर्थः॥ ४ ॥

मात्रोर्द्वयोर्द्विजनृपप्रिययोः पिचण्ड-
वासोद्भव निखिलविघ्नविनाशनेन ।
द्वैमातुरत्वमकरोदिह सूनृत य-
स्त वीरमद्भुतसनीडमपीडमीडे ॥ ५ ॥

तं वीरं वर्द्धमानाभिधानं चरमतीर्थकरमीडे स्तुवे । ईडे इत्यत्रास्मदर्थाविनाभाव्युत्तमपुरुषैकवचनप्रयोगसामर्थ्यादहमित्यध्याहार्यम् । एवमग्रतोऽन्यत्रापि यथास्थानमवगन्तव्यम् । वीरं किं० अद्भुतं जघन्यतोऽपि कोटिसंख्यसुरासुरैः परिवृतत्वादाश्चर्यकारि सनीडं समीपं यस्य तम् । शेषं सुगमम् । तं कमित्याह-मात्रोरिति । यो द्वैमातुरत्वं इह जगति सूनृतमकरोत् सत्यमकार्षीत् । केन, निखिलविघ्नविनाशनेन समस्तान्तरायहरणेन । द्वयोर्मात्रोरपत्यं द्वैमातुरः, स च गणेशः तस्य भावस्तत्त्वम् । तदेव भगवतोऽपि विशेषणद्वारा व्यनक्ति । द्वैमातुरत्वं कि० पिचण्डवासोद्भवं जठरावस्थानजम् । कयोर्द्वयोर्मात्रोः, देवानन्दात्रिशलाख्ययोः । यदाहुः श्रीभद्रबाहुस्वामिपादाः- 'दुण्हं वरमहिलाणं गब्भे वसिऊण गब्भसुकुमालोत्ति' इत्याद्युक्तेर्भगवान् द्वैमातुर इति । मात्रोः किलक्षणयोः, द्विजो ब्राह्मणोऽर्थाद् ऋषभदत्तः, नृपो राजाऽर्थात् सिद्धार्थः, तयोः प्रिययोर्भार्ययोः । अनेन भगवन्मात्रोर्ब्रह्मक्षत्रियलक्षणा जातिः सूचितेति । ततो द्वैमातुरत्वाद्, विघ्नध्वंसकत्वाच्च गणेशतुल्यता भगवतो वीरस्येति रहस्यम् ॥ ५ ॥

पूष्णः प्रभेव कमलोन्नतिकृत्प्रहृष्ट-
सच्चक्रदृक् सपदि हन्तितमां प्रसन्ना ।
जाड्यं यदङ्घ्रियुगली विमलीकृताशा
सा भारती सृजतु कुन्दनिभा रतीर्मे ॥ ६ ॥

सा भारती सरस्वती मे मम रतीः सृजतु; अधिका-

रात्प्रस्तुतकाव्यकरणे मां दक्षरायं करोत्वित्यन्वयभावार्थः । सा कि० कुन्दनिभा धवलवर्णत्वात् । अत एव विमलीकृता निर्मलीकृता, धवलीकृता वा आशा दिशो यया सा । सा का, यदंह्रियुगली यत्पादद्वयी प्रसन्ना सती जाड्यं मूर्खत्वं हन्तितमाम्, अतिशयेन हिनस्तीत्यर्थः । केव, पूष्णः सूर्यस्य प्रभेव । यथा सूर्यप्रभा जाड्यं शीतत्वं हन्ति तथेति शेषः । अथाह्रियुगलीपूषप्रभयोरन्योन्यं समानधर्मता विशेषणद्वयेनाह—कमलेति । कमलाया लक्ष्म्या उन्नतिरुदयः, तत्कारिणी । पुनः कि० प्रहृष्टा प्रकर्षेण हर्षं प्राप्ता, सच्चक्रस्य पण्डितमण्डलस्य दृग् दृष्टिर्मतिर्वा यस्याश्चेति सा । सूर्यप्रभापक्षे तु, कमलानां पङ्कजाना उन्नतिः समृद्धिरिति । पुनः कि० सतां विद्यमानानां, प्रशस्ताना वा चक्राणां चक्रवाकाख्यपक्षिणां दृग् यस्या इति, सा । शेषं सुबोधम् ॥ ६ ॥

शीतद्युतेरिव निशीथवती समानु-
गामिन्यभूत्प्रतिभया समसृद्धिरिद्धा ।
यन्नाममन्त्रमनघं स्मरतोऽस्मरार्त्त
तं स्व गुरुं मतिगुरुं ज्ञगुरुं स्तुवेऽहम् ॥ ७ ॥

तं स्वं गुरुं निजं धर्माचार्यम्, अहं स्तुवे । गुरुं कि० स्मरेण कामेन आर्त्तः पीडितः स्मरार्त्तः, न स्मरार्त्तः अस्मरार्त्तस्तम्, आबाल्यतोऽपि ब्रह्मचारित्वादिति । पुनः किं० मत्या मनीषया गुरुं सुरसूरिम् । पुनः किं० ज्ञेषु पण्डितेषु श्रुतपर्यायादिना गुरुं गरीयांसम् । एतेन समस्तपण्डितमुख्यत्वमसूचीति तात्पर्यम् । तं क-

मित्याकाङ्क्षाक्षोदक्षमं यच्छब्दमाह–यन्नामेति । यस्य गुरोर्नाम मन्त्रं यन्नाममन्त्रं स्मरतश्चिन्तयतो मम, प्रतिभया सह ज्ञानोपसम्पदा समं, ऋद्धिः चरणकरणक्रियारूपा चारित्रोपसम्पत्, अनुगामिनी अभूत् सहचारिणी बभूवेत्यर्थः । ऋद्धिः किं० इद्धा दीप्तिमती। यन्नाममन्त्रं किं० न विद्यते अघं दुःखं, व्यसनं, पापं वा यस्मिन्नित्यनघम्। अथवा, 'अनघः स्याद्गतपापे मनोज्ञे निर्मलेऽपि च' इत्यनेकार्थत्वादनघं मनोज्ञम्, इत्यखण्डमेव विशेषणम्। केव कस्येत्याह– शीतेति । यथा शीतद्युतेः शशाङ्कस्य निशीथवती निशेति दृष्टान्तः ॥ ७ ॥

शीघ्रङ्गमेषु-जवनैः पवनैः कठोर-
काष्ठोद्भवः पयसि पोत इवानुकूलैः ।
यैरादृतो ध्रुवमधीरपि सत्सभासु
माहात्म्यमेति मयि ते सुजनाः प्रसन्नाः ॥८॥

ते सुजना उत्तमपुरुषा मयि ग्रन्थकर्त्तरि प्रसन्नाः सन्तुष्टिभाजो भवन्त्वित्यन्वयः । ते के इत्याह–यैरिति । यैः सुजनैरादृतोऽङ्गीकृतोऽधीरपि निर्बुद्धिरपि पुमान् सत्सभासु विद्वद्गोष्ठीषु माहात्म्यं एति, महत्त्वं गच्छति। क इव कैरिति दृष्टान्तं योजयति पोत इव प्रवहणमिव अनुकूलैः पवनैर्वायुभिः । क, पयसि अम्भसि पयोनिधेरित्यध्याहार्यम्। पोतः किं० कठोरकाष्ठोद्भवः कठिनदारुनिष्पन्नः। पवनैः किं० शीघ्रङ्गमेषु त्वरितगामिषु सर्वपदार्थेषु जवनैर्जवाधिकैः। अथवा शीघ्रङ्गमा ये इषवो बाणाः तद्वज्जवनैः

वेगवद्भिरिति। अत्र यथा हि किल काष्ठरूपोऽपि पोतोऽनुकूलपवनसंयोगप्रभावादीप्सितप्रदेशप्रापकत्वेन प्रतिष्ठां प्राप्नोति, तथा मादृशोऽपि मूर्खः सज्जनस्वीकारात्समीहितग्रन्थग्रथनसमर्थनेन सुधीभिः श्लाघ्यत इति तात्पर्यम् ॥ ८ ॥

ये तर्ककर्कशधिया धिषणाऽनुरूपाः
साहित्यशास्त्रमणिभिर्मकराकरा ये ।
सल्लक्षणेक्षणविचक्षणचक्षुषो ये
ते मां स्वमब्जमिव पद्मकराः करन्तु ॥ ९ ॥

तर्काः तर्कग्रन्थाः, तर्कभाषा—सप्तपदार्थी—वरदराजी-प्रमाणमञ्जरी-प्रशस्तपादभाष्य-कणादरहस्यादयः शशधर—मणिकण्ठ-कुसुमाञ्जलि-किरणावलि-वर्द्धमान—तत्त्वचिन्तामणिपर्यन्ताः शैवप्रमाणशास्त्राणि, अथवा षड्दर्शनसमुच्चयमूलवृत्ति-स्याद्वादमञ्जरी-रत्नाकरावतारिका-न्यायावतार-प्रमाणमीमांसादयः स्याद्वादरत्नाकरा-नेकान्तजयपताका-सम्मतिपर्यन्ता जैनप्रमाणग्रन्थाः, तेषु कर्कशा कठिना तदन्तर्भेदकत्वेन कुशाग्रवत्तीक्ष्णा या धीस्तया धिषणानुरूपा बृहस्पतितुल्या इति। अनेन ये महातार्किकाः; तथा साहित्यं च एकार्थानेकार्थाद्यनेकनामकोशकाव्यप्रकाशकाव्यलयीकाव्यपञ्चकचम्पूछन्दोऽनुशासनकाव्यानुशासनालिङ्गानुशासनप्रभृतिकं, तद्धेतुकानि यानि शास्त्राणि तान्येव मणयो रत्नानि तेषां मकराकराः समुद्राः; तदाधारत्वात्। तदेतेन ये महाकवय इति । तथा सन्ति विद्यमानानि यानि लक्षणानि

सारस्वतप्रक्रियादीनि श्रीसिद्धहेमाभिधानशब्दानुशासनपर्यन्तानि महाव्याकरणानि, तेषां यदीक्षणं सम्यगर्थसार्थावलोकनं तत्र विचक्षणं निपुणं चक्षुरिव चक्षुर्मतिर्येषां ते । तदेतेन लक्षणदक्षा ये महावैयाकरणा इति । अत्र हि भिन्नाधिकरणत्वेन प्रतिपदं यच्छब्दोपादानमदुष्टं, प्रत्युत तस्योपयोगित्वादेवेत्यवधेयम् । अथ ते त्रयोऽपि मां ग्रन्थकर्त्तारं स्वं कुरन्तु अङ्गीकुर्वन्तु, इतिभावः । अत्र च दृष्टान्तं प्रकटयति—अब्जमिव पद्मकराः, पद्ममिव पद्मपाणयः । सूर्या इति शेषः ॥ ९ ॥

उल्लासिनं निजदृशा सुदृशां सभायां
वारामधीशमिव चन्द्रिकयेव चन्द्रः ।
पुण्यात्मनां जडमपि प्रकरोति शक्तिः
सानुग्रहा भवतु सा मयि निर्गुणेऽपि ॥१०॥

अत्र यच्छब्दोऽध्याह्रियते । तेन या पुण्यात्मनां महात्मनां शक्तिस्सामर्थ्यं जडमपि मूर्खमपि पुरुषं उल्लासिनं प्रकरोति । कया, निजदृशा 'दृग् द्रष्टृदर्शनध्यक्ष्णि' इति श्रीहेमाचार्यवचनात् निजदृशा स्वदर्शनेन स्वस्वरूपाविर्भावलक्षणेन । क, सभायां पर्षदि । केषां, सुदृशां सम्यग्दृशाम्, अर्थात् पण्डितानामिति । उक्तमेवार्थं दृष्टान्तेन दृढयति—यथा चन्द्रः चन्द्रिकया ज्योत्स्नया वारामधीशं समुद्रं तथेत्युपसंहारः । सा पुण्यवच्छक्तिर्निर्गुणेऽपि मयि ग्रन्थकृति सानुग्रहा भवतु अनुग्रहपरा भवत्विति भावः ॥१०॥

प्राप्य प्रसत्तिमृषभाद्यसमार्हतां वाग्-
देव्या गुरोश्च विदुषा च सशक्तिमित्थम् ।

श्रीमत्तपागणनभोऽङ्गणभास्कराणां
भक्त्या भणामि गुणमाप्तगिरा गुरूणाम् ॥११॥

ऋषभादयोऽसमा निरुपमा ये अर्हन्तस्तीर्थङ्कराः । अथवा असमा विषमा अर्थात् पञ्च, ऋषभादयो वीरान्ता अर्हन्तस्तेषा ऋषभाद्यसमार्हताम । पुनः, वाग्देवी सरस्वती तस्या वाग्देव्याः । पुनः, निजगुरोः स्वधर्माचार्यस्य । पुनः,विदुषाम्-अपरेषामपि पण्डितानामिति । सशक्ति पुण्यवच्छक्तियुक्ता प्रसत्ति प्रसादं प्राप्य अधिगमगोचरीचरीकृत्य । कथम्, इत्थमित्यमुना प्रकारेण । तत एषामर्हदादीना प्रसत्ति प्राप्येत्यनेन सर्वशुभोदर्कसम्पर्कशालिनी निखिलप्रत्यूहव्यूहोपशान्तिर्निरूपिता । अथैतेन काव्यदशकेनार्हदादिनमस्कारपुरस्कारलक्षण मङ्गल, एतत्पद्यपूर्वार्द्धेन प्रकटीकृत्य, क्त्वाप्रत्ययस्य चोत्तरक्रियासापेक्षत्वात् पश्चिमार्द्धेन चिकीर्षितमभिधेयं प्रतिजानीते । गुरूणा गुणम्, अग्रे वक्ष्यमाणलक्षणं, भणामि वच्मि । यद्यपि गुणानां प्राचुर्येणैकत्वं नोपपद्यते तथापि जातावेकवचनमित्युक्तत्वात् सौभाग्यस्य प्राधान्यख्यापकत्वाच्चात्रैकत्वमदुष्टमेवेति । गुरूणां किं० श्रीमान सश्रीको यस्तपागणस्तदेव व्योमाङ्गणं तत्र भास्कराः तदुद्द्योतकत्वात् तेषाम् । तथा आप्ता हिताहितप्राप्तिपरिहारोपदेशिनी गीर्येषा तेषाम । अथवा आप्तस्तीर्थकृत्तद्वत् शुद्धमार्गप्ररूपकत्वेन गीर्येषा तेषामिति ॥

अथैतेनाभीष्टदेवतानमस्काररूपमङ्गलाचरणपूर्वकं शास्त्रस्याभिधेयं, तेन सह प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धश्चाभ्यधायि । प्रयोजनं च शिष्यप्रशिष्यावबोधजननं, तेन

च परोपकारद्वारेण क्रमेण सकलदुःखक्षयान्मोक्षप्राप्तिश्चेत्यात्मसामर्थ्यादाक्षिप्यते । नहि कण्टकशाखामर्दनवत्, काकदन्तपरीक्षावच्च निष्फला प्रवृत्तिर्मन्दस्यापि भवति किंपुनः सकलावसरसावधानधीजुषां प्रेक्षाचक्षुषामिति दिक् ॥११॥

अथ काव्यद्वयीद्वारेण विस्तरेण विशिष्याभिधेयमभिधत्ते—

ये श्रीअकब्बरधराधिपचित्तपद्म-
तिग्मत्विषां महिममीनमहोदधीनाम् ।
राजन्ति हीरविजयव्रतिपुङ्गवानां
पट्टे तटे सुरधुनेरिव राजहंसाः ॥१२॥

सौभाग्यभाग्यवरवैभवविश्रुताना-
मोजस्विनां विजयसेनमुनीश्वराणाम् ।
तेषामशेषसुखकृद् विजयप्रशस्ति-
संज्ञं मनोज्ञरचनं रचयामि काव्यम् ॥१३॥

(युग्मम्)

तेषां विजयसेनमुनीश्वराणां विजयप्रशस्तिसंज्ञं पुनर्ग्रन्थकृत्प्रोक्तविजयवंशापरनामकं काव्यं रचयामि करोमीत्यन्वयः । किं० मनोज्ञरचनं साधुसन्दर्भम् । अथवा क्रियाविशेषणमिदम् । तेषां किं० सौभाग्यं 'सुभगाओ सव्वजणइट्ठो' इत्यादिप्रवचनवचनाज्जगज्जनवल्लभत्वम् । अथवा—

'सद्गमनसन्निरीक्षणसज्जल्पनमिति वदन्ति लावण्यम् ।
ईश्वरता सुस्वरता सुन्दरता चेति सौभाग्यम्' ॥ १ ॥

इत्यादिलौकिकोक्तेः ईश्वरत्वसुस्वरत्वसुन्दरत्वलक्षणं सौभाग्यम्; तथा भाग्यं भागधेयम्; तथा वरवैभवः प्रधानज्ञानविज्ञानविनयादिसम्पत्तिरूपस्तैर्विश्रुताना प्रतीतानाम्। पुनः कि० 'ओजो दीप्तौ प्रकाशे बलेऽपि' इत्यनेकार्थत्वात् ओजस्विना दीप्तिमतां, तपस्तेजोराजित्वात्। अथवा प्रकाशवता, सर्वसर्वज्ञशासनप्रकाशकत्वात्। अथवा बलवता, परवादिवृन्दजेतृत्वात्। तेषा केषामित्याह—ये श्रीति। श्रिया सार्वभौमस्पर्द्धिन्या चतुरङ्गचमूरूपया लक्ष्म्या युक्तः श्रीअकब्बरः अग्रे वक्ष्यमाणलक्षणः स धराधिपो राजा तच्चित्तपद्मे तन्मनोऽम्भोजे तिग्मत्विषः सूर्यास्तदुल्लासहेतुत्वात्तेषाम्। तथा महिममीनमहोदधयः माहात्म्यमत्स्यमहासमुद्रास्तेषां परममहिमपात्राणामिति, हीरविजयव्रतिपुङ्गवाना पट्टे ये राजन्ति गच्छाधिपत्यभाजः शोभन्ते इति। कथं, सुरधुनेः गङ्गायाः तटे कूले राजहंसा मराला इवेति दृष्टान्तघटना। उणादिसिद्धो धुनीवन्नदीवाचको धुनिशब्दोऽप्यस्तीति ध्येयम् ॥१२॥१३॥

अथ ग्रन्थकारः श्रीविजयसेनसूरिवृत्तमामूलचूलं व्याचिख्यासुरादितस्तदुत्पत्तिभूमिप्रदेशं मेदपाटदेशं द्वादशभिर्वृत्तैर्वर्णयति। तथाहि—

कर्णाटलाटघनघाटविराटमुख्य-
देशेषु मुख्यमुकुटः खलु मेदपाटः।
अस्ति प्रशस्ततमशस्तसमस्तवस्तु-
विस्तारवानुडुषु चन्द्र इवातिचारुः ॥१४॥

कर्णाट-लाट-घनघाट-विराटाः देशविशेषाः।अत्र मुख्यशब्दात् अन्येष्वपि सौराष्ट्र–महाराष्ट्र गौड–चौड–चीन–महाचीन-वत्स-मत्स्य–कच्छ–काशि–कोशल–कुरु–मरुप्रभृतिषु देशेषु, मुख्यमुकुटः प्रधानमौलिः, यदनेकार्थः–'मुख्यं प्रमुखे प्रधाने च' इति। मेदपाटो नाम्ना देशः, अस्तीति वर्त्तते। कीदृशः, प्रशस्ततमानि अतिप्रशस्यानि, शस्तानि माङ्गल्यरूपाणि, समस्तानि सर्वाणि, वस्तूनि, यानि पुरतो वक्ष्यमाणलक्षणानि, तेषा विस्तारस्तद्वान्। अत्र दृष्टान्तं स्पष्टयति– उडुषु नक्षत्रेषु, इवेति यथा, चन्द्रः शीतांशुः। स च देशश्च कि०, अतिचारुः अतिशयेन रम्य इति ॥१४॥

गाः प्रेक्ष्य यत्र नितमाममृतं धरन्तीः
प्रोच्चैः परस्परमिति प्रवदन्ति लोकाः।
कृच्छ्रं पयोधिमथनेन सतीष्विमासु
देवैर्व्यधाय्यमृतलब्धिधिया मुधा तत् ॥१५॥

यत्रेति मेदपाटदेशे इति सर्वत्राग्रतोऽपि प्रयोज्यम्। गाः सुरभीः, प्रेक्ष्य दृष्ट्वा, लोकाः, परस्परम् अन्योन्यम्, इति, प्रवदन्ति इत्यन्वयः। गाः किंकुर्वन्तीः, धरन्तीः बिभ्रतीः। कि० अमृतं गोरसं, शब्दच्छलात् सुधामपि। इतीति किमित्याशङ्कानिरासाय प्राह– कृच्छ्रमिति। इमासु गोषु, सतीषु विद्यमानासु, देवैः सुरैः, अमृतलब्धिधिया पीयूषप्राप्तिबुद्ध्या, पयोधिमथनेन कृच्छ्रं व्यधायि। यद् इत्यध्याहार्यम्। श्रूयते हि

त्रयस्त्रिंशत्कोटीमिता अमर्त्या अमर्त्यपर्वतमन्थानकेन पाथोनिधि मथ्यमानास्तेन नानारत्नैरर्चिता अपि भीमतमविषेण भापिता अपि पीयूषप्राप्तिमन्तरा न विराममीयुः । किञ्च । एतदर्थानुवादप्रतिपादकं माघमहाकाव्यकाव्य यथा—

"रत्नैर्महाब्धेस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधा विना न प्रययुर्विराम नानिश्चितार्था विरमन्ति धीराः"॥१॥

इत्याद्युक्तत्वात्, अमृताप्तये यत्कष्टं सुरैश्चक्रे तन्मुधा, निरर्थकमितिभावार्थः। गवा द्वारेणैव तदर्थसिद्धेरिति हृदयम् । मुधा इत्यव्ययम् ॥१५॥

यत्रोच्चचम्पकतमालरसालसाल-
हिन्तालतालकुलकाननकाश्यपीषु ।
क्रीडाऽर्थमास्थितमसंस्थितमुत्सुपर्व-
वृन्दं न नन्दनधरासु करोति कामम् ॥१६॥

उच्चा उन्नताः, चम्पका हेमपुष्पकाः, तमालाः तापिञ्छाः, रसाला इक्षवः, सहकारा वा, यदाहुः श्रीहेमाचार्यचरणाः— 'रसाल इक्षौ चूते च' इति । साला सर्ज्जतरवः, हिन्ताला वृक्षविशेषाः, तालाः तृणराजाः। तेषां यानि कुलकाननानि गृहवनानि । अथवा, तेषां वृक्षाणा कुलं समूहो येषु तानि, काननानि विपिनानि। तेषां काश्यपीषु तद्भूमिषु । क्रीडार्थमास्थितं केलिकृते स्थितम्, सुपर्ववृन्दं सुरसार्थः, नन्दनधरासु शक्रोद्यानावनीषु, कामम् अभिलाषम्, न करोति। क्रीडार्थं गन्तुं नोत्कण्ठत इत्यर्थः। सुपर्ववृन्दं कीदृ-

शं, संस्थिता विपन्ना, तदितरा तु असंस्थिता, अर्थात् जाग्रती; मुद् यस्य यत्र वा इति तत् । अथवैतत् क्रियाविशेषणम् । तदेतेन यत्र मेदपाटदेशे वनादिरामणीयकं नन्दनवनादपि अधिकमिति सूचयाञ्चकार ग्रन्थकारः ॥१६॥

स्वर्णादिधन्यधनधातुखनीर्निरीक्ष्य
यत्राविपत्तिपदवीः पदमुन्नतीनाम् ।
नो रोहणाचलसुधाऽश्यचलाचलासु
गन्तुं करोति ननु कोऽपि मनाग् मनः स्वम् ॥१७॥

स्वर्ण काञ्चनमादिर्येषां रजतादीनां ते स्वर्णादयः, धन्यानां भाग्यवतां, धनभूता धन्यधनाः, धन्यधनाश्च ते धातवश्च धन्यधनधातवः, स्वर्णादयश्च ते धन्यधनधातवश्च स्वर्णादिधन्यधनधातवः । तेषां स्वर्णादिधन्यधनधातूनाम्; उपलक्षणत्वाच्च रत्नादीनामपि; खनीः आकरान्, निरीक्ष्य दृष्ट्वा, रोहणाचलः रत्नशैलः, सुधाऽश्यचलश्च काञ्चनशैलः; तयोः अचलासु भूमिषु। गन्तुम्, कोऽपि; पुमानिति गम्यम् । स्वं मनो निजं हृदयम् । मनागपि ईषदपि, न करोति । इत्यनेन यत्र देशे रोहणाचलसुवर्णाचलाभ्यामपि रत्नस्वर्णादिधातूनामाधिक्यममूचीत्याशयः ॥१७॥

सद्भिभ्रमैरभिमता बिसतन्तुहारा-
श्चक्रस्तनाः कमलकोमलपाणिपादाः ।

यत्र श्रिय दधति नित्यरसाः सरस्यः
साक्षात् सरोरुहदृशः कलहंसयानाः ॥१८॥

यस्मिन् देशे, सरस्यः सरोवराणि, श्रियं दधति, शोभन्ते इत्यन्वयः । किंलक्षणाः, सन्तो विद्यमानाः, श्रेष्ठा वा, कलहंस–कोक–चकोर–मोर–सारस-सारङ्ग-शुक-चञ्चरीक-चाष-खञ्जनादयो ये, वयः पक्षिणः, तेषां भ्रमा भ्रमणानि, अर्थात् क्रीडनानि; तैः, अभिमताः प्रियाः । पुनः किं० बिसतन्तव एव हारा मुक्तादामानि यासां ताः । पुनः० चक्राः चक्रवाका एव स्तना यासां ताः । पुनः० कमलानि एव कोमलाः, पाणयो हस्ताः, पादाः चरणा यासां ताः । पुनः० नित्यं रसो जलं, स्वादो वा यासु ताः । पुनः० सरोरुहाण्येव दृशो यासां ताः । अथवा सरोरुहाणां दृग दर्शनं यासु ताः । पुनः० कलहंसानां कादम्बानां, यानं गमनं यासु ताः । इत्येकोऽर्थः ।

अथ द्वितीयोऽर्थः– तत्र सरोरुहदृश इति स्त्रियः, साक्षात् प्रत्यक्षाः, इवेत्यध्याहार्यम् । स्त्रियः किंलक्षणाः, सन्तः श्रेष्ठा विभ्रमा भ्रुवां विकाराः, तैरभिमताः । पुनः० बिसतन्तुतुल्याः, लम्बमानत्वात्, शुभ्रत्वाद् वा; हारा यासां ताः । पुनः० चक्राविव स्तनौ यासां ताः । पुनः० कमलवत् कोमलाः पाणयः पादाश्च यासां ताः । पुनः० नित्यं रसः शृङ्गारलक्षणो यासु ताः । पुनः० कलहंसवद् यानं गमनं यासां ताः । एतेन यत्र देशे सरसां, स्त्रीणां च सावर्ण्यं वर्णितमिति निर्गलितार्थः ॥१८॥

कूटोत्कटः प्रकटभूर्धुरि चित्रकूटः
प्रोत्तुङ्गशृङ्गकुटकुम्भलमेरुरन्यः ।
द्वौ यत्र नीवृति गुरू च गिरी विभातः
प्रोच्चौ कुचाविव धराहरिणीक्षणायाः ॥१९॥

च पुनः, यत्र नीवृति देशे, द्वौ गिरी, गुरू महान्तौ, विभातः शोभेते इत्यन्वयः। द्वौ कौ इत्याशङ्काया प्राह— धुरि आदौ, चित्रकूटः। कीदृशः, कूटैः शृङ्गैः उत्कट उद्भट इति कूटोत्कटः। पुनः कि०, प्रकटाः प्रसिद्धाः, भुवो भूमयो गृहाणि, अर्थात् देवादीनां स्थानानि यत्र सः। तथा, अन्यो द्वितीयोऽपि, प्रोत्तुङ्गशृङ्गाणां प्रकामोन्नतशिखराणा कुटो निलयः स चासौ कुम्भलमेरुश्च इति कर्मधारय। अथोत्प्रेक्ष्यते— प्रोच्चौ प्रकामोच्चौ, कुचाविव किं स्तनौ। कस्याः, धराहरिणीक्षणायाः मेदिनीमृगीलोचनायाः। इत्यनेन मेदपाटे भूयसां लघुशैलाना सद्भावेऽपि, चित्रकूटकुम्भलमेरुनाम्नोर्द्वयोर्धरित्रीधरयोर्मुख्यता उक्ता इति शेषः ॥१९॥

यत्राङ्गनाजनगृहप्रभुनिम्नगासु
रम्भासुधाशनविमानसुरेशगङ्गाः ।
सचक्रमुस्तदतिरागकृदङ्गसङ्ग-
रूपर्द्धिवैभवपयस्सुखमेति यस्मात् ॥२०॥

यस्मिन् देशे, अङ्गनाजनगृहप्रभुनिम्नगासु प्रमदालोकवे-

ऽमम्वामिमरित्सु, रम्भासुधाशनविमानसुरेशगङ्गाः देवाङ्गना देव-देवयान-देवराज देवनद्यः, संचक्रमुः परस्परं मिलिता इति भावः । कथमवगतमिति चेत् । उच्यते। यस्मात् कारणात् । तद्धदतिराग-कृन्ति रम्भादिदिव्यवस्तूनि इव भृशं रागकारीणि यानि अङ्गस-ङ्गरूपर्द्धिवैभवपयासि शरीरपरीरम्भसौन्दर्य्यसम्पत्तिसाम्राज्यस-लिलानि, तेषा यत्, सुखं शर्म। तत्, एति समभ्येति । तदुप-जीविना, ताभ्यश्चेति गम्यामिति ॥२०॥

सन्त्युल्लसत्सुमनसः सकलाः समाजाः,
लोके च यत्र निखिलेऽपि वृषानुरागाः ।
यत्रर्षयश्च सततं लसदक्षमालाः
यः स्वर्गलोक इव भाति तदत्र देशः ॥२१॥

यत्र देशे सकलाः समाजाः सभाः सन्ति । कीदृशाः, उल्लसन्तः सुमनसः पण्डिता येषु । स्वर्गपक्षे तु, सुमनसो देवा येषु इति। च पुनः, यत्र देशे, निखिलेऽपि समस्तेऽपि, लोके वृषा-नुरागाः धर्मरागाः। पक्षे, वृषा शक्रः तदनुरागाः। तथा च पुनः, यत्र ऋषयो मुनयः, नित्यं, लसदक्षमालाः लसन्त्यः शोभमाना अक्षमाला अक्षसूत्राणि येषा ते। पक्षे, लसन्ती अक्षमाला अरु-न्धती वशिष्ठर्षियोषिद् येष्विति । तस्मात्, अत्र भुवि यो देशो मेदपाटः स्वर्गलोक इव भातीति भावार्थः ॥२१॥

सीसोदियाऽन्वयिनृपे सति यत्र दस्यु-
दण्डोद्भव नहि भय भवति प्रजासु ।

अस्वप्नवर्त्मनि तपत्यधिपे प्रभाणां
किं शीतसन्तमसभूर्भुवि दुःखदाहः ॥२२॥

सीसोदियावंशीये नृपेऽधिकारात् श्रीउदयसिंहाभिधानके श्रीराणके राजति सति, यत्र मेदपाटे, प्रजासु लोकेषु, दस्युदण्डोद्भवं तस्करकरसम्भवम्, भयं न भवतीत्यन्वयः। अत्र च दृष्टान्तं योजयति— अस्वप्नवर्त्मनि गगने, प्रभाणामधिपे गगनध्वजे, इव यथा, तपति सति, शीतसन्तमसभूः तुषारतमोभवः, दुःखदाहः । किमित्याशङ्कते कविः । किं भवति, अपि तु न इत्यर्थः ॥२२॥

वस्वादिधातुकरमाकरमाकराणा-
माकर्ण्य यत्र विषये विषयेषु मुख्ये ।
श्रीरोहणो धरणिभृद् भृशमित्यहृष्यद्
यट्टङ्ककोटिखननादसुखं न मेऽथ ॥२३॥

'वसु स्वर्णे रत्ने धने' इत्यनेकार्थत्वात्, वस्वादयः स्वर्णादयो ये धातवः । अथवा, वस्वादयो रत्नादयः पदार्थाः स्वर्णादयो धातवश्च इति द्वन्द्वः। तान् करोतीति वस्वादिधातुकरस्तम्, 'आकरो निकरे खनौ च' इत्यनेकार्थत्वात्, आकराणां खनीनाम्, आकरं निकरम्, यत्र विषये, यस्मिन् मेदपाटदेशे । कि०, विषयेषु देशेषु मुख्ये, आकर्ण्य श्रुत्वा, श्रीरोहणो धरणिभृद् रोहणनामा गिरिः, इत्यहृष्यत हृष्यति स्म,

इतीति किम्, यद् यस्मात्कारणात् टङ्ककोटिखननात् अथ मे मम असुखं न भावीति भावः ॥२३॥

यत्रोत्तमाचरणजीवितवित्तिविद्या-
व्यापारवंशवसवो निवसन्ति लोकाः ।
कर्तुं पुनः कृतयुगं कृतनिश्चयेन
बीजं न्यधायि विधिनेव तदंशपुंसाम् ॥२४॥

यस्मिन् देशे लोका निवसन्ति इत्यन्वयः । कि०, उत्तमाचरणजीवितवित्तिविद्याव्यापारवंशवसवः । अत्र उत्तमशब्दस्य प्रत्येकं प्रयोगः । तेन उत्तमानि उत्कृष्टानि आचरणजीवितवित्तिविद्याव्यापारवंशवसूनि चरित्रायुर्विचारज्ञानव्यवहारकुलधनानि येषां ते । पश्चिमार्द्धेनोत्प्रेक्षते कविः— पुनः कृतयुगं कर्तुं, कृतनिश्चयेन निमितप्रतिज्ञेन, विधिना धात्रा, तदंशपुंसां कृतयुगांशधारिणां पुरुषाणां, बीजम् उत्पत्तिनिमित्तम्, न्यधायि स्थापितमिति । शेषं सुगमम् ॥२४॥

स्वैरं भ्रमन्नमरवर्त्मनि वीक्षणीयं
क्षोणीतलं विविधविस्मयमीक्षमाणः ।
एति स्म धर्मभृति नीवृति नारदर्षि-
स्तत्रैकदा कलहकौतुककेलिकन्दः ॥२५॥

स्वैरं यथेच्छम्, अमरवर्त्मनि नभसि, भ्रमन् विचरन्, क्षोणीतलं भूमण्डलम् । किं०, विविधविस्मयं विचित्रविस्मयं,

नानाऽद्भुतमयत्वात् । अत एव वीक्षणीय विलोकनीयम्, ईक्षमाणो मृगयमाणः, धर्मभृति पुण्यवति, तत्र नीवृति देशे, नारदर्षिर्नारदनामा मुनिः, एकदा कदाचित्, एति स्म अभ्यागादिति । किं० कलह एव कौतुकमुत्सवस्तस्य केलेर्नर्मणः कन्द इव कन्दः, मूलमित्यर्थः ॥२५॥

एकत्र तत्र पृथिवीं प्रविलोक्य पृथ्वीं
सोऽवीवसन्नगरमृद्धिमयं स्वनाम्ना ।
भुव्यत्र नारदपुरीति पुरी गरीयः-
श्रीस्तैलबिन्दुरिव पाथसि पप्रथे सा ॥२६॥

एकत्रेति एकस्मिन् प्रदेशे, तत्रेति तस्मिन् मेदपाटे देशे, पृथ्वीं विशालाम्, पृथिवीं भूमिम्, विलोक्य निभाल्य, स नारदमुनिः, स्वनाम्ना निजसंज्ञया, नगरं, अवीवसत् अवासयत् । तदेवाह— अत्र तेनेत्यध्याहार्यम् । तेन कारणेन अत्र भुवि भूमौ, सा पुरी नारदपुरीति नाम्ना, पप्रथे ख्यातिं प्राप । सा किं० गरीयसी महीयसी श्रीः शोभा सम्पद् वा यत्र सा । तैलबिन्दुर्यथा पाथसि पानीये, इति दृष्टान्तः ॥२६॥

अथ तां नगरीमेकोनविंशत्या वृत्तैर्वर्णयति । तथाहि—

प्रद्युम्नसंज्ञमधुजित्तनुजेन यत्रा-
भ्यर्णावनिध्रशिखरे जिननेमिचैत्यम् ।

निर्मापितं पथि दृशोस्तदुपैति रम्य-
मद्यापि च स्फुरति तन्महिमा महीयान् ॥२७॥

प्रद्युम्नसंज्ञेन मधुजित्तनुजेन श्रीकृष्णविष्णुपुत्रेण, यत्र यस्यां नगर्याम्, अभ्यर्णावनिध्रशिखरे पार्श्ववर्त्तिपर्वतशृङ्गे, जिननेमिचैत्यं नेमिनाथजिनौकः, निर्मापितं कारितमस्तीति । तच्चैत्यम्, अद्य यावत्। रम्यं मनोहरम्, नेत्रयोर्नयनयोः, पथि मार्गे, उपैति। च पुनः, तन्महिमा कि० महीयान् अतिमहान्, स्फुरति कलावपि देदीप्यत इति ॥२७॥

नव्याञ्जनद्युतिपदं प्रतिमां च तत्र
चैत्ये न्यधाद्भगवतः स हृदीव त स्वे ।
साऽद्यापि दैवतलतेव हितार्थहेतुः
साक्षाच्छिवासुत इवैत्यतुल प्रभावम् ॥ २८ ॥

नव्यं स्तवनार्हं अथवा नव्यं नवीनं यदञ्जनं कज्जलं तद्वद् या द्युतिस्तस्याः पदमास्पदं, प्रतिमां, तत्र प्रासादे, भगवतो नेमेः, न्यधात् स्थापयामास। स प्रद्युम्नः कुमारः। इवोत्प्रेक्ष्यते; तं भगवन्तमेव; स्वे हृदि निजे मनसि। यतो भगवतो भगवन्मूर्त्तेश्च नान्तरमिति। एनमेवार्थं समर्थयन् पश्चिमार्द्धं प्राह—सेति। सा प्रतिमाऽरिष्टनेमिस्वामिमूर्त्तिः, अद्याप्यधुनाऽपि, दैवतलतेव कल्पवल्लिवत्, हितार्थहेतुः कामितकार्यकारिणी, साक्षात् प्रत्यक्षः, शिवासुत इव श्रीनेमिरिव, अतुलं निरुपमम्, प्रभावं माहात्म्यम्, एति प्राप्नोतीति ॥ २८ ॥

उत्तुङ्गशृङ्गसुभगः पुरि यत्र धत्ते
शोभां समीपभुवि जेषलसंज्ञशैलः ।
मूर्द्धाग्ररुद्धविबुधाध्वनि यत्र याम्यो-
दग्वर्त्मनाऽटति रवी रथभङ्गभीरुः ॥ २९ ॥

यत्र पुरि यस्यां नगर्यां, जेषलसंज्ञशैलो जेषलनामा गिरिः, शोभां धत्ते शोभते इति । कि० उत्तुङ्गानि उच्चानि, यानि शृङ्गाणि शिखराणि तैः सुभगो मनोज्ञः । एतद्विशेषणमेव समर्थयति— मूर्द्धाग्रैः शृङ्गैः रुद्धो विबुधाध्वा आकाशो येन तत्र, यत्र जेषलगिरौ, रविः सूर्यः, अटति याति । केन, याम्योदग्वर्त्मना दक्षिणोत्तराध्वना । विशेषणद्वारा तद्धेतुमाह— रथभङ्गे भीरुः चकितः; इत्यनेन जेषलगिरौ मा मम रथभङ्गो भवत्विति धिया सूर्यो दक्षिणायनेनोत्तरायणेन च व्रजतीति विस्तरार्थः ॥ २९ ॥

पूर्णं सुपर्वपटलैरतिरम्यनाना-
रम्भास्पदं वृषविनोदवरं महाढ्यम् ।
वासद्वयं समतमं प्रथमद्वितीय-
देवौकसोरिव विराजति यत्र पुर्याम् ॥३०॥

यत्र पुर्यां, वासद्वयं, विराजतीत्यन्वयः । प्रथमद्वितीयदेवौकसोः सौधर्मेशानयोः स्वर्ल्लोकयोरिव । अथोभयमपि समानधर्मविशेषणद्वारेण विशिनष्टि— वासद्वयं कि० पूर्णं पूरितम् । कैः, सुपर्व-

पटलैः, शोभनानि पर्वाणि उत्सवाः तेषां पटलैः वृन्दैः; पक्षे सुपर्वाणो देवास्तेषां पटलैरिति । पुनः कि० अतिरम्या भृशं मनोज्ञा नाना विविधा ये आरम्भा व्यापारास्तेषामास्पदम्; पक्षे अतिरम्या या नाना रम्भा देवव-वस्तासामास्पदम्। पुनः कि० वृषस्य धर्मस्य, विनोदेन विलासेन, वरम्; पक्षे वृष्णः शक्रस्येति । शेषं सुगमम् । पुनः कि० महान्त आढ्या इभ्या यत्र तत्; पक्षे महः तेजोभिराढ्यम् । तत्र नित्योद्द्योतसद्भावादिति भावः ॥ ३० ॥

माणिक्यमौक्तिकमहामणिमुख्यनाना-
वस्तुप्रशस्ततमहट्टविराजमानाम् ।
भूयोदिगागतबहुव्यवहारिवर्या
यां कुत्रिकापणमिव प्रवदन्ति लोकाः ॥३१॥

यां नगरीं, कुत्रिकापणमिव, लोकाः प्रवदन्तीत्यन्वयः । यां किं० माणिक्यानि वैडूर्यादीनि, मौक्तिकानि मुक्ताफलानि, महामणयः चन्द्रकान्ताद्याः, तन्मुख्यैः तत्प्रमुखैः, नानावस्तुभिः, प्रशस्ततमा ये हट्टास्तैः विराजमानाम् । पुनः किं० भूयो दिग्भ्य आगता ये बहवो व्यवहारिणो व्यापारिणस्तैः वर्याम् । अनेन परदेशायातार्थिनां कल्पितार्थप्रापकत्वात् कुत्रिकापणोपमेति ॥३१॥

इक्शैत्यचैत्यशिखरस्थमहाध्वजानां
छायाः क्षितौ प्रतिपदं पुरि यत्र भान्ति ।

नित्यं नवाञ्जननिभाः फणिनः किमन्तः-
क्ष्मं स्थायिनिध्यवनसूत्रितसुप्रयत्नाः ॥३२॥

यत्र पुरि पुर्याम्, प्रतिपदं पादन्यासं प्रति; पदे २ इति यावत्। दृशां चक्षुषां, शैत्यं शीतलत्वं, येभ्यस्तानि चैत्यानि तेषां यानि शिखराणि, तदग्रस्था ये महान्तो ध्वजाः केतवस्तेषां छायाः, भान्ति शोभन्ते इति । उत्प्रेक्षामाह— क्ष्माया अन्तः अन्तःक्ष्मं, तत्र स्थायिनो ये निधयस्तेषामवने रक्षणे सूत्रितसुप्रयत्ना निर्मितातियत्नाः, फणिनो भुजङ्गाः किमिवेति । कि० नवाञ्जननिभाः सद्यस्ककज्जलतुल्याः । अनेन श्यामत्वमसूचि छायायामिति ॥३२॥

यच्चैत्यपङ्क्तिमतिचारुमुदीक्ष्य विश्व-
कर्मा स्वकर्मकुशलत्वमलं निनिन्द ।
स्वर्गौकसां सदनवृन्दमदो यथेच्छं
हा ! कुर्वतोऽप्यजनि मे न बुधत्वमीदृक् ॥३३॥

यच्चैत्यपङ्क्तिं यन्नगरस्थविहारराजीम्। कीदृशीम्, अतिचारुं भृशं चार्वीम्, उदीक्ष्य दृष्ट्वा, विश्वकर्मा सुरसूत्रधारः, स्वकर्मकुशलत्वं निजकार्यकौशलम्, अलमत्यर्थं, निनिन्द निन्दयाञ्चक्रे । तदेवोत्तरार्द्धद्वारेणाह— स्वर्गौकसां देवानां, सदनवृन्दं गृहव्यूहम्, अदः प्रत्यक्षं, कुर्वतोऽपि मम ईदृग् यन्नगरचैत्यपङ्क्तितुल्यं बुधत्वं नैपुण्यं नाजनि न जातमिति । हेति खेदवाचकोऽव्ययः ॥ ३३ ॥

यच्चैत्यसन्ततिमुदारतरप्रपञ्चां
निर्वर्ण्य विस्मयवतीं सृजतां दृशं स्वाम् ।
नन्दीश्वरत्रिदशवेश्मसुराद्रिमुख्य-
प्रासाददर्शनरुचिः शिथिलीबभूव ॥३४॥

यच्चैत्यसन्तति यन्नगरवर्त्तिनीं प्रासादपङ्क्तिम् । कीदृशीम्, उदारतरः प्रपञ्चो विस्तारो यस्यास्ताम्, निर्वर्ण्य दृष्ट्वा, विस्मयवतीम् अद्भुतधारिणीम्, स्वां दृशं निजां चक्षुषं, सृजतां कुर्वताः द्रष्टृणामिति यावत् । नन्दीश्वरोऽष्टमद्वीपः, त्रिदशवेश्म स्वर्गः, सुराद्रिर्मेरुस्तत्प्रमुखाणां ये प्रासादाः देवगृहाणि, तद्दर्शनरुचिः तद्विलोकनस्पृहा, शिथिलीबभूव श्लथतां गतेत्यर्थः ॥३४॥

चैत्यानि यत्र पुरि लोकदृशां वितीर्ण-
शैत्यानि वीक्ष्य परिपावितपातकानि ।
तच्छिल्पिनां सकलपेशलकौशलेन
प्रीतो विनेयगतिमिच्छति विश्वकर्मा ॥३५॥

यत्र चैत्यानि । किं० लोकदृशां वितीर्णशैत्यानि । पुनः किं० परिपाविताः भृशं पवित्रिताः पातकाः यैस्तानि; वीक्ष्य; तच्छिल्पिनां तत्कर्तृणां, सकलं निखिलम्, पुनः पेशलं रम्यं, यत्कौशलं दक्षत्वं, तेन प्रीतो हृष्टो, विश्वकर्मा त्वष्टा, विनेयगतिं शिष्यावस्थाम्, इच्छति वाञ्छतीत्यर्थः ॥ ३५ ॥

यत्राशु गन्तुमनसामभिसारिकाणां
वर्त्म व्यनक्ति पतिधाम्न्युदयेऽब्जबन्धोः ।

आमोदिनीषु पतयालुषडंह्रिपङ्क्ति-
धम्मिल्लतः पतितपुष्पपरम्परासु ॥ ३६ ॥

यस्यां पुर्याम्, अब्जबन्धोः सूर्यस्योदये जायमाने सति, पतिधाम्नि स्वभर्तृभवने, आशु शीघ्रं, गन्तुं मनो यासां ताः; निजगृहं गन्तुकामा या अभिसारिकाः कामक्रीडाकृते स्वेष्टापरपुरुषसङ्केतकारिकाः । यदाहुः पूर्वाचार्यपादाः—

"हित्वा लज्जाभये श्लिष्टा मदेन मदनेन वा ।
याऽभिसारयते कान्तं सा भवेदभिसारिका" ॥ १ ॥

अनङ्गरङ्गेऽपि यथा—

"मदनाकुलिताऽतिनिस्त्रपा कृतभूषा निशि गूढचारिणी ।
सुरताय परालये व्रजेत् कवयस्तामभिसारिकां विदुः" ॥२॥

इत्युक्तलक्षणानामभिसारिकाणाम्; व्यभिचारिणीनां स्त्रीणामिति यावत् । धम्मिल्लतः संयतकेशकलापतः, पतिता याः पुष्पपरम्पराः प्रसूनश्रेण्यस्तासु । कि० आमोदिनीषु, 'आमोदो गन्धहर्षयोः' इत्यनेकार्थत्वाद् गन्धवतीषु हर्षवतीषु चेति । पतयालुषडंह्रिपङ्क्तिः पतनशीला भृङ्गालिः, वर्त्म मार्गं, व्यनक्ति प्रकटयति; लोकानां ज्ञापयतीति गम्यम् ॥३६॥

राकासु शुभ्रतरभूरिमहेभ्यसौध-
वीथी व्यनक्ति पुरि यत्र महोज्ज्वलासु ।
प्रोद्यत्प्रभापटलपेशलमूर्त्तिजाल-
जालोच्छलच्छविगृह गृहरत्नवृन्दम् ॥३७॥

यस्यां क्षुरि, राकासु पूर्णिमासु । कि० महैस्तेजोभिः उज्ज्वलासु गौरासु; शुभ्रतरभूरिमहेभ्यसौधवीथी धवलतमबहुमहेभ्यगृहश्रेणि, गृहरत्नवृन्दं दीपकसमूहो, व्यनक्ति विवेकवतीं करोति । गृहरत्नवृन्दं कि० प्राग्रत्नप्रभाणा चञ्चद्रुचीना, पटलकेन पेशला मूर्त्तिर्यस्य तत् । पुनः कि० जालानां गवाक्षाणा यज्जालं चक्रवालस्तत्र उच्छलन्ती या छविः शोभा तस्या गृहमाधार इति । अत्र पूर्णिमासु हि सर्वत्र प्रसमरकौमुदीसमुद्योतेन धरातले धवलताऽद्वैतभावात् प्रभ्रष्टकोकिलकलहसकस्तूरीकर्पूरपारीसैरभीसुरभीप्रभृतिपदार्थविवेकासु तथाविधधवलगृहाणा तज्जालकगतदीपस्पष्टव्यक्तचिह्नेनैव विवेकः क्रियते; तत्तेजसोऽतिभास्वरत्वादिति तात्पर्य्यम् ॥३७॥

श्यामासु यत्र नगरे कुलटा भ्रमन्त्यः
श्यामासु नीलवसनाभरणाभिरामाः ।
स्वं सूचयन्ति सुझणत्कृतिनूपुराणां
प्रोत्सर्पिभिर्ध्वनिभिरेव मनोजतूर्यैः ॥३८॥

यत्र नगरे, नारदपुरीनाम्नि, श्यामासु श्यामासु कृष्णासु निशासु, कुलटाः स्वैरिण्यः स्त्रियो, भ्रमन्त्यः । पुनः कीदृश्यः, नीलानि, वसनाभरणानि वस्त्रभूषणानि, तैरभिरामा रम्याः; स्वमात्मानं, सूचयन्ति ज्ञापयन्ति । कैरित्याह—सुष्ठु शोभना झणत्कृतयो झङ्कारा येषां तानि, नूपुराणि मञ्जीराणि, तेषां प्रोत्सर्पिभिः प्रसरणशीलैः, ध्वनिभिर्नादैरेव । अत्र एवकारोऽन्ययोगव्य-

वच्छेदकः । तेन, नान्यैः प्रकारैरिति । किं० मनोजस्य स्मरस्य तूर्यैर्वाद्यैः । तत्सद्भावे हि तस्योज्जागरूकत्वात् ॥३८॥

कामान्निकामतमदानपरां नराणां
श्रेणिं निरीक्ष्य पुरि यत्र समृद्धिभाजि ।
छायाजुषामपि मदं स्वमहीरुहाणा-
मौदार्यजातममुचन्नमराः समस्तम् ॥३९॥

समृद्धिभाजि सम्पत्तिशालिन्यां, यत्र पुरि यस्या नगर्यां, कामात् अभिलाषात्, निकामतमेऽतिशायिनि, दाने वितरणे, परां तत्परां, नराणां श्रेणिं, निरीक्ष्य वीक्ष्य, 'छाया शोभायामनातपे च' इति वचनादातपाभाववतां शब्दच्छलाच्छोभाजुषामपि, स्वमहीरुहाणां कल्पद्रुमाणां मदं दर्पम् । किं० औदार्यात् उदारत्वात्, जातं सम्भूतम्, अमराः सुराः, अमुचन् त्यजन्ति स्मेति । शेषं स्पष्टम् ॥३९॥

यत्रातिमात्रपृथुपुष्करिणीषु नित्य-
माभान्ति मज्जनसृजा सुदृशां मुखानि ।
तत्पालिपादपचयस्थवयःस्थवृन्द-
नेत्रद्विरेफललनाय किमम्बुजानि ? ॥४०॥

यत्र यस्यां नगर्याम्, अतिमात्रमतिमर्यादं, पृथ्व्यो विस्तीर्णाः, याः पुष्करिण्यो वाप्यः, तासु अतिमात्रपृथुपुष्करिणीषु, मज्जनसृजां स्नानकृतां, सुदृशां स्त्रीणां, मुखानि, आभान्ति शोभन्ते इति । किमित्युत्प्रेक्ष्यते— तासा पुष्करिणीना, पालिस्सेतुः,

तत्र यः पादपचयस्तरुनिकरः, तत्रस्था ये वयःस्था युवानः क्रीडार्थमागता इति गम्यम्। तेषां यद् वृन्दं तस्य,नेत्रद्विरेफललनाय लोचनालिखेलनाय, किमम्बुजानि कमलानीत्यर्थः ॥४०॥

यत्रावलोक्य कनकोत्करमर्कतर्क
रात्न प्रभापटलपेशलमुच्चयं च ।
अस्वप्नभूमिभृति रोहणभूधरे च
ग्रावेति सत्यमभिधानममानि लोकैः ॥४१॥

यत्र यस्या पुरि, कनकोत्करं काञ्चननिचयम्। किं० अर्कः सूर्यस्तस्य तर्कः उपहासो यस्मात्तम्ः भृशमाभास्वरत्वात्। च पुनः, रात्नमुच्चयं मणिगणम्, किं० प्रभापटलेन ज्योतिर्जालेन, पेशलं रुचिरम्, अवलोक्य निभाल्य, अस्वप्नभूमिभृति मेरौ, रोहणभूधरे च रोहणनाम्नि गिरौ, लोकैर्ग्रावेति अभिधानं नाम, सत्यं सूनृतम्, अमानि मेने। ग्रावा पर्वतः पाषाणश्चेति वचनच्छलात् पाषाण एवेति, यतो हेमरत्नरूपस्य तत्सारभूतस्यात्र सद्भावादिति भावार्थः ॥४१॥

वीथीषु यत्र मृगशावदृशो व्रजन्त्यः
पीनस्तनत्रुटितमध्यगुणप्रचारम् ।
नैवाविदन् पतितमप्यवनौ स्वहारं
लीलास्मितद्युतिषु सूत्रितमौक्तिकाशाः ॥४२॥

यत्र नगर्यां, मृगशावदृशः सारङ्गदारकलोचनाः, वीथीषु

वर्त्मसु, व्रजन्त्यः, अवनौ भूमौ, पतितमपि स्वहारं, नाविदन् न जानन्ति स्म । पतनहेतुमेव विशेषणद्वारेणाह—पीनस्तनेति । अत्र भावप्रधानो निर्देशस्तेन पीनस्तनत्वेन त्रुटितश्छिन्नो, मध्यगुणस्यान्तःस्थिततन्तोः, प्रचारश्चारो यस्य तम् । स्त्रियः किं० लीलास्मितद्युतिषु केलिहास्यकान्तिषु, सूत्रिता कृता, मौक्तिकानां मुक्ताफलानां, परस्परग्रथितहाररूपाणां, आशा स्पृहा, याभिस्ताः। हास्यं हि धवलमिति पूर्वकवयस्तेनेह हारोपमानमुपपद्यमानमित्याकूतम् ॥४२॥

वर्षोष्णशीतसमये स्वपितीव यत्र
वक्रभ्रुवामुरसि सूर्यकदर्पहर्ता ।
यत्पाणिना प्रहत एव तदीयतल्प-
स्थाने विमुञ्चति स सलयमंसलांसः ॥४३॥

वर्षोष्णशीतानां जलदग्रीष्महिमानां, यः समयः कालस्तत्र वर्षोष्णशीतसमये, यत्र पुर्यां, वक्रभ्रुवां योषिताम्, उरसि वक्षसि, सूर्यकदर्पहर्त्ता कन्दर्पः, स्वपितीव किं शेते । तत्र हेतुमाह– यतो हेतोस्तदीयतल्पस्थाने हृदये पाणिना प्रहत एव हस्तेनापि स्पृष्टे सति, स कन्दर्पः, संलयं निद्रां, विमुञ्चति जागर्त्तीत्यर्थः । स किं० अंसलौ पुष्टौ अंसौ स्कन्धौ यस्य सः, स्कन्धोद्धुरतयोत्तिष्ठतीति तत्त्वम् ॥४३॥

पुण्योदयादिव सदोदयनागराणां
योषामिषेण पुरि यत्र वसन्ति देव्यः ।

आलोकिता अपि मनाक् स्मृतिमागताश्च
कुर्वन्ति याः सुमनसा मनसां विनोदम् ॥४४॥

यत्र पुरि, सदोदया नित्योन्नतयो, ये नागराः पौराः, तेषा पुण्योदयाद् भाग्योदयात् । कि० योषामिषेण, कामिनीकैतवेन, देव्यो देवाङ्गनाः, वसन्ति दिव्यभावमेव व्यञ्जयन्ति। मनागिति ईषद्वाचकोऽव्ययः स तु प्रत्येकं प्रयोज्यस्तेन या योषाः, मनाक् आलोकिता दृष्टा अपि, च पुनः, मनाक् स्मृतिमागताः स्मृता अपि, सुमनसा पण्डितानां देवाना च, मनसा विनोदं कुर्वन्ति । देवाङ्गना हि देवाना मनो विनोदयन्त्येव। यदार्षम्—"दोकप्प-कायसेवी दो दो दो फरिसरूवसद्देहि । चउरो मणेणुवरिमा" इत्या-दिवीतरागागमवचनादयमर्थः समर्थः ॥४४॥

यत्र स्थितिः प्रतिगृह पुरुषोत्तमस्य
सर्वत्र तद् वसति पुत्रयुताऽब्धिपुत्री ।
कि चित्रमत्र यदर नगर विभाति
नित्य समृद्धमतिकामविलासभृच्च ॥४५॥

यत्र पुर्यां, प्रतिगृहं प्रतिमन्दिरं, पुरुषोत्तमस्योत्तमपुरुषस्य श्रीपतेश्च, स्थितिरवस्थानमस्ति । तत्तस्माद्धेतोः पुरुषोत्तमावास-सद्भावात् पुत्रयुता सकन्दर्पा अब्धिपुत्री लक्ष्मीर्वसति। तद्धेतुक-मर्थमाह– किं चित्रमद्भुतमत्रार्थे । केत्याह– यन्नगरं अरमतिशयेन, श्रीनिवासात्समृद्धम् । च पुनः, अतिकामविलासभृत् अतिशयेन

स्मरविनोदशालीति । अत्र पुरुषोत्तमपदेन धर्मः सूचितः । अर्थकामौ तु व्यक्तावेवेति पुरुषार्थत्रयावस्थितिः सूचितेति रहस्यम् ॥४५॥

अथ नारदपुरीनगरीवर्णनादनन्तरं तन्निवासिनं गुरुपितरं कमाभिधानश्रेष्ठिनं त्रयोदशभिर्वृत्तैर्वर्णयति । तथाहि—

तस्यां पुरि प्रचुरपुण्यमना मनस्वि-
मुख्यः सुसौख्यसदन सदनन्तबुद्धिः ।
जज्ञेऽर्हदंह्रिकमलालिसमः कमाख्यः
श्रेष्ठी सुदर्शन इवामलशीललीलः ॥४६॥

तस्यां पुरि नारदपुरीपुर्या, कमाख्यः श्रेष्ठी जज्ञे । कीदृशः, प्रचुरपुण्यमनाः प्रचुरे भूयसि पुण्ये धर्मे, अथवा प्रचुरं भूरि पुण्यं पवित्रं मनो यस्य सः । पुनः कि० मनस्विनः सहृदयास्तेषु मुख्यः । पुनः कि० सुसौख्यसदनं शोभनसुखगृहम् । पुनः कि० 'सद्विद्यमाने सत्ये च प्रशस्तार्चितसाधुषु' इत्यनेकार्थवचनात् सती विद्यमाना सत्या वा प्रशस्ता वाऽर्चिता वा साध्वी वा अनन्ता निरवधिर्बुद्धिर्यस्य सः । पुनः कि० अर्हन्तो देवाधिदेवाः, तेषामंह्रिकमले चरणनलिने, अलिसमो भ्रमरतुल्यः । पुनः कि० सुदर्शनो नाम यो जगदतिशायिब्रह्मव्रतवान् महान् श्रेष्ठी तद्वदमला निर्मला, शीललीला ब्रह्मकेलिर्यस्य सः । अत्रान्तिमविशेषणद्वयेन तस्मिन् श्रेष्ठिनि शुद्धसम्यक्त्वशीलशालित्वमसूचीति तत्त्वम् ॥४६॥

सार्थार्थिसार्थकृतकीर्त्तिसुघोषघोषा-
वंशे वतंससमताऽजनि यस्य लोके ।
तेजस्विनी शशिसहासुतसौम्यसूरि-
शुक्रासितादिषु रवेरिव मुख्यता खे ॥४७॥

सह अर्थेनार्थात्तद्दशीयवितीर्णधनेन वर्त्तन्ते ये ते सार्थास्ते चार्थिसार्था मार्गणगणास्तैः कृतो निर्मितः कीर्त्तिसुघोषो यस्याः सा घोषाख्यो वंशश्चेति कर्मधारयस्तत्र सार्थार्थिसार्थकृतकीर्त्तिसुघोषघोषावंशे, वतंससमता शेखरतुल्यता, यस्य कमाख्यश्रेष्ठिनः, अजनि जाता । अत्र दृष्टान्तोपन्यासः— यथा खे गगने, रवेः सूर्यस्य, मुख्यता जातेति । कीदृशी, तेजस्विनी महोमयी । केष्वित्याह—शशी चन्द्रः, सहा भूमिस्तत्सुतो भौमः, सौम्यो बुधः, सूरिर्बृहस्पतिः, शुक्रो भार्गवः, असितः शनैश्चरस्तदादिषु । अत्रादिशब्दादपरेऽपि राहुकेतुप्रभृतयो ग्रहा ग्राह्यास्तेन सर्वेष्वपि ग्रहेषु यथा सूर्यस्य तथा घोषावंशे सर्वव्यवहारिषु कमाख्यश्रेष्ठिनो मुख्यतेति तात्पर्यम् ॥४७॥

अर्थः सदर्थसुकृतार्थमुपार्ज्यमानः
कामोऽप्यकाममनसैव निषेव्यमाणः ।
यस्मिन्निमावपि भवप्रभवौ पुमर्थौ
नैपुण्यपुण्यतमपुण्यमयावभूताम् ॥४८॥

अर्थो धनरूपः पुरुषार्थः; स च किं क्रियमाण इत्याह— सदर्थसुकृतार्थं सन् विद्यमानो योऽर्थो मोक्षलक्षणं प्रयोजनं

यस्मिंस्तच्च सुकृतं पुण्यं चेति कर्मधारयस्तदर्थं तस्मै उपार्ज्यमानः स्वीक्रियमाण इति । पुनः, कामोऽपि कन्दर्परूपः पुरुषार्थः । सोऽपि किं क्रियमाण इत्याह— अकाममनसा निःस्पृहचेतसा, निषेव्यमाणो बोभुज्यमानः । इमौ द्वावपि, पुरुषार्थौ, भवप्रभवावपि संसारहेतू अपि, यस्मिन् श्रेष्ठिनि, नैपुण्येन चातुर्येण, पुण्यतमम् अतिपावनं यत् पुण्यं धर्मः, तन्मयावभूतां धर्मप्रधानौ जातावित्यर्थः ॥४८॥

भूयोधनाधिपतिता घनदातृता च
द्वे अप्यरी स्थिरमिमे मिलिते यदस्मिन् ।
मित्रे इवातुलबले लसतः सलील
यस्याभ्यधायि जगता तदफल्गु पुण्यम् ॥४९॥

भूयसां बहूनां, धनानां अधिपतिः स्वामी, भूयोधनाधिपतिस्तस्य भावस्तत्ता । च पुनः, घनदातृता प्रचुरदानित्वम्, इमे द्वे बहुधनित्वबहुदानित्वे 'दाता दरिद्रः कृपणो धनाढ्यः' इत्यादिलोकोक्तेः प्रायेणैकत्राऽनवस्थानात् । अरी इवाऽरी शत्रुभूतावपि, यद् यस्माद्धेतोरस्मिन् श्रेष्ठिनि, स्थिर यथा स्यात्तथा मिलिते सङ्गते, मित्रे इव, लसतः क्रीडत इत्यन्वयः । द्वे किं० ईप्सितार्थसाधकत्वेनातुलं निष्प्रतिमं बलं स्थाम ययोस्ते । तस्मात्कारणाद् यस्य श्रेष्ठिनः, जगता लोकेन, अफल्गु सारं, पुण्यमभ्यधायि प्रोचे ॥४९॥

दानेऽशुमत्सुत इवातिमहत्त्वमाने
शीले च पावाकिरिवापयशःप्रमीले ।

प्राज्यां प्रसिद्धिमतिशायि च वल्लभत्वं
यः प्राप पापविमुखः परदर्शनेऽपि ॥५०॥

दाने वितरणे, अंशुमत्सुत इवेत्यत्र 'कर्णश्चम्पाधिपोऽङ्गराद् राधासुतार्कतनयः' इत्युक्तेः कर्ण इव । दाने कि० अत्यधिकं महत्त्वं गौरव मानं च पूजा यस्मात्तत्र । च पुनः, शीले ब्रह्मचर्ये, पावकस्याऽग्नेरपत्यम् 'अत इञ्'॥६।१।३१॥ इति सूत्रेण सिद्धः पावकिः कार्त्तिकेय इव । शीले कि० अपयशसोऽवर्णस्य प्रमीला लक्षणया मुद्रण यस्मादिति तत्र । प्राज्यामुत्कृष्टा, प्रसिद्धि च पुनरतिशायि अधिक वल्लभत्वं च, यः श्रेष्ठी परदर्शनेऽपि, प्राप अवाप्तवान । यः कि० पापाद्विमुखः पापपराङ्मुख इति । अनेन यः श्रेष्ठी दानेन कर्णवत्ख्याति शीलेन च कार्त्तिकेयवत्सौभाग्य समाससादेति भावः ॥५०॥

भक्तिर्जिनेषु यतिषु प्रणतिः सुपात्र-
दाने रतिर्हृदयवाक्तनुशुद्धिबीजम् ।
यस्याजनिष्ट सहजैव गुणत्रयीय-
मिन्दोरिवार्जुनजगत्प्रियवृत्तभावः ॥५१॥

जिनेषु देवेषु भक्तिः, पुनर्यतिषु साधुषु प्रणतिः, पुनः सुपात्रदाने रतिः । कीदृशी, हृदयवाक्तनूनां मनोवचनकायाना शुद्धेर्बीज निदानम् । इयं गुणत्रयी यस्य श्रेष्ठिनः सहजैव सार्द्ध समुत्पन्नैव, अजनिष्ट जन्मतोऽपि जातेत्यर्थः । अत्र दृष्टान्तं स्पष्टयति— इन्दोरिव चन्द्रस्येव, अर्जुनभावः शुभ्रिमा जगत्प्रियभावो

अर्हम्

श्रीविजयधर्मसूरिभ्यो नम ।

श्रीमुनिभद्रसूरिरचितम्—

# श्रीशान्तिनाथचरितम् ।

प्रभाकरो य परम कलानिधिर्य एव यस्मादपरो न पावक ।
विभाति यद्भाभिरिद चराचर जिनाय तस्मै परमात्मने नम ॥ १ ॥
गणान्वितश्चन्द्रकला बिभर्ति य समाश्रितश्चक्रिवरेण भोगिना ।
शिवाश्रयो भूरिविभूतिरेष व श्रिय स पुष्याद्वृषभध्वजप्रभु ॥ २ ॥
समासदद् यत्पदपर्युपासनात् कलानिधेर्मण्डलमध्यवर्त्तिताम् ।
मृगस्तिरश्चा प्रथमोऽपि सन्तत स शान्तिनाथ शिवतातिरस्तु व ॥ ३ ॥
पिता भवेत्पुत्र इति श्रुतिश्रुत यथार्थमर्थ रचयन्निवाजनि ।
समुद्रजातोऽपि समुद्र एव य स्वलक्ष्मशङ्खाश्रयणात् सलक्षण ॥ ४ ॥
शिवाङ्गसङ्गात्कलयन्नपि स्फुट कुमारता यश्च जितान्तराहित ।
चकार चित्र किल तारकोदय नमोऽस्तु तस्मै जगदीशनेमये ॥ ५ ॥
(युग्मम्)
उपास्यते भोगिभिरेव चक्रिभि समन्ततश्चन्दनवत्सदैव य ।
भवाधितापव्यपरोपणक्षम स पार्श्वनाथस्तनुता सुखानि व ॥ ६ ॥
न वेद सिद्धार्थभवोऽपि य स्वय चकार सिद्धार्थभवत्वमात्मन ।
सुसवर सवरवैरिनिर्जयात् स समद वीरजिनस्तनोतु व ॥ ७ ॥
सुधाशनाध्यासनजातकीर्तय स्फुरद्वृषालम्बनचा (तु) रुमूर्तय ।
मन समीहापरिपूर्तये भृश समेऽपि व सन्तु परे जिनेश्वरा ॥ ८ ॥
स्वय समस्ता अपि लब्धयो वर समेत्य रत्नाकरमापगा इव ।
परस्परस्पर्धितयेव य श्रिता स गौतम सचिनुता शुभानि व ॥ ९ ॥
जगत्त्रिपद्या परितोऽनवद्यया कयाऽपि य श्रीपतिवद्व्यगाहत ।
अनन्तधामा गणभृद्विशेषक प्रसत्तये मे भवतात्स गौतम ॥ १० ॥
चतुर्विध सङ्घमशेषभावुकप्रसारवल्लीवनसारिणीनिभा ।

इमा गणाधीशसुधर्मदेशनागिरश्चिर पान्तु निपातिनाहस ॥ ११ ॥
यदीयपार सुगम विपश्चिता न पुण्यपोत प्रविहाय केवलम् ।
जिनेन्द्रचन्द्राभ्युदये कथ न स श्रुताम्बुधिर्वृद्धिमुपैतु नित्यश ? ॥ १२ ॥
अतिष्ठिपन्निर्वृतिमङ्गनाजने विजित्य ये दिक्पटमागमोक्तिभि ।
विवादविद्याविदुर वदावदा जयन्ति तेऽमी प्रभुदेवसूरय ॥ १३ ॥
सिताम्बराणामपि यैश्च दर्शन स्थिर कृत गूर्जरभूमिमण्डले ।
चलाचल दिक्पटवादवात्यया मनोमुदे त मम देवसूरय ॥ १४ ॥
प्रवादविद्याजितदेवसूरये चरित्रविद्योतितदेवसूरये ।
स्वदेशनारञ्जितदेवसूरये नमोनम श्रीगुणभद्रसूरये ॥१५॥
क्षमावरेभ्य कमलोत्तमाश्रया समुन्नगोत्रेभ्य इवाह्लसद्रमा ।
बभार येभ्योऽभ्युदय सरस्वती महाशया ग्रन्थकृतो जयन्ति ते ॥ १६ ॥
निसर्गकारुण्यनिवासभूमय परार्थनिर्माणनिबद्धचेतस ।
असस्तुतस्यापि रता गुणस्तुतौ चिराय ते केऽपि जयन्ति साधव ॥ १७ ॥
पुरस्सरा धार्मिकलोकसहते पर न ये कुत्रचनापि हिंसका ।
सुपर्वपक्षाश्रयिणोऽपि निश्चित नमोऽस्तु सद्भ्या भुवि तेभ्य एव मे ॥ १८ ॥
परस्य सन्तापमपाकरोति य स्वजीवनेनापि नभस्यमघवन् ।
करोति यो वा सुमनोऽभिवर्द्धन न सज्जन कस्य मुद तनोति स ? ॥ १९ ॥
न पूर्णचन्द्रेण सतो विनिर्मितिर्जगत्रयाह्लादकृतोऽपि शङ्क्यते ।
कलङ्किता हेतुगता तथा सति प्रवर्तमाना कथमत्र वार्यताम् ? ॥ २० ॥
सतोऽन्यसन्तापहृतोऽपि तर्क्यते न चन्दनेनापि विधानकल्पना ।
यतो न काठिन्यमवेक्ष्यतेतरा नचात्र हृदग्रन्थिरवाप्रघर्षण ॥ २१ ॥
महीयसामाश्रयसन्निधानतो भवेल्लघीयानपि गौरवास्पदम् ।
गजानन पूजयता जनेन कि न पूज्यत यानममुष्य मूषक ? ॥ २२ ॥
जडोऽपि निर्व्याजमहत्त्वभाजन जन क्षणादेव गरिष्ठसंश्रयात् ।
निधीयते मूर्द्धसु कैर्न वा जल सुरापगाया अपि कश्मलाविलम् ? ॥ २३ ॥
न सज्जनस्य स्तवनीयताविधौ स्पृशत्यय सज्जन एव योग्यताम् ।
यत स्वभावादपि तौ परस्पर गुणान ग्रहीतु स्वत एव सोद्यमौ ॥ २४ ॥
तत प्रशस्य परमत्र दुर्जन परोपकारप्रवण स्वभावत ।
ग्रहात्समादाय निबद्धदूषण समुज्ज्वल य कुरुतेतरा परम् ॥ २५ ॥

गुणानगृह्णन् यदि निन्द्यते खल कथ न मातापितरौ तथास्थितौ ? ।
अथापरस्येति विशेषणादिद न वाच्यमालिङ्गति तर्हि तुल्यता ॥ २६ ॥
विमुच्य य स्नेहमवञ्चनास्थित दधाति मूर्ति सहसा मलाविलाम् ।
निजक्षये पोषणमाचरन् गवा खल कथङ्कारमय न वर्ण्यताम् ? ॥ २७ ॥
न च क्षमायामपि मूलमुन्नत यदीयमिष्ट सुमन फल न, सा ।
प्रवर्द्धमाना खलता निरर्गल सचेतस कस्य न विस्मयावहा ? ॥ २८ ॥
यथास्थित दोषमुदीरयन्नय न साधुभाव भजता कथ खल ? ।
यथार्थवादेन वदन्ति साधुता विधूतमात्सर्यभरा हि धीधना ॥ २९ ॥
ममापि शान्तेश्चरित मनोहर प्रकुर्वत षोडशधर्मचाक्रिण ।
प्रपञ्चत पञ्चमचक्रवर्तिन प्रसीदता सज्जनदुर्जनाविमौ ॥ ३० ॥
मनस्यवस्थाप्यमहो मनीषिभि क्वचित्प्रकाश्य न रहस्यमादरात् ।
प्रकाश्यते यन्मयका कथञ्चन प्रभो प्रभाव स तु तस्य केवलम् ॥ ३१ ॥
स कोऽपि नैवास्ति गुणाद्भुत क्वचिद् यकोऽपि विश्वस्य भवेत्प्रियङ्कर ।
सुधाकरोऽप्यभ्युदित प्रमोदयेत् चकोरचक्र न च चक्रमण्डलम् ॥ ३२ ॥
भवन्ति पापानि नृणा न साम्प्रत चिरन्तनानि प्रलय व्रजन्त्यपि ।
पराणि विन्दन्त्युदय न भावतश्चरित्रमात्रश्रवणादिहार्हताम् ॥ ३३ ॥
अतो मयाऽपि प्रयतेन कीर्त्यते जिनेशशान्तेश्चरित यथामति ।
जडत्वजम्बालनिरासनामृत कुकर्महालाहलनाशनामृतम् ॥ ३४ ॥
तथाहि जम्बूपपद विशालता दधानमारामवदुन्नताचलम् ।
समस्ति सद्वीपमनूनवृत्ततासमाश्रय मानसवन्मनस्विनाम् ॥ ३५ ॥
जिनेन्द्रवद्योजनलक्षमानता दधत्क्षमाभृद्भिरितस्तत श्रितम् ।
समृद्धवर्षानुगत पयोदवत्समुद्रवद् द्वीपवतीभिरञ्चितम् ॥ ३६ ॥
(युग्मम्)
तदन्तरस्त्यर्द्धशशाङ्कसन्निभ सदादिम क्षेत्रमकृत्रिमाकृति ।
अभिख्यया तद्भरत प्रथामगादभिख्ययेव प्रथमस्य चाक्रिण ॥ ३७ ॥
प्रभाढ्यवैताढ्यमहीभृता द्विधा कृत च पूर्वापरसिन्धुगामिना ।
जिनेन्द्रचैत्याश्रयणादिवोच्चता प्रबिभ्रता दक्षिणमुत्तर च तत् ॥ ३८ ॥
दलेऽस्ति याम्ये किल तस्य विश्रुत महीमहेलाऽऽस्यतमालपत्रकम् ।

---

१ अपा जलानामञ्चना क्षेपम्तत्र तया वा स्थितो य स तथा खलपक्षे ।

त्रिविष्टपश्रीप्रतिबिम्बभावनाऽनुमापकं रत्नपुरं महापुरम् ॥ ३९ ॥
सरांसि यस्मिन् समवेक्ष्य मन्वते न मानसं हंससमाश्रयं जनाः ।
कदापि लोकायतिका इवायतं प्रभूतशक्त्याऽऽप्युपगम्य विग्रहम् ॥ ४० ॥
सदाफलानोकहराजिराजितान्युदस्तसन्तापभराणि दर्शिकाः ।
विलोक्य यत्रोपवनानि नन्दनं न चाद्रियन्ते वृतकल्पपादपम् ॥ ४१ ॥
न ते द्रुमा यत्र सुमानि येषु नो सुमानि नो तानि फलानि येषु न ।
फलानि नो तानि न येषु सन् रसो रसः स न न्यक्कुरुते मधूनि यः ॥ ४२ ॥
गृहे गृहे यत्र महेश्वरा जनाः शिवाश्रया भूतगणाधिनायकाः ।
न भीमरूपा न कदाऽपि शूलिनो न ते पशुस्वामितया प्रकीर्तिताः ॥ ४३ ॥
धनानि यस्मिन् धनिनां महीयसां पयांसि यस्मिन् सरसां प्रथीयसाम् ।
फलानि यस्मिन् विपुलानि भूरुहां परोपकाराय भवन्ति सन्ततम् ॥ ४४ ॥
न पिण्डमिच्छन्त्यपि चाटुकोटिभिर्न संसजन्ति स्ववशा वशा नरम् ।
विशिष्टगुर्वङ्कुशशङ्कितान्तरा महर्षयो यत्र मतङ्गजा इव ॥ ४५ ॥
सुवर्णकुम्भा भविकैर्निवेशिता विभान्ति यत्रार्जुनचैत्यसानुषु ।
नभःस्रवन्त्या इव चक्रवाककाः सुवर्णपाथोरुहनिश्चलासनाः ॥ ४६ ॥
रसातलं यस्य गभीरखातिकाप्रसक्तमाजीवनमार्पयन्निजम् ।
न किं प्रयच्छन्ति निबद्धमानसा मनस्विनीषु प्रसभं मनस्विनः ? ॥ ४७ ॥
क्रयाणकं भूवलये तदस्ति नो न यन्नरेन्द्रेषु विलोक्यते जनैः ।
भवन्ति तेजांसि विभाकरे न चेन्न परं समीक्ष्य क्व तदा तदाकरः ? ॥ ४८ ॥
प्रसारितं रत्नभरं यदापणे निरीक्ष्य कान्तिप्रसरैः परिष्कृतम् ।
स रोहणक्षोणिधरोऽपि सभ्रमान्निलाऽवशेषं परिभाव्यते परम् ॥ ४९ ॥
न वैजयन्त्यो मृदुमारुताहता यदीयसौधोपरि बन्धुरा इमाः ।
पुरश्रिया वर्द्धितमानसम्पदो दिवं समाह्वातुमिवाभिकाङ्क्षया ॥ ५० ॥
निजेश्वरश्रीपतिनामशङ्कया निषेवते यत्किल भोगिनां पतिः ।
सुधीभवन् कुण्डलशायितां दधत्समुज्ज्वलस्फाटिकवप्रदम्भतः ॥ ५१ ॥
अनन्तलक्ष्मीपुरुषोत्तमालये निरीतिभावप्रसरन्महोत्सवे ।
पयोनिधिर्यत्र स खातिकामिषात्स्वपुत्रिकाप्रेमवशम्वदोऽवसन् ॥ ५२ ॥
मतङ्गजानञ्जनपर्वतायतान्सलीलयातानि पथि प्रकुर्वतः ।
निरीक्ष्य यत्रेति विजानते जना न सन्ति नान्यत्र भवन्ति चैतके ॥ ५३ ॥

ध्वजांशुकै शारदसारकौमुदीसमप्रभै शर्मविसारिसम्पदा ।
अधिष्ठित यच्च विमानतायिना पुर सुराणा हसतीव समदात् ॥ ५४ ॥
(षोडशभि कुलकम्)

बभूव तस्मिन्नरमौलिशेखर स कोऽपि षेण क्षितिजीवितेश्वर ।
यदाख्यया श्रीपदमादित कृत किमादिभूत न न भूतमत्र तत् ॥ ५५ ॥
सुदु सह धाम न सोढुमीश्वरा विरोधिनो यस्य दरीपु भूभृताम् ।
अवात्सुरुत्सृष्टनिवासभूमयो निलीय घूका इव भानुमालिन ॥ ५६ ॥
जलेश्वराशालयभावमाश्रयन्नितान्तपूर्वोदय एव भानुमान् ।
हरित्सु सर्वासु विवृद्धिधारिणो न यत्प्रतापस्य समानता दधौ ॥ ५७ ॥
शरत्सुधांशुभ्रमभारकारिभिर्विनिर्जितो यस्य यशोभिरुज्ज्वलै ।
भुजङ्गमानामधिपो रसातल प्रविश्य नून त्रपयेव तस्थिवान् ॥ ५८ ॥
चतुष्पयोनिध्यवधिक्षितीश्वरै प्रणम्यमानस्य सदैव देववत् ।
श्रुतेक्षिता यस्य विभोरजायत क्षमासमासङ्गवशादिव क्षमा ॥ ५९ ॥
अजस्रविश्राणनकर्मणाऽर्थिना सुवर्णकोट्या विरचय्य योऽर्थिताम् ।
जहार दीनत्वविधानलालसा जनु कृतार्थ रचयन्निवार्थिताम् ॥ ६० ॥
कृपापरोऽपि श्रुतवानपि क्वचिन्न धर्मविच्छेदकर ररक्ष य ।
नृपस्य हि न्यायपथप्रवर्त्तिनो न धर्मविप्लावकपालने मति ॥ ६१ ॥
(सप्तभि कुलकम्)

सधर्मचारिण्यभिनन्दिताऽभिधा महेश्वरस्याजनि सर्वमङ्गला ।
शिवस्य तस्य प्रतिपद्वतो यथा महेश्वरस्याजनि सर्वमङ्गला ॥ ६२ ॥
पराऽपि जज्ञे शिखिनन्दिता परा परास्तकामप्रसरस्य तस्य च ।
रसेश्वरस्येव सुरापगा प्रिया रजोऽपहा पुण्यनिदानजीवना ॥ ६३ ॥
सहैव ताभ्यामवनीशितुर्मुदा सदाऽपि भोगानुपभुञ्जत सत ।
विशुद्धधर्मार्थनिविष्टसविदो दिना व्यतीयुर्बहव क्षणा इव ॥ ६४ ॥
अथान्यदा देव्यभिनन्दिता यथासुख शयाना शयने निशात्यये ।
सुधांशुभास्वद्युगपन्मुखाम्बुजप्रवेशसस्वप्नमसौ निरैक्षत ॥ ६५ ॥
अवाप्य सा स्वप्नमनिन्दित सता शुभैरवाप्य परिहृष्टमानसा ।
फलानि पुष्पाणि च पाणिपुष्करे निवेश्य कान्त समया समापतत् ॥ ६६ ॥
समर्पयन्ती फलपुष्पसञ्चय स्वपञ्चशाखाग्रजपल्लवेन सा ।

विशालपात्रोपगता महीभुजा व्यभाव्यतार व्रततीव तन्नक्षणम् ।। ६७ ।।
निषेदुषी काञ्चनविष्टरे स्थिरे नरेश्वरेणात्मकरेण दर्शिते ।
समुद्गिरन्तीव रस सुधामय जगाद कल्याणकिर गिर च सा ।। ६८ ।।
अतिम्रदीयस्तमहसतूलिकासनाथशय्यातलभागभागिनी ।
विभो ! प्रमीलासुखमाश्रयन्त्यह मनाग्विबुद्धा मुदिता व्यलोकयम् ।। ६९ ।।
यश प्रतापाविव ते महीपते ! परस्पर समिलितावुपागतौ ।
तदैव पीयूषकरप्रभाकरौ निरस्तनिष्पिष्टतमश्चयौ रुचा ।। ७० ।।
प्रसद्य सम्यस्तदमुष्य मे फल निवेद्यता वेद्यविवेदकोविद ! ।
न सुभ्रुवा तत्त्वविवर्त्तवर्तनी प्रवर्तिनी खल्ववलोक्यते मति ।। ७१ ।।
निपीय तस्या वदनेन्दुसभव वचोऽमृत क्ष्मापतिरभ्यधादिति ।
शुभे पुरा सञ्चितपुण्यसञ्चये त्वयोदितस्वप्नफल निशम्यताम् ।। ७२ ।।
यशोविनिर्द्धूतसुधाशुमण्डलौ प्रतापसन्तर्जितसूरमण्डलौ ।
वसुन्धरामण्डलमण्डने श्रिया भविष्यतस्ते तनयौ नयोज्ज्वलौ ।। ७३ ।।
इतीरित स्वप्नफल प्रियेण सा निशम्य सम्यक्परिभूतसशया ।
ममास्त्विति स्पष्टनिवेदनोन्मदा निजाशुके ग्रन्थिनिबन्धन व्यधात् ।।७४।।
तदादि गर्भ दधती व्यभादिय सुखेन पीयूषमिवेन्दुमण्डली ।
समग्रगोत्रोज्ज्वलता प्रकुर्वती समुल्लसन्मौक्तिकतारहारका ।। ७५ ।।
स्वभावतो राज्यपि मन्दगामिनी विशेषतो मन्थरतामुवाह सा ।
मदानुषङ्गात्करिणीव चाटुभि प्रपद्यमानाऽशनभोगज सुखम् ।। ७६ ।।
दधार य य हृदि दौर्हृद प्रिया महल्लकाना परिपृच्छता मुखात् ।
विबुध्य त त वसुधासुधाकर स पूरयामास सलीलमात्मना ।। ७७ ।।
गतेषु मासेषु नवस्वनुक्षण दिनेषु चार्द्धाष्टमयुक्षु सप्तसु ।
यथा सुमित्रा सुषुवे तथा यमौ शुभे मुहूर्त्ते नृपतिप्रियाऽपि सा ।। ७८ ।।
स सौविदल्लैर्युगपत्सुतद्वयप्रसूतिवर्द्धापनकेन वर्द्धित ।
इद न देय भवतीति मानतो विवेद न प्रीतितरङ्गितो नृप ।। ७९ ।।
महोत्सवेषु प्रथितेषु सर्वत सरत्सु किञ्चित्समया व्यतिक्रमम् ।
स इन्दुषेण तनय पुरैकक पर पुन प्राह च बिन्दुषेणकम् ।। ८० ।।
कुशीलवाभ्यामिव मैथिलीपतिर्बुधोशनोभ्यामिव वासरेश्वर ।
अय रदाभ्यामिव गन्धसिन्धुरो वृत सुताभ्या परभागमाप स ।। ८१ ।।

प्रगल्भमानौ तनयौ दिने दिने महीपतेस्तावपि वृद्धिमापतु ।
भृशं प्रसूलालनकर्मणाऽमुना नदीरयेणेव तटौ रसाप्लुतौ ॥ ८२ ॥
जनैरुपर्यासितुमादृताऽपि यत्स्थितिस्तु नीचैरनुधावति स्वयम् ।
जडेन तेनापि न कोऽपि सत्त्व करोति तृष्णापरितापवर्जित ॥ ८३ ॥
सरस्वतीब्रह्मनिरासनस्थितेर्बकस्य हसस्य च जीवनाशिन ।
समैव येषु प्रतिपत्तिरीक्ष्यते जडाशयास्तानपि कोऽभिवाञ्छति ? ॥८४॥
पुरन्दरस्य त्रिदिवेऽस्ति मानना भुजङ्गलोकेऽपि भुजङ्गमप्रभो ।
प्रजासु किञ्चिज्जयिन प्रजापतेर्बुधस्य सर्वत्र च बुद्धिशालिन ॥ ८५ ॥
भवन्ति वश्या विषया बहिस्तना नृपस्य शस्त्रैरपरे न चान्तरा ।
द्वयेऽपि शास्त्रैस्तदय विशारदैर्विशेष आकारकृतो विभाव्यताम् ॥ ८६ ॥
हृदा विचार्येति महीभुजाऽपि तौ महाकलाचार्यसमीपमापितौ ।
स शिक्षयामास कला कलाशयो गुरुश्च तास्तौ विनयाद्ररञ्जतु ॥ ८७ ॥
(पञ्चभि कुलकम्)
समेत्य विद्या सकला सिषेविरे नृपाङ्गजौ तौ विनयोपशोभितौ ।
स्वतोऽपि मासस्य च पक्षकावुभौ तुषाररश्मेरिव चारुचन्द्रिका ॥ ८८ ॥
समग्रविद्याकुशलौ महीभुजे समर्पितौ तौ गुरुणा कलाविदा ।
प्रकुर्वता प्रश्नमुदारधीमता दृढ हरन्तौ विषमार्थसशयम् ॥ ८९ ॥
अदूष्यवैदुष्यमवेक्ष्य चैतयोस्तथा सुवर्ण विततार पार्थिव ।
किमप्युपाध्यायवराय रञ्जितो द्विजन्मना येन सुवर्णताऽजनि ॥ ९० ॥
क्षण धनुर्वेदविशेषशिक्षया क्षण कुमारौ विदुषा परीक्षया ।
क्षण नृपोपासनया खलूरिकाश्रमेण कञ्चिद् गमयाम्बभूवतु ॥ ९१ ॥
इतश्च विप्रो मगधोपवर्तनोत्तमाचलग्रामनिवासविश्रुत ।
अपारशास्त्राम्बुधिपारदृश्वना ललामभूतो धरणीजटोऽभवत् ॥ ९२ ॥
महेशमौलौ पदमादधाति यो बुधेन सार्धं विरुणद्धि य क्षयी ।
किमश्नुते तद्व्यतिरिक्तलक्षण स येन किञ्चित्समता द्विजेश्वर ? ॥ ९३ ॥
तदद्भुत यन्नृपसौधतोरणे न्यधायि येनैकसुवर्णपत्रकम् ।
चकार राग हृदि तन्महीभुजा विनैव चूर्ण विदुषा विरागताम् ॥ ९४ ॥
अनाप्नुवन् येन समानता गुरुर्विवादकाष्ठा कलयन् बृहस्पति ।
प्रपद्य तन्नास्तिकभावमात्मनो दिव समासद्य सजीवता ललौ ॥ ९५ ॥
(त्रिभिर्विशेषकम्)

अभूद्यश पूर्वपदा जनी पदाश्रिताऽपि भद्रा किल तस्य धीमती ।
उवास यस्या हृदि नैव मत्सरो भ्रमत्मरापापरसस्तवेऽग्यहा ॥ ९६ ॥
विवेकरत्नाभरणेन भूषित यदीयमन्त करण विदिग्गुते ।
अत्रास्रबाह्याभरणा शिवाऽपि यत्सरूपताम श्वति न स्वरूपत ॥ ९७ ॥
(युग्मम)
तया सम भोगपरम्परामय सुख समास्वादयतो द्विजन्मन ।
कियाननेहा व्रजति स्म यामवत्क्षणे क्षणे य स्रजति स्म समदम् ॥ ९८ ॥
तयोरभूता तनयौ सुलक्षणौ सुयुग्मजाताविव रूपसम्पदा ।
अभिख्ययाऽऽद्य किल नन्दिभूतिक पर पुन श्रीयुतभूतिसञ्ज्ञक ॥९९॥
परोऽपि तद्वप्तुरभूत्रिकेतने सनातनश्रीभवदुःखकृतन ।
अनेकनानाविधकर्मकर्मठाऽशठाऽपि दासी कपिलाऽभिधानत ॥१००॥
सुतस्तदीयस्तदभिख्यया जनैरवाचि यत्तत्कपिलोऽत्र विश्रुत ।
अहार्यमेधाभवन सकृच्छ्रुतग्रहाग्रही सत्वरवैरिविग्रह ॥१०१॥
निजाङ्गजावद्भुतरूपवैभवौ त्रयीमुखोऽध्यापयितु त्रयीमयम् ।
परिश्रम य निरमादनुत्तर स एप जज्ञे कपिल फलेग्रहि ॥१०२॥
समीपवर्ती च स पारिचारिकस्तयोरधीतौ समजायताधिकम् ।
प्रमादसदर्भविमर्दनोद्यता प्रकुर्वते कि न गुणार्थिन खलु ? ॥१०३॥
यथा यथा ऋग्गणसारणामिमौ कराङ्गुलीभि कुरुत स्म नोदितौ ।
तथा तथा कापिल एप मूकवत्तटास्थित सर्वमबुद्ध बुद्धिभृत् ॥१०४॥
प्रपाठ्यमानावपि शाठ्यमानितौ हठेन पित्राऽपि मठेऽपि नन्दनो ।
तथा न वेदार्थविशेपवेदिनावुपेक्षमाणोऽपि यथा स कापिल ॥१०५॥
अधीत्य शास्त्राण्यभियोगयोगतश्छलेन केनापि गृहात्स निर्गत ।
निरीक्ष्यमाण सकला वसुन्धरा क्रमात्पुर रत्नपुर समासदत् ॥१०६॥
प्रकाशयन ब्राह्मणता यथास्थिता विनिर्मितैर्द्वादशभिर्विशेपकै ।
समुच्चरन् श्रावकता गुरूदितैर्व्रतैरिवोपासक एव कश्चन ॥१०७॥
उभे वसान स कपायवाससी वनोत्थमाध्याह्निकपुप्पसच्छवी ।
कपायतामाशयमध्यमास्थिता बहिर्विकृष्यैव निदर्शयन्निव ॥१०८॥
अनामिकाया दधदङ्गुलीयक हिरण्मय नव्यकुशोपशोभितम् ।
जनाय भक्त्या प्रणति प्रकुर्वते चिराय जीवेति शुभाशिपो ददन् ॥१०९॥

विवन्द्यमान क्वचनापि वन्दिभिर्विनम्यमानः क्वचनापि बाहुजैः ।
वितर्क्यमाणः क्वचनापि वाणिजैः कुतोऽयमागादिति भाषणोन्मुखैः ॥११०॥
अवापदध्यापकधुर्यसत्यकेर्मठं पठच्छात्रकुलैः समाकुलम् ।
अलब्धमध्यं जलराशिवज्जडैः सरस्वतीसन्ततिशालिभिर्वृतम् ॥१११॥
(पञ्चभिः कुलकम्)

तमापतन्तं समवेक्ष्य सत्यकिर्न्ययुङ्क्त पीठानयने बहूनयम् ।
स्वयं पुनः प्रत्युदियाय साधवः क्रमस्य निर्मान्ति नहि व्यतिक्रमम् ॥११२॥
तमासने सत्यकिरासयत्स्वयं विधाप्य पाद्यादिकमर्घ्यमादरात् ।
किमातिथेया समुपागतेऽतिथौ न तथ्यमातिथ्यमहो वितन्वते ?॥११३॥
स यावदध्यापकमौलिशेखरः प्रवर्तते प्रष्टुमिमं द्विजब्रुवम् ।
अये ! चतुर्वर्गफलोपपादके श्रमः क्व शास्त्रे तव पण्डितेति तम् ? ॥११४॥
स एव तावत्पठतामपृच्छतामपि व्यभैत्सीद्विषमार्थसंशयम् ।
सरस्वती वा यदि वा हरिप्रिया तिरोहिता तिष्ठति किं मनागपि ?॥११५॥
अपृच्छदध्यापक एव तं चिरान्मनःस्थितान् काश्चन शास्त्रसंशयान् ।
बिभेद तान् सोऽपि नदीप्रवाहवत् प्रबद्धमूलानपि मेदिनीरुहान् ॥११६॥
तमभ्यषिञ्चत्स्वपदेऽथ सत्यकिश्चमत्कृतश्चेतसि तस्य संविदा ।
न किं सपर्यां रचयन्ति धीमता महानुभावा हि गुणानुसारतः ? ॥११७॥
समुद्य तच्छात्रसमुच्चयं बुधस्तथा कथञ्चित्कपिलोऽध्यजीगपत् ।
यथा स दुर्बोधपदार्थबोधनात् पुरातनस्य स्मरति स्म नो कवेः ॥११८॥
स्वरूपसन्तर्जितपुष्पसायकं त्रयीसमस्तार्थविशेषवेदिनम् ।
प्रवादविद्यापरिभूतगीष्पतिं सुवृत्तहेतुं कपिलं विलोक्य तम् ॥११९॥
कदाचिदध्यापकजीवितेश्वरा प्रतीतिमाप्ता किल जम्बुकाऽऽख्यया ।
रहः पतिं प्राह विचारचातुरी विरिञ्चिकन्याकमनीयकान्तिभृत् ॥१२०॥
(युग्मम्)

अपत्यवत्ता ननु सत्यभामया स्वचारुतानिर्जितसत्यभामया ।
तनूजया नौ विजयाङ्गभूतया स्मरस्य सुस्त्रैणललामभूतया ॥१२१॥
विवाहयोग्या यदि सा प्रदास्यते वराय कस्मैचन, तत्प्रदीयताम् ।
द्विजाय चास्मै गुणराजिराजिने, सुभर्तृदत्ता हि सुता न दुःखभाक् ॥१२२॥
विचार्य चाध्यापक एव जम्बुकावचो मनोहारि तदाऽऽयतौ हितम् ।

व्यवाहयत्ता कपिलेन कन्यका महोत्सवात् कोविदवर्णनातिगात् ॥१२३॥
निकेतन च प्रददौ मनोरम महासरोवन् कमलोपशोभितम् ।
सुधाभिरालीढमनुष्णभानुवद् विशालताऽऽलिङ्गितमन्तरिक्षवत् ॥१२४॥
कलत्रवन्त स्वममस्त स द्विजस्तयैव भक्तिप्रतिपत्तिशीलया ।
अरुन्धतीजानिरिवाक्षमालया निशीथिनीनाथ इव त्रियामया ॥१२५॥
अजीगमत्काञ्चन वत्सरानय तुषारकालोदितवासरानिव ।
सम तया वैषयिक सुखं भजन् क नानुरूप कृतपुण्यसम्पदाम् ?॥१२६॥
तनूभुवा पाठनिमित्तकारणाद् महातिचारादिविबोधनादपि ।
नवीनजामातृतया च सत्यकेरपूजि भक्त्या कपिलो न कैर्जनै ?॥१२७॥
स कोऽपि नैवास्ति न येन काञ्चन व्यतारि तस्मै कपिलाय मानत ।
जन समग्रो यदि वा बहिर्मुख प्रवाहमालम्ब्य बलात्प्रवर्तते ॥१२८॥
अशेषशास्त्रागमतत्त्वदर्शिना निदर्शन प्राक्कपिल स्वतोऽभवत् ।
अनन्तर सत्यकिनन्दनाश्रितो धनेश्वराणा प्रथम निदर्शनम् ॥१२९॥
शिखण्डकान् धारयतोऽपि पक्षिण प्रनर्तयन्ती घनगर्जि[illegible]दनात् ।
प्रसह्य हसानपि या विदेशगान् स्वरूपसन्दर्शनत प्रकुर्वती ॥१३०॥
समुन्नमत्पीनपयोधरा रस प्रपुष्णती केतकपत्ररोचना ।
प्रवर्त्तयन्ती सुमनोविकाशनं वधूरिव प्रावृडुपागमत्तदा ॥१३१॥
(युग्मम्)

सुगन्धिताक्तेषु सुवर्णकेतकीसुमेषु लीना भ्रमरावली स्थिरा ।
व्यनक्ति यत्रैव महेभ्यकारिता सुवर्णशालोपहिताश्मगर्भताम् ॥१३२॥
सुखस्थिता यत्र सुवर्णमालतीविकाशिपुष्पेषु षडङ्घ्रिसन्तति ।
प्रपाकिजम्बूफलविभ्रमाच्छुकैर्विचुम्ब्य चञ्चूभिरहो व्यमुच्यत ॥१३३॥
नभोमणिर्यत्र धरोपतापनापराधत क्वापि निलीय तस्थिवान् ।
परैरभेद्ये कमलोत्कराश्रिते नभ समाक्रम्य नवाम्बुदे स्थिते ॥१३४॥
ग्रहाधिपे सागसि विश्वतापनात् कलानिधिर्यत्र करप्रसारणाम् ।
अल न कर्तु जलदेऽतिगर्जति, प्रकोपने स्वामिनि का विचारणा ? ॥१३५॥
भवन्ति यस्माद्भुवनानि भूरिशो यतोऽपि दुर्भिक्षमुपैति सक्षयम् ।
धनानि धान्यानि च यत्प्रसादनात् प्रशस्यते नो जलदागम स किम् ?॥
(पञ्चभि कुलकम्)

कदाचन प्रेक्षणकस्य वीक्षण सुरालये कापिल उत्तमर्द्धिभि ।
सम विनिर्माय स यावदात्मना क्षपामुखे मन्दिरमेतुमैहत ॥१३७॥
घनाघनस्तावदर प्रवर्षितु प्रचक्रमे मारुत एव सर्पति ।
दिदृक्षुरन्तर्गतमस्य चेष्टित स्वय द्विजातेरिव चञ्चलेक्षणै ॥१३८॥
न सूचिभेद्येषु तमस्सु ससरत्स्ववेक्षिता कश्चन मा प्रयायिणम् ।
इति स्वचित्तेन विचिन्त्य वाससी निधाय कक्षान्तरय गृह प्रति ॥१३९॥
प्रियावियोग न विसोढुमीश्वरो बलाहके वर्षति स प्रचेलिवान् ।
समुन्नते वारिधरेऽथवा जन प्रियावियोग स्ववश सहेत क ? ॥१४०॥
( युग्मम् )
दिगम्बरत्व स तदा प्रपेदिवान् विबोधभाज गुरुमन्तरेण यत् ।
विगोपना तत्पतितत्वशङ्कया कयाऽपि तेनैव निदर्शनीकृता ॥१४१॥
दिगम्बरत्व परमीश्वरस्य वा प्रकाशते नैव परस्य कस्यचित् ।
न लोकमालम्ब्य बिभर्ति य स्थिति न यस्य तृष्णा क्वचिदप्यनारतम्॥१४२॥
अनावृतद्वारकपाटसपुट प्रियासमुद्दीपितदीप्रदीपकम् ।
गृह समासाद्य विलम्ब्य च क्षण द्विज स वस्त्रे परिधाय चाविशत् ॥१४३॥
प्रियस्य वासासि घनेन तेमितान्यवश्यमस्य स्युरितीह तत्प्रिया ।
प्रविश्य सा वासगृह पतिव्रता पराणि तान्यानयति स्म भाविनी ॥१४४॥
इमे स्ववस्त्रे विजहीहि वार्षुकाम्बुवाहनिर्मुक्तजलौघतेमिते ।
मदाहृते शारदचन्द्रसच्छवी गृहाण धीमन् ! परिधेहि चायते ॥१४५॥
तयेत्थमासक्तिवशादुदीरित सविस्मय सास्मितमाह स स्म ताम् ।
प्रिये ! न वस्त्रे मम तेमिते स्फुरत्प्रभावसन्त्रेण मयैव रक्षिते ॥१४६॥
न चेत्प्रतीतिस्तदिमे निभालय प्रभाऽऽलयस्वाङ्गजितामराङ्गने ! ।
इतीरिता सस्पृशती तदशुके वपुश्च तस्यार्द्रमसावचिन्तयत् ॥१४७॥
यदङ्गमार्द्रीकृतमम्बुबिन्दुभिर्विहाय वास कथमेतदिष्यते ? ।
न मन्त्रमाहात्म्यमजागरूकक गुरूक्तमेव क्वचनापि शम्यते ॥१४८॥
शरीररक्षाकरणाय कोविदैर्विशिष्य मन्त्र खलु शिक्ष्यते गुरो ।
विनोदमात्रप्रतिपत्तिहेतवे न धीमता स्युर्जगति प्रवृत्तय ॥१४९॥
त्रिवर्गनिर्माणविशिष्टसाधन वदन्ति साक्षात्स्वशरीररक्षणम् ।
क्रमात्परीणामवशेन देहिना प्रसाधयत्येतदपीह निर्वृतिम् ॥१५०॥

प्रसर्पति ध्वान्तभरे दिगङ्गनामुखाम्बुजाच्छादनजातकौतुके ।
निरङ्कुशीभूय समीयिवानय ध्रुव स्वकक्षानिहिताशुकद्वय ॥१५१॥
कुलीनता तत्र परिस्पृशत्यय विवेचितस्ताद्दशकर्मनिर्मिते ।
किमत्र कार्य, यदि वा परीक्षया कुलानुमानेन विचेष्टते जन ॥१५२॥
पपाठ वदानपि कर्णघर्षणैरय सनिर्बन्धतया शठ कश्चित् ।
चिरन्तनसस्कारविवर्द्धिता हि धीर्बहिर्भव न व्यवसायमीहत ॥१५३॥
अल तदतन ममापि सकथा विधातुमेतेन कुकर्मणाऽमुना ।
कुलाङ्गनाना विषयोपसेवन कुलीनभर्त्रा हि सह प्रशस्यत ॥१५४॥
अह पितृभ्यामविमृश्यकारितापरिष्कृताभ्या परिणायिता पुरा ।
विमोचनीया वचनीयता स्थितेरत कथङ्कारमुदारसपद ? ॥१५५॥
न पौरवाक्यैरपि मामय जड स्मरामयाल्लुप्टविवेकविग्रह ।
कुलाभिमान स्पृशतीमुदित्वर वर परित्यक्ष्यति रक्षितग्रह ॥१५६॥
न कोऽपि तादृक् सुजनोऽस्ति मामतो विमोचयते यो वचनै श्रुतिश्रुतै ।
न वेदवाक्यव्यवहारलोपिनो विनिर्मिमीते हि जन सभाजनम् ॥१५७॥

अथ प्रथममिङ्गितैस्तदनुचेष्टितैरप्यह
करोमि किल दुर्धिय कुलविशेषसवेदनम् ।
ततो विधृतनिश्चया सपदि मुक्त्युपाय पुरा
भजामि वरमित्यसौ परिविमृश्य चिन्ता जहौ ॥१५८॥

तन्वाना लक्ष्मणव्यतिकरमवनीविस्फुरद्भद्रशाला
स्वान्तर्भूत समुच्च विबुधममुचित सौमनस्य दधाना ।
कल्याणस्यैकभूमिर्गिरि-परिदृढता ख्यापयन्ती तथापि
ज्ञाता नो मन्दरागाऽनुकरणनिपुणा केनचित्सत्यभामा ॥१५९॥

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभा
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावता सद्गुरु ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमाद्योऽगमत् ॥१६०॥

## ॥ इति श्रीशान्तिनाथचरित्रे प्रथमः सर्गः ॥



अर्हम्

# अथ द्वितीयः सर्गः ।

नृपत्वचक्रित्वरमाऽङ्गभोगासङ्गान्महानन्दमविन्दमान ।
तीर्थेशलक्ष्मी परिणीतवान् य श्रीशान्तिनाथ स शुभाय व स्तात् ॥ १ ॥
अवीवृधद्य कपिल सलीलमाहारधाराभिरपेक्षिताभि ।
तत्राऽथ विप्रो नियतेर्नियोगात्स दौस्थ्यपात्र धरणीजटोऽभूत् ॥ २ ॥
या वातसम्पातपराहताम्बुकल्लोलमालाभिरमाऽविरामम् ।
श्रीर्वार्द्धिकूले विललास बाल्ये तस्या कथ स्थैर्यमवेक्षणीयम् ? ॥ ३ ॥
या वासपद्म जलदुर्गदुर्गे सवेगमुत्सृज्य सहोदरेण ।
चन्द्रेण सार्धं निशि ररमीति तस्या किमन्यत्र रतिर्न सत्या ? ॥ ४ ॥
पिता यया क्षार इति प्रसिद्ध पतिर्यया कृष्ण इति स्वतोऽपि ।
भ्राता कलङ्कीति यया व्रजन्त्या विगाहता सा स्थिरता क्व लक्ष्मी ? ॥ ५ ॥
वस्त्राणि चित्राणि सुभोज्यमाज्यप्राज्य च ताम्बूलविलेपनानि ।
मृगेक्षणानेत्रनिरीक्षणानि श्रिय प्रसत्तौ सुलभ समस्तम् ॥ ६ ॥
वाणी स्वभावेन विरोधिनी मे दोषप्रकाशप्रवणा बुधेन ।
पुरस्कृता तेन ततो मयाऽपि तिरस्कृतोऽसाविति य रमौज्झत् ॥ ७ ॥
श्रिय प्रसादापगमे स विप्र कणादभाव भजते स्म नव्यम् ।
आतिष्ठमान प्रथम पदार्थं गुण द्वितीय निरभर्त्सयच्च ॥ ८ ॥
विशेपता काऽप्यनवेक्षमाण सामान्यसत्तामपि पर्यहार्षीत् ।
यो वा निरस्यन् समवायमेक मनोऽपि दुष्कर्मपर निनिन्द ॥ ९ ॥
(युग्मम्)

रूक्षाशिनस्तस्य बभूव भोज्य निस्नेहमन्त करण नचापि ।
यो ऽधत्त भक्तस्पृहयालुभाव निदर्शनेनापि न दर्शनेन ॥ १० ॥
आशास्तु शास्त्रेपु दश प्रसिद्धा विभान्ति मित्रद्विजराजभास ।
द्विजन्मनस्तस्य दशातिरिक्ता नचापि मित्रद्विजराजभास ॥ ११ ॥
दौर्गत्यदु ख बहुधा वहन्त मनुष्यभावेऽपि पति विभाव्य ।
पतिव्रतानामवतसरूपा द्विजप्रिया सा तदिद न्यगादीत् ॥ १२ ॥
पुत्रस्त्वदीय कपिल कलावान्निशम्यते रत्नपुरे महर्द्धि ।

तत्सन्निधौ यात यथा स दत्ते धनानि युष्मभ्यमृणापहानि ॥ १३ ॥
पथ्या च तथ्या च स वाचमस्या निपीय पीयूषरसातिसाराम् ।
तदर्पित दर्पविविक्ततेजा पाथेयमादाय चचाल विप्र ॥ १४ ॥
प्रदक्षिणस्तस्य बभूव चाष प्रदक्षिणत्व प्रथयन्निवोच्चै ।
प्रतिष्ठमानस्य सुत प्रतीष्टप्रातिष्ठमानस्य ततो द्विजाते ॥ १५ ॥
तटोद्गतानेकविशालशालच्छायानिषिद्धातपसश्रयानि ।
सम्भावयन् क्वापि सरासि शीतमुक्ताफलक्षोदसमाम्बुपानात् ॥ १६ ॥
पुराणि साराणि निरीक्षमाण क्वचिद् गवाश्वादि परीक्षमाण ।
तीर्थानि कुत्रापि परीयमाणश्च क्वापि दुर्गाश्च निरीयमाण ॥ १७ ॥
विश्रम्य विश्रम्य महीरुहाणा छायासु कुत्रापि चलन श्रमार्त ।
ध्वजाभिरावेदितसौधराजि प्राप क्रमाद्रत्नपुरं पुर स ॥ १८ ॥
(त्रिभिर्विशेषकम्)

यदुन्नत दुर्गमितोऽपि हर्म्यचक्र ततोऽपि क्षितिपालसद्म ।
ततोऽपि जैनायतन च तस्मिन् सता तदौन्नत्यमय स मेने ॥ १९ ॥
पदे पदे प्रेक्षणकौतुकानि स प्रेक्षमाण प्रमदेन तत्र ।
प्रश्नैरनेकैरुपलब्धमेष प्राविक्षदुच्चै कपिलस्य सौधम् ॥ २० ॥
रत्नाकरस्त कपिलो द्विजेशं हर्षादसमानिव सद्रसोत्थात् ।
मर्यादया स्थापितसत्त्वराशि प्रत्युज्जगामाभ्युदित ततो द्राक् ॥ २१ ॥
तातक्रमाब्जे अभिवाद्य पाद्य सम्पाद्य सद्य परिमृज्य भक्त्या ।
तेनैव चात्मानमय स्वमौलौ निवेशितेनामलमाश्वमस्त ॥ २२ ॥
भद्रासने त विनिवेश्य सोऽथ प्राणीनमत् तामपि सत्यभामाम् ।
फलानि पुष्पाणि च धारयन्ती पुरो वधूस्ते नमतीति जल्पन ॥ २३ ॥
भोज्यानि सम्पादय तातहेतोर्निष्ठानमिष्टान्नमपि प्रयुङ्क्ष्व ।
अम्भोजनेत्रे ! लघु भोजयेम विलोलचेलाञ्चलवीजनेन ॥ २४ ॥
बाढ शिरोऽर्तिव्यथमानदेहो भोक्ष्ये प्रिये ! तद्विनिवृत्तिमाप्य ।
उत्तिष्ठमाना हि रुजा निवर्त्या प्रवर्द्धमाना खलु दुर्निवारा ॥ २५ ॥
इति प्रिया प्रत्यभिधाय दम्भात् क्षण स शय्यामधिशय्य शिश्ये ।
निर्माय निर्मायतयैव तत्तदबूभुजत्सा श्वशुर सुभक्ति ॥ २६ ॥
रसासुराणामवतसमेत वेदान्तविद्याविदुषा सुमुख्यम् ।

अभ्यागत त गुरुमाशयित्वा कृतार्थमात्मानममस्त साऽपि ॥ २७ ॥
विलम्ब्य कञ्चित्समय विनिद्र समुत्थित सोऽपि पुनर्वितन्द्र ।
ऊचे प्रियामाशय मा समीरभवा शिरोऽर्त्तिर्न्यवृतन्ममापि ॥ २८ ॥
तदैव ससाध्य च साधु भोज्य सा भोजयामास तमाशु साध्वी ।
कलावतीना हि कुलाङ्गनाना पाकक्रियाया न भवेद्विलम्ब ॥ २९ ॥
भृश पृथग्भोजनकर्मत सा न तत्सुत त कलयाञ्चकार ।
चिराद्वयस्यावपि सङ्गतौ यन्न भिन्नपङ्क्त्या भुजिमादधाते ॥ ३० ॥
प्राप्यावकाश तदह कथञ्चित्स्वरूपमस्य श्वशुर यथार्थम् ।
यथार्थवादाकलितोरुकीर्त्ति प्रक्ष्यामि, सङ्ख्याऽमितवाग्विलासा ॥ ३१ ॥
विचिन्त्य चैव कपिलप्रिया सा स्थिरेव यावत्स्थिरता जगाहे ।
ताम्बूलमस्मै कपिल प्रदाय तावत्प्रतस्थे स विमृश्य कृत्यम् ॥ ३२ ॥
सा सत्यभामा श्वशुरस्य तस्य समीपमागत्य निपत्य पादौ ।
सयोज्य हस्तौ कमलप्रशस्तौ वचस्विनी वाचमुवाच धीरा ॥ ३३ ॥
प्रसादमाधाय निवेदयन्तु ममाग्रत सप्रति पूज्यपादा ! ।
किमङ्गजो वस्तनय किमाहोस्विज्जातिजात परिपालितोऽयम् ? ॥ ३४ ॥
अन्यस्य कस्यापि महानुभावैर्दयाऽनुरोधाद्विभृतोऽथ वाऽपि ? ।
कृष्यादिनिष्पत्तिविधानहेतो क्रीत किमेष प्रतिपन्न एव ? ॥ ३५ ॥
तथ्य न चेच्छसत सद्गुणौघैरशेषससत्स्वपि शसनीया ।
तद्ब्रह्महत्यादिककर्मजन्यैर्लिप्यध्व एनोभिरवश्यमेव ॥ ३६ ॥
इतीरित सोऽपि तयैव वध्वा ब्राह्मण्यचञ्चु स्फुटमाचचक्षे ।
न यस्य लोकद्वयसाधनेच्छा स एव मिथ्यावचन ब्रवीति ॥ ३७ ॥
अह तु वस्त्वर्थनयैव वत्से ! समागम यद्यपि तत्समीपम् ।
त्वया च पृष्ट शपथैरुदग्रैस्तथापि तथ्य मयका निगाद्यम् ॥ ३८ ॥
अजाड्यधन्वस्थल एव जात जानीहि दासेरकमेतमत्र ।
समग्रभारोद्वहने समर्थ परिस्फुटत्कण्टकचर्वणोत्कम् ॥ ३९ ॥
तेनोदित श्लेषमुखेन वाक्य सुखेन साऽबुद्ध विबुद्धवर्या ।
यद्वेत्ति विद्वत्परिचारकोऽपि दुर्ग, न कि सत्यकिनन्दना सा ? ॥ ४० ॥
निधाय साऽन्तर्मनस तमर्थ निधि धरित्रीव विचित्ररूपा ।
पुण्याङ्कुरोत्पत्तिमपेक्षमाणा तस्थौ रसालिङ्गितमध्यदेशा ॥ ४१ ॥

यन्मेऽपि वृत्तान्तमिह प्रवक्ता तात स्थितस्तेन विसर्जनीय ।
स्ववृत्तभङ्गे यदि वा महद्भि प्रमादलेश परिवर्जनीय ॥४२॥
चित्ते विचिन्त्येति वितत्य कृत्य समेत्य पस्त्य कपिलो बहि(स्त) ष्ट ।
पप्रच्छ भार्यां शुचिशीलधुर्या वप्तु सपर्याविधये विहस्त ॥ ४३ ॥
अदर्शयन्ती स्वमनोविकार सा सत्यभामा दयित बभाषे ।
प्रदीयतेऽस्मै गृहसारसार पात्र गुरुश्चेति महान हि योग ॥ ४४ ॥
सोऽय तदुत्साहविवार्द्धभाव स्वर्ण च रत्न च दुकूलवस्त्रम् ।
विश्राण्य योग्य व्यसृजत् समृद्धौ गुरौ हि को नाम पराङ्मुख स्यात्?॥४५॥
सुपात्रसम्बन्धमवाप्य लक्ष्मी कृतार्थतामाश्रयति स्म तस्य ।
जात कृतार्थ कपिलोऽपि, को वा भक्त्या सता नो परितोषमेति ? ॥४६॥
निश्चित्य तादृक् कपिलस्वरूप मनोविराग च निजानुरूपम् ।
अनन्यनिर्वर्त्त्यतदीयचेतोवृत्तिप्रवृत्ति च सुवृत्तभावा ॥ ४७ ॥
दौवारिकज्ञापितवित्तवृत्तवृत्तान्तमश्रान्तनयप्रचारम् ।
श्रीषेणभूपालमुपेत्य भर्तृस्वरूपमाख्यत्किल सत्यभामा ॥ ४८ ॥
(युगलम्)

त्वमेव सूर परतापनत्वाद्दुर्गाश्रयत्वात्किमु नासि सोम ? ।
त्व मङ्गलो भूतनयस्त्वमेव बुध प्रतीतव्यवहारसौम्य ॥ ४९ ॥
गुरुस्त्वमालम्बनभूतजीव ! प्रभो ! कविस्त्व श्रुतकाव्यनामा ।
शनैश्चरस्त्व श्रितमन्दभावस्तमोद्विषन्पार्थिवसैंहिकेय ॥ ५० ॥
चन्द्रावदाताद्भुतवशकेतुस्त्वान्निग्रहात्मा किमनुग्रहात्मा ? ।
यत्रानुकूल प्रतिकूलको वा करोषि त देवविभूतिभाजम् ॥ ५१ ॥
विज्ञप्तिमाकर्णय मे नरेन्द्र ! त्वत्तो वराक स पुन सुरेन्द्र ।
न दृश्यते तज्जयवाहिनी सा न दृश्यतेज प्रसरप्रचार ॥ ५२ ॥
य श्राद्धदेव समवर्तनो यो यो धर्मराज शमन श्रुतो य ।
तत्कि नराधीश्वर ! कर्म वान्य तस्माद्विभिन्न जिनमेव विद्धि ॥ ५३ ॥
पुरातने जन्मनि तस्य वाच श्रोत्राभिधित्व मयका न नीता ।
नीतास्तत कि यदि नाम नैव चित्ते धृतास्ता विधृतास्तत किम् ? ॥ ५४ ॥
यथोक्तवृत्त्यैव न यावदेता सुशिक्षिता स्यु परिशीलनेन ।
तावत्कथ दु खपरपराया विभेदने विश्रान्ति लालसत्वम् ? ॥ ५५ ॥

यानि प्रभोऽज्ञानवशादकार्षं तान्येव पापानि दहन्ति किं माम् ?।
स दारुणो दारुण एव वह्नि सम्भूय किं नोषति दारुभारम् ? ॥ ५६ ॥
संवर्द्धितैस्तैर्दुरितैर्ममाय भर्ता कुलीन समपादि नैव ।
तस्मात्तथा नाथ ! विधेहि मुक्ता तेनैव धर्मं करवै यथाऽहम् ॥ ५७ ॥
आकर्ण्य विज्ञप्तिमिमा स तस्या पार्श्वस्थदौवारिकमादिदेश ।
स्वय समाहूय समेहि विप्र प्राणेश्वर सत्यकिनन्दनाया ॥ ५८ ॥
तथेति राज्ञ परिगृह्य वाच दौवारिकोऽगात्कपिलस्य वेश्म ।
आजूहवद्भृत्यमुखेन चेति भवन्तमाकारयति क्षितीश ॥ ५९ ॥
उपेत्य तत्सन्निधिमात्मनैव प्रदाय तस्याशिषमानतस्य ।
विज्ञाय वृत्तान्तमिम तदास्वादाशङ्कया प्लावितचित्तहर्ष ॥ ६० ॥
ससभ्रमस्तेन सम स गत्वा व्यभूषयद्राजसभा ससभ्याम् ।
नरेन्द्रसदर्शितभूमिभागप्राप्तासन प्रोक्तजयेतिशब्द ॥ ६१ ॥

( युग्मम् )

वर्णाश्रमाचारविचारचारुस्ततस्तमाचष्ट धराऽधिराज ।
उदारभावस्य न दारभाव तवाकुलीनस्य तु काङ्क्षतीयम् ॥ ६२ ॥
तस्मादिमा सत्यकिकन्यका त्व विरक्तचित्ता विजहीहि भद्र ! ।
नैवानुराग सुखवृद्धये स्याद्विरागताऽऽलम्बिनि निर्मितो हि ॥ ६३ ॥
कर्णातिथीकृत्य नृपस्य वाच प्रोवाच वाचस्पतिवत् स विप्र ।
ऐश्वर्यलीला कलयन् किमीदृक् प्रभु प्रवक्तु प्रभुवत्परोऽत्र ? ॥ ६४ ॥
प्रभा विना चेदवतिष्ठतेऽर्कश्चन्द्र स चेच्चान्द्रिकया विनाऽपि ।
पृथ्वीश ! चेच्चेतनया विनाऽऽत्मा विनैतया स्थातुमल तदाऽस्मि ॥ ६५ ॥
दृष्टान्तदार्ष्टान्तिकयोर्विरोध प्रीतेर्विसवादितयैव तस्या ।
अप्रेक्षमाण स पुन क्षितीशा प्रेक्षावतामग्र्यतमोऽप्यवाचि ॥ ६६ ॥
सासारिकी प्रीतिरिय द्विनिष्ठा सबन्धवत्किं प्रतिभासते न ?।
सा चैकनिष्ठाऽभ्युपगम्यते चेत्किमेकतालेन न तालिका स्यात् ? ॥ ६७ ॥
प्रीति परा धारयसि त्वमस्यामेषा समाकाङ्क्षति नो भवन्तम् ।
दुस्थ श्रिय ध्यायति पुण्यहीन सा त समालिङ्गति नैव यद्वा ॥ ६८ ॥
पदादितो नेष्यसि चेदिमा त्व प्राणानिय त्यक्ष्यति तत्प्रसह्य ।
तस्मादिय तिष्ठतु मे निशान्ते सुतेव धर्मं सितमाचरन्ती ॥ ६९ ॥

अभूत्पशुस्वाम्यपि निर्विलम्ब, कपर्दभूत्याकलितोऽपि नूनम् ।
ऐश्वर्यधुर्य समलोकमान्यो धर्म दधान स सदाशयेऽपि ॥ ७० ॥
धर्म समाश्रित्य गुणा समस्ता महार्घतामाप्य जगत्त्रयेऽपि ।
महत्तमाना श्रवणाऽतिथित्व जीवाभिधानप्रथिता लभन्ते ॥ ७१ ॥
सभ्यै प्रमाणीक्रियमाणमेतद्राज्ञो वचस्तत्कपिलोऽन्वमस्त ।
जिजीविषु को नृपतेर्निदेश प्रत्यादिदिक्षाविषयीकरोति ? ॥ ७२ ॥
वितीर्यमाण वसुधाधवेन स्वपाणिपद्मेन स सूत्रकण्ठ ।
ताम्बूलमादाय करद्वयेन स्वान्त विनाऽगात्कुपित स्वगेहम् ॥ ७३ ॥
सा सत्यभामा नृपतेरनुज्ञामासाद्य सद्य प्रमद वहन्ती ।
महल्लकैर्भूषितपार्श्वभागा शुद्धान्तभूभागमलञ्चकार ॥ ७४ ॥
दुष्कर्ममर्माणि विदारयन्ती तपासि शुद्धानि विसारयन्ती ।
साऽन्त पुराणा मुदमर्पयन्ती तत्र स्थिता स्वान्तमदर्पयन्ती ॥ ७५ ॥
अथाऽस्ति कौशाम्ब्यभिधा प्रसिद्धा पुरी परीता कमलाविलासै ।
विवर्ण्यते या कविभि प्रवीणैर्जिनेन्द्रपद्मप्रभजन्मभूमि ॥ ७६ ॥
तस्या बलेन प्रबलो बलोऽभूद्भूमीपतिर्भूमगुणौघभूमि ।
यस्य प्रतिद्वन्द्वितयैव शङ्के शक्रो बलारित्वविशिष्टनामा ॥ ७७ ॥
न श्रीमती तस्य बभूव नाम्नाऽपि श्रीमती किन्तु वधू स्वधाम्ना ।
यद्रूपसौन्दर्यसखित्ववृत्त्या रति भजन्ती रतिरेव जज्ञे ॥ ७८ ॥
तदङ्गजाऽजायत पुण्यत श्रीकान्ता द्विधाऽपि श्रुतिवत्सदङ्गा ।
विद्या यदभ्यासवशात्प्रवृत्ता प्रसिद्धिमालम्बिपतानुपायम् ॥ ७९ ॥
सा बालभावेऽपि गुणैरशेषैरेवाश्रिता प्रीतिविधित्सयैव ।
स्वय समागम्य हि सगतेषु प्रभोरजर्य न च जीर्यतीह ॥ ८० ॥
सा यौवनोन्मेषविशेषरम्या श्रीषेणभूमीन्द्रतनूभवाय ।
गरीयसे प्रैषि वसुन्धरेशा स्वयम्वराऽमा सुपरिच्छदेन ॥ ८१ ॥
राजाधिराजाङ्गजमिन्दुषेण स्वयवरीतु बलराजपुत्री ।
इय समेतीति नृपैर्निशम्योपदाभिरापूरि पदव्युदारै ॥ ८२ ॥
स्वयम्वरार्थं स्वयमेव यान्ती श्रुत्वा नृपैस्ता द्वितय व्यबोधि ।
विज्ञानभङ्गी बलराजपुत्र्या सौभाग्यभङ्गी प्रवरेन्दुषेणे ॥ ८३ ॥
स कोऽपि भूमीपतिरेव नासीत् समाव्रजन्त्या बलराजपुत्र्याम् ।

पथ्युन्नता रत्नपुरेन्द्रतुष्ट्यै न तौरणश्रेणिरबन्धि येन ॥ ८४ ॥
मुक्ताफलक्षोदसहोदराणि पयासि भूयासि भवन्ति यत्र ।
निवेशयामासुरपेतबाधास्तत्रैव गुप्यद्गृहमेतदीया ॥ ८५ ॥
वणिग्जनाध्यासितहट्टवीथीलभ्याखिलक्रय्यकदम्बकत्वात् ।
तत्रोपकार्याराचिताधिवासा स्मरन्ति वेश्मानि न केचन स्म ॥ ८६ ॥
सवाह्यमाना क्वचनापि बाढ श्रम विनाऽपि प्रयतालिवर्गै ।
प्रवीज्यमाना कदलीदलोघै क्वचिद्भुजिष्याभिरितस्ततोऽपि ॥ ८७ ॥
कर्म प्रकुर्वाणमनात्मनीन सखीजन क्वाऽपि निवर्तयन्ती ।
प्रवर्तयन्ती क्वचनापि दासी राशीकृतानेकगुणप्रकारा ॥ ८८ ॥
प्रौढप्रतापाऽनुचरानुयाता निदेशमात्रप्रभवत्प्रयोगा ।
नरेन्द्रकन्या शिबिकाऽधिरूढा प्रापत्क्रमाद्रत्नपुर पुर सा ॥ ८९ ॥
( त्रिभिर्विशेषकम् )

तया सहानन्तमातिर्द्विधाऽपि वाराङ्गनाजङ्गमराजधानी ।
अनङ्गराजस्य समाजगाम न्याय सहाय प्रतिरूपयन्ती ॥ ९० ॥
रूप यदीय समवेक्ष्य धीरैर्नैवोर्वशी कैश्चिदमानि मान्या ।
अगण्यलावण्यगुणाभिराम रम्भाऽपि नादृश्यतया विवर्ण्या ॥ ९१ ॥
( युग्मम् )

श्रीषेणभूवासवसम्भवौ ता नेत्रातिथीकृत्य कृतार्थभावम् ।
स्वस्यादधानौ हृदये वितर्कमेतादृश चक्रतुरेककालम् ॥ ९२ ॥
सजातकोपेन सुराधिपेन प्रदत्तशापेन निपातिता किम् ? ।
कटाक्षविक्षेपलवेन देवान् व्यामोहयन्ती सहसोर्वशीयम् ? ॥ ९३ ॥
त्रपावतीना कुलवातिकानामस्माकमन्त किमिय करोति ।
इतीव देवीभिरमानितेय भ्रष्टा दिवो वा कथमुर्वशी न ? ॥ ९४ ॥
उपेक्ष्य मा चन्द्रभृताऽपि भर्त्रा गङ्गा धृता मूर्ध्नि विचिन्त्य चेति ।
अजाततोषा विहिताधिरोषा गौरी किमेषा समुपागताऽत्र ? ॥ ९५ ॥
भागीरथी या शिरसा गिरीशोऽधत्तान्युतस्तामयमात्तगर्व ।
पदाऽपि नैव स्पृशतीति रुष्टा लक्ष्मीरिय लक्ष्मविवर्जिता किम् ? ॥९६॥
निमिष्यदक्षत्वविशेषलिङ्गानुवृत्तिमात्रेण विबुध्य नारीम् ।
अन्योन्यसस्पर्द्धितयेव बाढ तस्या मनो द्वावपि तौ न्यधत्ताम् ॥ ९७ ॥

लज्जा परित्यज्य परिन्छदस्थ सौभ्रात्रसबन्धमचिन्तयित्वा ।
तस्या कृते तावपि जातरागौ युद्धप्रतिज्ञा रभसा व्यधत्ताम् ॥ ९८ ॥
स इन्दुषेण खलु बिन्दुषेण बभाण हत्वा युधि सम्प्रहारे ।
भवन्तमेता यदि नात्मकान्ता करोमि तन्नाम न तातजात ॥ ९९ ॥
जगौ कनीयानपि बिन्दुषेणस्तमिन्दुषेण स्मरविह्वलाङ्गम् ।
सहोदरस्ते न भवामि चेत्त्वा नयामि नाह रणमादधान ॥१००॥
अभूतपूर्व परिभाव्य युद्ध तयोर्भविष्यत्त्वरित सुभृत्यै ।
न्यवेदि भूमीपतयेऽथवा के प्रजानते ता दुरुदर्कवार्ताम् ? ॥१०१॥
आकार्य राजाऽपि तदैव सर्वान् रहस्यमात्यान् सुतयोस्तदीदृक् ।
अकार्यमावेद्य निवर्तनाया. समादिदेश प्रतिकारसाध्यान ॥१०२॥
रसापतेस्त शिरसा निदेश निधाय जग्मु सचिवा समीपम् ।
कुमारयो कङ्कटमण्डलाग्रसयुक्परीवारपरीतयोस्ते ॥१०३॥
ज्येष्ठो विवेकीति पुरेन्दुषेण विनम्य बद्धाञ्जलयोऽथ तेऽपि ।
व्यजिज्ञपन्विज्ञतमाः कुमार सार यथा भूमिभुजोपदिष्टम् ॥१०४॥
यत्त्वां कुमार ! प्रतिपादयामस्तदत्र न क्षूणमवेक्षणीयम् ।
हित स्वतोऽपि प्रवदन्ति भृत्या वाच्य पुन. स्वामिनिदेशत किम् ?॥१०५॥
कुमारसारावहितोऽस्मदीय वाक्य समाकर्णय तावदेतत् ।
कनीयसा स्वेन सहोदरेण युद्ध्वा सम केन तताऽत्र कीर्ति ? ॥१०६॥
सता तु वेश्यास्पृहयालुताया॰ कथाऽप्यहो नैव विधातुमिष्टा ।
लाभ समाशङ्क्य तदीयमाराद्युयुत्ससे त्व किमनेन धीर ? ॥१०७॥
कनीयसो यत्र मन प्रसक्त सा ते वधूस्तद्दयिताग्रजत्वात् ।
सुता वधूश्चापि समे प्रपन्ने विभो ! कुलाचारविचारविद्भि ॥१०८॥
उपागमत्त्वा परिणेतुमेषा बलस्य पुत्री स्वजनेन सार्द्धम् ।
भ्रात्रैव युद्धोग्रमवेक्ष्य सा त्वा लज्जिष्यते कि न चमूरुचक्षु ? ॥१०९॥
तत्त्व निवर्तस्व गुरोर्निदेश मन्यस्व समानय न स्ववाचा ।
भृत्या हि नान्य प्रतिवाक्यदानात्स्वामिप्रसाद परमामनन्ति ॥११०॥
श्रुत्वा तदीय वचन कुमार. प्रत्युत्तर सस्मितमाह स स्म ।
युद्धाद्धि वीरव्रतदीक्षिताना कीर्त्तिश्रिय सम्प्रसर चरन्ति ॥१११॥
अशिक्षि यस्याः किल कामविद्या भवद्भिरुत्क्रान्तशिशुत्वयोगै ।

विगीयते सा यदि वारनारी पूज्यस्तदांध्यापक एव कि व ? ॥११२॥
युद्ध विधेय न कनीयसामेत्येतन्न सम्यग्गदित भवद्भि ।
वयोऽव्यपेक्षाप्रसरेण धीरा गौण कनीयस्त्वमुदाहरन्ति ॥११३॥
बल व्यपेक्ष्यैव विशेषविद्भिर्न्यगादि तच्चेत्किमु सशयो न ? ।
न निर्णय सङ्गरमन्तरेण प्रमाणनीय प्रतिपद्वताऽपि ॥११४॥
उपायताद्यापि न ता नताङ्गीमय च सा त च न सातलिप्सु ।
विनैव सम्बन्धमिय वधूस्ते युष्माभिरुक्त किमिद प्रशस्तम् ? ॥११५॥
स्वयम्वरार्थ स्वयमागता सा दृष्ट्वा रण नौ भविता प्रहृष्टा ।
न क्षत्रियाणा वणिजामिवाजि विहाय कर्मापरमस्ति किञ्चित् ॥११६॥
ततो निवर्ते यदि सपरायादह परामृश्य कथञ्चनापि ।
आरब्धभङ्गप्रवणप्रतिज्ञा लज्जा समालिङ्गति कि न युष्मान् ? ॥११७॥
दुराग्रह तस्य विबुध्य चित्ते तत समुत्थाय च धीसखास्ते ।
श्रीबिन्दुषेण समुपेत्य नत्वा नृपोदित विज्ञपयाम्बभूवु ॥११८॥
उभौ भवन्तौ मिलितौ चकास्त प्रध्वस्तमात्सर्यभरौ कुमार ! ।
स्वरूपनिर्भर्त्सितविश्वरूपौ दक्षाविव क्षोणितलावतीर्णौ ॥११९॥
द्वयोर्विरोध भवतोर्निशम्य स्मयोन्मुखानि द्विषता मुखानि ।
कथ भविष्यन्ति न यद्विषा स्यान्मुद्विप्रलापैर्न च विप्रलापै ? ॥१२०॥
बलस्य सामर्थ्यमपारयन्त सोढु मद चेतसि धारयन्त ।
राज्यस्य हेतोर्बहवोऽपि युद्ध कुर्वन्ति सौजन्यममानयन्त ॥१२१॥
स्त्रिया कृते सोदरयोर्विरोध नाश्रौष्म कुत्रापि न दृष्टवन्त ।
वाराङ्गना या चलहार्दपात्र तस्या कृते कि करणीयमेवम् ? ॥१२२॥
ज्यायान्मदोन्मादविसस्थुलत्वात्स तेऽस्मदुक्त यदि नो शृणोति ।
उपेक्ष्य त सन्निधिमागतास्ते कुरुष्व युक्त प्रतिभाति यत्ते ॥१२३॥
निवर्तमान समरक्रियाया स्तोष्यन्ति सर्वेऽपि भवन्तमेकम् ।
विचारमारभ्य विनिर्मिमीते य कर्म केनापि न निन्द्यते स ॥१२४॥
अतादृश वा रणकर्म शृण्वन् भूमीशिता विन्दति नैव शर्म ।
यतश्चिराल्लालितयो स्वसून्वो प्रीत्यैव सस्त पितरौ प्रहृष्टौ ॥१२५॥
नरेन्द्रकन्या शतशो भवन्त स्वय वरीतु रभसाद्गभीरम् ।
समागमिष्यन्ति यथा समुद्र नद्यो रसोल्लासविलासमध्या ॥१२६॥

सग्राममग्राम्यकविस्तवार्हं ! प्रोज्झ्य प्रकाम सुषमा लभस्व ।
त्वयाऽमृतेनेव पिता रसेशो न कालकूटेन स तेन पुत्री ॥१२७॥
अमात्यवाणीरवधार्य तास्ता स बिन्दुषेण स्फुटमाललाप ।
उक्त भवद्भिर्यदिद समस्त प्रशस्तमेवाञ्चति योग्यभावम् ॥१२८॥
केनाऽपि सार्द्धं न विरोधमाधामाजन्मसीम भवतामपीदम् ।
प्रतीतमत्युद्धतशक्तिभाजा भ्रात्राऽधुनाऽमायमुपास्थितो मे ॥१२९॥
स्त्रीमात्रमित्यत्र निमित्तमात्र जानीत यूय परमार्थतस्तु ।
दोर्दण्डकण्डूमपनेतुमिच्छुर्युद्धा मयैवायमुदग्रधामा ॥१३०॥
पर सहस्रा भुवि सन्ति शूरा विजित्य तानेष न शर्मणाऽस्ते ।
ततो गति यास्यति सवरारेर्विजेतुकामस्य हिमाशुमौलिम् ॥१३१॥
एकान्ततो नैव पणाङ्गनाया विभङ्गुर प्रेम निरीक्ष्यते वा ।
कुलाङ्गनाया ईव रञ्जयन्त्या स्वकामुक मोहनमञ्जुभङ्ग्या ॥१३२॥
प्रतिश्रुत स्व यदि न त्यजाव कथञ्चिदावा विदिताभिमानो ।
तदा कथङ्कारमकारण सन् हास्योदय स्याद् द्विषता मुखेषु ? ॥१३३॥
राज्य न सप्ताङ्गमिद विधत्ते शर्माणि पुंसा गुणलालसानाम् ।
नवाङ्गसौन्दर्यविधानभूता वधूर्यथा मन्मथरङ्गशाला ॥१३४॥
प्रतिश्रव यो विजहाति यो वा रणक्रियाया विनिवर्तते तु ।
अप्रेक्षणीयानन एव पुसा कथ श्रुतेर्गोचर एव स स्यात् ? ॥१३५॥
वीर्योचित युद्धविधि प्रकुर्वन् वप्तुर्न साताय कथ सुपुत्र ? ।
न यत्र सयत्पटुताऽस्ति तस्मिन्न क्षत्रिया क्षत्रियता वदन्ति ॥१३६॥
जन्यप्रवृत्तेर्विनिवर्तमान राजन्यकन्या कथमेव धन्या ।
कातर्यचर्यापरिशोच्यवृत्ति विवोढुमुत्साहमपि प्रकुर्यु ? ॥१३७॥
आयोधन योधशताकुल यो विधूय तिष्ठेदपि निर्विशङ्क ।
न पुत्रिता तेन पितु स किन्तु ह्रिये भवेत् प्रत्युत पूर्वजानाम् ॥१३८॥
भूपप्रतिच्छायतयैव युष्मानमात्यमुख्या ! कलयामि किं न ? ।
सहस्रभानोस्तु सहस्रभानो को वा मयूखान् मनुते विभिन्नान् ॥१३९॥
तस्मान्नरेन्द्राय मम प्रणाम प्रापय्य विज्ञापयत स्वरूपम् ।
वाचस्पतिप्रातिभशोभिताङ्गान् भवादृश शिक्षयितु प्रभु क ? ॥१४०॥

तस्य श्रुत्वा वचनमवनीवासवस्याङ्गजस्य

क्रोधावेशप्रखरदहनोद्भूतधूमप्रकरम्.।
गत्वा सर्वं व्यतिकरमिम त यथावृत्तमेते-
ऽमात्या गत्वा कलितमखिल भूमिभर्त्रे शशसु ॥१४१॥
दुर्वार रणसङ्कर स्वसुतयोर्विज्ञाय विज्ञाग्रणी
सञ्चिन्त्य प्रतिभावताऽपि विषयानेकान्ततो दुर्जयान् ।
किञ्चित् श्रीजिनराजसमतमताभिज्ञ प्रियाभ्या सम
पर्यालोच्य विषाधिवासितमय जघ्रौ पयोज नृप ॥१४२॥
दृष्ट्वा भूमिपतेर्वपुर्विरहित हसेन सविद्रुता
ते राज्यौ प्रियशोकमग्नमनसौ पद्म समाघ्राय तत् ।
व्यापन्ने जलमन्तरेण नलिनी स्थैर्यं किमालम्बते ?
ज्योत्स्ना चन्द्रमसा विना स्थितिरिय सीमान्तिनीनामिति ॥१४३॥
देवीभ्या सहित हित नरपति मत्वा विपन्न ततो
वीक्षापन्नतमाऽपि सत्यकिसुता सा कामविद्वेषिणी ।
को वा सप्रति रक्षिता कपिलत कोपेन दुर्वासस
छाया सस्पृशतोऽनुरागवशतो मा नेष्यमाणा हठात् ॥१४४॥
सञ्चिन्त्य स्वहृदेति तद्गुणगणश्रुत्या प्रसक्तीभव-
च्चेतोवृत्तिभरेण भानुतनयेनेवोपनीत मुदा ।
तद्वात्सल्यमतुल्यमेव सहसा सदर्शयन्ती नृराट्-
राज्ञीप्रेमवशवदैव कमल तज्जिघ्रति स्म स्वयम् ॥१४५॥
(युग्मम्)

चत्वारश्चतुरा समस्थिषत ते प्रेम्णाऽविभिन्नाशया-
जम्बूद्वीपगतोत्तरोत्तरकुरुक्षेत्रे त्रिपल्यायुष ।
गव्यूतत्रितयोच्छ्रया युगलिन सजज्ञिरेऽनेकधा
कल्पद्रुव्रजपूर्यमाणहृदयाकाङ्क्षाप्रशस्तोदया ॥ १४६ ॥
तत्र श्रीषेणराज समजनि पुरुषो ज्यायसी चास्य जाया
सा जाया या कनिष्ठा स्म भवति पुरुष सा वधूश्चास्य भामा ।
प्राप्यैव द्वन्द्वभाव विगलितविरह निष्कषायप्रचार
व्याधूतव्याधिबाध धनभवनमहाचिन्तया विप्रमुक्तम् ॥१४७॥
भुक्त्वा भोगानपत्यावनविरचनया पूरयित्वा स्वमायु-

र्देवत्व प्राप्य सर्वे प्रथमदिवपदे तेऽपि देवाङ्गनाभि ।
नित्य ससेव्यमाना कृतसुकृतपरीपाकसाध्यानुरूप
कल्याणोदर्कमेते फलमतुलमल स्वादयामासुरुच्चै ॥ १४८ ॥
आसीत् श्रीगुरुगच्छमौलिमुकुट श्रीमानभद्रप्रभो
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावता सद्गुरु ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गो द्वितीयोऽगमत् ॥१४९॥

## ॥ इति श्रीशान्तिनाथचरिते महाकाव्ये द्वितीयः सर्गः ॥

अर्हम्

## अथ तृतीयः सर्गः ।

उत्तप्तकाञ्चनविकस्वरचम्पकस्रक्-
सङ्काशकायरुचिरोचितदिग्विभाग ।
वृन्दारकै रचितपूजन एष देव
श्रीशान्तिरस्तु भवता शिवतातिरेव ॥ १ ॥
श्रीषेणभूपतनयावनयाऽनुरक्ता-
वुद्यानमीयतुरथो सुमहारथौ तौ ।
द्वेधाऽपि देवरमण गुणतोऽभिधान-
वृत्तेश्च शाखिततिरुद्धनभोविभागम् ॥ २ ॥
क्वाऽप्यर्जुनेन विलसद्रुचिपार्थिवेन
यत्पाण्डुभूपरिवृढस्य कुलानुकारि ।
स्फूर्जत्प्रियालपनसारमहाप्रमाण
विद्वन्निशान्तमिव कुत्रचनापि यच्च ॥ ३ ॥
(युग्मम्)
यावच्छराशरि भुजाभुजि चात्र युद्ध
तौ चक्रतु किमपि चक्रधरप्रभावौ ।
आगच्छदेकमवलोकयत स ताव-
द्व्योम्नो विमानमसमद्युतिदीपिताभ्रम् ॥ ४ ॥

अर्हम्

श्रीविजयधर्मसूरिभ्यो नमः ।

श्रीदेवविजयगणिविरचितं–

# पाण्डवचरित्रम् ।

ॐनमो वृषभस्वामियोगिने परमात्मने ।
कारिणे शिवसौख्यस्य विश्वस्थितिविधायिने ॥ १ ॥
परब्रह्मस्वरूपाय जगदानन्ददायिने ।
श्रीयुगादिजिनेशाय पराय परमेष्ठिने ॥ २ ॥ (युग्मम्)
स श्रीशान्तिजिनो जीयाद् भव्यानां भुवि शान्तिकृत् ।
मत्वा मृगो जगत्त्राणं सेवते लाञ्छनच्छलात् ॥ ३ ॥
श्रीनेमिः श्रेयसे भूयाद्यदुवंशशिरोमणिम् ।
वाञ्छितार्थप्रदो लोके कल्पशाखीव देहिनाम् ॥ ४ ॥
पार्श्वनाथः स वः पायान्नीलवर्णतनुद्युतिः ।
फणभृन्मणिरुक्शोभी मेघवद्विद्युताश्रितः ॥ ५ ॥
वर्द्धमानं जिनं नौमि वर्द्धमानगुणोत्करम् ।
श्रीसिद्धार्थकुलाकाशविकाशननभोमणिम् ॥ ६ ॥
नत्वा श्रीभारती देवी तथा श्रीमद्गुरुं निजम् ।
चरित्रं पाण्डुपुत्राणामिक्ष्वाकुकुलजन्मनाम् ॥ ७ ॥
उद्धृत्यान्यचरित्रेभ्यो गद्यबन्धेन सुन्दरम् ।
करोम्यात्मविनोदाय तथा कर्मक्षयाय च ॥ ८ ॥ (युग्मम्)

अस्मिन् जम्बूद्वीपे भरतक्षेत्रे श्रीऋषभदेवस्य शतमासन् सुताः। तेष्वेकः कुरुनामाऽऽसीत् । तन्नाम्ना ख्यातं क्षेत्रं कुरुक्षेत्रम् । तत्र

कुरुपुत्रो हस्ती, तेन स्थापितं पुरं हस्तिनापुरम् ॥ नगरवर्णनं यथा-प्रवरप्राकारोपगूढं कपाटपरिखापरिमण्डितं सतोरणं चतुर्दिक्षु वापीकूपतडागवाटिकाऽभिरामं भूभामिनीभालस्थलतिलकोपमानं पण्डितसमूहैर्नगरगुणवर्णनावसरे स्तूयमानं एवंविधमस्ति। यस्मिन्नगरे दारिद्र्यस्यैव दारिद्र्यमस्ति, अधर्मस्यैव पीडनं, भयस्यैव भयं, अन्यायस्यैव निग्रहो नान्यस्य, सर्वगुणैः सुन्दरम्। तस्मिन्नगरे हस्त्यन्वये महाभुजा राजानोऽनेकलक्षसंख्याः संजज्ञिरे। क्रमादत्र वंशे सनत्कुमारनाम्ना चक्रवर्त्ती अभूत्। यो वैराग्यभेषजैर्द्रव्यरोगान् भावरोगांश्च चिकित्सति स्म। तथाऽत्र वंशे शान्तिकुन्थुअराश्चक्रिणो धर्मचक्रिणोऽपि बभूवुः। एवमसंख्येषु नृपेषु गतेषु, तन्मध्ये केषुचित् मोक्षं गतेषु, केषुचित् स्वर्गं गतेषु, क्रमात् चक्रिसमप्रभोऽनन्तवीर्यो राजा अभूत्; तत्पुत्रो दुर्वारवीर्यः कृतवीर्यो नृपोऽभवत्, तत्पुत्र' पर्शुरामारिः सुभूमनामा चक्रवर्त्त्यभूत्। एवमनेकेषु राजस्वतिक्रान्तेषु, प्रशान्तः शान्तनुनामा राजाधिराजोऽजायत। योऽन्यायकन्दमुच्छिन्दन् न्यायमहीरुहं सिञ्चन् समस्तमहीपालानां उपमानं बभूव। यस्य शान्तनो राज्ये त्रिवर्ग्येऽपि, परस्परं बाधां नाधात्। समस्तव्यसनत्यागवतोऽपि शान्तनोर्विवेकिनोऽपि, एकं मृगयाव्यसनं अभूत्। स राजा एकस्मिन् दिने वेगवन्तं वाजिनमारुह्य नीलाम्बरधरः पापर्द्धिपरो महावनं ययौ। तस्मिन् वने एकं कुरङ्गं प्रेमपरया दृशा कुरङ्गीचाटुकारिणं दूरादवलोक्य प्रत्यञ्चारूढं बाणं विदधे। मृगोऽपि कान्दिशीकमनाः प्रेयसीं पुरस्कृत्य सन्त्रासतरलेक्षणः पलायाञ्चक्रे। स नंष्ट्वा मृगीसहितो मृगः किञ्चिद्भीषणारण्यं विवेश। राजा शान्तनुरपि मार्गखेदितमनाः क्षुत्तृषाक्रान्तोऽपि बाणगोचरीभूतेऽपि मृगे बाणं संहृत्य तमारामं विशति स्म॥ स राजा तस्मिन् वने भ्रमन् सप्तभूमिसुन्दरं प्रवरप्रासादमद्राक्षीत्। तद्दृष्ट्वा चेतसि चमत्कृतः, अश्ववरादवरुह्य तं प्रासा-

द्मारुरोह। तस्मिन् सप्तमभूमिकायां तेनं राज्ञा एका बालिका दृष्टा। तयाऽपि राजा दृष्ट । सा अभ्युत्थाय महीनाथं स्वपल्यङ्के निवेशयामास। राजाऽपि तां अनर्गलप्रेमरोमाङ्करकरम्बिनी सुमुखीं संमुखासीनां विलोक्यैवमुवाच। हे कल्याणि! त्वं काऽसि, कस्य तनयाऽसि, अस्मिन् विजने वने एकाकिनी सखीसहिता कथ तिष्ठासि?। इति राज्ञा पृष्टे तया संज्ञिता सखी एवं जगाद। शृणु त्वं राजन्!; सावधानीभूय; "यथा वैताढ्यपर्वते रत्नपुरे नगरे जह्नुराज्ञस्तनया गङ्गेति नाम्ना इयं पुरो निषण्णा ज्ञेया । एकस्मिन् दिने राजा जह्नुर्गङ्गां निजतनयामङ्कोपविष्टां दृष्ट्वा तद्रूपमोहिताश्चिन्तयति । अहो! अस्या अनुरूपः कश्चित् वरो विलोक्यते ॥

यतः—

"कुलं च शीलं च सनाथता च
विद्या च वित्तं च वपुर्वयश्च ।
वरे गुणाः सप्त विलोकनीया-
स्ततः परं भाग्यवशा हि कन्या"॥ १ ॥

इति विचार्य जह्नुराजा गङ्गामवोचत्। हे पुत्रि! तवानुरूपः कश्चित् योग्यो वरः करिष्यते। तदा गङ्गया प्रोक्तम्; हे राजन! वाचाऽतिक्रमकारिणा अनुरूपेणापि वरेण किं क्रियते?। अतो कथितकारिणं वरं करिष्ये नान्यामिति। तच्छ्रुत्वा राजा तूष्णीको बभूव । एकस्मिन् दिने पितृगृहे स्थिता गङ्गा चारणश्रमणात् दुष्प्रापमार्हतं धर्मं सम्यक्त्वमूलद्वादशव्रतरूपं प्राप । धर्मप्राप्त्यनन्तरं मत्सख्या अत्र गङ्गोपकण्ठे नूतनवनमारोपितम् । अत्र वने श्रीऋषभदेवप्रासादः कारितः । प्रासादे प्रसन्नमनाः प्रत्यहं जिनपूजां कुर्वती सुखेन दिनानि निर्गमयामास ॥ एकस्मिन् दिने जह्नुराज्ञा सह अत्र वने सत्यवाक् नाम्ना नैमित्तिकः

समागतः । तदा राज्ञा पृष्टम्; भो सत्यवाक्! नैमित्तिकशिरोमणे! त्वं ब्रूहि अस्या गङ्गाया अनुरूपो वरः को भावी?। भो राजन्! अस्या गङ्गायाः पुण्यानुभावात् मृगानुपादिकः शान्तनुभूपालो हस्तिनापुराधीशः प्रातः समेष्यति, सोऽस्या मनोऽभिरुचितो भर्त्ता भविष्यति । एतद्वचनं श्रुत्वा हृष्टो राजा स्वस्थानं गतः। तद्वचनश्रवणात् प्रासादशिखरस्थयोरावयोर्भवतो मार्गं पश्यन्त्योर्भवद्दर्शने वाञ्छितं फलितम्। अथ राजा ऊचे; हे गङ्गे! हे मृगलोचने! मृगोऽपि मे महोपकारी जातः, येन त्वं नेत्रकौमुदी दर्शिता। हे प्रिये! लोका नानोपायैर्या लक्ष्मी अभिलषन्ति, सा मयि स्वयमेवाऽभिलाषुका जाता; यत्त्वया स्वयमेवाहं वृतः। अतो ब्रूहि त्वद्वाचिकं किं करोमि?। तयोक्तम्; मद्वचनं कार्यम्। राज्ञोक्तम्, करिष्ये। गङ्गयोक्तम्, वचनोल्लङ्घने अहं स्वस्थानं पितृगृहं समेष्यामि। राज्ञोक्तम्, एवम्। ततो गङ्गया सखीमुखेन जह्नुराजानं समानाय्य उभयोः सैन्यस्वजनसमागमादिमहामहेन पाणिग्रहणं कृतम्। तयोः संयोगे प्रीतिः पल्लविता। अथ निर्वृत्ते पाणिग्रहणोत्सवे जह्नुविद्याधरपतिः गङ्गाकरमोचने गजवाजिस्वर्णरत्नमणिमाणिक्यादिकं स्वकुलोचितं धनं ददौ। तद्धनादिकं गृहीत्वा शान्तनुर्गङ्गायुतो हस्तिनापुरं नगरमाजगाम। तत्र तौ दम्पती प्रेमानुरूपाणि राज्योचितानि सुखान्यनुबभूवतुः ॥ अन्यदा निबिडप्रेमबन्धस्य शान्तनोः पत्नी गङ्गा अन्तर्वत्नी बभूव। निधिगर्भा काश्यपीव सा गङ्गा गर्भानुभावत सुमेरुं कन्दुकं मेने, समुद्रं गोष्पदम् । तथा राज्ञा नैमित्तिकः पृष्ट । नैमित्तिकेनोक्तम्, अनेन लक्षणेन तव महान् पुत्रो भावी । तच्छ्रुत्वा राजा शान्तनुरत्यर्थं तुतोष । सार्द्धसप्तदिनाधिकेषु नवमासेषु सुमुहूर्त्ते सुलग्ने शुभयोगे राज्ञी गङ्गा गाङ्गेयवर्णं पुत्रं सुषुवे। प्रथमे दिवसे तस्य कुलोचितां स्थितिपातिकां राजा करोति । तृतीये दिवसे चन्द्रसूर्ययोर्दर्शनं कारयाति। षष्ठे दिवसे षष्ठीजागरणं

करोति। संप्राप्ते द्वादशे दिवसे निवर्तिते अशुचिजातकर्मकरणे राजा शान्तनुः तस्य पुत्रस्य गङ्गाऽपत्यत्वात् गाङ्गेय इति नाम सार्थकं निर्ममे ॥ एकस्मिन् दिने राज्ञी गङ्गा मृगयाऽऽरम्भगाढसंरम्भं भूपालं दृष्ट्वा मूर्द्धि बद्धाञ्जलि सानुरागमेवं व्यजिज्ञपत्; हे प्रजाप्रिय! हे प्रियन्याय! हे प्राणेश! हे धैर्यधाम! हे परोपकारिशिरोमणे! हे प्रज्ञावन्! हे निजवाक्पालनसावधान! त्वादृशः सत्यवाक् अन्यः कश्चित् क्षितौ नास्तिः हे नाथ! अतः किञ्चिदुच्यते; तव गुणवतोऽपि कलाशालिनोऽपि निष्कलङ्कस्यापि एको महानाखेटकव्यसनरूपः कलङ्को वर्त्तते, चन्द्रस्य मृग इव, अतः प्रोच्यते; स्वामिन्! व्याधसधर्म धर्म त्यज, सत्कर्म समाचर, यतस्त्वं मम विज्ञपनं नातिक्रमितुमर्हसि। तच्छ्रुत्वा राजा ऊचे, अद्यप्रभृति नाहं गमिष्यामि ॥ कतिपयदिनान्ते पुनरप्याखेटकार्थं गतः। पुनर्वारितो राजा वदति; हे प्रिये! त्वया सत्यमुक्तं साधूक्तं च, परं किं करोमि, एषोऽहं व्यसनग्रहग्रस्तो मृगयां त्यक्तुं न शक्नोमि, यतो व्यसनग्रहो दुरुच्छेद इति कथयित्वा पुनस्तथैव वने गतः। तच्छ्रुत्वा कुपिता गङ्गा बालपुत्रमादाय पितुर्मन्दिरमभ्यगात्। सा गङ्गा वैताढ्यस्य प्रथमे रत्नपुरे नगरे पितृमन्दिरे बन्धुवत्सला तं शिशुं वर्द्धयामास ॥ अथ मृगयानिवृत्तस्य राज्ञो गृहमागतस्य पत्नीवृत्तं श्रुत्वा मनसि महद् दुःखं जातं, अहो व्यसनं दुःखदायि;

यतः--

“द्यूतं च मांसं च सुरा च वेश्या पापर्द्धिचौर्ये परदारसेवा।
एतानि सप्त व्यसनानि लोके घोरातिघोरं नरकं नयन्ति”॥१॥

एवं न विचारितं; तथैव मृगयामग्नमना नृपो दिनानि निर्गमयामास, परं पुत्रकलत्राभ्यां विप्रयुक्तोऽवनीपतिरग्निनिमग्न इव

चतुर्विंशतिवत्सरीं सागरोपममिवानैषीत्। सा गङ्गाऽपि कदाचित् पितृगृहे कदाचित्तस्मिन् गङ्गोपकण्ठवने श्रीऋषभदेवप्रासादे श्री-जिनार्चनपरा दिनान्यऽत्यवाहयत्।

यतः–

"ते[1] धन्ना जिअलोए जे जिणधम्मं कुणंति पच्चक्खं।
धन्नाण वि ते धन्ना कुणंति देसंतरगया वि" ॥१॥

एवं तयोर्गङ्गागाङ्गेययोरपि पुण्यं कुर्वतोस्तथैव चतुर्विंशतिवत्सरी गता। स गाङ्गेयो गङ्गासहितः शस्त्रशास्त्रकलापारीणस्तं वनं ररक्ष, सुराजा राष्ट्रमिव। एकस्मिन् दिने केनचित् व्याधेनागत्य शान्तनुराज्ञः पुरो विज्ञप्तम्; देव! नातिदूरे गङ्गातीरे एकं काननं अस्ति; यस्मिन् कानने विस्मृतत्रासा मृगाः सन्ति, तथा घुर्घुरारावैर्घोराः शूकराः सन्ति, महाकायाश्चित्रकाः सन्ति, सरिद्भ्रमितमध्याह्नवासराः कासराः सन्ति। तच्छ्रुत्वा हृष्टो राजा तं व्याधं पुरस्कृत्याश्वारूढः कृतव्याधवेषो व्याधैः परिवृतस्तद्वनं विवेश। ततो वागुरिकैस्तद्वनं हक्कयामास। तैर्हक्किता पशवो दिशो दिशं पलायमाना गाङ्गेयरक्षितं वनं प्रविष्टाः। राजाऽपि दुःसाध्यव्याधपरिवृतो भीषणान् बाणान् वर्षन् हक्कानादैस्तद्वनं क्षोभयामास। अहो पापिनः पापसंख्या नास्ति; तेन राज्ञा वने विलोड्यमाने क्षुभितार्णवमिव वनं विलोड्यमानं दृष्ट्वा गङ्गापुत्रो गाङ्गेय उभयपक्षबद्धतूणीरो मण्डलीकृतकोदण्डस्तद्वनरक्षकः साक्षाद्धनुर्वेद इव पीनाङ्गोऽनङ्गोपमो राज्ञः पुरः समागत्य नरेन्द्रं वने प्रविशन्तं निषेधयामास। राजा ऊचे; भो भद्र! कान्तारचारिवनेचरान् निघ्नन्तं आखेटकक्रीडातत्परं स्वेच्छया भ्रमन्तं मां कथं निषेधासि। सोऽप्यु-

---

१ ते धन्या जीवलोके ये जिनधर्मं कुर्वन्ति प्रत्यक्षम्।
धन्यानामपि ते धन्याः कुर्वन्ति देशान्तरगता अपि ॥ १ ॥

वाच, हे महाभाग ! एतान् निरपराधान् जन्तून् निघ्नन् किं न लज्जसे; यतो भवादृक्षाः सर्वप्राणिप्रियङ्करा प्राणहरा भवन्ति, तर्हि रक्षकाः के भविष्यन्ति। इत्थं राजा निषिद्धोऽपि यदा आखेटकान्न निवर्त्तते, तावत् सोऽपि तथैव धनुष्टङ्कारं कुर्वन् राजानं हन्तु दधावे। उभयोर्जन्यजनकयोः सङ्ग्रामो बभूव, परं नैकोऽपि जयपराजयौ लेभे। एवंविधे संग्रामे जायमाने नृपसैनिकैर्गाङ्गेयो रुद्धः मृगैर्मृगारातिरिव ; परं एकोऽपि गाङ्गेयो राज्ञा तस्मिन्नवसरे अनेकधा ; दृष्टः तद्बलं दृष्ट्वा चेतासि चमत्कृतो राजा कोपवशङ्गतो यावद्धनुषि शत्रुशायकं बाणं सन्धत्ते तावत् गङ्गातनयः करस्थं सन्धितं बाणं बाणेनाच्छिदत्। एवं राजानं विलक्षीभूतं दृष्ट्वा प्रासादशिरःस्थिता गङ्गा संग्रामभूमौ समागत्य पुत्रं निवारयामास। हे वत्स ! निजतातेन सह कथं कलहायसे। पुत्रेणोक्तम्; हे मातः ! एष मम पिता कथम्। तदा मात्रा सकलोऽपि पूर्ववृत्तान्तः कथितः। तच्छ्रुत्वा गाङ्गेयो मातरं प्रत्याह ; हे मातः ! एष पिताऽपि मे शत्रुः, यो बालवत् पालितान् वनेचरान् जन्तून् त्रासयन सांप्रतं यमवत् संहारकारको बभूव, अत एनं हन्मि। तच्छ्रुत्वा तत्र गत्वा गङ्गा राजानं प्रत्यवोचत्; एष तव पुत्रो गाङ्गेयाभिधः। तद्वाक्यं श्रुत्वा उल्लसितरोमाञ्चो रथादुत्तीर्य प्रमोदमेदुरः सुतसम्मुखमभ्यगात्। सुतोऽपि पितरं सम्मुखमायान्तं दृष्ट्वा हर्षाश्रुलोचनश्चापबाणानुत्सृज्य भूमिलुठनैः पितुः पादयोरपतत्। पिताऽपि पुत्रमालिङ्गय निजोत्सङ्गे निवेश्य पुनः पुनर्मूर्द्ध्नि चुचुम्ब। गङ्गा च प्रोवाच ; हे प्रिये ! अयं पुत्रः त्वया कथं वर्द्धितः, केन पाठितः, कथं वा त्वया ईदृशी यौवनावस्थां प्रापितः, तत् सत्यं ब्रूहि। गङ्गा जगाद; हे राजेन्द्र ! सावधानेन त्वया पुत्रचरित्रं श्रूयताम् ; त्वत्तोऽहं रुष्टा पितृसदने गता तत्र गाङ्गेयो मातुलाना पर्यङ्कखेलनैरेकाहलीलया पञ्च वर्षाण्यतिक्रान्तवान् ततः पवनवेगेन

मातुलेन अत्यादरात् गाङ्गेयोऽध्यापयितुमारेभे ; ततस्तव पुत्रो विनयवान् स्वल्पेनापि कालेन सकलाः कलाः पपाठ ; तथाऽसौ अनिर्वेदं धनुर्वेदमपि अध्यगीष्ट ; ततोऽसौ सकलविद्याधर-विद्यापारीणो विद्याधरपतीनपि तृणवद् गणयामास ; ततोऽहं पुत्रमादाय अत्र वने अस्मिन् प्रासादे श्रीजिनसदने जिनार्च-नपरा निवसामि ; तव पुत्रोऽयं गाङ्गेयोऽपि चारणश्रमण-मुनिमुखादार्हतं धर्मं निशम्य सुतरां दयाधर्मतत्परो बभूव ; ततः कारुण्यनिपुणेन तव पुत्रेण चतुर्दशयोजनमिते अस्मिन् वने सर्वतो जीवरक्षा प्रवर्त्तिता । अस्मिन् वने तव पुत्रभिया कोऽपि व्याधो न सञ्चरति ; तथा अस्मिन् वने हिस्रोऽपि आत्मविरो-धिनं न हिनस्ति ; अत्र कान्तारे तव पुत्रभिया कृतान्तोऽपि श्वाप-दानां अल्पमृत्यवे न प्रभवति । हे आर्यपुत्र ! अतस्त्वमपि वने-चरान् पशून् मद्गिरा त्रायस्व । राजा प्रोवाच ; हे प्रिये ! मया त्वद्गिरा अतः परं मृगया त्यक्ता । तदेहि पुत्रेण सह । सांप्रतं तव पुत्रेण त्वं राज्यस्वामिनी भव । तच्छ्रुत्वा गङ्गा उवाच ; हे राजेन्द्र ! अधुना मम मानसं धर्मकर्मणि संलीनं वर्त्तते ; अतो नाहं राज्ये समेष्यामि ; किन्तु जिनार्चनपरा स्थास्यामि ; त्वं स्वपुत्रमादाय स्वस्थमनाः स्वस्थानं याहि । यतः शून्यं राज्यं मुक्त्वा समागतोऽसि ; अतः प्रोच्यते तव पन्थानः कुशलिनः सन्त्विति राजानं प्रत्युक्त्वा पुत्रं प्रत्याह ; हे वत्स ! गाङ्गेय ! पितु-र्मनोरथान् समर्थय ; पित्रा सह स्वस्थानं याहि ; यथा ते राज्य-संपदो भवन्ति युवयोर्योगः प्रशस्यः ।

यतः—

"ईदृक्कस्यास्ति जनकः कस्यास्ति त्वादृशः सुतः ।
तदस्तु युवयोर्योगो बुधचन्द्रमसोरिव ॥ १ ॥

ततो जगाद गाङ्गेयस्त्यक्तुं त्वामम्ब ! नोत्सहे ।
त्वं मे पिता च माता च दृष्टपूर्व्यासि नापरम्" ॥ २ ॥

एवमुक्तिप्रत्युक्त्या बोधितः पुत्रः पित्रा सह हस्तिनापुरं नगरं समाययौ। ततो महामात्यैः सपौरलोकैः सतोरणमुत्पताकं नगरं विदधे। राजाऽपि सुमुहूर्त्ते योग्यं सुतं गाङ्गेयं युवराजपदे स्थापयामास ; यतः योग्यं सुतं वा शिष्यं वा गुरवः श्रियं नयन्ति। अथ पितुः शासनात् एकातपत्रां मही कुर्वन् विनीतात्मा पितुः सदृशं विनयं तनोति स्म। अन्यदा राजा शान्तनुः स्वेच्छया यमुनातीरे विहरन् नावि निषण्णां मनोहरां काञ्चित् नाविककन्यामालोकयामास। तद्रूपमोहितो राजा तत्समीपमागत्य मदनोत्सुकमनाः तां वारं वारं पप्रच्छ; हे सुन्दरि ! त्वं काऽसि, कस्य तनयाऽसि, किंनाम्नी असि। सा जगाद; हे भूपाल ! अहं कालिन्दीकूलवासिनो नावधिपतेः पुत्री सत्यवती नाम्नी कन्याऽस्मि। पित्रादेशाद्धर्मेणाहं नावं वाहयामि ; यतः कुलीना कन्या पित्रादेशवशंवदा भवेत्। तद्वचनं श्रुत्वा नीतिनिपुणो राजा तत्पितुरन्तिके गतः। सोऽपि नाविकः स्वागतप्रश्नपूर्वकं विज्ञपयति ; स्वामिन् ! किमागमनकारणम्। राजा ऊचे ; भो भद्र ! तव पुत्री सत्यवती नाम्नी त्वयाऽर्पिता मम सद्धर्मचारिणी भवतु। विनयावनम्रो नाविक ऊचे ; राजेन्द्र ! त्वत्समोऽर्थी गृहमागतः केन लभ्यते ; परमेतां कन्यां सत्यवती तुभ्यं दातुं मे मनो नोत्सहते ; यतस्तत्र पुत्रो गाङ्गेयो राज्यधुरन्धरः ; तस्मिन् सत्यस्याः सत्यवत्या मम पुत्र्यास्तनयस्य राज्यं नो भावि ; ततस्त्वं प्रसन्नो भूत्वाऽन्यत्र दारार्थे व्यवसायं कुरु ; यतस्त्वादृशामुदारा बहवो दाराः पदे पदे संपत्स्यन्ते। तद्वचसा दूनो राजा भृशं म्लानाननः स्वगृहमागात्, परं कामवशंगतो राजा क्वाऽपि रतिं न लेभे।

यतः—

"कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयः ।
राजयक्ष्माऽऽदिरोगाश्च भवेयुर्मैथुनोत्थिताः ॥ १ ॥

तावन्मौनी यती ज्ञानी सुतपस्वी जितेन्द्रियः ।
यावन्न योषितां दृष्टिगोचरं याति पूरुषः" ॥ २ ॥

तस्मिन् समये राजसेवार्थं समागतो गाङ्गेयो राजानं नत्वा पुरो निषण्णो मनसि चिन्तयति । किं मया विनयातिक्रमः कृतः, किंवा केनचिदाज्ञा लङ्घिता, किंवा मे मातुः सस्मार ; यन्मे पिता साम्प्रतं श्यामाननो दृश्यते, तर्हि तातं पृच्छामि, अथवा पृष्टस्तातः सत्यं न कथयिष्यति, तर्हि मन्त्रिणं पृच्छामि । एवं विमृश्य सुधीर्महामान्त्रिणं विजने नीत्वा सर्वं चिन्ताकारणं पप्रच्छ । महामात्येन यथास्थिते उक्ते गाङ्गेयो नौपतेर्गृहं गतः । सोऽपि नृपपुत्रमागतं दृष्ट्वा विनयावनम्रोऽवोचत् । हे स्वामिन् ! मद्गृहे त्वं किमर्थमागतोऽसि । कुमारेणोक्तम् ; मत्पित्रे तव पुत्रीं सत्यवतीं देहि ; तव पुत्री मम माता भवतु । नाविक उवाच ; हे नररत्नशिरोमणे ! राज्यश्रीः त्वां समुत्सृज्य किं मद्दौहित्रं वृणुते । यथा लक्ष्मीः समुद्रं हित्वा किं अखातसर उपसर्पति ; तर्हि कथं पुत्रीं ददे । यतो पत्न्या महद्दुःखं शास्त्रे उक्तम् ।

यतः—

"प्राणिस्वेच्छाच्छिदः क्रूराः कारागारनियोगिनः ।
मृत्वा सत्पात्रदानेन जायन्ते नृपयोषितः" ॥ १ ॥

एवं नृपयोषितां महद्दुःख शास्त्रे उक्तम् ; अतो मत्पुत्रीं न ददामि। पुनः शान्तनोः सूनुर्जगाद ; हे मातामह ! तवैष महान् भ्रमः ; यतस्त्वं तुच्छोचितं उदाहरः ; यतः गाङ्गेयसत्यवतीतनययोः किञ्चिदन्तरं नास्ति । यतः कुरुवंशान्यवंशयोर्महदन्तरं कलहंसबकोट-

योरिव । कुरुवंशे विवेकिनि कुले सामन्त्यसंबन्धः कदापि नाभूत्, नैवं कदापि भविष्यति । तथा गङ्गातोऽपि मम सत्यवती माता विशिष्यते । किञ्च मम तातः सत्यवतीस्नेहमोहितो भृशं दूयते, अतः पुनः प्रोच्यते सत्यवती देहि, अहं राज्यं न करिष्यामि ।

यथा--

"एकां श्रृणु प्रतिज्ञां मे बाहुमुत्क्षिप्य जल्पतः ।
सत्यवत्यास्तनूजस्य राज्यं नान्यस्य कस्यचित ॥१॥
अहं तु हन्तुमेतस्य प्रत्यूहव्यूहमन्वहम् ।
चापभृज्जागरिष्यामि सुतोऽस्मि यदि शान्तनोः ॥ २ ॥
अद्यैवाप्तं मया राज्यं तुष्टाश्च मम देवताः ।
सत्यवत्या सधर्मिण्या यत्तातः सुमना भवेत्" ॥ ३ ॥

एवंविधां गाङ्गेयगिरमाकर्ण्य विस्मितैः खेचरैः स्थिराणि व्योम्नि विमानानि वितेनिरे । ततः सत्यवतीपिता अत्यन्तलुब्धः पुनरभ्यधात्; हे कुमारेन्द्र ! साधु साधु त्वमेव पितृवत्सलोऽसि यदेवंविधं राज्यं पित्रर्थमुज्झसि; पुनरपि एकं वचो निशम्यतां यदि त्वं राज्यं न लास्यसि परं तव पुत्राः सिंहशावाः क्रमागतं राज्यं त्वमिव कथं त्यक्ष्यन्ति इत्यादिविकल्पैः पुनर्मे मनः स्खलति । तच्छ्रुत्वा पुनः शान्तनवोऽवदत् ।

यथा–

श्रृणु त्वं व्योम्नि श्रृण्वन्तु सिद्धगन्धर्वखेचराः ।
ममैकं मुषिताशेषपापग्रहमाभिग्रहम् ॥ १ ॥
स्वर्गश्च सोऽपवर्गश्च यस्य ख्याता फलद्वयी ।
आजन्म तन्मयोपात्तं ब्रह्मचर्यमतः परम् ॥ २ ॥

---

१ जल्प्यते इत्यपि पाठ ।

यतश्चारणश्रमणैर्व्रतेषु प्रथमं पुनश्चतुर्थमनुपमं मे प्रतिपादितं अतो मया प्राणिनामभयव्रतं, प्रथममङ्गीकृतं, साम्प्रतं ब्रह्मव्रतमप्यङ्गीकृतं, तथा तार्त्तीयीकमपि व्रतं पितृशुश्रूषण नामाजन्म मया अङ्गीकृतम् । तद्गाङ्गेयवचनं श्रुत्वा दिवि दिवौकसः गाङ्गेयमूर्द्ध्नि बन्धुरं पुष्पवर्षं वितेनुः; देवैरुच्चैर्जयजयारवश्चक्रे ।

यथा—

उच्चैरुरिति वाचश्च देवि! धन्याऽसि जाह्नवि! ।
त्वं चासि शान्तनो! श्लाघ्यः सोऽयमीदृक् सुतो ययोः॥१॥

तदा देवैर्विद्याधरैः पौरलोकैः साधुभिश्च सर्वैर्भीष्मव्रतारोपणत्वात् गाङ्गेयस्य भीष्म इति द्वितीयं नाम विदधे। ततः शान्तनोस्तनुजे त्रयो गुणाः अहिंसा १ ब्रह्मचर्यं २ पितृभक्ति ३ रूपास्त्रिभुवने श्लाघ्याः सञ्जज्ञिरे। ततो देवा गन्धर्वा विद्याधरा मनुजाः सद्गुणोत्कीर्त्तनैर्गाङ्गेयमभिष्टुत्य स्वं स्वं स्थानं जग्मुः॥ अथ नाविकेश्वरः सत्यवतीं निजोत्सङ्गसङ्गिनीं कृत्वा पुत्रीगुणानुदीरयामास। कुमारेन्द्र! श्रूयतां धन्यस्त्वं, येन पितृकृते दुष्कृतव्रतमङ्गीकृतम्; साम्प्रतमेकं वृत्तान्तमाख्यामि त्वं सावधानीभूय शृणु; एकस्मिन् दिने अहं कालिन्दीकूले वृक्षमूले विश्रामाय समागमम्; तदा केनाप्युज्झितामेकां बालिकां जातमात्रामद्राक्षम्; अहं तां बालिकामुपादातुं चलितः यावद्द्विजातिर्वा सुजातिर्वेति विकल्पाद्व्यावृत्तः चलितश्च गृहं प्रति तावदम्बरे ईदृशी सरस्वती उल्ललास। रत्नपुरे नगरे रत्नाङ्गदो नृपोऽस्ति; तस्य रत्नवती राज्ञी, तयोः कुक्षिसमुद्भवा एषा पुत्री पितृवैरिणा खेचरेणापहृत्यात्र कालिन्दीकूले मुक्ता। पुनश्चाकाशे इति गीरभूत्; एतां प्रेमानुविद्धो हस्तिनापुराधीशः शान्तनुः परिणेष्यति। तद्वचनं देवोदीरितं श्रुत्वा मया एषा बालिका अग्राहि; क्रमेण वार्द्धिता; सत्यवतीति

अर्हम्

श्रीविजयधर्मसूरिभ्यो नम ।

श्रीहरिभद्रसूरिकृता–

# अनेकान्तजयपताका

स्वोपज्ञटीकासहिता ।



स्वपरोपकृतये अनेकान्तजयपताकाऽऽख्यप्रकरणस्य व्याख्या प्रस्तूयते–

इह चादावेवाचार्य शिष्टसमयपरिपालनाय विघ्नविनायकोपशान्तये प्रयोजनादिप्रतिपादनार्थं चेममार्यासमूहमाह–

जयति विनिर्जितरागः सर्वज्ञस्त्रिदशनाथकृतपूजः ।
सद्भूतवस्तुवादी शिवगतिनाथो महावीरः ॥ १ ॥
य इहानिन्द्यो मार्गो विशेषतः पूर्वगुरुभिराचरितः ।
तत्र प्रवर्तितव्यं पुंसा न्यायः सतामेष ॥ २ ॥
यद्यपि न तथाभूता शक्तिः प्राक्कर्मदोषतस्तदपि ।
शक्त्यनुरूपमुपायो न यतस्तत्प्राप्तयेऽप्यन्यः ॥ ३ ॥
सत्यपि गुणवत्येव तु स चान्यभावेऽपि पण्डितैर्गदितः ।
यत्रैव यस्य शक्तिः सात्म्यं च विशेषतस्तेषाम् ॥ ४ ॥
स तमाराधयितुमल यस्मादाराध्य चैनमाप्नोति ।
शक्त्यन्तर ह्युपायान्तरसाधकमुत्तमं नियमात् ॥ ५ ॥

( युग्मम् )

तस्मान्ममापि जाता शठोक्तिभिर्मोहितान् जडान् वीक्ष्य ।
प्रकरणकरणसमीहा पूर्वनिमित्तात्कृपातश्च ॥ ६ ॥
जिनवचनश्रवणान्नः शक्तिरपि न नास्ति तत्र तस्यैव ।
सद्बोधहेतुभावात्तुच्छत्वाद्वा शठोक्तीनाम् ॥ ७ ॥

तुच्छत्व पुनरासां प्रदर्शितं पूर्वसूरिभिर्बहुधा ।
न्यक्षेण सूक्ष्मयुक्तिभिरतिगम्भीर स्वशास्त्रेषु ॥ ८ ॥
तत्तु शठोक्तिविमूढा न जडाः सञ्जानते यतस्तेन ।
सदर्श्यते समासस्थूरोक्तिशठोक्त्यपाकरणैः ॥ ९ ॥
प्रारभ्यते तत इद सम्यगनेकान्तजयपताकाख्यम् ।
प्रकरणमुक्तगुणयुत जडावबोधाय धर्मफलम् ॥ १० ॥

तत्र शिष्टानामय समयो यदुत शिष्टा क्वचिदिष्टे वस्तुनि प्रवर्त्तमाना सन्त इष्टदेवतानमस्कारपूर्वक प्रवर्त्तन्ते । अयमप्याचार्यो न हि न शिष्ट इत्यतस्तत्समयप्रतिपालनाय, तथा श्रेयासि बहुविघ्नानि भवन्तीति,

उक्त च–

"श्रेयासि बहुविघ्नानि भवन्ति महतामपि ।
अश्रेयासि प्रवृत्ताना क्वापि यान्ति विनायका" ॥१॥ इति ।

इद च प्रकरण सम्यग्ज्ञानहेतुत्वाच्छ्रेयोभूत वर्त्तते, अतो मा भूद्विघ्न इति विघ्नविनायकोपशान्तये, तथा प्रेक्षापूर्वकारिण प्रयोजनादिशून्ये न प्रवर्त्तन्ते इति प्रयोजनादिप्रतिपादनार्थ चेति ॥ अत्र कश्चिदाह– प्रकरणकारो हि प्रेक्षापूर्वकारी स किमर्थ प्रकरणादौ तदसबद्धमिष्टदेवतास्तवमाह । न च विघ्नविनायकोपशान्तिकरणेन प्रकरणनिष्पत्त्यङ्गतया तत्सबद्ध , स्तवविघ्नयोर्विरोधासिद्धे । तद्भावेऽपि क्वचिद्विघ्नभावात् तदभावेऽपि चाऽभावादिति। प्रयोजनादिप्रतिपादनमप्यनर्थकमेव, तत एव सम्यक्प्रयोजनाद्यनवगते । प्रकरणार्थपरिज्ञानपुरस्सरमेव तत्कथमन्यतो भवत्यतस्तत्प्रतिपादनेऽपि तदाशङ्काऽनिवृत्तिरेवेति । एतच्चासारम् । प्रकरणकारो यत एव प्रेक्षापूर्वकारी अत एव तन्निष्पत्त्यर्थ प्रकरणादौ तदङ्गरूपमिष्टदेवतास्तवमाह । सभवत्यत्र विघ्न प्रागुपात्ताशुभकर्मोदयलक्षण , स चेष्टदेवतास्तवकरणत प्रशस्तभावोपपत्ते उपशाम्यतीति तन्निष्पत्त्यङ्गमेव । एव च जलानलवत् स्तवविघ्नयोर्विरोध एव । न चेहाप्यातिप्रबलोऽग्नि स्वल्पेन जलेनोपशाम्यति, न चाल्प स्वयमपि नोपशाम्यति, न चाऽनयोर्न विरोध , इत्येव च

तद्भावेऽपि क्वचिद्विघ्नभावात्तदभावेऽपि चाभावादिति वचनमात्रमेतत् ॥ प्रयोजनादिप्रतिपादनमपि सार्थकमेव, तत एव सामान्येन सम्यक्प्रयोजनाद्यवगतेस्तथाव्यवहारदर्शनात् । तदवगतौ हि तद्विशेषपरिज्ञानार्थं प्रकरणे प्रवृत्ते, ततस्तज्ज्ञानभावात् । एवं च प्रकरणार्थपरिज्ञानपुरस्सरमप्येतद्विशेषेण सामान्येनान्यतो भवतीति न दोष । अतो न तत्प्रतिपादनेऽपि तदाशङ्काऽनिवृत्तिरेव, सामान्येन निवृत्तेर्विशेषाशङ्कानिवृत्तेरप्युपायाभिधानात्, सदुपायैर्विशेषसिद्धे, अन्यथा सकलव्यवहारोच्छेद इत्यल चसूर्या । दिङ्मात्रप्रदर्शनार्थत्वादारम्भस्येति । इह चाद्ययाऽऽर्यया इष्टदेवतास्तवमाह, तदन्याभिस्तु सप्रसङ्ग प्रयोजनादीत्यार्यासमूहसमुदायार्थ ॥ अधुनाऽवयवार्थ उच्यते– तत्र **जयति विनिर्जितराग** इति । अत्र जयतीति क्रिया भूतपूर्वगत्या तथोपचारत उक्ता, तत्प्रकर्षफलाप्रच्युत्यपेक्षया वा, अनेकार्थत्वाद्वा धातूना जयतीति किमुक्त भवति सर्वान् गुणैरतिशेते । विनिर्जित विविधमनेकै प्रकारै प्रतिपक्षभावनादिभिर्निराधिक्येनापुनर्जेयतया जितो विक्षिप्तो रागोऽभिष्वङ्गलक्षणो येन स विनिर्जितराग । द्वेषोपलक्षणमेतत् । अयमेव विशेष्यते– **सर्वज्ञ** इति । सर्वं सूक्ष्मव्यवहितविप्रकृष्ट वस्तु जानातीति सर्वज्ञ । अयमेव विशेष्यते– **त्रिदशनाथकृतपूज** इति । त्रिदशनाथा इन्द्रा शक्रादयस्तै कृता पूजा अशोकाद्यष्टमहाप्रातिहार्यादिलक्षणा यस्य स त्रिदशनाथकृतपूज । अयमेव विशेष्यते– **सद्भूतवस्तुवादी** इति । सद्भूत यथावस्थित वस्तु वदितु शील यस्य स सद्भूतवस्तुवादी । अयमेव विशेष्यते– **शिवगतिनाथ** इति । शिवगतेर्मोक्षगतेर्नाथ, तद्वशीकरणात्स्वामी शिवगतिनाथ । कोऽयमेवभूत इत्याह– **महावीर** इति । शूर, वीर, विक्रान्ताविति कषायादिशत्रुजयान्महाविक्रान्तो महावीर । ईर गतिप्रेरणयोरित्यस्य वा, विशेषेण ईरयति कर्म गमयति याति वेह शिवमिति वीर । इत्येष स्तव । अय च यथाभूतान्यासाधारणगुणोत्कीर्त्तनरूपत्वात् भावस्तव । तथा हि । गुणा मूलातिशयाश्चत्वार । तद्यथा–अपायापगमातिशय, ज्ञानातिशय, पूजातिशय, वागतिशयश्च । तत्र विनिर्जितराग इत्यनेनापायापगमातिशयमाह ।

उक्त च–

"वीतरागा जिना सर्वे मोहनीयनिवृत्तित ।
तद्भेदा हि यत प्रोक्ता सर्वे रागादयो मला "॥१॥ इति ।

तथा सर्वज्ञ इत्यनेन च ज्ञानातिशयम् ।

यथोक्तम् ।

"सभिन्न पासतो लोगमलोग च सव्वओ सव्वम् ।
त नत्थि ज न पासइ भूअ भव्व भविस्स च" ॥

तथा त्रिदशनाथकृतपूज इत्यनेन पूजातिशयम् ।

उक्त च–

"अशोकवृक्ष सुरपुष्पवृष्टिर्दिव्यो ध्वनिश्चामरमासन च ।
भामण्डल दुन्दुभिरातपत्र सत्प्रातिहार्याणि जिनेश्वराणाम्" ॥१॥

सद्भूतवस्तुवादीत्यनेन पुनर्वागतिशयमाह ।

यथोक्तम्–

"पोग्गलरूवो सद्दो तहाऽत्थवत्ता तहा पयईए उ ।
सच्चाइचित्तधम्मा तेणिह ववहारसिद्धित्ति" ॥

शिवगतिनाथ इति तु सिद्धत्वख्यापनमेतत् । महावीर इति च नाम भगवत ,

यथोक्तम्–

"अम्मापिउसातिए वद्धमाणे देवेहि से नाम कयं समणो भगव महावीरेत्ति" । आह-एतेषामतिशयानामित्थमुपन्यासे किं प्रयोजनम् ? इति । उच्यते । एवमेव भाव । तथाहि-नाविनिर्जितराग सर्वज्ञो भवति, न चासर्वज्ञस्य त्रिदशनाथास्तथा पूजा कुर्वन्ति, न च तदभावे भगवान् धर्ममाचष्टे इति । प्रकारान्तरेण वचनसाफल्य, नयपरिकल्पनाव्युदासश्च सर्वज्ञसिद्धिटीकातोऽवसेय इति ॥ इत्थमिष्टदेवतास्तवमभिधाय प्रयोजनाद्यभिधित्सया प्रसङ्गमाह–**य इहेत्यादि** । य कश्चित् , इह लोके, अनिन्द्योऽनिन्दनीय , मार्ग पन्थास्तप स्वाध्यायादिलक्षण ,विशेषतो विशेषेण, पूर्वगुरुभिश्चिरन्तनवृद्धै , आचरित आसेवित , तत्र मार्गे, प्रवर्त्ति-

तव्य प्रवृत्ति कार्या, पुसा पुरुषेण, न्याय्य सद्व्यवस्थारूप , सता सत्पुरुषाणामेष एवभूत इति॥ तथाविधशक्त्यभावे कथमित्याह–यद्यपीत्यादि। यद्यपि न तथाभूता पूर्वगुरुशक्तितुल्या, शक्ति सामर्थ्यरूपा। कुत इत्याह–प्राक्कर्मदोषतो जन्मान्तरकृतकर्मदोषात्, तदप्येवमपि, शक्त्यनुरूप शक्त्युचित, तत्र प्रवर्त्तितव्यम्। किमित्यत आह-उपायो हेतुर्न यतो यस्मात्, तत्प्राप्तयेऽपि तथाभूतशक्तिप्राप्त्यर्थमपि, अन्यस्तत्र तत्प्रवर्त्तनादिति। **सत्यपीत्यादि।** सत्यप्यन्यस्मिन् उपाये दानशीलादौ किमित्यत आह–गुणवत्येव तु प्रवर्त्तितव्यमाक्षेपत उपेयसाधके इत्यर्थ। स च गुणवानेवोपाय। अन्यभावेऽपि सामान्येनोपायान्तरभावेऽपि, पण्डितैरुपायज्ञै, गदित उक्त। क इत्याह–यत्रैवोपाये शीलस्वाध्यायादौ, यस्य कर्तु, शक्ति सामर्थ्यलक्षणा, सात्म्य च सुखिभावसाधनम्,

यथोक्तम्–

"पानाहारादयो यस्य विरुद्धा प्रकृतेरपि।
सुखित्वायावकल्पन्ते तत्सात्म्यमिति गद्यते" ॥१॥

विशेषतो विशेषेण, तेषामुपायाना दानशीलतप स्वाध्यायलक्षणाना मध्ये तत्र प्रवर्त्तितव्यामिति। किमित्येतदेवमित्याह–**स तमित्यादि।** स एवभूत पुमान्, तमुपाय दानादिम्, आराधयितु निष्ठा नेतु, अल पर्याप्तये, यस्माद्भवति, आराध्य चैनमुपाय, आप्नोति प्राप्नोति। किमित्याह-शक्त्यन्तर ततोऽन्यच्छोभनतरम्, सात्म्यान्तरोपलक्षणमेतत्। सात्म्यान्तर च किविशिष्टमित्याह–उपायान्तरसाधक शीलाद्युपायान्तरनिष्पादकम्, उत्तम प्रधान, नियमान्नियमेन एतदेव, सम्यगुपायस्य उपेयाव्यभिचारात्। यस्मादेव–**तस्मादित्यादि।** तस्मात्कारणात्, ममापि जातेति प्रकरणकारवचनमेतत्, प्रकरणकरणसमीहा प्रकरणकरणबुद्धिरिति। योग कुत इत्याह–शठोक्तिभिर्मोहितान् जडान् वीक्ष्य। पूर्वनिमित्तात्कृपातश्चेति। इहानेकान्तात्मके वस्तुतत्त्वे एकान्तव्याजमोहनाच्छठा एकान्तवादिन, तदुक्तिभिरेकान्तप्रतिपादिकाभि, मोहिताननेकान्तात्मकात् तत्त्वात्प्रच्यावितान्, जडान् मन्दमतीन्, वीक्ष्य दृष्ट्वा, पूर्वनिमित्तात् आनिन्द्यमार्गप्रवर्त्तनादे, प्रकरणकरण ह्यनिन्द्यो मार्ग पूर्वगुरुभिश्च कुक्काचार्यादि-

भिरस्मद्वशजैराचरित इति। हेत्वन्तरमाह्–कृपातश्च करुणातश्च। कृपायत्नमेव हि शठोक्तिभिर्मोहिता जडा, कारुणिकस्य तथास्वभावत्वादिति। न शक्त्यभावे कृपामात्रेणेष्टसिद्धिरित्याशङ्क्याह्– **जिनवचनेत्यादि**। जिनवचनस्य श्रवणात् कारणात्, नोऽस्माकमिति ग्रन्थकार आह्। शक्तिरपि न नास्ति, द्वौ प्रतिषेधौ प्रकृतमर्थं गमयत इति कृत्वाऽस्त्येव। तत्रेति प्रकरणकरणे, तस्यैव जिनवचनस्य, सद्बोधहेतुभावात्कारणात्,

उक्त च–

"जिनवचनात् सद्बोधो नियमाच्चिन्तामणे सुख यद्वत्।
विध्याप्तादनुबन्धी तद्वदिति निदर्शन ह्येतत्" ॥ १ ॥

हेत्वन्तरमाह्– तुच्छत्वादसारत्वाद्वा करणात्, शठोक्तीनामधिकृतप्रकरणनिराकार्याणामिति। अनेन विषयाल्पतया सौकर्यमाह्। **तुच्छत्व पुनरित्यादि**। तुच्छत्व पुनरसारत्व, पुनरासा शठोक्तीना, निदर्शितम्, पूर्वसूरिभि पूर्वाचार्यै सिद्धसेनदिवाकरादिभि, बहुधा अनेकधा, न्यक्षेण विस्तरेण, सूक्ष्मयुक्तिभिर्निपुणोपपत्तिभि, अतिगम्भीर निदर्शितमिति क्रियाविशेषणम्, तदुत्थानासभवपरतयेत्यर्थ। स्वशास्त्रेषु सम्मत्यादिषु। यद्येव किमनेनेत्याह्– **तत्तु शठोक्तीत्यादि**। तत्पुनस्तुच्छत्वमासा, शठोक्तिविमूढा सन्त, न जडा प्राणिन, सजानते अवगच्छन्ति, यत यस्मात्तेन कारणेन, सदर्श्यते तत्प्रतिपत्त्यानुगुण्येन सम्यग् दर्श्यते। कथमित्याह्–समासस्थूरोक्तिशठोक्त्यपाकरणै समासेन स्थूरोक्तिभि शठोक्त्यपाकरणानीति विग्रहस्तैरपि। एव प्रयोजनादिप्रसङ्गमभिधायाह्– **प्रारभ्यत इत्यादि**। प्रारभ्यते प्रक्रम्यते, ततस्तस्मात्कारणात्, इदमित्यनेनान्तस्तत्त्वनिष्पन्न बुद्धौ व्यवस्थित प्रकरणमाह्– सम्यगिति जडप्रतिपत्त्यानुगुण्येन, अनेकान्तजयपताकाख्य आख्या सज्ञा अनेकान्तजयपताकासज्ञकम्। प्रकरणमिति प्रक्रियन्ते अर्था स्वस्थानस्थापनाभिव्यक्त्याऽस्मिन्निति प्रकरणम्। कि विशिष्टमित्याह्– उक्तगुणयुत, समासस्थूरोक्तिशठोक्त्यपाकरणरूपम्। किमर्थमित्याह्– जडावबोधाय मन्दमत्यवबोधार्थम्। एतदेव विशिनष्टि–धर्मफलम्। धर्म फल प्रयोजनमस्येति धर्मफलम्।

तदत्र तावदनेकान्तजयपताकाऽभिधानेन शठोक्त्यपाकरणमनन्तर-प्रयोजनम् । कर्त्तु परम्पराप्रयोजन तु धर्म , उक्तवदनिन्द्यमार्गप्रवृत्ते , विषये कृपासाफल्यकरणाच्च । अभिधेयमप्येतदेव । तथाऽभिधीयमान कर्मरूपापन्नमिति साध्यसाधनलक्षणश्च सम्बन्ध । श्रोतॄणा त्वनन्तर-प्रयोजनं प्रकरणार्थपरिज्ञानमेव, परम्पराप्रयोजन धर्म एवेति । एव च नारब्धव्यमेवेद प्रकरणम्, प्रयोजनादिरहितत्वात् , उन्मत्तकविरुतव-दित्येवमादि निराकृतमेव ।

साम्प्रतमधिकृतप्रयोजनानुवादेनैव विवक्षितमुपक्रमते—

**इह च नानुपन्यस्तानां शठोक्तीनामपाकरणानीति ता एवो-पन्यस्यन्ते—तत्र शठाः सदसन्नित्यानित्याद्यनेकरूप वस्तु प्रति-नियतादिसवेदनानुभवेनान्यथातदनुपपत्तेः अनुभवन्तोऽपि, वस्तुस्थित्याऽनादिकर्मसामर्थ्यदोषतो भवसमुद्रनैर्गुण्यमिव न प्रति-पद्यन्ते; अपायहेत्वसदभिनिवेशाध्मातमानसाः प्रत्यवतिष्ठन्ते च; कथमेकमेव घटादिरूप वस्तु सच्चासच्च भवति । तथाहि—सत्त्वमस-त्त्वपरिहारेण व्यवस्थितम्, असत्त्वमपि सत्त्वपरिहारेण। अन्यथा तयोरविशेषः स्यात् । ततश्च तद्यदि सत्कथमसत् ?, अथासत्कथ सदिति ?; एकत्र सदसत्त्वयोर्विरोधात् ।**

**तथा चोक्तम्—**

**“यस्मात् सत्त्वमसत्त्व च विरुद्धं हि मिथो द्वयम् ।**
**वस्त्वेकं सदसद्रूप तस्मात् खलु न युज्यते” ॥ १ ॥**

**किं च । सदसद्रूप वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तु-धर्मतयाऽभ्युपगतं भवति । ततश्चात्रापि वक्तव्यम्—धर्मधर्मिणोः किं तावद्भेदः, आहोस्विदभेदः, आहोस्विद् भेदाभेद इति । तत्र यदि तावद्भेदः, ततः सदसत्त्वयोर्भिन्नत्वात् कथमेक सदसद्रूपमिति ?। अथाभेदस्ततः सदसत्त्वयोरेकत्वमेकस्माद्धर्मिणोऽभिन्नत्वात् तत्स्व रूपवत् अतोऽपि कथमेक सदसद्रूपमिति ? । धर्मिणो वाऽभेदः,**

**सदसत्त्वयोरभिन्नत्वात्, तत्त्वात्मवदित्थमपि कथमेकमुभयरूपम्?।**

इह च प्रक्रमे नानुपन्यस्तानामादौ शठोक्तीनामपाकरणानीति कृत्वा ता एवोपन्यस्यन्ते शठोक्तय । तत्र शठा प्रागुक्तलक्षणा, सदसन्नित्यानित्याद्यनेकरूपमादिशब्दात् सामान्यविशेषादिपरिग्रह । वस्तु चेतनाचेतनम् । घटज्ञानादि अनुभवन्तोऽपि न प्रतिपद्यन्त इति योग । कथमित्याह–**प्रतिनियतादिसंवेदनानुभवेन** । प्रतिनियत तदन्याभवनस्वभावम्, आदिशब्दादनुवृत्तिव्यावृत्तिस्वभावादिपरिग्रह, संवेदन विज्ञान, प्रतिनियतादि च तत्संवेदन चेति समास । तस्यानुभवस्तेन हेतुना । अन्यथा वस्तुन सदसदादिरूपता विहाय तदनुपपत्ते । प्रतिनियतादिसंवेदनानुभवानुपपत्ते कारणात् । अनुभवन्तोऽपि वस्तुस्थित्या ज्ञानज्ञेयापेक्षया उभयथा वस्तुस्थितिमाश्रित्य कुतो न प्रतिपद्यन्त इत्याह–**अनादिकर्मसामर्थ्यदोषतः** । अनादियोगादनादि, अनादि च तत्कर्म च अनादिकर्म, कर्म ज्ञानावरणीयादि, तस्य सामर्थ्यमात्मनो भ्रान्तिपरिणामाद्यापादनलक्षणम्, ततो दोष, आत्मनो भ्रान्तिपरिणामादिति विग्रहस्तत । अनेनेश्वरादिव्यवच्छेदमाह । तस्य वीतरागत्वादिना दोषहेतुत्वायोगात् । किमिव न प्रतिपद्यन्त इत्याह– **भवसमुद्रनैर्गुण्यमिव** । भवन्त्यस्मिन कर्मवशवर्त्तिन प्राणिन इति भव संसार, समुद्र इवानर्वाक्पारत्वाद्भवसमुद्र, तस्य नैर्गुण्य निर्गुणत्व जन्मानित्यादिभावेनेति भाव, तद्वद्भवसमुद्रनैर्गुण्यमिव न प्रतिपद्यन्ते । सत्प्रतिपत्त्या तद्विकारेष्वेवास्थया प्रवृत्तेरिति । न केवल यथोक्त वस्तु न प्रतिपद्यन्ते । किंच । **अपायेत्यादि** । अपायहेतुश्चासौ नरकादिनयनेन असदभिनिवेशश्चालीकनिर्बन्धरूपतयेति समास । तेनाध्मातमापूरित मानस चित्त येषा ते तथाविधा । किमित्याह– **प्रत्यवतिष्ठन्ते च** । प्रत्यवस्थान च कुर्वन्ति । कथमित्याह– **कथमिति** क्षेपे । एकमेव । तथोपलम्भात् । घटादिरूप वस्तु आदिशब्दाद्विज्ञानादिपरिग्रह । सच्चासच्च भवति । द्विरूप नैवेत्यभिप्राय । एतदेव भावयति– **तथाहीत्यादिना** । तथाहीत्युप-

ष्वेव वर्षदनेकशस्त्रनिकरेष्वेकोऽपि कश्चिद्बले ।
सौरेऽभून्न भट पटु स्फुटकणैर्यो जर्जरश्चेषुभि-
स्तत्कि ध्वान्तमिहाऽस्ति यद्रविकरैर्नो भिद्यतेऽत्युज्ज्वलै ?॥५७॥

भग्न सौरबल विमुच्य सकल वित्त गजाश्वादिक
नष्ट दिक्षु विदिक्षु नि स्वतुषवत्फूत्कारसाध्य गतम् ।
देश तस्य विभुत्वमश्वनिकर स्वर्ण मणीन् हस्तिन
कोश वा जगृहे हमाउसुभटश्रेणि स्वनाथाज्ञया ॥ ५८ ॥

नष्टे सूरनृपे तदीयसुभटान् कृत्वा स्वसेवापरान्
निर्दण्डान् सुखिनश्च देश्यमनुजान्निर्भीतिराज्य दधौ ।
दिल्लीकाबिलमार्गसश्चरदिभाश्वोक्षोष्ट्रमानुष्यक
मुक्तारत्नसुवर्णराशिरचितोत्तुङ्गाद्रिकोट्यालयम् ॥ ५९ ॥

किं चाऽस्मिन् समये विशिष्टमनुजे श्रीगूर्जरे मण्डले
भूभुग् बादरसञ्ज्ञित करिबल षड्लक्षसैन्योद्धुर ।
सामुद्रानपि भूपतीन्निजपदाम्भोजन्मसेवोद्यतान्
कुर्वन्मालवदक्षिणोत्तमपतिश्रेण्यर्चितश्चाभवत् ॥ ६० ॥

अन्येद्यु स च मेदपाटधनिक श्रीरत्नसिह रणे
जित्वा तन्नगर बभञ्ज हठत श्रीचित्रकूटाभिधम् ।
तत्र क्षत्रियपुत्रिकाततिरभूद्वह्निप्रवेशाद्गत-
प्राणाश्चापरमानवा भटचयव्यापारिताज्ञात्तथा ॥ ६१ ॥

तद्दु खादसमाधिवासितहृदा श्रीरत्नसिहक्ष्मा-
पालेनेति हमाउभूमिपतये विज्ञप्तिराविष्कृता ।
साहाय्य कुरु मे तथा नरपते ! दुष्ट यथाऽन्यायिन
बध्वा बादरनामक करतले देहि क्षमस्त्व यत ॥ ६२ ॥

तस्याभ्यर्थनयेति काबिलपति सैन्यावृतो बादर-
क्षोणीशग्रहणाय बद्धकवच सद्यश्चचालोद्धत ।
दिल्लीतस्तृणवच्च गूर्जरभटाश्चित्ते निजे कल्पयन्
दोर्वीर्य निजमग्निवद्धरिहरब्रह्मादिवीर्याधिकम् ॥ ६३ ॥

यावच्छ्रीमति चित्रकूटनिकटे दिल्लीपतिश्चागत-

स्तावद्बादरभूपतिर्निजबलाविष्टः प्रनष्टस्तदा ।
गत्वा मालवमण्डलेऽतिगहने कोट्टं दृढं मण्डपा-
भिख्यं सज्जयति स्म सज्जविभवस्तत् स्पष्टयुद्धासहः ॥ ६४ ॥

तं नष्टं स निशम्य मालवपथे व्यक्ताभिमानोऽचल-
दूरे मालवको यमस्य किमयं दृष्टान्त इत्येष यत् ।
रुद्ध्वा मण्डपकोट्टमुद्भटभटैर्जम्ब्वाख्यमब्धिर्यथा
द्वीपं दुर्द्धरवीचिभिः स्थितिमसौ दिल्लीपतिर्निर्ममे ॥ ६५ ॥

भग्नः स्तोकदिनैर्गजैर्भटघटानुन्नैः स वप्रो दृढो-
ऽपीवाद्रिः कुलिशानलैर्हरिकराध्यास्फालनोत्थैस्ततः ।
नष्टस्तुच्छभटः प्रकम्पहृदयः स्पष्टं गतो गौर्जरे
पावाद्रौ विविधर्द्धिभूषितगृहे स्वर्गावतारेऽधिकम् ॥ ६६ ॥

लात्वा मण्डपपर्वतं धनरथाश्वेभैश्च मर्त्यैर्भृतं
कोटीशैः स्वविलासधिक्कृतनराधीशैरुदारात्मभिः ।
आज्ञां मालवमण्डले निजभटैर्सार्द्धं समारोपय-
द्वाट्यां कल्पलतामिवोत्तमफलामारामिकः सिद्धिवित् ॥ ६७ ॥

पावाद्रौ विहितस्थितिं निजचरैर्मत्वा पुनर्बादरं
दिल्लीशः स्वभटावृतोऽत्र गतवान् सद्यः प्रयाणैः सुधीः ।
कर्तुं यद्विबुधैः समस्तपुरुषाध्यक्षं मुखे भाषितं
तत्कार्यं न समाप्तिमेति सुधिया यावन्न तावत् स्थितिः ॥ ६८ ॥

श्रुत्वा काबिलनायकागममसौ नष्टस्ततो बादरो-
यो यस्माच्चकितो हि तस्य पुरतस्तस्यैवमेव गतिः ।
श्रीमत्स्तम्भनपार्श्वनाथविशदे श्रीस्तम्भतीर्थे गतः
सद्धर्मादिकवर्गसाधकजनाकीर्णे धनाध्यासिते ॥ ६९ ॥

ज्ञात्वा तत्र गतं चरैश्च चलितः सद्यो हमाउस्ततः
सन्ध्यायां स तथा यथागमदिह प्रातर्भटावेष्टितः ।
अब्धेर्भानुरिवाशुपूरकलितः खेऽन्यायिघूकक्षयी
तेजस्वी नयतः करोति हृदये शङ्कां व्रजन् सर्वतः ॥ ७० ॥

रत्नस्वर्णभृतान्यनेकशकटान्यब्धेस्तटे बादर-

स्त्यक्त्वा तुन्छभटावृतोऽम्बुधितरद्वीपेऽविशङ्केकवत् ।
तीर्थान्तस्तु हमाउनामनृपतिर्भूभुग् गृहान्तर्यथा
हस्ती गन्धवर स्ववैरिमदहृत्प्राप्तप्रतिष्ठोऽभित ॥ ७१ ॥
मत्वा नष्टसमस्तसपदमसौ जीवन्मृत बादर
तद्बन्धाग्रहमामुमोच हृदये दिल्लीपति शक्तिमान् ।
यद्वायुर्न तृणानि नीचनमनान्युन्मूलयत्युद्धत
सद्यो वृक्षचय समुच्छ्रिततर विस्तीर्णभूच्छायकम् ॥ ७२ ॥
तत्राज्ञा स्वभटै सम कृतिवर श्रीगुर्जरे मण्डले
दिल्लीश स समग्रभूमिवलये कीर्त्ति यथाऽरोपयत् ।
खड्ग क्षालयति स्म नीरधिजले तीर्थे यथा निर्मल
प्राणी पाप्म निज सुपात्रततये सद्वस्तुदानोद्यत ॥ ७३ ॥
कृत्वा गुर्जरमालवादिकमहादेशेषु सौस्थ्य पुन–
र्दिल्ल्या मुद्गलनायक शतगुणश्रीवृद्धिमानागत ।
एकच्छत्रमकण्टक सुखभर राज्य बभारोत्तर
पुण्ये जाग्रति को न वाञ्छिततति प्राप्नोति यस्माज्जन ॥ ७४ ॥
अन्येद्यु स सुपर्वपर्वतसमप्रोच्चालयोर्द्ध्व गत.
पश्यन् स्व नगर विशालनयन प्रोत्फुल्लचित्ताम्बुज ।
मत्तुल्योऽयमभूदितीव विधिना स्पार्द्धिष्णुना पातित
सप्राप्तभ्रमिराशु कालसदन प्राप्त पृथिव्या पतन् ॥ ७५ ॥
धिग् धिग् धिग् विधिमेनमङ्गिनिवह कृत्वा जगत्स्वामिन
गर्त्ताधूलिशय करोति सहसा य सज्जनो दुर्जन ।
एव सर्वजना विलापतुमुल चक्रुस्तदा तत्पुरे
सूर्येऽस्तव्रजतीह को न विवश शोके न चान्धो भवेत् ॥ ७६ ॥
खद्योता इव तत्र सूरसुभटा अस्तङ्गते भास्करे
तस्मिन् कालगृह गते गतभयास्तत्पुत्रमग्रेसरम् ।
कृत्वा दुर्वहशस्त्रपाणिपटवो निर्नायकान् मुद्गला–
नागत्य स्म वितर्जयन्ति हि जयो निर्नायकाना कुत ॥ ७७ ॥
ते सभूय तत स्वकाबिलपुरीमुद्दिश्य तत्तर्जिता-

नेशुश्चारकसास्थितो नरभर प्राप्नोति यद्वारकम् ।
यावत्तावदकब्बरो लघुवया अप्युग्रतेज स्फुर–
न्नश्रौषीत् स्वपितुर्मृति निजभटत्रास च दस्यूदयम् ॥ ७८ ॥

शोक स क्षणमात्रमात्मकुलजै कृत्वा सम काविला–
पुर्या पञ्चशतीभटै परिवृत सद्य समाजग्मिवान् ।
स्व बन्धु च निवेश्य तत्र नगरे शिक्षाविधानोद्यत
तेजो यत् सहते न वैरिकुलज वीराधिवीर परम् ॥ ७९ ॥

श्रीमल्लाहुरनाम्न्यऽपूर्वनगरे सैन्याय तत्त्रासतो–
ऽत्रायाताय नरेश्वरोऽमिलदिवाऽकाण्डेऽभिमन्युक्षये ।
पार्थो धिक्कृतिकारक कथमहो नश्यद्भिरत्रागत
श्रीमद्भिर्न मृत निहत्य सकलान् सौरान् भटानित्यवक् ॥ ८० ॥

ते ऽप्यूचु सुभटास्त्वदक्षियुगलस्याग्रे वय तान् ध्रुव
हन्तु सज्जकरा रवेरिव तमास्येषोऽरुणो नान्यथा ।
एव तान् वदतो वच कुशलतावेदी भृश सत्कृता–
श्चक्रेऽकब्बरभूपतिर्निजबलाऽवज्ञातदैत्याधिप ॥ ८१ ॥

तत्र द्वादशवार्षिकोऽपि नृपतिस्तत्सैन्यवीरावृत
सौरे सैन्यभरे समापतदिवागस्ति सरिन्नायके ।
चित्र तद्भटशोषमेष विदधे स्वाह्वाक्षरश्रावणात्
स्व सैन्यामृतवारिधि जयरसापूर्ण पुनर्निर्ममे ॥ ८२ ॥

भग्न सौरबल गत यमगृहे किञ्चिद्गिरेर्गह्वरे
किञ्चिद्वारिनिधौ वनेऽतिगहने किञ्चिन्न किञ्चित्करम् ।
जात वीक्ष्य पुनर्निज नरपतिर्लब्धर्द्धिहस्त्यश्वक
प्रत्येक स्वभटेषु चक्रितुलना मेने जयावाप्तित ॥ ८३ ॥

लब्धोऽनेन जयो नृपेण विशदो यस्मिन् महीमण्डले
तस्मिन् यावनभाषयाऽक्षरवर फत्तेपुर वासितम् ।
कृष्णेनेव विशालसुन्दरगृह श्रीद्वारिकानामक
भूपाना स्थितिरेषकैव हि जयस्थाने पुरस्थापनम् ॥ ८४ ॥

राज्य तत्र करोति लब्धविजय श्रीपातिसाकब्बर

श्रीफत्तेपुरनामके पुरवरे व्यापारिवर्गाश्रिते ।
चातुर्वर्ण्यगृहैर्जिनेशसदनैः षड्दर्शनोद्यन्मठैः
शोफीसद्दरवेशमुद्गलपदैश्चार्दैर्वरैर्भ्राजिते ॥ ८५ ॥

अश्वा लक्षचतुष्टयं गजवरा द्वित्वे सहस्रा दश
क्रीडन्तीप्सितभोज्यलाभपटवो गावस्तु सङ्ख्यातिगाः ।
उष्ट्रा वा महिषीगणा नृपगृहद्वारेऽधिका पत्तयो
वीरा यत्र विलासलालसवपुः शोभा नृपाऽऽत्तैर्द्धनैः ॥ ८६ ॥

द्वात्रिंशन्मणभारलोहकमयीं हस्तेन यः शृङ्खला-
मुत्पाट्याभ्रपथेऽल्पकन्दुकमिव प्रोच्छालयत्यञ्जसा ।
एष श्रीमदकब्बरः क्षितितले केषां न हिन्द्वासुर-
क्ष्मापानां हृदये चमत्कृतिकरोऽस्त्यादर्शयन् दोर्बलम् ॥ ८७ ॥

केचिद् हिन्दुनृपा बलश्रवणतस्तस्य स्वपुत्रीगणं
गाढाभ्यर्थनया ददत्यविकला राज्यं निजं रक्षितुम् ।
केचित्प्राभृतमिन्दुकान्तरचनं मुक्त्वा पुरः पादयोः
पेतुः केचिदिवानुगाः परमिमे सर्वेऽपि तत्सेविनः ॥ ८८ ॥

हिन्दुम्लेच्छसुताः स्वरूपविजितश्रीशादिदेवाङ्गना
श्रूयन्तेऽस्य सहस्रमानगणिताः कान्ता लसद्भाग्यतः ।
तासां भोगफलं तु पुण्यललितं पुत्रत्रयं श्रूयते
जीवाः स्तोकतरा भवे सुततया ये स्युः क्षितिस्वामिनः ॥८९॥

अन्येद्युः स समस्तहिन्दुकलशं श्रीमेदपाटाधिपं
श्रीराणोदयसिंहमुद्धतबलं म्लेच्छाय पुत्रीं निजाम् ।
दत्ताऽस्मत्कुलपूर्वजैर्न च मया देयेति गर्वं गिरा
व्याख्यान्तं श्रुतवानकब्बरनृपः क्षोणीशशिक्षापरः ॥९०॥

तस्मै भूपतये विचारचतुरं प्रैषीन्निजं मन्त्रिणं
भूपः श्रीमदकब्बरः क्षितिपतिं राणं विशिष्टं विदन् ।
गत्वा मन्त्र्यवदत्तदीयसदसि स्पष्टं गिरा सारया
सन्तो यत्र वचः स्थितिं क्वचिदपि प्रोल्लङ्घयन्त्यग्रतः ॥९१॥

देहि त्वं स्वसुतामकब्बरमहीभर्त्रे परैर्हिन्दुभि-

दृष्ट्वा वीरकरान् समस्तमनुजांस्योद्भूतदुर्वाक्चय
श्रुत्वा चाख्यदकब्बरो नरपतिर्गृह्णामि चेदेतकम् ।
तत्सर्वान् पुरुषान्निहान्मि वनिताबन्ध भटै कारया-
मीति स्पष्टगिरा समस्तसुभटानुत्साहयन् सत्त्वत ॥ १०६ ॥

क्रुद्धोऽकब्बरभूपतिर्गिरितले गुप्त तथा खानयन्
मात तत्र यथा चतुर्दशशतप्रायैर्मणैरौषधम् ।
भृत्पात्र शिखिबिन्दुसङ्ग विलसत्तेजोऽतिशक्त्या दृष-
द्वर्गास्फालनतो मनुष्यनिकरव्यापत्तये सज्जितम् ॥१०७॥

तद्भाग्याद् जयमल्लनामनृपते श्रीचित्रकूटाचल-
व्याबाधा न चकार सम्मुखमद सैन्ये पतन्मौद्गले ।
मातङ्गाश्व नरान् सहस्रगणितान् हन्ति स्म जात तत
सत्य यच्च परस्य चिन्त्यत इहाभ्येत्येव तत् सम्मुखम् ॥१०८॥

तज्ज्ञात्वा जयमल्लनामनृपतेर्वीरा जहर्षुस्तदा
गायन्ति स्म च राणगीतनिकर नित्योत्सवानन्दिन ।
मत्वाऽकब्बरभूपतिर्निजबलध्वस मनोदु खवान्
यावत्तद् ग्रहणग्रह श्लथतर कृत्वा विखिन्नोऽभवत् ॥१०९॥

तावन्नागपुरीयगच्छशिथिलोपाध्यायलिङ्गी खर
शास्त्राजीवनकृच्चकार विशद कोट्टस्य चक्र हृदा ।
आख्यत् सप्तदिनैश्च भङ्गमतुलव्यायाससाध्य गिरे-
र्भूपाग्रे जयमल्लभूपमरण रोमीकरायोधनात् ॥११०॥

तच्छ्रुत्वा स्वबल गिरिग्रहपर सज्जास्त्रमश्वस्थित
भूप प्रेरितवान् करासिविभव पृष्ठे स्थितो भापयन् ।
पश्चादापततो भटान्निजपदोपास्त्युद्यत रोमिक
चैक श्रीजयमल्लभूपतिवधे स्वर्णार्पणेनादिशत् ॥१११॥

दुष्टात्मा किल रोमिकोऽपि सहसोत्प्लुत्याद्रिमूर्द्धस्थित
स्वास्त्र गोलकमग्निपुञ्जकलित चिक्षेप तत्सम्मुखम् ।
सोऽपि श्रीजयमल्लभूपतिशिरोमध्ये विशन्निर्गत
शास्त्र जाल्महृदीव धार्मिकहृदीवासभ्यवाक्यान्वय ॥११२॥

तावच्छ्रीजयमल्लभूपतिरसौ भूमौ पतन्नित्यवक्
भो वीरा ! अथ यास्यतीव कुसुतो हस्तादय पर्वत ।
तस्मान्मन्मुखदर्शिनो घनजनानत्राधिरूढान्निज
स्थान साधु नयन्तु मार्गकरणेनात्मीयदोर्वीर्यत ॥११३॥

जल्पन् श्रीजयमल्लभूपतिरिति प्राप्तस्तदा पञ्चता
लोकास्तत्र घना स्थिता निजनिजश्रीदेवसेवापरा ।
वीरा श्रीमति चित्रकूटनगरद्वारेऽसिकुन्तग्रहा-
निघ्नन्तोऽभिपतद्भटावलिशिरासीवामसृद्गोलकान् ॥११४॥

भूपाकब्बरनुन्नवीरनिचया सद्योऽधिरूढा गिरौ
हत्वा श्रीजयमल्लभूपतिभटान्निर्नायका यत् कुत ।
जीवन्तो जयिना भवन्ति च तथा वीराधिवीराग्रत
प्राय स्वामिदशानुसारिबलिन स्यु सेवका सर्वदा ॥११५॥

वीरैस्तत्र वृतोऽप्यकब्बरनृपोऽध्यारूढ उच्चैरिव
व्योम्न्यर्क प्रबलप्रतापकलित कोपोद्धुरस्तन्नृषु ।
आदेश स वधस्य मुद्गललते शीघ्र ददौ यन्नर
कोपात् किं न करोति वक्ति च हृदन्धीकारकत्वस्पृश ?॥११६॥

भूपाकब्बरवाक्यमाप्य सुभटा दुष्टास्तथा चक्रिरे
तत्राऽभूद्भुवि शोणितोदकनदीपूर यथा सर्वत ।
तत्र स्थातुमशक्त एष नृपतिर्नीचैस्ततोऽप्युत्तरन्
मार्गस्था च विदारितोदरतला निष्पातिताऽङ्गोद्भवाम् ॥११७॥

दृष्ट्वा सुन्दरसुन्दरी नरपति कारुण्यपूर्णस्तदा
हा हा किं मयकाऽत्र कारितमिद चण्डालकर्माधिकम् ? ।
कुर्वश्चानुशय शिर करयुगेणास्फालयन्नित्यवक्
य पाप किल चित्रकूटरचन गृह्णाति तस्याप्यहम् ॥११८॥

एन देशपुरान्वित गिरिवर स्वर्णादिक चार्पया-
मीत्याकर्ण्य नराऽधमोऽथ जगृहे कश्चित्त्वघ मुद्गल ।
तद्दत्त च गिरीश्वर पुरवरग्रामान्युपेत तदा
लोभात् किं न नर प्रपद्यत इह स्वाम्युक्तवाक्सञ्चयम् ?॥११९॥

॥ त्रिभि कुलकम् ॥

भूपोऽप्येष समाधिमान्निजभटैरावेष्टितो राणके
देशे शासनमुत्तम निजपदेनावर्त्तयत् सर्वत ।
जीवन्त किल पापभीरुकतया राण पुनर्मुक्तवान्
भव्य पापकृतेर्बिभेति हृदये कृत्वैकवार पुन ॥१२०॥

एव मालवमेदपाटधनिकान् श्रीगुर्जरस्वामिनो
जित्वाऽकब्बरभूपतिर्निजपुरे सौख्यात्समापेतिवान् ।
राज्य पालयति प्रपञ्चनिपुण षाड्गुण्यसच्छक्तिमान्
सम्यग्दर्शनपण्डितादरकरस्तच्छास्त्रशुश्रूषया ॥१२१॥

अन्येद्यु स समस्तदर्शनयतीनाकार्य धर्मस्य स–
त्तत्त्व प्रच्छति शुद्धबुद्धिविभव स्मार्थी शिवस्यादरात् ।
तेऽप्याहुर्निजदर्शनोदितपथ वाग्विभ्रमैरभ्रमै–
र्नैकस्यापि बभूव तस्य रुचये मार्गो विचाराऽसह ॥१२२॥

एव तस्य शिवार्थिन प्रातीदिन धर्म बुभुत्सो शुचि
शुद्धाध्वेकगवेषकस्य नगरे काचित्परा श्राविका ।
षण्मासप्रतिमोपवासरचना कुर्वत्यसख्योदया
यान्त्यर्हत्प्रतिमाप्रणामाविधये दृग्मार्गमभ्यागता ॥१२३॥

इभ्यैर्या नरवाह्यवाहनचतुष्कोणाङ्गणे स्थापिता
वाद्याडम्बरमण्डिता घनजनव्यूहान्विता निर्मला ।
गङ्गेवाऽखिलपण्डितस्तुतिपदान्यासादयन्ती सती
शुद्धानन्ततप प्रभावजनित तेजो वहन्त्युत्तरम् ॥ १२४ ॥

केय याति किमर्थमत्र नगरे कृत्वा महाडम्बर–
मित्थ प्रश्नपर नरेश्वरवर प्रत्याह रामात्मज ।
मन्त्री स्थानकसिह आर्हतपतिर्बद्धाञ्जलिर्हे प्रभो !
षण्मासीतप एतयादृतमिहार्हच्छास्त्रवित्कारितम् ॥ १२५ ॥

नान्न नापि फल न दुग्धमथवा तक्र न दध्यादिक
पक्वान्न न लवङ्गपूगशकल नास्वादयत्यह्नि वा ।
रात्रौ यावदिय विशिष्टतपस षण्मासकालस्थिते

पूर्त्ति चोष्णजल दिवैव पिबति श्रीवीतरागाज्ञया ॥१२६॥
इत्याकर्ण्य नरेश्वरो निजचरैश्छन्न हि तस्या स्थिति
रात्रौ वाह्नि गवेषयत्यनुदिन तद्वाक्परीक्षाकृते ।
तस्यास्ते विमल तपोविधिमल निश्चित्य सत्यवदा
सत्य प्राहुरिहाऽस्ति नैव कपट न्याये यथा न्वत्कृते ॥१२७॥

श्रुत्वा वाचमिमा चरव्रजमुखाच्चित्ते चमत्कारवा-
स्तामाकार्य वरादरेण नृपति पप्रच्छ भक्त्येत्यसौ ।
हे मात '‍तप ईदृश खरतर कस्याऽनुभावात्त्वया
शुद्ध साधु विधीयते वद मन शङ्का विहायोत्तमे'॥१२८॥

सा प्राहाऽत्र तपस्कृतौ नरपते ! श्रीदेवगुर्वोर्ममा-
ऽतुच्छ सूर्यकरावदातचरित सम्यक्प्रभावोऽस्त्यहो ।
को देवस्तव को गुरुश्च जगतीत्युक्ते नृपेणाऽवदत्
सा श्राद्धी जिनशास्त्रतत्त्वविशदा चेत्थ स्वरूप तयो ॥१२९॥

नो रागाङ्गारसङ्गो न मदनमदिरा न द्विषद्द्वेषदोषो
नो सम्मोहप्ररोहो न विकटकपटाटोपसपच्च यस्य ।
शान्त कान्तस्त्रिलोकीकलनकुशलवित् कोऽपि कोपादिमुक्त-
स्त्यक्त ससारपाशै स भवति भविना देवता दैवयोगात्॥१३०॥

ईदृग् देव इहाऽस्ति बिम्बरचनाध्येयोऽधुना सिद्धिद-
श्चित्ते मे सुगुरुस्तु सयमधन स्वान्यात्मतुल्याशय ।
मित्रे शत्रुचये समोऽश्मनि मणौ स्त्रैणे तृणोघ पुन-
र्नाम्ना साप्रतमस्ति हीरविजयाचार्य सुसाधूत्तम ॥१३१॥

श्राद्धीवाक्यमिद निशम्य नृपतिस्ता पूजयित्वाऽधिक
स्वस्थाने विससर्ज मन्त्रिणमथोचे स्थानसिहाभिधम् ।
कस्मिन्नऽस्ति पुरे स हीरविजयाचार्य सुसाधूत्तम
सप्रत्यऽप्यधिको यदीयमहिमाऽऽचारश्च पूर्व श्रुत ॥१३२॥

मन्त्र्याख्यन् नृप ! नास्ति तस्य वसतिर्ह्येकत्र देशे पुरे
सर्वत्र द्विसहस्रसयमिगुरो पादश्रमेणाटनम् ।
वर्षामासचतुष्टयास्थितिमसावेकत्र कुर्वन् क्रमात्

सम्प्रत्युत्तमधार्मिकोऽस्ति नगरे गन्धारके बन्दिरे ॥१३३॥
श्रुत्वेत्याह महीपतिर्मम महाभृत्यान् सलेखानित
पार्श्वे तस्य गुरोरिहोत्तमगुरोराकारणायोद्यतान् ।
शीघ्रं प्रेषय त च शिष्यकलित ह्यत्रानयेत्युत्तमा-
माज्ञा प्राप्य महीपते स सचिव सर्वं तथा निर्ममे ॥१३४॥
गन्धाराख्यपुरे तदैव नृपतेर्दूता सलेखा शुभा—
आयाता इति रामजीकमनजीकाद्यैर्महाश्रावकै ।
श्रुत्वा हर्षभरात् सुवर्णमणिभिर्वर्द्धापिता श्रीगुरो-
र्भूपाज्ञा निजहस्तलेखलिखिता सन्दर्शयन्त्युद्धरा ॥१३५॥
आज्ञा भूमिपतेर्विचार्य यतिराट् शिष्यान्वितस्तत्पुरा-
द्वर्षाम् सचतुष्टयादनु शुभे सद्यश्चचाल क्षणे ।
रात्रौ ध्यानधरस्य तस्य सुगुरो सुप्तस्य पेतु पुरं
कस्मिश्चिज्जिनशासनामरकरान्मुक्ता शिरस्युज्ज्वला ॥१३६॥
ईर्याशुद्धिधरा विहारपटव श्रीसूरयोऽभ्यागता
दीप्रेऽहम्मदवादनामनगरे भूभूषणेऽर्हद्गृहै ।
श्राद्धास्तत्र निवासिनो घनतर चक्रु प्रवेशोत्सव
कान्तारेऽपि सता महोत्सवभवश्चत्तन्न कि सत्पुरे ? ॥१३७॥
खानस्तत्र च साहिबाख्यनृपति श्रीपातिसाऽकब्बरा—
देशस्थ स्वसभाङ्गणे गुरुवरानाकार्य चक्रेऽर्चनाम् ।
अग्रे ढोकितवाश्च रत्नकनकस्थाल विशाल न त-
न्निर्ग्रन्थावलिनायकैर्गुरुवरै स्पृष्ट करेणाप्यहो ॥१३८॥
एते नि स्पृहपुङ्गवा यतिवरा श्रीमत्खुदारूपिणो
दृश्यन्तेऽत्र न चेदृशा क्षितितले दृष्टा विशिष्टा कचित् ।
एव तेन तदीयमुद्गलभटै सम्यक्स्तव प्रापिता—
बाद्याडम्बरपूर्वक निजगृहात् साध्वाश्रमे प्रेषिता ॥१३९॥
तस्माच्छ्रीगुरव पुराच्छुभदिने चेलुर्यतिभ्राजिता
स्युर्हंसा इव साधव स्वसमये नैव प्रमत्ता यत ।
आयाता क्रमतो विहारचारिण श्रीपत्तनाख्ये पुरे

तत्रत्यैर्व्यवहारिभिर्वरमुदाङ्गेष्वर्चितः स्वर्णकै ॥ १४० ॥
आढ्या तत्र कयाचिदत्यधिकया भावेन वित्तेन च
कर्त्तु श्रीजिनशासनोदयमिति श्रीमद्गुरोरागमात् ।
षड्लक्षै रचना त्रिकोट्टघटनामर्हद्गृहस्यादरा-
द्विम्बन्यासमकारयच्च विविधानेकाङ्गिबोधिप्रदम् ॥१४१॥
विजयसेनमहोदयसूरिभिर्विमलवाचकधर्मकसागरै ।
घनतरैरपरैश्च कवीश्वरै परिवृता गुरवोऽत्र समागता ॥१४२॥
तत्राभूद्व्यवहारिवर्गविहितस्तादृक् तदाऽत्युत्सवो
यादृग् वीरजिने समस्तगणभृत्साध्वन्वितेऽप्यागते ।
देवेन्द्रैर्विहितश्चतुर्थसमये साक्षात्त्रिकोट्टाश्रये
सत्सु स्यान्न हि किं सतामनुकृति सर्वत्र सञ्चारिषु ? ॥१४३॥
एव सप्त दिनानि हीरविजयाचार्या पुरेऽत्र स्थिता-
नित्य तत्प्रतिमाप्रणामसमये तादृग्मह पूर्वकम् ।
चेलुस्तत्र च धर्मसागरमहोपाध्यायमुख्यान् यतीन्
सस्थाप्याऽनुगमोद्यतान् हितकरी दत्त्वा सुशिक्षा तत ॥१४४॥
विजयसेनमहोदयसूरयो हठधरा निजसद्गुरुसेवने ।
अनुचरा इव सद्गुरुभि सम पुरवरे खलु सिद्धपुरे गता ॥१४५॥
तास्तत्रैव विशिष्टवाक्यरचना शिक्षा स्वगच्छार्पणा-
दत्त्वाऽऽस्थाप्य च तेऽथ शिष्यकलिता श्रीशान्तिचन्द्रादिकान् ।
लात्वा सार्द्धमनल्पशास्त्रनिपुणाश्चेलुस्तत पण्डितान्
विज्ञा एव हि राजससदि सदा स्युर्भूषण नापरे ॥ १४६ ॥
ते श्रीसूरिवरा सुहीरविजयाचार्या विहारक्रमाद्
ग्रामे कौलिकराजके सुरतरौ प्राप्ता सुशिष्यान्विता ।
तत्राऽनेकमहोत्सव वनिजनै सार्द्ध स राजा व्यधा-
च्छ्रीगुर्वागममोदतो गुरुगुणश्रुत्यैव सावर्जन ॥१४७॥
राजा तत्र निजे गृहे निजवशावन्दापनार्थं गुरू-
नाकार्य स्वगृहाङ्गणे धृतपदान्मुक्ताफलैर्देववत् ।
वर्द्धाप्योत्तमवस्त्रचक्रममुचत्तेषा पुरो भावत

सगृह्णन्ति न तस्य खण्डमपि ते स्म त्यक्तलोभास्तदा ॥१४८॥
तेषा नि स्पृहचेतसा नरवर शुद्धोपदेश तदा
श्रुत्वा कौलिकनायक पशुवधस्तैन्यादिदुष्कर्मणाम् ।
प्रत्याख्यानमनन्तसौख्यकरण चक्रे स्वभृत्यै सम
सन्तो दुष्कृतवर्जका निजगिरा स्युर्दुष्कृतध्यायिनाम् ॥१४९॥
भूप कौलिकचक्रमादृतमहाधर्म विधायोद्यता-
श्चेलुस्तन्नगरात् सुहीरविजयाचार्या विहारक्रमात् ।
सीरोह्या जिनचैत्यसन्ततिजितस्वर्नाथपुर्या गता
पुर्या भावुकलोकनेत्रयुगलानन्दप्रदास्याम्बुजा ॥१५०॥
तत्र श्रीसुलताननामनृपति श्रुत्वा तदीयागम
पुर्या घोषणमित्यकारयदहो हट्टे गृहे मण्डनम् ।
स्वे स्वे यो न करिष्यति प्रणयत श्रीमद्गुरोरागमे
दण्ड्यो मे भविता स सर्वविभवध्वसस्तु तस्यागत ॥१५१॥
श्रुत्वैव सुगुरुप्रवेशमहसे चक्रुर्जना मण्डन
धाम्ना हट्टततेरिवात्ममनसा द्रव्यव्ययाद्वर्णकै ।
मातङ्गाश्च हयान् विशिष्टरचनान् कृत्वा नृपोऽभ्यागत
पौरैर्निर्मलभूषणै सममसौ तेषा पपात क्रमे ॥ १५२ ॥
पादाभ्या नृपतिर्गुरो पुर इव प्रेष्यश्चलन् भक्तित
पुर्या कारयति स्म दत्तविभवोऽर्थिभ्य प्रवेश तदा ।
श्राद्धाना हृदयेऽभवद्धरिकृतश्रीनेमिनाथागम-
प्रोद्दामोत्सवराजिराजिततरश्रीद्वारिकापू स्मृति ॥ १५३ ॥
तत्रार्हत्सदनेषु बिम्बनिवह रूप्याश्मचामीकरा-
रब्ध सूरिवरा प्रणेमुरनिश राजेभ्यवर्गान्विता ।
व्याख्यान्ति स्म च जैनवाङ्मयरस राजादिसभ्याग्रतो
राजस्त्रीभिरनेकयुक्तिरचनोद्यन्मौक्तिकस्वस्तिका ॥ १५४ ॥
स्थित्वा तत्र कियद्दिनानि सुकृतप्राग्भारसवर्द्धन
कुर्वन्त पुरतस्ततोऽथ चलिता सूरीश्वराश्चर्यया ।
ग्रामाऽनेकपुराणि पावितमहीपीठानि नित्याक्रमा-

दुर्लङ्घयाशु गता' सुसाधुकलिता श्रीमेडताख्ये पुरे ॥१५५॥

श्रुत्वा तत्र भटालिसेवितपद. श्रीसादिमो मुद्गल-
श्चक्रे सङ्घपुरस्कृतो हयगजैर्वीरै सहाभ्यागत ।
सूरीणा नगरप्रवेशमहसे सर्वार्थिसाल्लक्षशो-
वित्तानि स्वभुजार्जितानि रचयन् श्रीजैनमार्गोदयम् ॥१५६॥

तेनेत्थ विविधोत्सवेन गुरवस्तत्र प्रवेश्यार्चिता-
स्तेषा शासनमात्ममूर्द्धनि धृत जीवाऽवनाद्य निजे ।
तत्र श्रीगुरुजातमत्सरभरा केचित् पुनर्लिङ्गिन-
स्तद्योग्योत्कटशिक्षया निजधिया काम निषिद्धास्तदा ॥१५७॥

तत्रार्हत्प्रतिमाप्रणामविधये श्रीसूरय सोद्यमा
सप्तक्षेत्रधनव्ययोत्थितफल व्याख्यानयन्तोऽङ्गिनाम् ।
सम्यक्त्व व्रतधारिता यतिपथ वा भद्रकान्तस्थितिम्
केषाञ्चित् स्म ददत्यनन्तगुणिन स्युर्यत्परार्थाग्रहा ॥१५८॥

स्थित्वा तत्र दिनद्वय गुरुवरा शीघ्र ततश्चारिणो
मार्गाऽतिक्रमणेन सयमियुता सन्मार्गनिर्वाहका ।
साङ्गानेरपुर गता घनजनानन्दप्रदा दुर्मति-
च्छेदैर्विश्रुतनामधेयमहिमव्याप्तान्तरिक्षोदरा ॥१५९॥

साङ्गानेरपुरागम यतिपते शुश्राव दिल्लीपति
श्रीफत्तेपुरसर्ववर्णनिकर चाभ्यागमे प्राहिणोत् ।
श्राद्धास्तत्र सुखासनोत्तमगजाध्यारूढपुत्राङ्गना-
युक्तास्तच्चरणारविन्दनतये तावत्ततोऽभ्यागता ॥१६०॥

श्राद्धास्तत्र नवाङ्गपूजनमिमे चक्रु सुवर्णैस्तथा
सूरीशस्य यथा च तै समुदिते कोशो भवेद्भूपते ।
एकस्तीर्थकरोपम कलियुगे ससारदु खार्त्तिहृ-
च्चेन्नाय किल पूज्यते तदिह क स्यात्पूजनार्ह पर ॥१६१॥

श्राद्धैर्लक्षमितैर्द्विलक्षगणितैश्चान्यैर्नरैर्दिल्लिराट्-
शिक्षातोऽत्र समागतै परिवृताश्चेलुस्तत सूरय ।
श्रीमद्वीरजिनेन्द्रमन्त्रजपकास्तच्छासनोद्दीप्तये

भूपाकब्बरसगमाय विहितोत्साहा पवित्राशया ॥१६२॥
आयाता इह नाथहीरविजयाचार्या सुशिष्यान्विता–
इत्थ स्थानकसिहवाचिकमसौ श्रुत्वा नृपोऽकब्बर ।
स्व सैन्य सकल फतेपुरपुराद्गव्यूतषट्कान्तरा–
यातानामभिसम्मुख यतिपतीना प्राहिणोत् स्फीतियुक् ॥१६३॥
पुत्रैरेव निजैस्त्रिभि परिवृतस्तस्थौ नृप पर्षदि
म्लेच्छा काफर एष जात इति मा कुर्वन्तु हृत्खेदिताम् ।
ध्यात्वैवेति न राज्यसभवमदाद्यत्ताद्दशाना तथा
सर्वेषामनुवर्त्तन न च मद स्वप्नेऽपि सपत्तिज ॥१६४॥
तत्सैन्यैर्हयहस्तिवीरपदिकैरावेष्टिता सर्वत
श्रीसूरिप्रवरास्तदीयवदनाम्भोजेक्षणप्रार्थिभि ।
ब्रह्माण्डोदरपूरकारवभरेषूद्दामवाद्येष्विभ-
स्कन्धारूढसहस्रसख्यमनुजाध्यास्फालितेपूच्चकै ॥१६५॥
श्राद्धीभिश्च पदे पदे निजकरप्रोन्छालितेषूल्लसन्–
मुक्ताराशिषु सर्वलोकवनितावर्गेण सनिर्मिते ।
रूप्यैर्न्युञ्छनके विशिष्टवनिताक्लृप्तेषु गीतेष्विह
प्राप्ता श्रीमदकब्बरौकसि तदा फत्तेपुरान्त स्थिते ॥१६६॥
॥ युग्मम् ॥
स्वौकोद्वारि समागतान् यतिपतीन् दृष्ट्वा नृपोऽकब्बर
पुत्रै स्वै सममेव सभ्रमवशादुत्थाय सिहासनात् ।
अभ्यागत्य ननाम तेन विधिना येनैष विज्ञैस्तदा
श्राद्ध प्राचि भवे बभूव मनसीत्याशङ्कित तार्किकै ॥१६७॥
चङ्गाहोगुरुजीतिवाक्यचतुरो हस्ते निजे तत्करम्
कृत्वा सूरिवरान्निनाय सदनान्तर्वस्त्ररुद्धाङ्गणे ।
तावच्छ्रीगुरवस्तु पादकमल नारोपयन्तस्तदा
वस्त्राणामुपरीति भूमिपतिना पृष्टा किमेतद् गुरो ! ॥१६८॥
आहु सूरिवरा नरेन्द्र ! वसनाध कीटिकाद्यङ्गिना
पीडा मत्क्रमजास्तु मेति हृदये धी स्याद्यतेर्यत्नत. ।

नैतस्योपरि मुच्यते न मयका स्वःपादमद्म जिनै
सर्वत्रापि यतेर्विशेषयतना प्रोक्ता स्वकीयागमे ॥१६९॥

सूरीणामितिवाक्यसश्रवणत श्रीपातिसाऽकब्बर-
स्तद्वस्त्रे स्वकरेण दूरविहितेऽध कीटिकानिर्गमम् ।
दृष्ट्वा प्राप चमत्कृतिं गुरुगिरिप्रत्यक्षसवादत
सर्वज्ञागम एव शुद्ध इति चार्हच्छासनस्था पुन ॥१७०॥

शुद्धाया भुवि सञ्चरन्नथ नृप सञ्चारयस्तान् गुरून्
स्वस्वर्णासनसान्निधिं सुवचनैर्नीत्वाऽवदन्नीतिमान् ।
अत्रैवोपदिशन्तु धार्मिकशिरश्चूडामणिस्वक्रम-
स्पर्शात्पावितमध्यमेतदपि च स्याद्भालवन्मे गुरो ! ॥१७१॥

आहु श्रीगुरव सुवर्णरजतस्पर्शो न कल्प्य सदा
भिक्षूणामिति भूपते ! ननु मया तन्नोपवेश्य त्विह ।
इत्युक्त्वा नृपतेरवग्रहमहीदेशे पवित्रे स्थिता-
भास्वत्पण्डितशान्तिचन्द्रगणिराड्धन्यादिशिष्यान्विता ॥१७२॥

तेषा भूमिपति पुर स्थित इति स्पष्ट जगौ शुद्धधी-
र्द्धर्म मुक्तिकर वदन्तु मम भो ! निर्दम्भवाक्यैर्मुदा ।
यादृग् वाङ्मयसन्ततौ त्रिजगतीनाथेन सन्दर्शितो-
यादृक् सप्रति साधुभिश्च गृहिभिर्जैनैरनुष्ठीयते ॥१७३॥

इत्युक्ते क्षितिपेन भिक्षुपतय प्राहुर्जिनोक्तागम-
श्लोकोच्चारपुरस्सर विशदया वाचा सुधासारया ।
धर्म साधुगृहस्थयोग्यमसमै सत्त्वाधिकै पालित
पाल्य साम्प्रतबिन्दुमात्रमपि त सिद्धिप्रद शुद्धित ॥१७४॥

तद्धर्मश्रवणादनन्तरमसौ चक्रे परीक्षा नृप
सूरीणा पुरत सुवर्णनिभृत स्थालत्रय मुक्तवान् ।
द्रव्याऽमूल्यकवस्त्रराशिममुचद् गृह्णन्तु यच्छन्तु वा-
ऽन्येभ्यश्चेत्यवदद्विनीतवचन श्रीपातिसाऽकब्बर ॥१७५॥

प्राहु सूरिवरास्तपोधनतते कल्प्य न चामीकर
द्रव्य चान्यदपीह मोहजननात् ससारसवर्द्धकम् ।

वस्त्र चैतदपीशापिण्डकतया मूल्याऽतिरेकादपि
ग्राह्य नैव परप्रदानविधयोऽन्यार्थस्य नो सङ्गता ॥१७६॥
इत्थ सूरिवरान् परीक्ष्य विविधोपायैर्महीनायक–
स्तद्युक्तिक्षमता परीक्षितुमथ स्वैस्तार्किकै पण्डितै ।
सार्द्ध शास्त्रविचारसत्यसमयज्ञानाय सोऽवादय-
द्दक्ष शक्तियुतो दृढ हि कुरुते कार्य जनश्लाघितम् ॥१७७॥
तत्रैकेन समस्तभूपविबुधोत्तसेन सूरीश्वरा
सार्द्ध जल्पमनल्पकल्परचित कुर्वन्त्यनिन्द्य स्म ते ।
भास्वत्पण्डितशान्तिचन्द्रगणयस्त्वन्यै समग्रै सम
दत्ताज्ञा गुरुभिर्नृपेण च सम शिष्या विनीता यत ॥१७८॥
ते सर्वे त्रिबुधास्तदीयवचनैर्न्यायोपपन्नैश्चम-
त्कार प्राप्तहृदो वदन्ति नृपते स्वेत्यग्रतस्तात्त्विका ।
नास्माभिर्नरनाथ ! सुश्रुतवरा एतादृशा पण्डिता-
युक्तिक्षोदसहार्यमार्गरचनावक्तृत्वयुक्पालना ॥१७९॥
इत्थ तैर्विहितस्तव निजधियाऽऽचार च तेषा नृप
श्रुत्वा वीक्ष्य परीक्षणक्षममसौ निर्दूषण रञ्जित ।
सूरीणामिदमाह योजितकरद्वन्द्व पतन्मस्तको-
भूपा स्युर्ननु भृत्यकर्मनिपुणा यत्रि स्पृहाणा पुर ॥१८०॥
तुष्टोऽह भवता विचारचतुराचार पुनस्तार्किक-
श्रेणिश्लाघ्यविचक्षणत्वमसम दृष्ट्वा गुणावर्जित ।
भो श्रीसूरिवरा ! तदिष्टमनघ मत्तो ध्रुव मार्गय-
न्तूक्त यद्भवदागमे नृपहरिश्रीचक्रिभि साधितम् ॥१८१॥
इत्युक्ते क्षितिपेन हीरविजयाचार्या जगुर्भो नृप !
त्वत्पार्श्वेऽत्र यमर्थिभिर्गतभयैरस्माभिरभ्यर्थ्यते ।
गुप्तिक्षिप्तसमस्तबन्दिजनतामोक्ष पुनर्डाबरे
नो मत्स्यादिवधो न चागलितवार्ग्राहस्तटाकोत्तमे ॥१८२॥
प्राप्ते पर्युषणाख्यपर्वणि तथाऽमारिप्रघोषो दिनान्
यावत् सूर्यमितास्त्वदीयसकले देशे त्वयाब्द प्रति ।

कार्यश्चेति मदीप्सितं त्रयमिदं राज्याङ्कमुद्राङ्कितं
काम दत्तवता न कि नरपते ! दत्त त्वया साम्प्रतम् ? ॥१८३॥
इत्युक्ते यतिपुङ्गवैर्नरपतिस्तान् बन्दिलोकान् घनान्
गुप्त्यन्तश्चिरसञ्चितान् कृतमहामन्तून् मुमोच स्वयम् ।
यातस्तान्निजपादनत्यनुरतान् श्रीमद्‌गुरूणा क्रम-
द्वन्द्वे पातयति स्म चाशिषदिमान् श्रीहीरनामाक्षरान् ॥१८४॥
मत्स्याद्याङ्गिगणावध गलितवाग्रोह समुद्दिश्य स
श्रीमङ्गावरनामकोग्रसरसि श्रीपातिसाऽकब्बर ।
भृत्यैरुत्पटह पुरेऽखिलजनज्ञानाय चाऽवादय-
त्तत्रैतद्विधिलोपकग्रहकृते छन्न चरानादिशत् ॥१८५॥
प्रत्यब्द नृपति समागतमहापर्वण्यमारिक्रम
कार्यो मद्विषयेष्विति स्वलिखित दत्ते स्म सज्ञाय स ।
यावद्द्वादशवासरानथ महापर्वागमे तादृश
तत्सर्वत्र तदर्थमेति सचर तत्सावक वर्त्तते ॥१८६॥
एव श्रीगुरुमार्गित नरपतिर्वस्तुत्रय दत्तवान्
सन्त प्रार्थितदायका इति वचस्तेनैव सत्य कृतम् ।
धन्यास्ते गुरवो यदीयवचन भूमौ मनाग्नापत-
द्धन्योऽसावपि यत्पुरो गुरुवरा जातास्तदभ्यर्थका ॥१८७॥
श्राद्धोपाश्रयभूमिपावनकृते तेनैव भूस्वामिना
दत्ताज्ञा अथ सूरिहीरविजया राजाङ्गणादुत्थिता ।
तन्नुन्नै कविराजतार्किकगणैर्वीरैरमात्यै पुर-
श्रेष्ठैश्चानुगतास्तदीयसदनद्वाराद्बहिर्निर्गता ॥१८८॥
तावत्पादचरोऽनुग क्षितिपति पादौ प्रणम्य स्थित
स्वौकोद्वारि समस्तसैनिकजनास्तेषामनुप्राहिणोत् ।
वाद्यानीभशिर स्थयोग्यपुरुषाध्यास्फालितान्युच्चकै
सूरीणा पुरतश्चकार च रथाश्वेभादिका स्वश्रियम् ॥१८९॥
एव भूपतिकारितेन महता ह्याडम्बरेणाथ ते
सूरीशा नगरे चतुष्पथपथान्त सञ्चरन्तस्तदा ।

शङ्का तीर्थकरागमस्य हृदये केषा न चक्रुस्तथा
प्रेम्णे तीर्थकरा इवाधिकधिया चासन् गुणैर्निर्मलै ॥१९०॥
श्राद्धास्तत्र पदे पदेऽथ मुमुचुर्वस्त्राणि सौवर्णिकान्
सूरीणा जगृहुश्च याचकजनास्तेषा गुणाभाषिण ।
श्राद्धीभिर्वरमौक्तिकैर्मणिगणैर्वर्द्धापनार्थं तदा
नुन्नै पाणियुगेन वारिनिधिवत्तद्भूतल व्यानशे ॥१९१॥
आयाता अथ सूरयो यतियुता योग्ये पवित्राश्रये
श्लोक धार्मिकमेकमाप्तवचन व्याख्यान्ति ते स्माऽनघम् ।
ब्रह्माऽय किमिहागत शुचितर धर्म पुरस्ताच्चतु—
र्वर्णानामुपदेष्टुमेवमखिलाश्चक्रुर्द्विजा शङ्कितम् ॥१९२॥
तत्र स्वस्तिकलक्ष्मक्षतगणाकीर्णे धनिस्त्रीकृता—
नेकन्युञ्छनवित्तकोटिरभवच्छ्रीस्थानसिहादिकै ।
इभ्यै रूप्यसुवर्णनव्यवसनत्यागेन कोटिव्यया—
द्देश्यो मार्गणसञ्चय परमहीजातोऽपि सन्तोषित ॥१९३॥
कश्चिद्भट्टकवि कवित्वमतुल नव्य विधायोच्चकै
सूरीणा पुरतोऽवदच्च भवता स्तोत्रेण लक्ष धनम् ।
लप्स्ये मत्तमतङ्गज यदि भवद्भक्तैकसभ्येभ्यत—
स्तर्हि श्रीगुरुनायकान् क्षितितले श्रीधर्मराजान् ब्रुवे ॥१९४॥
श्रुत्वा तद्वचन गुरून्नतिकृते श्राद्ध सदारङ्गक
सान्वर्थो गजराजयुक्तमखिल तस्मै धन दत्तवान् ।
एव श्रीगुरुराजहीरविजयाचार्यस्तवाधायिन
के के तत्र महार्थपात्रमभवन्नो मार्गणा पण्डिता ॥१९५॥
तस्मिन् वर्षचतुष्टय नरवरस्यासन्नदेशे स्थिता
सूरीशा नृपपुङ्गवेन विविधोपायज्ञविज्ञैर्निजै ।
रात्रावह्नि परीक्षिता स्वयमपि च्छन्न कृतश्रावका—
नेकास्तिक्यसुलक्षणेन विशदप्रज्ञेन शुद्ध्यर्थिना ॥१९६॥
शुद्धा सर्वपरीक्षणैर्गुरुवरा ज्ञात्वेति पृथ्वीपति
सभ्याना पुरत स्वपर्षदि गुणास्तेषा स्वधीशोधितान् ।

उक्त्वा सर्वयतीशहीरविजयाख्यांनामदाद् भक्तित
स्वैर्वाक्यैर्बिरुद जगद्गुरुरिति स्पष्ट मह पूर्वकम् ॥१९७॥

सूरीणा करतोऽथ शान्तिविबुधस्यादापयत्तार्किक-
श्रेष्ठत्वादिगुणैश्चमत्कृतमना श्रीवाचकाग्र्य पदम् ।
सघ स्थानकासिहमुख्यसकलश्राद्धास्तदात्युत्सव
चक्रु श्रीमति वित्तकोटिकलिता फत्तेपुरे सर्वत ॥१९८॥

अन्येद्युर्नरनाथहस्तालिखित लात्वा त्रिलोकीगुरो
शिष्या श्रीगुरुमान्यधन्यविजयास्तद्भृत्यससेविता ।
सूरत्यादिषु मुद्गलाश्रितजिनौक साधुसद्मव्रज
तन्मुक्त जिनबिम्बसाधुकलित श्राद्धैस्तदाऽकारयन् ॥१९९॥

एव श्रीगुरुहीरहीरविजयाचार्यान्नृपाऽकब्बरे-
णात्यन्त रचितस्तुतीन् कृतमहापूजान् पुन सत्कृतान् ।
आयातानथ गौर्जरे क्षितितले श्रुत्वा पुरान्मङ्गलात्
स्तौतीत्थ शिशुपद्मसागरकवि प्रेम्णा विवेकान्वित ॥२००॥

नत्वा सत्त्वनिधत्ततत्त्वचरित श्रीपार्श्वनाथ जिन
स्तौमि श्रीनिधिमूर्त्तिहीरविजय भट्टारकाग्रेसरम् ।
यस्य स्तोत्रधनुष्यसख्यविदुषामासेदुषा शेमुषी-
बाणाली गुणसस्थिताऽपि भुवने व्याप्ता न कै श्लाघ्यते ॥२०१॥

श्लाघा ते मुनिराज ! कस्य वदने जिह्वेव नो विद्यते
विद्या साऽपि न काऽस्ति देव ! तव या जिह्वान्तमासेदुषी ।
सन्ति त्वय्यनघा पवित्रितदिश सम्यग्गुणाश्चापरे
मत्वेतीव समस्तगच्छजनता त्वा स्वामिन मन्यते ॥२०२॥

सोमत्व तव निष्कलङ्कमतुल नित्यप्रसारै करै-
र्मन्ये व्योम्नि समेत्य शीतकिरणो जात्यार्थिवद्याचते ।
आदित्यस्तु तव प्रतापमचल विश्वत्रयव्यापिन
तेन त्वत्पुरतो न क क्षितितले सञ्जायते याचक ॥२०३॥

सूर्याचन्द्रमसौ गुणान्तममल ते वीक्षितु नायक !
स्रष्ट्रा व्योमतलाध्वशीघ्रतरगौ दूताविव प्रेषितौ ।

अप्राप्येव तदन्तमम्बुधितले खिन्नोऽविशङ्कानुमान्
श्यामास्य पुनरागत शशधरो रात्रौ कलङ्कच्छलात् ॥२०४॥
स्रष्टाऽथ स्वयमेव निर्मितगतिर्व्योम्नीव ताराच्छलात्
स्वामिस्त्वद्गुणसग्रह निशि करोत्याक्षेपवान् सर्वदा ।
तद्यत्नाय दिवा तु निश्चलमतिर्भूत्वेव तिग्मच्छवि-
स्तिष्ठत्येष यत सता मतिरिय सद्वस्तुन पालने ॥ २०५ ॥
मूर्त्तिस्ते जिनमूर्त्तिवत्कलियुगे दुष्कल्मषध्वसिनी
शान्तै कान्तमनोभिरीहितहितैश्चित्ते निजे न्यस्यते ।
दुष्टै कैश्चिदुपेक्ष्यतेऽथ तव न द्वेषो न चोल्लासिता
शीताशोरमृते दुरम्बुनि सम कि नो भवेत्सङ्क्रम ? ॥२०६॥
देव ! त्वद्गुणसन्ततिर्गुणिजनैर्न्यस्ता निजे मानसे
चित्रावल्लिरिव प्रवृद्धिजनिकाऽभूत्तद्गुणाना जने ।
दोषाक्तैरथ दूरिताऽद्भुतमिद तद्दोषसवर्द्धिनी
यद्वा नाऽद्भुतमेतदुग्रमनसामुग्रा प्रवृत्तिर्भवेत् ॥२०७॥
श्रीवीरस्य शिवङ्गतस्य विरहे दु खार्दितप्राणिना
दु खध्वसकृते कलाविव विधिस्तत्तुल्यहीर व्यधात् ।
तस्येवास्य भवेद्यदीयहृदयेऽभेदप्रतीति परा
श्रेय श्री करपङ्कजे स्थितवती कुर्याच्च त तन्निभम् ॥२०८॥
स्वस्त्यऽर्काय तमोभिदे भगवते लोकप्रकाशात्मने
विश्वायाघनदानतो ह्यवसरे वृत्ति परा तन्वते ।
जाड्यच्छेदपराय दूरगजनोत्तापाय शस्तोदये
भूदेवैर्विहितार्चनाय भवते भूयात् स्फुरद्रोचिषे ॥ २०९ ॥
लोकोन्मार्गनिदर्शनोद्भवमिव स्वाग स्मरन् लौकिक
शम्भुस्त्वय्युदिते श्रुते मुनिपते ! नश्यन् सुनीत्यद्भुते ।
भार मूर्ध्नि विमृश्य शीतकिरण य पुष्करे मुक्तवान्
सोऽय प्रभ्रमतीव सार्थपतिना मुक्तो गलिर्गौ पथे ॥ २१० ॥
कुर्वाणस्तव दर्शन नयनयोर्लोकोऽनिमेषोऽभवत्
त्वद्भाषाश्रवणाद्विवेकविकलोऽप्यासीद्विवेकान्वित ।

त्वत्पादाब्जनमस्कृतेर्मुनिपते ! निःस्वोऽपि सस्वोऽभव-
न्माहात्म्यं ननु कस्य मानसमिदं नो रञ्जयत्यद्भुतम् ॥२११॥

व्याप्तस्य प्रकटं त्रिलोकमपि ते स्वामिन् ! प्रतापोज्ज्वल-
द्वह्नेर्व्योम्नि गतेषु तारकमिषात्तार स्फुलिङ्गेष्वहो ।
मन्ये दाहभयेन रात्रिसमये नोदेति भासांपति-
र्वीरोऽप्युत्कटशक्तिमत्यपबलोऽदृश्यो भवेदागते ॥ २१२ ॥

मत्वैकं सुभटं त्रिलोकविकटं श्रीनन्दनं भस्मसा-
च्चक्रे ते मुनिराट् ! प्रतापहुतभुग् दुःसाध्यतेजा असौ ।
तस्मादप्यधिकस्य नेत्रकपटाद्भाले स्वयं भिन्नवान्
गौरीशस्य ततस्त्रिलोचनतयैवाख्याऽभवद्भूतले ॥२१३॥

ये श्रीवीरजिनेन्द्रशासनमिदं विस्तारयन्तः क्षिता-
वम्भोदा इव दुग्धसिन्धुसलिलं प्राप्तास्ततोऽप्युन्नतिम् ।
केषां नो रुचये भवन्ति गुरुताश्रद्धानपूतात्मनां
कामं काङ्क्षितदर्शना घनजनैर्जाग्रत्प्रभावाः कलौ ॥२१४॥

यान्नूनं प्रणमन्ति मानवगणाः सम्यग्गुरुत्वाशया-
निर्णीयाऽपरगच्छनायकगणे सम्यग्गुरुत्वक्षयम् ।
प्रत्यूषे शशलाञ्छनादिनिकरे दृष्ट्वा प्रकाशक्षयं
मार्त्तण्डं किमु नार्चयन्ति दिवसाधीशत्वसम्भावनात् ॥२१५॥

यैश्चक्रे कृतिनां मतिः शुभतरा श्रद्धानपूतात्मना
श्रीमद्वीरजिनेन्द्रशासनतरोर्भास्वत्फलास्वादने ।
उच्छेद्यापरतीर्थमोहमदनद्रुन्मादनिष्णातता
यद्वैद्यान्निपुणान्न कः प्रकुरुते पथ्यादनं शुद्धधीः ॥ २१६ ॥

येभ्योऽयं गुणिपूरितस्तपगणः प्राप्नोत्युदग्रं यशः-
स्तेजोजात्यमणेर्यतोऽधिकतरं हारोऽपि मुक्तान्वितः ।
येभ्यश्चेह परत्र मङ्गलधिया के के नमस्यन्ति न
प्राप्तं केन यतोऽमृतं क्षितितले नास्वाद्यते धीमता ॥२१७॥

येभ्यो नश्यति शासनं हरिहरब्रह्मादिदेवोदितं
ध्वान्तं तिग्मकरादिवाधिकतमं रात्रिप्रभावोदितम् ।

येभ्यश्चापि चकास्ति शासनमिद स्याद्वादवादाङ्कितं
व्योमेवोष्णकरान् मनुष्यनिकरावस्थानमूर्द्धस्थितम् ॥२१८॥
येषा प्राप्य पवित्रदाक्षिणकरस्पर्श निजे मस्तके
जायन्तेऽतिनिकृष्टवृत्तय इमेऽप्युत्कृष्टशिष्टाश्रिय ।
स्वर्णत्व किमु नाश्रयन्ति भुवने लोहानि योगीशितु-
र्लब्ध्वा शुद्धरसान्वय यत इह स्याद्रङ्गितासङ्गत ॥२१९॥
सक्रान्ता बत येषु निर्मलगुणा ख्याति लभन्तेतरा
शीताशोरिव चन्द्रकान्तिमणिषु ज्योत्स्ना सुधासङ्गतिम् ।
येषु स्वामिषु सत्सु भारतमिद विभ्राजते सर्वत
श्रीसीमन्धरतीर्थनेतरि यथा क्षेत्र विदेहाऽभिधम् ॥ २२० ॥
तेषा सद्वचनानि शुद्धरचनान्याकर्ण्य विद्वज्जना-
जानन्तीति कलावपीह भरते कि तीर्थनाथागम ? ।
किंवा गच्छभृदागम परकृते क्षेत्राद्विदेहाभिधात्
स्वर्गाद्वा धिषणागम किमथवा शुक्रागमो भूतलात् ॥२२१॥
स्वामिंस्त्वच्चरणे पतन्ति विमलात्मानो जना केवल
ये ते स्युर्भुवि भूरिमूर्द्धमणयश्चित्र समानोदया ।
श्रुत्वा ख्यातिमिमा तवेश ! विशदा भाग्याधिलब्धर्द्धय
के के न भ्रमरीभवन्ति चरणाम्भोजे सदास्वादिनि ॥२२२॥
नाथ ! त्वद्वदनोपमानमनघ दत्त कवीशै शशी
आसाद्येव हरस्य मूर्द्ध्नि वसति लेभे कलाभ्युन्नत ।
त्वद्वाणीसमतामवाप्य वसुधा मन्येऽभवन्नाकिना
भोग्या योग्यतया हि वस्तुनि न क स्यादुद्यत शुद्धधी ॥२२
दृष्ट त्वद्वदन गणेश ! गुणिना दोषापह सर्वदा
चान्द्र मण्डलमन्यथेति विबुधै कि गीयते तत्समम् ? ।
एषा मे वचनीयता क्षितितले माभूदितीवैणभृ-
च्छम्भोर्मूर्द्ध्नि तपस्तनोत्यतनुक गङ्गातटे निर्मले ॥२२४॥
पीत्वा त्वद्वचन मनुष्यनिकर सुस्थ समाध्युद्भवा-
द्देवाना निकरस्तु तत्समसुधा तृप्तस्तथा चाभवत् ।

यस्याः, कलासु, कौशल्यम्, दृशोरध्वनि नेत्रयोः पथि, प्रविधाय कृत्वा विलोक्येत्यर्थः, स्वर्गाङ्गनाः अप्सरसः, स्फुटमिति क्रियाविशेषणम्, अन्यतः समुत्पन्ना लज्जा अपत्रपोच्यते, तेन कोडिमदेवीसम्बन्धिकलाकलापादपत्रपिता ह्रीणास्सत्य इवोत्प्रेक्ष्यते—कलानामतिशयं तदभ्यधिकं कलाऽभ्यासम्, अध्येतुमिच्छवः पठितुकामाः, खल्विति वितर्के, लेखशालां शब्दच्छलाल्लेखशालां पाठशालां देवलोकं च, अद्यापि नो जहति न त्यजन्तीति ॥ ६५ ॥

यस्या मुखाङ्घ्रिरुचिरत्वविधानचेता
धाता ध्रुवं शशिसरोजरमां समादात् ।
अश्रीकतापदमभूत्प्रथमः सलक्ष्म-
रन्ध्रो व्यधाद् यदितरच्च वने निवासम् ॥६६॥

यस्याः श्रेष्ठिन्याः, मुखांङ्घ्र्योर्वदनचरणयोः, रुचिरत्वविधाने रम्यत्वापादने, चेतो मनो, यस्य सः; मुखांङ्घ्रिरुचिरत्वविधानचेताः, धाता वेधाः, ध्रुवं निश्चितं, शशिसरोजरमां चन्द्रपद्मपद्मां, समादादादत्ते स्म । पश्चिमार्द्धेन तदेव व्यनक्ति—यदिति । यद्धेतोः, प्रथमः चन्द्रः, अश्रीकताया अमनोज्ञतायाः, पदमास्पदमभूत् बभूव। किं० सह लक्ष्मलक्षणेन रन्ध्रेण च्छिद्रेण, वर्त्तते यः सः; च पुनरितरत् पद्मं, वने जले, शब्दच्छलाद् वनेऽरण्ये, निवासं, व्यधात् कुरुते स्मेति तात्पर्यार्थः ॥ ६६ ॥

रम्भा सुरौकसि रता कमला च लोला
गौरी शिवा त्रिपथगा पुनरुग्रनेत्रा ।

गोत्रच्छिदि प्रणयकृच्च पुलोमपुत्री
नित्यं तुलेत्यनघया न यया सहासाम् ॥६७॥

रम्भाऽप्सरोविशेषः; कि० सुरौकसि रता सुराया मदि-रायाः, ओको गृहं, तत्र; पक्षे सुरौकः स्वर्गलोकस्तत्र रता रक्ता; च पुनः कमला श्रीः, 'लोला तु रसनाश्रियोः' इति वचनाल्लोलेति नामान्तरम्; पक्षे लोला चञ्चलेति चापल्यदूषणदूषितेति, पुनः गौरी पार्वती, शिवा शृगाली; पक्षे शिवेति तन्नामान्तरम् । पुनः त्रिपथगा गङ्गा; कि० उग्रनेत्रा क्रूरदृष्टिः; पक्षे उग्रो महादेवः सः 'नेत्रं वस्त्रे मथो गुणे । मूलाक्षिनेतृषु' इत्यनेकार्थत्वात् नेत्रं नेता, यस्याः सा । च पुनः पुलोमपुत्री शची; कि० गोत्रच्छिदि कुलध्वंसिनि; पक्षे गोत्रच्छिदि पुरन्दरे, प्रणयकृत् स्नेहकारिणी-ति । इति हेतोर्यया कोडिमदेव्याः कि० अनघया निर्दोषया, सह सार्द्धं, पूर्वशब्दश्लेषोक्तदोषदूषितत्वात्, आसां रम्भादीनां, तुला समानता, न स्यादिति शेषं स्पष्टम् ॥ ६७ ॥

शश्वत् समुद्रसुतयेव सनातनः श्री-
कम्रः कमाभिध उदारमना महेभ्यः ।
पत्न्या तया सह स कोडिममुख्यदेव्या
सांसारिकीमनुबभूव विलासलक्ष्मीम् ॥६८॥

शश्वन्नित्यं, समुद्रसुतया लक्ष्म्या, इव यथा, सनातनो नारायणः, तथा श्रिया सम्पत्त्या, शोभया वा, कम्रो मनोज्ञः; पक्षे श्रीकम्रः श्रीकान्त इति, कमाभिधो महेभ्यः; किं० उदारमना

उदात्तचेताः, तया पत्न्या भार्यया; कि० कोडिमुख्यदेव्या कोडिमदेव्येत्यर्थः; सह सार्द्धं, सांसारिकी संसारसम्बन्धिनी, विलासलक्ष्मी कामभोगादिसामग्रीसंपदम्, अनुबभूवेत्यनुभवति स्मेत्यर्थः ॥ ६८ ॥

अथावशिष्टैर्वृत्तैर्गुरोर्मातापितरौ द्वावपि युगपद्वर्णयति । तथाहि—

भिन्नौ तथैकहृदयौ सदृशोपवेशो-
त्थानौ सदृग्वितरणौ विषयाग्रवृत्ती ।
कान्ताकुचाविव समानसिचावुदारौ
तौ दम्पती सुखमफल्गु मिथोऽन्वभूताम् ॥६९॥

दम्पती कमाकोडिमदेवीनामकौ; कि० भिन्नौ पृथग्भूतौ शरीरेणेति; तथेति पुनरर्थे; कि० एकहृदयौ एकं हृदयं परस्परमनोऽनुयायितया ययोस्तौ; पक्षे एकं हृदयं आधारभूतं ययोस्तौ; पुनः कि० सदृशे उचिते, उपवेशोत्थाने प्रतीते ययोस्तौ; पक्षे सदृशे तुल्ये उपवेशोत्थाने पतनोद्गमने ययोस्तौ; पुनः कि० सदृग् वितरणं दानं ययोस्तौ; पक्षेऽपि तुल्यं विशेषणमिदम्; पुनः कि० विषये देशेऽधिकारान्मेदपाटे, अग्रा श्रेष्ठा, वृत्तिः प्रवृत्तिर्ययोस्तौ; पक्षे विषयेषु कामभोगादिषु, अग्राऽधिका, वृत्तिर्ययोस्तौ; पुनः कि० समानं मूल्यादिना तुल्यं, सिक् चेलं, ययोस्तौ; पक्षेऽपि विशेषणमिदं तुल्यम्; तेन कान्ताकुचाविव स्त्रीस्तनाविव, तौ दम्पती भार्याभर्त्तारौ, सुखं विषयात्मकं, मिथोऽन्योन्यमन्वभूतां भुञ्जाते स्मेत्यर्थः ॥ ६९ ॥

तुल्योपकाररसिकौ च सदृग्रुचिस्थौ
छायायुतावविततथप्रथितप्रभावौ ।
तौ दम्पती घनतमानि तमांसि पुष्प-
दन्ताविव द्रुतमहर्निशमभ्यभूताम् ॥७०॥

भूपालगोपालस्वपाकवराकवणिग्विप्रवेश्यावेश्मादिषु निर्विशेषतया तुल्ये समाने, उपकारे प्रकाशाह्लादलक्षणे, रसिकौ तुल्योपकाररसिकौ; दम्पतीपक्षे द्वयोरप्यातिशायिकारुण्यपरतया, तुल्ये परस्परं समाने, उपकारे लोकोपकारकरणादौ, रसिकौ; पुनः किं० सदृग्रुचिस्थौ जगद्गतध्वान्तध्वंसित्वेन, सदृक् सदृशी, या रुचिर्द्युतिः, तत्र स्थितौ; दम्पतीपक्षे सदृशी रुचिर्दानादिधर्मकर्मस्पृहा, तत्र स्थितौ; पुनः कि० छायायुतौ 'छायाऽर्कयोषित्यनातपे कान्तौ शोभायां च' इत्यनेकार्थत्वात् तरणिपक्षे छाया सूर्यभार्या; चन्द्रपक्षे च छायाऽनातपः कान्तिर्वा शोभा वा तया युतौ कलितौ; दम्पतीपक्षे छायावद् युतौ मिलितौ; यथा छाया छायावन्तमाश्रित्यैव तिष्ठति तथा तावप्यन्योन्यमाश्रितौ, कोऽर्थः स्वस्वशरीरच्छायावद् युतौ, परस्परं नित्यावियुक्तावित्यर्थः; पुनः कि० अवितथो यथार्थः, प्रथितश्च चराचरजगत्प्रतीतः, सूर्याचन्द्रमसोः पक्षे प्रभावस्तेजः; दम्पतीपक्षे प्रभावः शक्तिः, सांसारिकधार्मिकक्रियानिर्वाहरूपा ययोरित्युभयत्रापि यथासम्भवं योज्यम् ; तौ अवितथप्रथितप्रभावौ, तौ दम्पती भार्यापती, पुष्पदन्ताविव सूर्याचन्द्रमसाविव, घनतमानि निविडतराणि, तमांसि पापानि, अन्धकाराणि च; अभ्यभूतां निराकुरुतः स्मेत्यर्थः ॥ ७० ॥

सर्वज्ञदेवयतिगुर्वतिचारुचित्त-
भक्ती विरक्तिगुणशीलसलीलसक्ती ।
तौ दम्पती कृतिकृती सुकृतानि दीनो-
द्धारादिकानि सुदृशौ सदृशान्यकार्ष्टाम् ॥ ७१ ॥

सर्वज्ञोऽर्हन् यो देवः, यतिश्चारित्रीयो गुरुः, तयोः सर्वज्ञदेवयतिगुर्वोः, अतिचारुः अतिशयेन चार्वी, चित्तभक्तिर्ययोस्तौ, सर्वज्ञदेवयतिगुर्वतिचारुचित्तभक्ती; पुनः कि० विरक्तिर्वैराग्यं, तल्लक्षणो गुणो यस्मिंस्तच्च शीलमाचारो, ब्रह्म वा, त्त्र सलीला सक्तिः सङ्गो, ययोः तौ; तौ दम्पती कोडिमदेवीकमाख्यौ; पुनः किं० कृतिनां कोविदानां, कृतिः क्रियाऽर्थाद्धार्मिकी क्रिया वर्त्तते ययोस्तौ कृतिकृती, सुकृतानि पुण्यानि, कि० दीनोद्धारादिकानि; पुनः कि० सदृशानि तुल्यानि; अकार्ष्टां कुरुतः स्मेति । अत्र पूर्वार्द्धे देवगुरुरागित्वमुक्तम्, पश्चिमार्द्धे तु धर्मरागित्वमिति तत्त्वत्रयीधारित्वं सूचितं तदेवाग्रेतनविशेषणेन दृढयति— पुनः तौ किं० सुदृशौ सम्यग्दृशाविति भावः ॥ ७१ ॥

मत्वा गृहिष्वनुदिनं निरपत्यताऽऽख्यं
दुःखं दुरुद्धृतिकशल्यमिवान्तरस्थम् ।
तौ दम्पती भिषजमार्हतमामयघ्न
धर्मं तदुद्धृतिधिया भजतः स्म भूरि ॥७२॥

अनुदिनं प्रतिदिवसं, गृहिषु गृहस्थेषु, निरपत्यताऽऽख्यं निःसन्ततिनामकं, दुःखं, अन्तरस्थं शरीरमध्यस्थितं, दुःखेन उद्धृतिरु-

द्धारो यस्य तत् दुरुद्धृतिकं तच्च शल्यं चेति कर्मधारयस्तेनान्तःस्थशल्यमिवानपत्यतादुःखं, मत्वा ज्ञात्वा, तदुद्धृतिधिया तस्य दुःखशल्यस्योद्धारबुद्धया, तौ दम्पती, आर्हतं सार्वज्ञं धर्मं; किं० भिषगिव वैद्य इव भिषक् तं भिषजं; कि० आमयघ्नं द्रव्यभावरूपरोगहरं, भजतः स्म निषेवाते स्म । तथाऽत्रायमाशयः—पूर्व प्रपन्नाऽर्हद्धर्मावपि तदानी तु सन्तानार्थिनौ सन्तौ तौ मिथ्यात्वादि हित्वा विशेषेण धर्मरूपमेव वैद्यं श्रयतः स्मेत्येतदर्थसमर्थनसूचाचणं भूरीति क्रियाविशेषणम् ॥ ७२ ॥

भूच्छायमन्धितमहीव सहस्ररश्मि-
र्दुःखं सुपात्रनिहितो विभवो निहन्ति ।
ध्यात्वेति चारुरुचि चेतसि दम्पती तौ
क्षेत्रेषु सप्तसु सदा वपतः स्म वित्तम् ॥७३॥

सहस्ररश्मिः सूर्य इव, भूच्छायं ध्वान्तं, किं० अन्धिता जगतस्तमोग्रस्तत्वेन अन्धीकृता मही मेदिनी येन तदन्धितमहि; तथा सुपात्रेषु निहितः स्थापितो, विभवो, दुःखमशर्म, निहन्ति, इति चेतसि मनासि, किं० चार्वी मोक्षाभिलाषित्वात् 'रुक् शोभा किरणेच्छासु' इत्यनेकार्थवचनात् रुक् इच्छाऽर्थात् स्पृहा यस्मिंस्तस्मिंश्चारुरुचि चेतासि, मत्वा ज्ञात्वा, तौ दम्पती जायापती, सप्तसु जिनभवनादिषु क्षेत्रेषु, वित्तं, वपतः स्मेति ॥७३॥

दीपप्रभा फणिदृशेव सुशीलवृत्त्या
निष्पुत्रताऽऽदिकमघं विनिहन्यते यत् ।

तौ दम्पती गृहिजनोचितमत्यजिह्मं
ब्रह्मेति साधु दधतुर्धृतिमत्प्रधानौ ॥७४॥

इव यथा, फणिदृशा सर्पदृष्ट्या, दीपप्रभा प्रदीपज्योतिः, तथा सुशीलवृत्त्या शोभनब्रह्मचर्याचरणेन, निष्पुत्रतादिकं निरपत्यताप्रमुखं, अघं दुःखं, विनिहन्यते। इति हेतोस्तौ दम्पती, गृहिजनस्यागारिणि उचितं योग्यं, पुनरतिशयेन, अजिह्मं सरलं, ब्रह्म शीलं, दधतुः। तौ पुनः किं० धृतिमत्सु सन्तोषशालिषु धैर्यवत्सु वा, प्रधानौ प्रकृष्टौ, साध्विति च क्रियाविशेषणम् ॥ ७४ ॥

शम्बेन शैलशिरसामिव पूर्वजन्म-
दुष्कर्मणां भवति सत्तपसैव नाशः।
तत्सर्वथा हितसमीहितदानदक्षे
तद्दम्पतीहृदभवत् कृतयत्नमत्र ॥७५॥

शैलशिरसां गिरिशृङ्गाणामिव यथा, शम्बेन वज्रेण, तथा पूर्वजन्मनां यानि दुष्कर्माणि तेषां पूर्वजन्मदुष्कर्मणां, सत्तपसैव, नाशो भवति; तस्मात्कारणत् तद्दम्पतीहृत् तयोर्भार्यापत्योर्मनः, अत्राऽस्मिन् तपसि, कृतयत्नं प्रयत्नवत्, अभवज्जातम्; तपसि किं० हितं पथ्यं च यत् समीहितं कामितं, तस्य हितसमीहितस्य यद्दानं तत्र दक्षे निपुणे ॥ ७५ ॥

एधांसि वह्निरिव भानुरिवान्धकारान्
पूर्वार्जितानि दुरितानि निहन्ति भावः।

पत्नी पतिश्च मुदितौ स्वमनोरथद्रु-
मेघे मनस्तदिह नित्यमिमौ न्यधत्ताम् ॥७६॥

इव यथा, वह्निरग्निः, एधांसि इन्धनानि; पुनर्यथा भानु सूर्यः, अन्धकारान्; तथा पूर्वार्जितानि प्राचीनानि, दुरितानि पातकानि, भावो निहन्ति। तादिति तस्मात्कारणात्, इमौ पत्नी पतिश्च; कि० मुदितौ सन्तौ, इह भावे, सुकृततुर्यभेदे; किं० स्वमनोरथद्रुः स्वाभिलाषभूरुहस्तत्र मेघे जलदे, तद्वृद्धिविधातृत्वात् मनो हृदयं, न्यधत्तां स्थापयामासतुरित्यन्यत्सुबोधम् ॥७६॥

तुहिनरुचिभृद्भूभृत्पुत्र्योरिवार्त्तिविहीनयो-
र्निखिलविषयोल्लासश्रीमन्महोदधिमीनयोः ।
सततयुतयोर्जायापत्योस्तयोर्भजमानयोः
समयसुभगान् भोगान् कालः कलेव कियानभूत् ॥७७॥

तुहिनरुचि हिमरुचि बिभर्तीति तुहिनरुचिभृन्महादेवः, भूभृत्पुत्री पार्वती, तयोरिव; कि० अर्त्तिः पीडा, तया विहीनयोः रहितयोः; पुनः कि० निखिलोऽखिलो यो विषयोल्लासः कामभोगसुखोत्कर्षः, स एव श्रीमान् यो महोदधिर्महार्णवस्तत्र मीनयोर्मत्स्ययोस्तन्निमग्नत्वात्; पुनः कि० सततयुतयोर्नित्यावियुक्तयोः, तयोर्जायापत्योर्दम्पत्योः कोडिमदेवीकमाख्ययोः; पुनः कि० कुर्वाणयोर्भजमानयोर्निषेवमाणयोः, कान्, भोगान् पञ्चविधान् विषयान्; कि० समयेनाऽवसरेणाऽर्थाद्धर्मार्थाऽविरोधिना विषयसेवायोग्येन कालेन, सुभगान्मनोज्ञान्, समयसुभगान्

सुदिने सुलग्ने सुतरत्नमसूत, प्राची मार्तण्डमण्डलमिव दिशो द्योतयत् । तत् पुत्ररत्नं दृष्ट्वा हर्षविषादाभ्यां सङ्कीर्णमानसा कुन्ती चिन्तयति। एनं पुत्रं किं करोमि, क्व स्थापयामि, किं वा त्यजामि, एवं यावता चिन्तयति तावद्धात्र्या प्रोक्तम्। हे पुत्रि ! असौ लोकविरुद्धेन वर्त्मना जातत्वात् त्यज्यते। तयापि सबाष्पया स पुत्रो मणिकुण्डलमण्डितो मणिमण्डितायां पेटायां क्षिप्त्वा अन्तर्गङ्गं प्रवाहयाञ्चक्रे। तस्मिन् सुते त्यक्ते कुन्ती भृशं शोकाकुला बभूव। यतस्तादृशेन पुत्ररत्नेन वियुक्तः को न खिद्यते ?। अथाऽन्यस्मिन् दिने सुभद्रया राज्ञ्या धात्री पृष्टा। हे सखि ! तव पुत्री कुन्ती सांप्रतं अन्यमिवाकारं धत्ते तत्किम् ?। अथ धात्री तदग्रे आदितः सर्वं वृत्तान्तं कथयामास। राज्ञ्यापि तत्सर्वं क्षितीशाय प्रोक्तम्। क्षितीशोऽपि तस्या एवमादिशत् । हे प्रिये ! अधुना दुहितुर्वरान्तरेण पर्याप्तम्। इत्यालोच्य अन्धकवृष्णिना निजपुत्रो धरणनामा शिक्षा दत्त्वा हस्तिनापुरे कुन्त्या समं प्रहितः। धरणोऽपि अविच्छिन्नप्रयाणैर्हस्तिनापुरपरिसरं प्राप। तदा गाङ्गेयः संमुखमागात्, उभावपि संमिलितौ, गाङ्गेयः पुरीपरिसरे रम्यस्थाने निजावासान् तस्मै ददौ। ततो रागिणी कुन्ती सानुरागेण पाण्डुना समं धरणः पर्यणाययत् । कृते पाणिग्रहणे पाण्डवे यद्दत्तं तदाह ।

यथा—

"दत्तं दन्तावलशतं शतानि दश वाजिनाम् ।
वराय पाण्डवे तेन पाणिमोचनपर्वणि" ॥ १ ॥

एवं विवाहकार्याणि कृत्वा धरण. पाण्डोः सत्कारं सम्प्राप्य स्वस्थानमगमत् । अथ देवकराजपुत्री कुमुद्वतीनाम्नी विदुरेण समं गाङ्गेय उदवाहयत् । पुनरपि पाण्डुराट् द्वितीयां पत्नी मद्रराजसुतां माद्रीनाम्नीमुपायत । पाण्डुः कुन्तीमाद्रीभ्यां सह

वैषयिकं सुखं भेजे कामो रतिप्रीतिभ्यामिव। एवं राज्यं पालयतोऽपि भीष्मधृतराष्ट्रयोरुपरि पाण्डोरनुत्तरा भक्तिरभवत्। तयोश्च तस्मिन् प्रीतिरभूत्। एवं तेषां त्रयाणां भ्रातॄणां सुखान्यनुभवतां वसन्तर्तुः समागात्। वने गत्वा स्वैरं क्रीडन्ति स्म।

यथा–

"प्रेयसीभिः समं ताभिः काननेषु कदाचन।
स्वैरं ते विहरन्ति स्म स्मरादेशवशंवदाः॥ १॥
मालाकारोपनीतेषु पुष्पाकल्पेष्वनेकशः।
तासां दूरमनास्थाभून्न ते हि प्रियकर्तृकाः॥ २॥
श्रान्ता वनविहारेण जलकेलिचिकीर्षया।
क्रीडावापीषु रम्यासु ते च तेरुः प्रियान्विताः॥ ३॥
सौधे कदाचन कदाचन काननेषु
वाप्यां कदाचन कदाचन केलिशैले।
पञ्चेषुसायकसहाः सह वल्लभाभिः
सर्वर्तुचक्रमतिचक्रमुरेवमेते"॥ ४॥

इति श्रीमत्तपागच्छाधिराजभट्टारकश्री५–श्रीहीरविजयसूरिपट्टालङ्कारभट्टारकश्रीविजयसेनसूरिराज्ये पण्डितदेवविजयगणिविरचिते गद्यबन्धबन्धुरेपाण्डवचरिते पाण्डवपूर्वजवर्णनो नाम प्रथम सर्ग ॥१॥

---

अर्हम्

## अथ द्वितीयः सर्गः।

---

अथान्येद्युर्गान्धारी पत्यौ प्रीतिपरायणा गर्भं बभार शमी वह्निमिव। तस्मिन् गर्भे राज्ञी गान्धारी औद्धत्यं, मदोद्रेकं, वक्षोजयोरापीनभावं, जगदाक्रमणोत्साहं चादधात्। तथा गर्भानुभावत आननेऽप्यधिकं औज्ज्वल्यमावहते। तथा वक्षोजौ अत्यर्थं

श्यामसुखौ अजायेताम् । तथा सा धृतराष्ट्रस्याप्यतिवल्लभा बभूव । तस्या गर्भानुभावेनाऽत्युग्रैर्दोहदैर्जातं यतो द्रव्यानुरूपा हि सम्पदः । दोहदाः यथा—सा गान्धारी उग्रेण विग्रहेण मोदते, तस्या मनो निगडध्वानेन मोदं बबन्ध, तस्या हाहाकारध्वनयो धृतिं ददुः, प्रायस्तया निष्कारणं पूज्येष्वपि तिरस्कारविरसा गिरो व्यसृज्यन्त । यथा यथा तस्या गर्भः प्रौढभारं बभार, तथा तथा क्रूरकर्मसु हेवाकः पाकमागात् । तथा कुन्तीतः प्रथमं मम गर्भोऽभूदित्यपि गर्विता गान्धारी जगत्तृणमिव मन्यमाना विहरन्त्यास्ते । अथ कुन्त्यपि गान्धारीतिरस्कारजागरूकमानसक्रमा अपत्याय स्पृहावती निर्मलं जैनं धर्मं विनिर्ममे ॥

यतः—

"धर्मोऽयं धनवल्लभेषु धनदः कामार्थिनां कामदः
सौभाग्यादिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः ।
राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणां
तत्किं यन्न ददाति वाञ्छितफलं स्वर्गापवर्गावपि" ॥१॥

तथा सा पृथा भयार्तानां प्राणिनामभयोत्सवं प्रावर्त्तयत् । तथा सा साधर्मिकाणां वात्सल्यं विधिवत् व्यधत्त । तथा जिनचैत्येषु पूजां प्रावर्त्तयत् । एव सकलं धर्मकृत्यं कुर्वत्याः कुन्त्याः दिनानि यान्ति ।

"अन्येद्युः सागरं मेरु सूर्याचन्द्रमसौ श्रियम् ।
दृष्ट्वा स्वप्नानिमान् पञ्च साथ राज्ञे व्यजिज्ञपत् ॥ १ ॥
गाम्भीर्यादिगुणस्तोमसंदानितजगत्त्रयः ।
सुतस्ते भविता देवि ! तस्यै सोऽप्येवमभ्यधात्" ॥२॥

एतद्वचनं राज्ञः श्रुत्वा हृष्टा राज्ञी गर्भं बभार वसुन्धरा निधानमिव । तस्मिन् गर्भे सा कुन्ती स्तनयोरतिपीनत्वं, श्याम-

मुखत्वं च, तथा गल्लयो पाण्डुभावं धारयामास। कुन्त्याः तस्मिन् गर्भे प्रवर्द्धमाने मासत्रयान्ते एते दोहदाः प्रादुर्बभूवुः, यथा-जिनधर्मेषु आसक्तिर्जाता, सकलेऽपि पुरे अमारिप्रवर्त्तनं, कारागारविमोचनं, श्रीजिनप्रासादे पूजा। राज्ञा पाण्डुना ते सर्वेऽपि मनोरथाः पूरिताः। एवं काले याति सति सप्तदिनाधिकनवमासान्ते ज्येष्ठानक्षत्रयुते चन्द्रे मङ्गलवासरे वृश्चिकराशौ उच्चस्थेषु ग्रहेषु सुमुहूर्त्ते चक्रिजन्मयोगे राज्ञी कुन्ती सुतमसूत। तत्पुत्रं दृष्ट्वा सर्वान्तःपुरवासिनो जना दास्यश्च प्रराघास्याः भीष्मं धृतराष्ट्रं पाण्डुं विदुरं च वर्द्धयामासुः। तथाऽन्तःपुरे अम्बालिकां अम्बिकां अम्बां सत्यवतीं च सत्वरं गत्वा वर्द्धयामासुः। तैः सर्वैस्तेषां प्रीत्या दानानि दत्तानि दत्तं क्वापि निष्फलं न भवेत्।

यतः—

"पात्रे मुक्तिनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं
मित्रे प्रीतिविवर्द्धनं नरपतौ संमानदानप्रदम्।
भृत्ये भक्तिभरावहं रिपुजने वैरापहारक्षमं
भट्टादौ च यशस्करं वितरणं न क्वाप्यहो! निष्फलम्"॥१॥

तस्मिन् पुत्रे जातमात्रे एवंविधाऽऽकाशवाणी बभूव।

यथा—

"असौ सत्यवतां मुख्यः सतामग्र्यः समग्रश्रीः।
शौण्डीर्यस्थैर्यगाम्भीर्यवसतिर्विनयी नयी॥ १॥
धर्मबद्धरतिर्भूपः सार्वभौमो भविष्यति।
वार्द्धके व्रतमादाय निर्वाणं च गमिष्यति"॥२॥ (युग्मम्)

तामाकाशवाणीं श्रुत्वा सर्वेषां भीष्मादीनां महान् प्रमोदो जातः। तदा तन्नगरवासिभिः पौरलोकैः स्वयमेव महामहश्चक्रे। पाण्डोरादेशः केवलं सिद्धसाधनमभवत्। तथा स्वजनवर्गस्तस्य

पुत्रस्य प्रथमे दिवसे कुलोचितां स्थितिपतिकां करोति । तृतीये दिवसे चन्द्रसूर्ययोर्दर्शनं कारयति । षष्ठे दिवसे धर्मजागरिकां करोति । संप्राप्ते एकादशे दिवसे निवर्तिते अशुचिजातकर्मकरणे तस्य सुतस्य भीष्माद्यैः किञ्चिदङ्गलक्षणं वीक्ष्य युधि स्थिरं ज्ञात्वा युधिष्ठिर इति सार्थकं नाम निर्ममे । तथा तपोधर्मैकधुरीणायाः पृथाया जातत्वाद्धर्मपुत्र इत्यपि द्वितीयं नाम दत्तम् । तथा त्रैलोक्यविश्रुतं अजातारिरित्यपि तृतीयं नामधेयमजायत । पाण्डोरात्मजजन्मनि महीपालैः प्रहितानि विचित्राणि प्राभृतानि सहस्रशः समाजग्मुः । तथा सूर्यपुरात् कुन्त्या पितृगृहात् कोरकोऽप्युपायनमुपादाय समाययौ । सोऽप्युपायनं पुरो मुक्त्वा कुशलं पृच्छति । पाण्डुनाऽपि कुशलं पृष्टो महीतलमिलन्मौलिः कोरकोऽन्धकवृष्णेः समुद्रविजयादीनां दशार्हाणां श्रीरामकृष्णनेमिकुमारादीनां कुमाराणां च सर्वं वृत्तान्तं व्याकरोति स्म । यथा श्रूयतां देव ! राज्ञाऽन्धकवृष्णिना समुद्रविजये पुत्रे राज्यं न्यस्य स्वयं तपस्या आददे । तथा भोजवृष्णेश्च तनय उग्रसेनो मथुराराज्यं करोति । तथा समुद्रविजये स्वैरं राज्यं कुर्वाणे लघुबान्धवो वसुदेवः पूर्वोपार्जितसौभाग्यात् स्वैरं नगरे विहरन्नास्ते । परं तत्सौभाग्यान्नगरनार्यः सर्वाणि कार्याणि मुक्त्वा वसुदेवमनुचरन्ति । एकस्मिन् दिने तत्रत्यः सुभद्रनामा वणिगात्मनः पुत्रं कंसाख्यं महोद्धत वसुदेवायाऽर्पयामास । वसुदेवोऽपि कंसेन सह सकलाः कला अशिक्षत । तथा तेन सार्द्धं नगरे स्वच्छन्दं रेमे । इतश्च राजगृहे पुरे त्रिखण्डमण्डलाधीशो जरासन्धो राजा राज्यं करोति । तेन राज्ञैकस्मिन् दिने दूतमुखेनाकस्मादिदमादिष्टम् । भोः समुद्रविजय ! त्वं सिंहपुराधीशं सिंहरथं जीवग्राहं गृहीत्वा पाप्मानं बद्ध्वा इहानय । सिंहरथे आनीतेऽहं तुभ्यं जीवयशसं सुतां दास्यामि, तथा करमोचने मनोऽभीष्टमेकं नगरं दास्यामि । एतत्

दूतवचनं श्रुत्वा हृष्टः समुद्रविजयस्तं दूतं संमान्य धनकनकादिभिः संपूज्य विसृज्य च स्वयं सिंहराज्ञः उपरि यावत् प्रतस्थे, तावत् वसुदेवो लघुबान्धवो बभाषे। हे राजेन्द्र! सिंहस्य राज्ञ उपरि तव गमनं युक्तं न। अहं तव सेवकः स्वयं तत्र गत्वा तं बद्ध्वा समानेष्ये। ततः सबलसैन्यपरिवृतो वसुदेवः कंसेन सारथिना सह जग्मिवान्। तत्र गत्वा सिंहेन समं युद्धं कृत्वा सिंहं बद्ध्वा जयं लब्ध्वा च क्षेमेण स्वपुरमगमत्। राज्ञा समुद्रविजयेन पुरे महामहोत्सवः कारितः, वसुदेवेन सिंहो राज्ञे समर्पितः। अथ समुद्रविजयं सानुजं राजगृहे यान्तं दृष्ट्वाऽष्टाङ्गनिमित्तज्ञः क्रोष्टुकिनामा नैमित्तिको रहस्येवमभाषिष्ट। एषा जरासन्धराज्ञः सुता पितृश्वशुरयोः कुलक्षयकारिणी। अतो भवता न ग्राह्या, किं त्वेषा कंसस्य देया। विसृष्टो नैमित्तिकः। स वृत्तान्तो राज्ञा वसुदेवाय प्रोक्तः। वसुदेवस्तं श्रुत्वा पाणिग्रहणे मन्दादरो जातः सन् राज्ञ एवं व्यज्ञापयत्। यथेयं कन्याऽन्यं परिणयति तथोपायो मे स्मृतोऽस्ति, तं शृणु। यथा हे स्वामिन्! तवादेशादहं सिंहपुरे गतः। एष सिंहरथः पुरान्निर्गतः कन्दरात् केसरीव मत्सैन्यान् गजानिव त्रासयामास। तत् पलायमानं स्वसैन्यं दृष्ट्वाऽहं संमुखं गतः, एषोऽपि मां दृष्ट्वा भृशं युयुधे तावता मत्सेवकेन कंसाख्येन सारथिना रथादुत्तीर्यैष बद्धः, तर्हि प्रभो! त्वत्सुता जीवयशाः कंसायाऽस्तु। समुद्रविजयेनोक्तं कोऽयं कंसः ?। वसुदेवेनोक्तं वणिजा दत्तः। तर्हि वणिक्पुत्रायाऽस्मै जरासन्धः स्वां पुत्रीं कथं दास्यति ?, इति वार्त्ताव्यतिकरे जायमाने कंसं सेवार्थमागतं दृष्ट्वा वसुदेवो राज्ञे सोऽयं कंस इत्यकथयत्। तमालोक्य समुद्रविजयेनोक्तम्—

"अत्यद्भुतोऽयमाकारः सुलभो न वणिक्कुले।
ततोऽस्य पितरं पृष्ट्वा क्रियते कुलनिर्णयः ॥ १ ॥

अथाहूय महीभर्त्रा पृष्टः शपथपूर्वकम् ।
सुभद्रः सत्यमाचख्यौ सर्वं कंसस्य पश्यतः" ॥ २ ॥

हे राजन् ! एकदाऽहं यमुनायां शौचार्थमीयिवान्। तत्राऽहं यमुनायां अनुस्रोतोवहन्ती कास्यमञ्जूषामपश्यम् । तां पेटां समादाय यावताऽहं गृहे समागाम् । तावता मया पेटायामेष सुतो दृष्टः, सुतहस्ते बद्धैषा मुद्रिका उग्रसेननामाङ्किता एषा पत्रिका दृष्टा वाचिता च ।

यथा—

"उग्रसेनसधर्मिण्या धारिण्या गर्भकर्तृकः ।
अभवद्दोहदो भर्तृमांसभक्षणलक्षणः ॥ १ ॥
कथञ्चित्पूरिते तस्मिन्नमात्यैर्मतिशालिभिः ।
पौषे कृष्णचतुर्दश्यां विष्टौ सूनुरजायत" ॥२॥

तद्दोहदानुभावेन जनकवैरिणं ज्ञात्वा कांस्यपेटायां प्रक्षिप्य यमुनाप्रवाहे प्रवाहितः। ततः सोऽयं बालक उग्रसेनात्मजो ज्ञातव्य.। ततः समुद्रविजयः प्रोचे । अस्मद्गोत्रं विनाऽन्यस्येदृशं बलं कथं स्यात् ?। ततः कंसेन सह समुद्रविजयो राजगृहं जगाम । ततः मगधेशितुः पुरः सिंहरथं मुमोच, अयमनेन कंसेन बद्ध इत्युक्तवांश्च। ततस्तं राजपुत्रं ज्ञात्वा मगधेश्वरः कंसाय स्वां पुत्रीं जीवयशसं ददौ । यतो महात्मनां प्रतिपन्नं युगान्तेऽप्यन्यथा न भवति । उग्रसेनद्वेषात् कंसेन मार्गिता मथुराऽपि दत्ता । राजा सिंहरथोऽप्युत्खातप्रतिरोपित इव कंससेवकीकृतः । सोऽपि कंससेवां कुर्वन्नास्ते । ततः संमान्य प्रेषितः कंसो जरासन्धसैन्यसमेतः मथुरां प्रति चचाल । कंससैन्यं समागतं श्रुत्वा उग्रसेनोऽपि राजा उग्राभिः सेनाभिः परिवृतोऽभिमुखः समागात्। द्वयोरपि सैन्ययोर्महान् संग्रामः संजज्ञे । परं कंसेनोग्रसेनो महानपि जितः ।

पितरं बद्ध्वा पूर्ववैरात् काष्ठपञ्जरे क्षिप्तः। तथा सुभद्रनामा वणिक् शौर्यपुरादानाय्य महत्या ऋद्ध्या संपूज्य पितृपदे स्थापितः, कृतज्ञत्वात्।

यतः—

"प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नालिकेरा नराणाम्।
उदकममृततुल्यं दद्युराजीवितान्तं
नहि कृतमुपकारं साधवो विस्मरन्ति ॥१॥

दो पुरिसे धरउ धरा अहवा दोहि वि[2] धारिया धरणी।
उवयारे जस्स मई उवयरियं जो न पम्हुसेइ"[1] ॥२॥

हारितोऽप्युग्रसेनः पुत्रेण जितत्वात् भृशं मुदमावहते। कंसोऽपि मथुराराज्यं कुर्वन् विहरति स्म। इतश्च वसुदेवः केलिशैलेषु, प्रासादेषु, वनेषु, वापीसरोवरादिषु यदृच्छया विजहार। पौराङ्गनाभिर्विलोक्यमानः स्तूयमानश्चतुरक्षरो मंत्र इव ध्यायमानोऽभूत्। एकस्मिन् दिने पौरैरेत्य राजा समुद्रविजय एवं विज्ञापितः। हे राजन्! त्वय्यपि नाथे वयमत्यन्तदुःखिताः। राज्ञोक्तं किं दुःखम्?। लोकेनोक्तं देव! तव भ्राता वसुदेवो देवरूपः कन्दर्पस्वरूपेण जनान् विस्माययति। नगरनार्यो यं व्रजन्तं दृष्ट्वा गृहाणि शून्यानि त्यक्त्वाऽनुधावन्ति। ततो निवार्यतां वसुदेवो नगरे भ्रमन् यथा वयं सुखेन तिष्ठामः। स राजा समुद्रविजयस्तान् सर्वान् लोकान् प्रीत्या सान्त्वयित्वा विसृज्य वसुदेवं समाहूय एवं समादिशत्। वत्स! नगरे स्वेच्छया भ्रमन् त्वं दुर्बलो जातः। अतस्त्वं सौधस्थ एव कलाभ्यासं कुरु। सोऽपि राज्ञो वचनं

---

१ द्वौ पुरुषौ धरतु धराऽथवा द्वाभ्यामपि धारिता धरणी।
उपकारे यस्य मतिरुपकृतं यो न विस्मरति ॥ २ ॥

२ दोहि वि पुरिसेहि इत्यपि पाठः।

प्रतिपद्य सौधस्थ एव मित्रैः सह रेमे। अथान्यदा काचन दासी विलेपनकरा अन्तःपुरादायान्ती वसुदेवेन पृष्टा। हे सुन्दरि! कि ते हस्ते?। दास्योक्तं चन्दनम्। केन प्रेषितम्?। शिवादेव्या राज्या प्रियसमुद्रविजयकृते प्रेषितम्। वसुदेवो हास्यलीलया तत्कराच्चन्दनं गृहीत्वा स्वशरीरे स्वय विलिलेप। ततः कुपिता दासी वसुदेवमेवं जगाद। सत्यं, राज्ञा सौधमध्ये निरुद्धोऽसि मिषं कृत्वा पञ्जरे सिंहशाव इव। सा कुमारेण पृष्टा। हे सुन्दरि! कि निरोधकारणम्?। तयाऽपि सर्वः पौरलोकवृत्तान्तो निवेदित'। तच्छ्रुत्वा म्लानमुखो वसुदेवः कथमपि दिवसमतिक्रम्य निशायामेकाक्येव खड्गसहायो निर्गत्य श्मशानं गतः। तत्रानाथमृतकं चितायां प्रक्षिप्याग्निना प्रज्वाल्य तच्चितासमीपे एकं लम्बमान पत्र स्वहस्तलिखितं बद्ध्वा स्वय पूर्वस्यां दिशि प्रचचाल। प्रातस्तूर्यनिर्घोषैर्जागरितो राजा वसुदेवं समाह्वयत्। स च सेवकैः सर्वत्र विलोकितः परं क्वापि न लब्धः। ततः स्वयमेव विलोकनाय निर्गतो राजा यावता प्रतोलीसमीपे श्मशाने गतः, तावत्तत्पत्रं लम्बमानं दृष्टम्। तद्-गृहीत्वा वाचयामास।

यथा--

"पुंसो यस्य गुरून् यावदुपालम्भ. प्रवर्त्तते।
तस्य श्रेयस्करो मृत्युर्जीवितं तु त्रपाकरम् ॥१॥
ततः शौरिः कृतोद्वेगो गुरूणामगुणैकभूः।
विरचय्य चितामत्र कृशानुमविशत् स्वयम्" ॥२॥

एव पत्र वाचयित्वा राजा मूर्छामगमत्। यतो भ्रातरं विपन्नं दृष्ट्वा को हि मूर्छां नाप्नोति?। अत्र शोकवर्णनम्-लब्धचैतन्यो राजा इति व्यलपत्। हा वत्स! गुरुवत्सल! अस्माकं शोकं दत्त्वा त्वं कुत्र गतः?। हे भाग्यैकभूः! माताऽपि रोदिति। हा मातृवत्सल! हा गुणमणिरोहणेति। तस्मिन् समये गीतशालासु गीतम्, लास्यं

लास्यशालासु, शौरिवेश्मनि क्वापि तूर्यध्वनिर्वा नास्ति। एवं काले याति कियन्ति वर्षाण्यऽतिचक्रमुः। एकस्मिन् दिने क्रोष्टुकिः किञ्चिन्निमित्त दृष्ट्वा अष्टाङ्गयोगनिमित्तज्ञः समुद्रविजयं राजानमेव बभाषे। भो राजन्! तव सहोदरो वसुदेवोऽद्यापि जीवन् निरामयो वर्त्तते। एवं नैमित्तिकगिरमाकर्ण्य भूयोऽपि राजकार्येषु राजा प्रावर्त्तत। इतश्चारिष्टपुराधीशेन रुधिरराज्ञा निजपुत्र्या रोहिण्याः स्वयम्वरः प्रारब्धः। तस्मिन् स्वयंवरेऽनेके राजानो जरासन्धाद्याः समाहूताः। तत्र समुद्रविजयोऽपि निमन्त्रितः, सोऽपि बन्धुभिः सार्द्धं महत्या ऋद्ध्या तत्रा‌ययौ। तत्र स्वयम्वरे सर्वे राजान उच्चेषु मञ्चेषूपविष्टाः शोभन्ते, पालके विमाने वैमानिकदेवा इव। तत्र स्वयवरे धात्र्या सङ्कीर्त्तितगुणा राजानो गर्वपर्वतोपमाः स्वाङ्गे न ममुः, परं रोहिण्या नैकोऽपि रुरुचे। तत्र तया सर्वान् राज्ञो मुक्त्वैकः पटहवादको वृतः। यतस्तेन पटहे वाद्यमाने प्रकटाक्षरमेवं वादितम्। हे सुन्दरि! तव गुणैः क्रीतोऽहम्, त्वं मां वृणुष्व। तच्छ्रुत्वा रोहिण्या पटहवादको वृतः। तस्य कुब्जाकृतेरपि कण्ठे वरमाला निचिक्षिपे। तस्मिन् पाणविके वृते सर्वे राजान. कृतकोलाहला जरासन्धाज्ञया योद्धुमुपचक्रमिरे। रुधिरो राजा पाणविकपक्षे भूत्वा प्रत्यर्थिभूपालैः सह युद्धं चक्रे। पाणविकोऽपि विद्याधरोपनीतं रथं समारुह्य नभश्चरोपनीतेनायुधेन कृत्वा भूपालैः सह युयुधे। राजा जरासन्धस्तं अबलं सबलं वीक्ष्य, तथा तमेकमनेकधा संग्रामे दुर्जयं ज्ञात्वा, समुद्रविजयं राजानं समादिशत्। भोः समुद्रविजय! एनं तूर्यवादकं मारय। ततश्शौर्यपुराधीशः सबलवाहनो रणरङ्गतत्परः संग्रामाय स्वयं ढुढौके। वसुदेवोऽपि रुधिरराजसैन्यसमावृतो भृश युयुधे। तस्मिन्नवसरे जयलक्ष्म्या दोलायितं अनयोर्मध्ये कं राजानं वृणोमीति। विस्मितः समुद्रविजयस्तस्य पराक्रमं दृष्ट्वा

किमेष देवो वा, दानवो वा, विद्याधरो वा । येन मे सर्वं सैन्यं भग्नम् । तदा वसुदेवेन समुद्रविजयो दृष्टः । पश्चाद्वसुदेवेन नामाङ्कित बाणं प्रहितम् । तद्बाणं सेवकमिव पादाग्रे पतितं दृष्ट्वा समुद्रविजयस्तं बाणं कौतुकेन गृहीत्वा तामक्षरावली वाचयामास ।

यथा--

"शवदाहमयं छद्म कृत्वाऽगाद्यः पुरात् पुरा ।
स ते पादाम्बुजं देव ! वसुदेवो नमस्यति" ॥१॥

तदक्षरावली वाचयित्वा स्यन्दनं मुक्त्वा साश्रुलोचनः समुद्रविजयः संमुखमागात् । वसुदेवोऽपि हर्षाश्रुलोचनस्तथैव वेगादागत्य समुद्रविजयपादौ ववन्दे । ततो द्वावपि निर्गमनदिनादारभ्य शतवर्षान्ते संमिलितौ । सर्वेऽपि राजानो रुधिरादयः, तथा जरासन्धादयश्च चमत्कारमापन्नाः । ततो रुधिरेण रोहिणीवसुदेवयोर्विवाहश्चक्रे । कृतविवाहो वसुदेवः स्वदेशागमनाय समुद्रविजयेनाहूतः । ततो वसुदेवः समुद्रविजयं प्रोवाच । हे देव ! त्वं स्वस्थानं याहि, अहं कतिपयकालान्ते समेष्यामि । यतो भवतः स्नुषाः शतशः सन्ति नरखेचरकन्यकास्ताः शीघ्रमादाय भवत्क्रमौ प्रणन्ताऽस्मि । एवमुक्त्वा समुद्रविजयमापृच्छ्य वसुदेवः उत्तरां दिशं जगाम । सपरिवारः समुद्रविजयः स्वां पुरीं समाययौ । तेऽपि सर्वे राजानो जरासन्धाद्या रुधिरेण राज्ञा पूजिताः संमानिताः स्वं स्वं स्थानं जग्मुः । शौरिः समुद्रविजयः प्रत्यहं वसुदेवगुणान् गायन्, वसुदेवसौभाग्यं वर्णयन्, संमुदा समयं गमयन्, एकस्मिन् दिने उत्तरस्यां दिशि तूर्यनिःस्वनं शुश्राव । दृशौ व्यापारयन् विद्याधरविमानश्रेणीं ददर्श । तन्मध्यात् केनचिन्नभश्चरेणागत्य विज्ञप्तम् । देव ! विमानैर्वृतो वसुदेवः समायाति, एवं यावत् कथयति तावत् समागतां विमानश्रेणीं विलोक्य समुद्रविजयो मुमुदे । ततो राजा उत्तुङ्गतोरणश्रेणिशोभितमुत्पताकं नगरं विधाय

संमुखमगात् । ततो वसुदेवो विमानादुत्तीर्य पादयोः पतित्वा भृशमालिलिङ्ग । समुद्रविजयोऽपि लघुबान्धवं बहुदिनान्ते मिलितमुत्सङ्गे निवेश्य, दृष्टिदोषापनोदाय मूर्द्ध्नि चुचुम्ब । ततो द्वावपि भ्रातरौ इन्द्रोपेन्द्राविव पुरं प्राविशताम् । इतो मथुरातः संस्मृतसौहृदः कंसः समागत्य अन्यराजन्यकृतमहाजित्वरं शौरेर्महामहं चक्रे । तथा समुद्रविजयमनुज्ञाप्य कंसो वसुदेवं शुश्रूषणेच्छया मथुरामनयत्। तत्र गत्वा कानिचिद्दिनानि शुश्रूषां कृत्वा निजपितृव्यस्य देवकस्य पुत्री देवकी सुरूपामनुरूपेण शौरिणा सार्द्धं कंसः पर्यणाययत् । देवक्याः करमोचने राज्ञा देवकेन गजा', अश्वाश्च दत्ताः, तथैकलक्षगोसमेतं गोकुलं दत्त, तद्रक्षको नन्दगोकुली दत्तः, तस्य भार्या यशोदा । ततो वसुदेवो देवकीं लात्वा गोकुलसमेतः कंसराज्ञा सहितो मथुरां पुरीमागात् । मथुरामागत्य कंसेन वसुदेवदेवक्योरुत्सवे क्रियमाणे कंसबन्धुरतिमुक्तकनामा मुनिर्भिक्षार्थी मासक्षपणपारणे कंसगृहे समागात् । तदानीं कंसपत्नी जीवयशा यौवनोन्मादमेदुरा मुनेः संमुखी अभवत् । कथंभूता शिथिलधम्मिल्ला, स्रस्तस्तनांशुका, मदोत्कटा । अत एव कटीतटात् स्रस्तदुकूला रक्तलोचना काममोहिता जीवयशा दोर्भ्यां मुनेः कण्ठ समालिङ्ग्य एवमवादीत्। एहि देवर ! नृत्यावः तव स्वसुर्महोत्सवे आवां क्रीडावः । मुनिनोक्तं आः पापे ! किं जल्पसि ?, शृण्वेकं मद्वचः ।

यथा—

"यद्विवाहोत्सवे मत्ता नृत्यस्यत्यन्तगर्विता ।
तस्याः सप्तमगर्भेण तव घातिष्यते पतिः" ॥१॥

एवं मुनिनोक्त वचः श्रुत्वाऽऽर्त्तध्यानवशंगतया वित्रासितमदया मुनिकण्ठो मुक्तः । मुनिः स्वस्थानं गतः । साऽपि कंससमीपे गता भृशमाकुला मुनिनोक्तं सर्वमाचख्यौ । तच्छ्रुत्वा

भीतः कंसः । यतो मरणसमं भयं नास्ति ।

यथा--

"पंथसमा नत्थि जरा दारिद्दसमो पराभवो नत्थि ।
मरणसमं नत्थि भयं खुहा समा वेयणा नत्थि" ॥१॥

मरणभयभीतेन कंसेन भार्या वारिता, त्वं तूष्णीका भव । अहं तथा यतिष्ये यथा मम कुशलं भविष्यति। एवं दिनानि यान्ति । एकस्मिन् दिने वसुदेवकंसौ क्रीडापरायणौ वर्त्तेते । क्रीडां कृत्वा तोषितो वसुदेवः । ततः कंसेनोक्तम् । भो बांधवाहं तव समीपे किञ्चिद् याचे । वसुदेवेनोक्तं याचस्व । कंसेनोक्तं यदि याच्यं लभे तर्हि देवक्याः सप्त पुत्रास्ते मे भवन्तु । वसुदेवेन चिन्तितं बलभद्राद्या मे पुत्रा बहवः सन्ति । कंसोऽपि मम पुत्रैः पुत्रवान् भवतु । एषोऽपि मम पुत्रान् पुत्रवल्लालयिष्यतीति प्रियया सममालोच्य कंसोक्तं प्रतिपन्नवान् । यतो यद्भावि तद्भवत्येव । वसुदेवेन देवक्याः षडपि पुत्रा दत्ताः । कंसेन दुरात्मना ते सर्वेऽपि शिलास्फालनेन निपातिताः । तद्वार्त्तां जनमुखाच्छ्रुत्वा वसुदेवदेवक्योर्महान् खेदोऽभूत् । पुत्रप्रेम्णा के के न मोहिताः ? ।

यतः--

"गोभद्रः सगरस्तथा दशरथः श्रीमान् नृपः श्रेणिको
नागाख्यो रथिकः प्रसन्ननृपतिर्धात्रीधवः कोणिकः ।
ज्ञानाढ्यो हरिभद्रसूरिमुनिपः सूरिश्च शय्यंभवः
पुत्रप्रेमणि मोहिता भुवि न के गाम्भीर्यभाजोऽपि हि ?" ॥१॥

अथान्यदा देवकी अर्द्धरात्रौ सप्तमे गर्भे गते सप्त स्वप्नानद्राक्षीत्, यथा--गजो, वृषभ , सिंहः, लक्ष्मीः, पुष्पमाला, शशी,

---

१ पथसमा नास्ति जरा दारिद्र्यसम पराभवो नास्ति ।
मरणसम नास्ति भय क्षुत्समा वेदना नास्ति ॥ १ ॥

दिनकरश्चेति । दृष्ट्वा जागरिता देवकी चिन्तयति । एते स्वप्ना भरतार्द्धपतिपुत्रोत्पादकाः, तर्हि पत्युः शंसयामीति शीघ्रं गत्वा वसुदेवाग्रे प्रोक्तम् । भर्त्रा प्रोक्तं ते वासुदेवः पुत्रो भावी, तद्दिनाद्देवकी गर्भं बभार, परं चिन्ताऽऽतुरा देवकी वसुदेवं जगाद । हे प्राणेश ! एष सप्तमो गर्भः कंसेन व्यापादयिष्यते । शौरिर्वल्लभामभाषत, हे प्रियेऽहं जीवन्नपि मृतप्रायः, यतो मे पश्यतः कंसो मत्सुतान् पशुवज्जघान । असौ तनयः कंसराक्षसात् मया कथं रक्षणीयः ? । देवक्या प्रोक्तं स्वामिन् ! चिन्तां मा विधेहि दैवो बलवान् ।

यतः--

"सा सा संपद्यते बुद्धिः सा मतिः सा च भावना ।
सहायास्तादृशा ज्ञेया यादृशी भवितव्यता ॥ १ ॥
आनयत्यपि दूरस्थं करस्थमपि नाशयेत् ।
महेन्द्रजालतुल्या हि विचित्रा गतयो विधेः" ॥ २ ॥

वसुदेवो जगाद देवि ! मया पुत्ररक्षोपायो लब्धः । मम गोकुलाधिपो नन्दो यशोदासहितस्तव पुत्ररक्षको भविष्यति । तथा ते पुत्ररत्नं यत्नेन वर्द्धयिष्यति । अत्रार्थे दैवो बलवान् इति पत्याऽऽश्वासिता देवकी संपूरितसुदोहदा गर्भं बभार । कंसोऽथात्मपुरुषैः सप्तमगर्भस्य विशेषतो रक्षां करोति स्म । सम्पूर्णे मासि प्रभाजालमालिनं श्रीवत्साङ्कितवक्षसं श्रावणसिताष्टम्या लोकोत्तरे लग्ने वहमाने रात्रौ भरतार्द्धपतिदेवताऽधिष्ठितं देवकी पुत्ररत्नं सुषुवे । तत्र कृष्णजन्मग्रहे स्थापिता ये कंसपदातयस्ते भरतार्द्धदेवीभिस्तदा निद्रामानिन्यिरे । तान् निद्रागतान् दृष्ट्वा देवकी वसुदेवमाजूहवत् । दत्तो बालकः, सोऽपि बालकमादाय गोकुलं प्रति प्रतस्थे । देवैरुद्द्योते क्रियमाणे, देवैरातपत्रे ध्रियमाणे, देवैश्चामरे वीज्यमाने, पदे पदे कृष्णशिरसि पुष्पवर्षणे विरच्यमाने, कृष्णं गोपुरद्वारं नयन्

उपरितनभूमिस्थितेन उग्रसेनेनाभाणि"। भो वसुदेव ! किमेतद् दृश्यते ?। वसुदेवेनोक्तमेष देवक्याः सप्तमो गर्भो यो मुनिनोक्तः, पुनर्यस्त्वां काष्ठपञ्जरान्मोचयिता। सोऽयं बालो नेत्रविशालस्त्वया विज्ञेयः। उग्रसेनेनोक्तं तर्हि शीघ्रं याहि, मा विलम्बस्व। सोऽपि बालमादाय यमुनामागत्य शिशोरनुभावात् शीघ्र यमुनामुत्तीर्य गोकुलं गतः, तदैव यशोदा नन्दगेहिनी तनयां जनयाञ्चक्रे। स्वतनयं तस्याः समीपे मुक्त्वा तां पुत्रीं समादाय कृतकृत्यस्त्वरितं स्वस्थानमगमत्। तां बालिका देवक्याः समीपे मुमोच। तदैव ते कंसपदातयो जागरिताः। पुनस्तैः पृष्टं देवक्याः किं जातम् ?, वसुदेवेनोक्तमेषा बालिका जाता। तेऽपि तां बालिकामुपादाय कंसाग्रे निन्युः। कंसोऽपि निरादर ऊचे। एषा वराकिका किं मां हनिष्यतीत्युक्त्वा लूननासिकां तां कृत्वा कंसो देवक्याः पुनरार्पयत्। तद्दिनादारभ्य कंस स्वस्थमना अस्थात्। अथ तेन बालेन तद्गोकुलं कान्तिमदभूत्। अथ द्वादशे दिने नन्दयशोदाभ्यां बालस्य कृष्णवर्णत्वात् कृष्ण इति नाम विदधे। सर्वा गोपवध्वस्तं बालं विस्मिताः सत्यः लालयन्ति स्म। यशोदया पाल्यमानो बालो गोकुले वर्द्धे, नन्दने कल्पद्रुरिव। स बालो गोपवधूनां हस्ताद्धस्तं सञ्चरन्नत्यन्तवल्लभोऽभूत्। अथ देवकी तनयाऽऽलोकनोत्सुका किञ्चित् किञ्चिदुत्सवमुद्दिश्यान्तराऽन्तरा कृष्णस्नेहात् गोकुले अगमत्। साऽपि विविधोल्लापपण्डिता प्रस्नुतस्तनी तं बालमुल्लापयाञ्चक्रे। नूनमहमभाग्याऽनेन पुत्रेण त्यक्ता, किं करोमि ?। हे यशोदे ! त्वं धन्या, त्वं त्रिभुवनस्त्रीणामुपरि वर्त्तसे। यतोऽनेन पुत्रेण तवोत्सङ्गोऽलङ्कृतः। एवं गोकुलं, यशोदां च प्रशंस्य देवकी मथुरां ययौ। अथ पूर्ववैरं स्मृत्वा पूतनाशकुनिविद्याधर्यौ उपागत्य विष्णुं भीषयामासतुः, तदा कृष्णाधिष्ठातृदेवतया ते निधनं निन्याते। एवं कृष्णो बाहुभ्यां रिङ्खन्, सिंहकिशोरवत

क्रीडन्, दधिदुग्धभाण्डानि लोठयन्, गोकुले विचचार। एवं क्रमेण वर्द्धमानः सप्ताष्टहायनो निजयशोभिर्दिशो व्यानशे, केतक्यामोदेनेव। तैस्तैर्लोकोत्तरैर्गुणैर्नन्दनन्दन इदानीं गोकुले वर्द्धते इति लोकोक्तकीर्त्तिकोलाहल श्रुत्वा वसुदेवः कृष्णहिताय बलदेवं प्राहिणोत्। कृष्णोऽपि बलदेवान्तिके सकलाः कला अध्यगीष्ट। अतो बलभद्रः कृष्णस्य उपाध्यायो बन्धुश्च द्वयमप्यऽभूत्। अथ ता गोपवध्वः पञ्चबाणेन ताडितास्तं कामरूपिणं ज्ञात्वा कृष्णमेव सिषेविरे।

यथा—

"काश्चिदत्युच्चरोमाञ्चाः सानन्दाश्चन्दनद्रवैः।
मांसलेऽसस्थले तस्य लिलिखुः पत्रवल्लरीः" ॥ १ ॥

एवं काश्चन शिखिपिच्छैर्मुकुटं चक्रुः, काश्चन कुसुमदामभिर्वक्षःस्थलमलञ्चक्रुः, काश्चन गोप्यो मण्डलीबन्धबन्धुरं प्रदत्ततालमुन्मीलल्लीलं हल्लीसकं जगुः। एव कृष्णो गोपालबालिकाभिर्लालितो बलदेवेन पालितो गोकुले कालमत्यगात्। इतश्च श्रीशिवादेवी राज्ञः समुद्रविजयस्य पट्टराज्ञी शौर्यपुरे नगरे कार्त्तिके मासि कृष्णद्वादश्यां तिथौ निशाद्वितीयप्रहरसमये चित्रागते चन्द्रे इमाश्चतुर्दश महास्वप्नान् तीर्थकृज्जन्मसूचकानद्राक्षीत्। ततो जागरिता राज्ञी प्रीतिमाप। तत उत्थाय देवी राज्ञ. समीपमागता एवं जगाद, स्वामिन्! मयैते स्वप्ना दृष्टाः।

यथा—

"[1]गयवसहसीहअभिसेअदामससिदिणयरं झयं कुम्भं।
पउमसरसागरविमाणभवणरयणुच्चयासिहि च" ॥ १ ॥

---

१ गजवृषभसिंहाभिषेकदामशशिदिनकर ध्वज कुम्भम्।
पद्मसरस्सागरविमानभवनरत्नोच्चयाशिखिन च ॥ १ ॥

... ीन्! एतेषां स्वप्नानां मम किंफलं भविष्यति ? । राज्ञोक्तं तव महान् पुत्रो भावी, इत्युक्त्वा विसृष्टा स्वस्थानमागता देवगुरुकथाभिः शेषरात्रिं गमयामास । अथ प्रभाते जायमाने राजा क्रोष्टुकिप्रमुखान्नैमित्तिकानाहूय स्वप्नफलं पप्रच्छ । ततो विचार्य नैमित्तिकोऽवदत् । राजन् ! तीर्थङ्कराणां जननी एतान् स्वप्नान् निरीक्षते । अतो लोकोत्तरप्रभावस्ते तीर्थङ्करः सुतो भावी इति श्रुत्वा राजा राज्ञी द्वावपि पीवरां प्रीतिमापतुः । तान्नैमित्तिकान् बहुद्रव्यदानेन तोषयित्वा राजा राज्ञी च व्यसृजताम् । तद्गर्भानुभावतो देवी लावण्यं लेभे, तथा सुदोहदान् लेभे, राजा उदयं लेभे, देशो विघ्न-ध्वंसं लेभे । अथ श्रावणश्वेतपञ्चम्यां चित्रागते चन्द्रे सौम्यग्रहैर्दृष्टे लग्ने शिवाराज्ञी सुतमसूत । तदानीं षट्पञ्चाशद्दिक्कुमारीभिस्तस्याः सूतिकर्म विनिर्ममे, तथा चतुःषष्टिसुरेश्वरैरपि सुमेरौ स्नात्रं चक्रे, तथा देवैर्यादवेन्द्रस्य समुद्रविजयस्य सौधं धनधान्यै रत्नौघैश्चापूर्यत, तथा तस्य पुत्रस्य जन्मोत्सवे राजा कारागारमशोधयत्, तथाऽमारिं चाघोषयत्, तथा दश दिनानि यावद्राजा तस्य कुलोचिता स्थितिपतिकां करोति स्म । द्वादशे दिवसे मातापितरौ तस्य पुत्रस्याऽरिष्टनेमिरिति नाम चक्राते । शौरिणा, समुद्रविजयेन च कृष्णे जाते तथा नोत्सवश्चक्रे, यथा नेमौ जाते महामहश्चक्रे । एवं सुखेन दिनानि यान्ति । एतत् सर्वं कोरकेणोक्तं कुन्त्यग्रे, हे कुन्ति ! एतत् सर्वं मया चक्षुषा दृष्टम् । पुनः कोरकोऽवादीत्, एकस्मिन् दिने कंसो देवकीं द्रष्टुं वसुदेवगृहे गतः, तत्र च्छिन्ननासिकां कन्यां क्रीडन्तीमुदैक्षत । तामालोक्य मुनेर्वाक्यं स्मृत्वा भयातुरोऽभूत् ।

यतः--

"पंथसमा नत्थि जरा दारिद्दसमो पराभवो नत्थि ।
मरणसमं नत्थि भय खुहा समा वेयणा नत्थि" ॥१॥

स कंसः सौधमेत्य गूढः नैमित्तिकं पप्रच्छ। भो नैमित्तिक! मुनिनोक्तं तत् सत्यं वा, असत्यं वा?; यद् भावि, तद् ब्रूहि। नैमित्तिकेनोक्तम्, देवक्याः सप्तमो गर्भस्तवारातिर्जीवति, त्वं ततो मृत्युमवाप्स्यसि, यत् मुनिनोक्तं तत् सत्यमेव। कंसेनोक्तम्, स ममारातिः कथं ज्ञास्यते?। नैमित्तिकः प्राह। भोः कंसराजेन्द्र! यस्तव दुष्टारिष्टनामवृषभहन्ता स ते हन्ता १ यः केशिसञ्ज्ञकशूकलाश्वहन्ता स ते हन्ता २ यस्तव चाणूरमल्लहन्ता स ते हन्ता ३ यौ तव पद्मोत्तरचम्पकनामानौ गजौ वर्त्तेते, तयोर्यो हन्ता स ते हन्ता ४ योऽपरैर्जनैर्दुःस्पर्श एवंविधं शार्ङ्गधनुस्तस्य ज्यारोपणकर्त्ता स ते प्राणहर्ता ५ यः कालिन्द्यां नद्यां कालियो नाम्ना पन्नगस्तस्य वशीकर्ता स तवापि प्राणहर्ता ६। हे राजेन्द्र! एतत्सर्वं पुरा विशिष्टज्ञानवद्भिर्मुनिवरैराख्यातं तन्मयाप्युक्तम्। परमेतत् सर्वं सत्यं ज्ञेयम्। तच्छ्रुत्वा भीतः कंसः तं दानैः सन्तोष्य यत् करोति तदाह भो मन्त्रिन्! अरिष्टवृषभप्रमुखान् सुद्रव्यैः स्वैरं पोषय, यथा ते पोषिताः सन्तो मदोन्मत्तास्तं विनाशयन्ति। अथ कृष्णो गोपिकागणमध्यस्थो दिवसे धेनूनां वृन्दं वृन्दावने पालयामास। कथंभूतः कृष्णः, गोपालबालकैः परिवृतः। अथान्यदा कंसेन मुक्तौ अरिष्टकेशिनौ वृषभतुरगौ स्वेच्छया विचरन्तौ गोष्ठमुपेयतु. तत्र तौ पङ्कादीनां विमर्दनात्, पयसां पानात्, जनविमर्दनाद् गोकुलेऽस्तोक शोकं चक्रतुः। गोकुलं शोकाकुलं दृष्ट्वा नन्दो गोपानाह। भो गोपाः! कृष्णं समाह्वयत। गोपैराहूतो वनादागतो नन्दनन्दनो दुर्दमं वृषभं दृष्ट्वा धावितः शृङ्गे धृत्वा मुष्टिना हत्वा तत्कन्धरां मृणालनालवत् मोटयित्वा त यमातिथिं विदधे॥ तथैव केशिनं तुरगं गोकुलोपद्रवकारिणं दृष्ट्वा हरिर्जगाद। भोः केशिन्! सत्यपि मयि नाथेऽनाथमिव मम गोकुलं किं मथ्नासि?, इत्यादिक्षिप्तः शूकलाश्वः केशी खुरैर्मही कुद्दालयन्,

दशनैर्दशनान् पिषन्, संमुखमागात्। विष्णुरपि तस्य मुखे करं प्रक्षिप्य तं लीलया जीर्णपटवत् पाटयामास। ततो गोपवध्वस्तं कृष्णं स्वाश्चलोत्तारणैर्वर्द्धापयामासुः। ततस्तयोर्वधोदन्तश्चारनरैः शीघ्रमागत्य कंसाय निवेदितः। कंसोऽपि बृहस्पतिमान्त्रिणमूचे। भो मन्त्रिन्! ममारातिर्नन्दगोकुलेऽस्ति ततस्तद्ग्रहणोपायं विचिन्तय। मन्त्री ऊचे, देव! शार्ङ्गचापाधिरोपणमिषात् सर्वान् भूपालानाहूय एवं कथय। भो भूपालाः! शृण्वन्तु मद्वचः, य इदं शार्ङ्गचापं समारोपयिष्यति, तस्मै अहं स्वां भगिनीं सत्यभामां दास्यामि। ततश्चापारोपणकर्मणि समायातः स तवारातिस्त्वया ग्राह्यः। एवं मन्त्रिणोक्तं कंसेन सर्वं कृतम्। समाहूता राजानः सर्वेऽपि समाजग्मु। तदा वसुदेवपुत्रो बलाग्रजः अनाधृष्णिनामा शौर्यपुरात् समागत्य मथुरां गन्तुकामः उत्सूरत्वाद्रात्रौ गोकुले अवात्सीत्। स तत्र बलभद्रमनुज्ञाप्य कृष्णसहायो मथुरां चचाल। मार्गे अनाधृष्णे रथो वटद्रुमेऽस्वलत्। तद्वटद्रुमाद्रथं अनाधृष्णिः समाक्रष्टुं न समर्थः, तदा जनार्दनस्तं वटमूलादुन्मूल्य दूरेऽक्षिपत्। तं दृष्ट्वा रञ्जितः अनाधृष्णिस्तं लघुबान्धवमुत्सङ्गे निवेश्य भूयो भूयश्चुचुम्ब। पुनश्चचाल। ततो मथुरां गतः, तत्र चापमण्डपं विलोक्य उच्चस्थानेषूपविष्टः। ततस्ते सर्वे भूपालास्तं चापं चापसमीपस्थां सत्यभामां च निरीक्ष्य चिन्तयामासुः। अहो! क्वेदं चापारोपणम्, क्व चास्याः सत्यभामायाः पाणिग्रहणम्, तथापि सत्यभामापाणिग्रहणकृतमनोरथाः कलिङ्ग-बङ्ग-काश्मीर-कीर प्रभृतिपृथ्वीशाः धनुःसमीपमागम्य दुरालोकं धनुर्विलोक्य नत्वा स्वं स्वं मञ्चं पुनराययुः। अथ अनाधृष्णिस्तं राजन्यं हसित्वा धनुर्जिघृक्षया विसंस्थुलो व्यापृतकरमात्रः पतति स्म, तं दृष्ट्वा सत्यभामया हसितम्, तथाऽन्यैर्भूपादिभिरपि हसितम्। लोकैर्हसितं दृष्ट्वा अच्युतः किं करोति।

यथा–

"कोदण्डं चण्डदोर्दण्डः कोपादारोप्य तं तदा ।
विष्णुरस्थापयत्तेषां हास्यस्थानेऽद्भुतं रसम्" ॥१॥

यावता सत्यभामा तं सुचिरं निरीक्षते, तावत् कसभटा निष्ठुरया गिरा एवमूचुः, गृह्यतां गृह्यतां भोः सुभटाः ! एष चापारोपणलम्पटः, यदस्मै मथुरापती रुष्टोऽस्ति तच्छ्रुत्वा केशरिकिशोर इव विष्णुरनाधृष्णि पुरस्कृत्य तान् भटान् भित्त्वा मण्डपान्निरगाद्, अभ्रवृन्दाद्भानुमानिव। ततोऽनाधृष्णिर्जनार्दनं गोकुले बलभद्रान्तिके मुक्त्वा स्वयं शौर्यपुरे ययौ । अनुधाविताः सुभटाः प्रत्यावृत्य कंसं जगदुः। हे राजेन्द्र ! नैषोऽस्मादृशां साध्यः, किन्त्वेष देवैर्वा दानवैर्वा गृहीतुं नो शक्यते। पुनः कंसो मल्लयुद्धमिषात् सर्वान् भूपानाजूहवत् । तद्भावं ज्ञात्वा वसुदेवोऽपि समुद्रविजयादीना सर्वेषामग्रजानां कंसभावं ज्ञापयामास। तथा मनोगता शिक्षां रामाय दापयामास। कंसः सर्वान् राज्ञ आगतान् दृष्ट्वा उच्चेषु मञ्चेषु निवेशयामास। कंसोऽप्येकं मनोरममुच्चमञ्चमारुरोह । विमाने वासव-इव, ततो दशार्हा दशदिक्पालसमास्तथैव मञ्चेष्वारुरुहुः । ततः कंसो मल्लानाजूहवत् , तेषां मल्लानां चाणूरमौष्टिकनामानौ मल्लनायकौ वर्त्तेते। ते मल्लाः प्रत्यहं मल्लयुद्धेन क्रीडन्तो विहरन्ति स्म । इतश्च गोकुले स्थितो गोविन्दो राजन्यान् गोकुलाग्रे गच्छतो दृष्ट्वा मल्लालोकनकौतुकी बलभद्रमवोचत् । हे आर्य ! आवामपि मथुरां गत्वा मल्लयुद्धं पश्यावः, त्वं मे मनोरथमन्यथा मा कार्षीः । बलभद्रेण चिन्तितमेतस्याऽधुना पितुरादेशमाख्यातुं समयो वर्त्तते, इति विनिश्चित्य रामो यशोदामभ्यधात्। हे यशोदे ! आवयोर्द्रुतं स्नानं कारय, येनावां मल्लालोकनकृते मथुरां गन्तुमिच्छावः। सा प्रत्यूचे, नाहं साम्प्रतं रिक्ता, मम कार्यं वर्त्तते । तदा साक्षेपं क्रोधारुणाक्षो बलदेवोऽभ्यधात्। रे दासि ! आत्मनि गर्विताऽस्मान् किं न

मित्याह- **लोकश्च विषार्थी विष एव प्रवर्त्तते** नियमेन, न मोदके। मोदकार्थ्यपि मोदक एव प्रवर्त्तते, न विषे, इत्येवमस्य नियमस्य प्रवृत्तिगोचरस्य, उच्छेद स्यान्निमित्ताभावात्। तथा विषे भक्षिते मोदकोऽपि भक्षित स्यात्, मोदके च भक्षिते विषमपि भक्षित स्यात्। तथा च प्रतीतिविरोध इत्थ लोकेऽप्रतीते.। **एवमित्यादि** । एव क्षीरकर्कादिष्वपि योज्य न क्षीर क्षीरमेवेत्यादिना। **स्यादेतदित्यादि** । अथैव मन्यसे–विषादिषु विशेषरूपताप्यस्त्येव, सा विशेषरूपता, तदर्थिनो विषाद्यर्थिनो, नियमेन प्रवृत्तेर्विषादिगोचराया, बीजम्, तद्भक्षणे च विषादिभक्षणे च, नान्यभक्षण स्यान्मोदकादिभक्षण स्यादिति। एतदप्ययुक्तम्। कुत इत्याह- **विकल्पानुपपत्तेः**। एतामेव दर्शयन्नाह- **विशेषरूपता हि विषादिसबन्धिनी, सामान्याद्यथोदितात्, व्यतिरिक्ता वा स्यादव्यतिरिक्ता वा** । किञ्चात इत्याह- **अव्यतिरिक्तत्वे सामान्यात्, तत्स्वरूपवत्** सामान्यस्वरूपवत्, **न तस्या** विषादिविशेषरूपताया, तत्त्व विशेषरूपत्व सामान्याऽव्यतिरेकादित्यर्थ । **व्यतिरिक्तत्वे च** विषादिविशेषरूपताया सामान्यात्, तस्या एव विशेषरूपताया, वस्तुतेति योग। कुत इत्याह— **तदर्थिप्रवृत्तिविषयत्वात्**। तस्या एवार्थक्रियाकारित्वादित्यभिप्राय । **व्यतिरिक्ताव्यतिरिक्तेति चेत्** सामान्याद्विशेषरूपतेति प्रक्रम । एतदाशङ्क्याह- **नन्वेवं** व्यतिरिक्ताऽव्यतिरिक्ताऽङ्गीकरणे विरोध इति कृत्वा त्यज्यतामुभयरूपवस्तुवादाभिमान असारत्वादस्येत्यभिप्राय। **तथा चोक्त**मिति ज्ञापकमाह- **प्रवृत्तीत्यादिना**। प्रवृत्तिनियमस्तदन्यव्यवच्छेदेन तत्रैव, न स्याद्विषादिषु पदार्थेषु। कस्येत्याह- **तदर्थिनः** विषाद्यर्थिन । किंविशिष्टेषु विषादिषु अत्राह-- **मोदकाद्यपृथग्भूतसामान्याभेदवृत्तिषु**। मोदकाद्यपृथग्भूत यत् सामान्य तदभेदेन ये वर्तन्त इत्यर्थ । **भेदे चेत्यादि**। भेदे च सामान्यादमीषामिष्यमाणे। किमित्याह- **उभयरूपैकवस्तुवादो न युज्यते** । उभयरूपमेक वस्त्वित्येवभूतो वादो न घटते, द्वयस्यापि प्रत्येकमेकैकत्वादिति भाव । भेदाभेदविकल्पस्तु प्रक्रमात्सामान्यविशेषयो, विरो-

धेनैव बाधितो यदि भेद कथमभेद इत्यादिना । विशेषेत्यादि । विशे-षरूप यत्तेषु विषादिषु, तत्प्रवृत्तेर्नियामक तद्विषयाया । साध्वेतद-नन्तरोदितम् , किन्तु वस्तुत्व परमार्थसत्त्व, तस्यैव विषादिविशेषरूपस्य, इत्थमेव, प्रसज्यत इति ॥

तथा परेणाप्युक्तम्–

"सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः ।
चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ?" ॥१॥

तथाहि-उष्ट्रोऽपि स्यात् दधि, नापि स एवोष्ट्रः, येनान्योऽपि स्यादुष्ट्रः; तथा दध्यपि स्यादुष्ट्रः, नापि तदेव दधि, येनान्यदपि स्याद् दधि । तदेवमनयोरेकस्यापि कस्यचित् तद्रूपाभावस्याभावात्, स्वरूपस्य वाऽतद्भाविनः स्वानियतस्याभावात् न कश्चिद्विशेष-इति, ततश्च दधि खादेति चोदित उष्ट्रमपि खादेत् ।

"अथास्त्यतिशयः कश्चिद्येन भेदेन वर्तते ।
स एव दधि सोऽन्यत्र नास्तीत्यनुभयं परम्" ॥१॥

अथानयो कश्चिदातिशयोऽस्ति, येनायं तथाचोदितः क्षीर-विकार एव प्रवर्तते, नान्यत्र; एवं तर्हि स एवातिशयोऽर्थक्रिया-र्थिप्रवृत्तिविषयो दधि । तत्फलविशेषोपादानभावलक्षितस्वभावं हि वस्तु दधीति, स च तादृश. स्वभावोऽन्यत्र नास्ति, प्रवृत्त्य-भावादर्थिनः । तस्मान्नोभयरूपमित्येकान्तवादः ॥

तथा परेणाप्युक्त एतदेव, इति दर्शयति– सर्वस्येत्यादिना । सर्वस्य वस्तुन , उभयरूपत्वे सामान्यविशेषरूपत्वे, उभयग्रहणमनेकत्वो-पलक्षणम् । अस्मिन् सति किमित्याह - तद्विशेषनिराकृतेः। तद्विशे-षस्य उष्ट्र उष्ट्र एव, न दधि, दधि दध्येव, नोष्ट्र , इत्येवलक्षणस्य, निरा-कृते इतररूपावेशेन निराकरणात् । चोदितो दधि खादेति दधि खादे-त्येव चोदित पुरुष , किमुष्ट्रं नाभिधावति खादितु ?, तस्य कथचिद्दध्नो-ऽप्यभेदात्। यद्वा, सामान्येनैव किमुष्ट्रं नाभिधावति ?, खादनक्रियाया-

अपि कथञ्चिदभिधावनक्रियाऽव्यतिरेकादिति । **तथाहीत्यादि** विवरणम् । तथाहीत्युपप्रदर्शने । उष्ट्रोऽपि स्याद्दधि केनचित्प्रकारेण दधि, न तद्भावानुविद्ध इत्यर्थ । नापि स एवोष्ट्र एव, उष्ट्र स्वरूपनियत एकान्तेन । येनान्योऽपि दध्यादिक , स्यादुष्ट्रो भवेदुष्ट्र , उभयरूपतया, अथवा स्यादुष्ट्र इत्यभ्युपगमयुक्ति । तथा दध्यपि स्यादुष्ट्र केनचित्प्रकारेणोष्ट्र , न तद्भावानुषक्तमिति भाव । नापि तदेव दध्येव, दधि स्वभावनियत सर्वथा । येनान्यदप्युष्ट्रादिक, स्याद्दवि । एतेन सर्वस्योभयरूपत्व व्याख्यातम्, तद्विशेषनिराकृतेरित्येतत् **तदेवमनयोरित्यादिना** व्याचष्टे । उभयथा हि दध्युष्ट्रयोर्विशेष स्यात्–दधिरूपाभावो वा उष्ट्रो भवेत्, उष्ट्रस्वरूप वा दध्यसभव्युष्ट्रस्वरूप एव नियत स्यात् । एव दध्यपि वाच्यम् । आद्यस्य तावदसभव **तदित्यादिना** कथ्यते । तदेवमनयोर्दध्युष्ट्रयो , न कश्चिद्विशेष इति सबन्ध । **एकस्यापीति** दध्न , उष्ट्रस्य वा, कस्यचित् । **तद्रूपाभावस्येति** उष्ट्ररूपाभावस्य, दधिरूपाभावस्य वा, अभावात् । द्वितीयस्यापि प्रकारस्याभावमाह– **स्वरूपस्येत्यादिना** । स्वरूपस्य वोष्ट्रस्वरूपस्य अतद्भाविनो दध्यभाविन , उष्ट्राभाविनो वा दधिस्वरूपस्य, स्वनियतस्य उष्ट्रभावनियतस्य, दधिभावनियतस्य वा, अभावान्न कश्चिद्विशेष सकीर्णतया दध्युष्ट्रयो । तत किमित्याह– **ततश्च दधि खादेति चोदिते** सति उष्ट्रमपि खादेत् खादेति चाभिधावनोपलक्षणमेतत् । **अथेत्यादि** । अथास्ति दध्युष्ट्रयो , अतिशय कश्चित् येनातिशयेन, दधि खादेति चोदित पुरुषो भेदेन वर्त्तते उष्ट्रपरिहारेण दध्नि । स एवातिशय , दधि, सोऽन्यत्रोष्ट्रे, नास्तीत्यनुभय विभक्तरूपस्वरूप सर्व वस्तु, तदेव च पर परमार्थ , एकत्व तु कल्पितम् । दध्नो वा परमुष्ट्रादिकमनुभयरूपमिति व्याख्येयम् । अथानयो कश्चिदतिशयोऽस्ति, **अनयो**रिति दध्युष्ट्रयो । येनाय पुरुष , **तथाचोदित** इति दधि खादेति चोदित , क्षीरविकार एव दध्नि, प्रवर्त्तते नान्यत्रोष्ट्रे, एव तर्हि स एवातिशयो दधीति सबन्ध । किभूत इत्याह-**अर्थक्रियार्थिप्रवृत्तिविषयो** दधिसाध्या

या अर्थक्रिया तया योऽर्थी पुरुषस्तस्य प्रवृत्तिविषय । किं कारणम्–तत्फलेत्यादि । दध्नैव साध्यत्वात्तत्फलविशेष स चासौ फलविशेषश्चेति विग्रह तस्योपादानभावो हेतुभाव तेन लक्षित स्वभावो यस्य वस्तुन तदेव दधीति कृत्वा । स च तादृश इत्यनन्तरोक्तो दधिस्वभाव, अन्यत्रेत्युष्ट्रे नास्ति । कस्मादित्याह– प्रवृत्त्यभावादर्थिनः । दध्यर्थिन उष्ट्रे । तस्मान्नोभयरूप वस्तु, इत्येकान्तवाद । अय च परोदितो ग्रन्थ अर्थादुक्तोऽप्युपन्यस्त, साम्प्रतकालीयग्रन्थकारशैल्या स्पष्टतर वा तथाऽभिधाय पुन पराभ्युपगमप्रदर्शनार्थमिति ॥

किञ्च । सर्ववस्तुशबलवादिनः क्वचिदन्याऽसंसृष्टाकारबुद्ध्यसिद्धेस्तथावाचकाभावात् संहारवादानुपपत्तिः, तत्सिद्धौ वा तत एव तत्स्वभावभेदात् तदेकरूपतैवेति ।

तथा चोक्तम्–

“सर्वात्मत्वे च भावानां भिन्नौ स्यातां न धीध्वनी ।
भेदसंहारवादस्य तदभावादसम्भवः” ॥ १ ॥

सोऽयमनेकान्तवादी क्वचिदप्येकमाकारं प्रतिनियतमपश्यन्विभागाभावाद्भावानाम्, कथमसंसृष्टान्याकारवत्या बुद्ध्याऽधिबुध्येताऽर्थान्, अभिलपेद्वा ?। ततो भेदाग्रहणात् तत्संहारवादो न स्यात् स्यादुष्ट्रो दधि स्यान्नेति । अथ पुनरसंसृष्टावाकारौ प्रतिपद्य संहरेत्, एकरूपसंसर्गिण्या बुद्धेः क्वचित्प्रतिनियमात् तत्प्रतिभासभेदकृत एव तयो रूपयोः स्वभावभेदोऽपि स्यात्, एकानेकव्यवस्थितेः प्रतिभासविषयत्वात् । तथा च नैकस्तदुभयरूपः स्यादिति मिथ्यावाद एषः ॥

अधिकृत एवाभ्युच्चयमाह--किञ्चेत्यादिना । किञ्चायमपरो दोष – सर्ववस्तुशबलवादिनोऽनेकान्तवादिन, क्वचिद्वस्तुन्युष्ट्रादौ, अन्यासंसृष्टाकारबुद्ध्यसिद्धे दध्याद्यसंसृष्टाकारबुद्ध्यसिद्धे शबलतया । तथा अन्यासंसृष्टाकारत्वेन, वाचकाभावात्प्रवृत्तिनिमित्ताभावेन शब्दाप्रवृत्ते ।

किमित्याह--**संहारवादानुपपत्तिः** सहारवाद स्यादुष्ट्रो दधीत्यादिक । तत्सिद्धौ वा क्वचित्, अन्यासस‍ृष्टाकारबुद्ध्यादिसिद्धेरेव तत्स्वभावभेदात् तस्य वस्तुन उष्ट्रादे स्वभावभेदात् तमन्तरेणान्यासस‍ृष्टाकारबुद्ध्याद्यसिद्धे, तदेकरूपतेव तस्योष्ट्रादेर्वस्तुन एकरूपतैव, इति न सहारवादो वास्तव । **तथा चोक्त**मिति पराभ्युपगम दर्शयति– **सर्वात्मत्वे चेत्यादिना** । सर्वात्मत्वे च भावानामुष्ट्रादीना, भिन्नौ स्याता न धीध्वनी ज्ञान शब्दश्च नियतार्थौ न स्याताम् । भेदसहारवादस्य तदेकीकरणलक्षणस्य, तदभावात् भिन्नधीध्वन्यभावात्, असभव, भेदेन गृहीतयो, श्रुतयोर्वैकत्वेनोपसहारो भवति, स्यादुष्ट्रो दधीत्यादि, नान्यथा । तदेतत् **सोयमित्यादिना** व्याचष्टे–सोयमनेकान्तवादी सर्ववस्तुशबलवादी, क्वचिदप्युष्ट्रे, दाध्नि वा, एकमाकार प्रतिनियतमितररूपव्यवच्छिन्नम्, अपश्यन् । अदर्शने निमित्तमाह– **विभागाभावाद्भावानां** शबलरूपतया इतरेतररूपापत्ते । किमित्याह– **कथमित्यादि** कथ केन प्रकारेण । **असंसृष्टान्याकारवत्येति** । असस‍ृष्टोऽन्याकारो यस्मिन्नर्थे स तथोक्त, स यस्या बुद्धेरस्ति, सा असस‍ृष्टान्याकारार्थवती विभक्तार्थग्राहिणीति यावत् तया, बुद्ध्या एवभूतया, अधिबुध्येतार्थान् सम्यग् जानीयात्, अभिलपेद्वा ध्वनिना । ततो भेदाग्रहणात् एव विशेषानुपलब्धे कारणात्, सहारवादो भेदसहारवादो, न स्यात् । किभूत इत्याह– **स्यादुष्ट्रो दधि स्यान्नेति** । अथ पुनरसस‍ृष्टावसङ्कीर्णौ, आकारौ दध्युष्ट्रयो प्रतिपद्य सहरेत् स्यादुष्ट्र स्याद्दधीति । तत किमित्याह–**एकरूपसंसर्गिण्या** उष्ट्ररूपेणैव, दधिरूपेणैव वा सबन्धवत्या, बुद्धे क्वचिदुष्ट्रे, दाध्नि वा, प्रतिनियमात्कारणात्, तत्प्रतिभासभेदकृत एव बुद्धिप्रतिभासभेदकृत एव, तयो रूपयोर्दध्युष्ट्रसबन्धिनो । किमित्याह– **स्वभावभेदोऽपि स्यात्** । कुत इत्याह– **एकानेकव्यवस्थितेः** इदमेकमिदमनेकत्येवभूताया, प्रातिभासविषयत्वात् एकप्रतिभासालम्बनमेकम्, अनेकप्रातिभासालम्बन चानेकम्, भिन्नप्रतिभासविषयौ च दध्युष्ट्रौ । तथा च सति नैक उष्ट्रो, दाधि वा, तदुभयरूप स्यात् तदुभय दध्युष्ट्रोभय

रूपमस्येति विग्रह । इत्येवमनेन प्रकारेण मिथ्यावाद एष स्याद्वाद इति । अत्रापि सामान्येनार्थमभिधाय परग्रन्थोपन्यासो विदितप्रयोजन एव ॥

**एवमभिलाप्याऽनभिलाप्यमपि विरोधबाधितत्वादेवानुद्घोष्यम् । तथाहि-अभिलप्यते यत्तदभिलाप्यम्, एतद्विलक्षणं चानभिलाप्यमिति । ततश्च यदि तदभिलाप्य न तर्ह्यनभिलाप्यम्, अनभिलाप्यं चेत् न तर्ह्यभिलाप्यमिति; एकस्यानेकविरुद्धधर्मानुगमाभावात् । किञ्च । विरोधिधर्माध्यासितस्वरूपत्वाद्वस्तुनोऽनेकान्तवादिनो मुक्त्यभावप्रसङ्गः । तथाहि-एतदात्माङ्गनाभवनमणिकनकधनधान्यादिकमनात्मकम्, अनित्यम्, अशुचि, दुःखमिति कथञ्चित् विज्ञाय, भावतस्तथैव भावयतो वस्तुतस्तत्राभिष्वङ्गास्पदाभावाद्भावनाप्रकर्षविशेषतो वैराग्यमुपजायते, ततो मुक्तिः । तथाहि-आत्मात्मीयदर्शनमेव मोहः, तत्पूर्वक एव आत्मात्मीयस्नेहो रागः, तत्पूर्विकैवानुरागाविषयोपरोधिनि प्रतिहतिर्द्वेष इति कृत्वा । यदा तु तदात्माङ्गनादिकं सात्मकाद्यपि, तदा यथोक्तभावनाभावात्; भावेऽपि मिथ्यारूपत्वात् वैराग्याभावः, तदभावाच्च मुक्त्यभाव इति ॥**

**एवमित्यादि** । एवमभिलाप्यानभिलाप्यमपि वस्त्विति प्रक्रम । विरोधबाधितत्वादेव कारणात्, अनुद्घोष्यमनुच्चारणीयम् । एतदेवाह-**तथाहीत्यादिना** । तथाहीत्युपप्रदर्शने । अभिलप्यते व्यक्तमुच्यते, यद्वस्तु, तदभिलाप्यम्, तद्विलक्षण चानभिलाप्यमिति । तत किमित्याह- **ततश्चेत्यादि** । एव च सति यदि तदभिलाप्य न तर्ह्यनभिलाप्यम्, अनभिलाप्य चेन्न तर्ह्यभिलाप्यमिति । एकस्य वस्तुन, **अनेकविरुद्धधर्मानुगमाभावादिति** । **किञ्चेत्यादि** । किञ्चायमपरो दोष -विरोधिधर्माध्यासितस्वरूपाद्वस्तुन सर्वस्यैव, अनेकान्तवादिनो वादिन , मुक्त्यभावप्रसङ्ग । कथमित्येतदभिधातुमाह- **तथाहीत्यादिना** ।

तथाहि–एतदध्यक्षसमधिगन्तव्यम् , आत्माङ्गनाभवनमणिकनकधनधान्यादिक वस्तु, अनात्मक परपरिकल्पितात्मशून्य, अनित्यम् , अशुचि, दु खम् , स्वरूपतो हेतुतश्च, इत्येव कथञ्चित्तत्स्वभावतया हेतुपरम्परातो विशिष्टक्षणोत्पादेन, विज्ञाय श्रुतमय्या प्रज्ञया, भावत परमार्थेन, तथैव भावयतोऽभ्यस्यत , वस्तुत परमार्थेन, तत्र वस्तुनि, अभिष्वङ्गास्पदाभावात् अनात्मकत्वादिना । किमित्याह– **भावनाप्रकर्षविशेषतोऽ**भ्यासप्रकर्षविशेषत अभ्यासप्रकर्षविशेषादित्यर्थ , वैराग्यमुपजायते । ततो वैराग्यात्, मुक्तिर्नान्यथा । **तथाहीत्यादि** । तथाहि–आत्माऽऽत्मीयदर्शनमेव मोह विपर्ययरूपत्त्वात्, तत्पूर्वक एवात्मात्मीयदर्शनपूर्वक एव, आत्मीयस्नेहो राग , तत्पूर्विकेवात्मीयस्नेहपूर्विकैव, अनुरागविषयोपरोधिनि वस्तुनि, प्रतिहतिर्द्वेष इति कृत्वा सर्वमुपपद्यते । विपक्षे दोषमाह– **यदा तु तदात्माङ्गनादिकं** वस्तु, सात्मकाद्यपि शबलरूपतया सात्मक, नित्य, शुचि, सुखमित्यपि, तदा किमित्याह– **तदा यथोक्तभावनाऽभावात्** वस्त्वन्यथात्वेन, भावेऽपि मिथ्यारूपत्वाद्भावनाया । अत एव हेतोर्वैराग्याभाव उपायाभावेन । तदभावाच्च वैराग्याभावाच्च, मुक्त्यभाव तत्पूर्वकत्वान्मुक्तेरिति ॥

**स्यादेतत्किमनेनेत्थमसम्भविना मुग्धविस्मयकरेण भावनावादेन ? । कृत्स्नकर्मक्षयान्मोक्षः, स च कायसन्तापलक्षणेन तपसा प्रागुपात्तकर्मनिर्जरणतः, अनागतस्य चाकरणेनेति । एतदप्यसत् । कायसन्तापस्य कर्मफलत्वात् नारकादिकायसन्तापवत्तत्त्वतस्तपस्त्वायोगात् । न स्वेच्छाप्रतिपत्त्या तपस्त्वम्, स्वेच्छाप्रतिपत्तिमद्राज्यसुखादेरपि तपस्त्वप्रसङ्गात्; अभ्युपगमे च प्रतीत्यादिविरोधः । तथाविधराज्यादिसुखभोगे प्रमादतोऽपरबन्ध इति चेत्, स कायसन्तापे नन्वार्तध्यानादपि तुल्यः ॥**

**स्यादेतदित्यादि** । स्यादेतत् किमनेनानन्तरोदितेन, इत्थमसम्भाविना एवमात्माद्यभावेनासम्भविना, मुग्धविस्मयकरेणानालोचकविस्मयकरणशीलेन, भावनावादेनानुपाय एष मोक्षस्य । कुत इत्याह–

**कृत्स्नकर्मक्षयान्मोक्षः**। कृत्स्नमशेष, कर्म ज्ञानावरणीयादि, क्षय आत्यन्तिक सबन्धाभाव, अस्मान्मोक्ष इति। स च कृत्स्नकर्मक्षय. कायसन्तापलक्षणेन तपसा षष्ठाष्टमादिलक्षणेन,प्रागुपात्तकर्मनिर्जरणत पूर्वोपात्तकर्मनिर्जरणात्कारणात्, अनागतस्य च कर्मणोऽकरणेन भवतीति शेष। एतदाशङ्क्याह- **एतदप्यसत्** अशोभनम्। कुत इत्याह- **कायसन्तापस्य** षष्ठाष्टमादे, **कर्मफलत्वात्** औदयिकभावरूपत्वात्। तत किमित्याह- **नारकादिकायसन्तापवदिति** दृष्टान्त, तत्त्वत परमार्थेन, तपस्त्वायोगात्। आशङ्काशेषपरिहारार्थमाह-**नेत्यादि**। न स्वेच्छाप्रतिपत्त्या नारकाद्यपोहन, तपस्त्व कायसन्तापस्य, स्वेच्छाप्रतिपत्तिमद्राज्यसुखादेरपि, आदिशब्दाद्भोगसुखग्रह, तपस्त्वप्रसङ्गात्। स्वेच्छाप्रतिपत्तिर्ह्यौदयिकभावत्वेऽपि तपस्त्वे निमित्तमिति कृत्वा, अभ्युपगमे च स्वेच्छाप्रतिपत्तिमद्राज्यसुखादेरपि तपस्त्वस्य। किमित्याह- **प्रतीत्यादिविरोधः**। न हि स्वेच्छाप्रतिपत्तिमद्राज्यसुखादि तप इति प्रतीति, आदिशब्दान्न चेवमभ्युपगम इत्यभ्युपगमविरोधश्च। इहैवाऽतपस्त्वे निमित्तमाह-**तथाविधेत्यादिना**। तथाविधराज्यादिसुखभोगे स्वेच्छाप्रतिपत्तिमद्राज्यादिसुखभोगे सति, प्रमादत प्रमादात्कारणात्, अपरबन्ध अन्यकर्मबन्ध, अतो नेद तप इति हृदयम्, इति चेत्। एतदाशङ्क्याह- **स इत्यादि**। सोऽपरबन्ध, कायसन्तापे तपसि सति, प्रमादत इव नन्वार्त्तध्यानादपि तुल्य समान एव, अतो नायमपि तप इत्यभिप्राय॥

**चित्रशक्तिकं च कर्म, तुच्छभोगमहाभोगकायसन्तापव्याध्यारोग्यादिचित्रफलदर्शनात्; तन्न कायसन्तापमात्रात् चित्रशक्तिकस्यास्य क्षय उपपद्यते, अतिप्रसङ्गात्, आह्लादादपि तत्क्षयापत्तेः; दुःख्येव चैवं तपस्वी स्यात्। न चैतदुपपन्नम्। अभ्युपगमादिविरोधात्, अतपस्विनश्चैवं योगिनः स्युः; कायसन्तापाभावात्। न चैतदपि न्याय्यम्। अभ्युपगमादिविरोधादेव। अथ न कायसन्तापस्तप इति, अपि त्वन्यदेव; हन्त! एवमपि न**

तदेकरूपं चित्रशक्तिकस्य कर्मणः क्षयायालम्, अन्यतमशक्तितोऽभावात् सर्वशक्तिविरोधासिद्धेः। अथ तपः कर्मशक्तिसङ्करक्षयकारीत्येकरूपादपि ततः क्षयः। ननु चैवमपि कथञ्चित्सुखेनैवाल्पेऽपि कर्मणि क्षीणे तदशेषक्षयापत्तिः, तत्साङ्कर्यान्यथानुपपत्तेः; तद्भावेनैव तत्क्षयाङ्गीकरणात्, तदक्षये साङ्कर्याद्यसिद्धिः, इति तपःकर्मक्षयवादोऽप्यबुधजनमनोहर एवेत्यपकर्णयितव्यः॥

अभ्युच्चयमाह-- चित्रशक्तिकं चेत्यादिना। चित्रशक्तिकं च नानाशक्तिकं च, कर्म वेदनीयादि। कुत इत्याह-- तुच्छभोगमहाभोगकायसन्तापव्याध्यारोग्यादिचित्रफलदर्शनात्। नह्यचित्रात् कारणाच्चित्रकार्योत्पादः, यत एवम्, तन्नेत्यादि। तस्मान्न कायसन्तापमात्रात्सकाशात्, चित्रशक्तिकस्यास्य कर्मणः, क्षय उपपद्यते। कुत इत्याह-- अतिप्रसङ्गात्। एनमेवाह-- आह्लादादपि सकाशात्सन्तापादिवत् तत्क्षयापत्तेः कर्मक्षयापत्तेः विजातीयत्वाविशेषादित्यर्थः। दुःख्येव चैव तपस्वी स्यात् कायसन्तापलक्षणे तपसि सति। अस्त्वित्येतदाशङ्क्याह-- न चैतदुपपन्नम्। यदुत दुःख्येव तपस्वीति। कुत इत्याह-- अभ्युपगमादिविरोधात्। आदिशब्दाल्लोकयुक्तिविरोधग्रहः। अतपस्विनश्चैव यथोदिते तपसि सति, योगिनः स्युः प्राप्तर्द्धयो भवेयुः। कुत इत्याह-- कायसन्तापाभावात् योगबलेन। न चैतदपि योगिनामतपस्वित्वं न्याय्यम्। कुत इत्याह-- अभ्युपगमादिविरोधादेवेति। आदिशब्दः पूर्ववत्। पक्षान्तराशङ्कापोहायाह-- अथेत्यादि। अथ न कायसन्तापस्तप इति, अपि त्वन्यदेव क्षायोपशमिकं भावान्तरमिति। एतदाशङ्क्याह-- हन्तेत्यादि। हन्तैवमपि अन्यत्तप इति पक्षे, न तदन्यद् एकरूपं सत्, तपः चित्रशक्तिकस्य कर्मणः चित्रफलदर्शनानुमितस्य वेदनीयादेः, क्षयायालं क्षयार्थं पर्याप्तम्। कुत इत्याह-- अन्यतमशक्तितोऽभावात्। अन्यतमस्मिन्नेकशक्तिके कर्मणि क्षयमधिकृत्येति प्रक्रमः, शक्तिरस्येत्यन्यतमशक्ति तप इति गम्यते। तस्मादन्यतम-

शक्तितस्तपस एकरूपतया कारणेन अभावात् । अधिकृतकर्मक्षयस्य कथमभाव इत्याह– **सर्वशक्तिविरोधासिद्धेः** । सर्वशक्तिभिश्चित्रकर्मगताभि सह विरोधासिद्धे अन्यतमशक्तितस्तपस, एकशक्तिक ह्येकशक्तिकस्यैव विरोधीत्यभिप्राय । आशङ्कान्तरापोहायाह– **अथ तप-इत्यादि** । अथ तप कर्मशक्तीना सङ्करेण क्षयकरणशीलामिति कृत्वा, एकरूपादपि तत तपस, क्षयश्चित्रशक्तिकस्य कर्मण इति । एतदाशङ्कयाह– **नन्वित्यादि** । ननु चैवमप्यनन्तरोदितन्याययोगे, कथञ्चित्केनचित्प्रकारेणैकरोमोत्पाटादिना, सुखेनैवाल्पे कर्मणि क्षीणे सति, तदशेषक्षयापत्ति तस्य कर्मण अशेषस्य क्षयापत्ति । कुत इत्याह– **तत्साङ्कर्यान्यथानुपपत्तेः** । कर्मशक्तिसाङ्कर्यान्यथानुपपत्ते, तद्भावेनैव तत्क्षयाङ्गीकरणात् कर्मशक्तिसाङ्कर्यभावेनैव कर्मक्षयाङ्गीकरणात् । तदक्षये तस्य कर्मण अशेषस्याक्षये, साङ्कर्याद्यसिद्धि, आदिशब्दात् विवक्षितकर्मक्षयग्रह । इत्येवम्, तप कर्मक्षयवादोऽपि पूर्वोदित, अबुधजनमनोहर एवेति कृत्वा, किमित्याह– **अपकर्णयितव्यः** ॥

**न चास्मिन् सत्यपि मोक्षसौविहित्यम्, अनेकान्तोपद्रवानिवृत्तेः । तथाहि–मुक्तोऽपि न मुक्त एवानेकान्तवादहानेः, अपि त्वमुक्तोऽपि, इति नेदमपुष्कलमुपादेयफलप्रकर्षः तदन्यसाधारणत्वात्; इत्थं सापवादस्य संसारिष्वपि भावात् । तथाहि–न वः संसार्यपि सर्वथा संसार्येवैकान्तवादापत्तेः, अपि त्वसंसार्यपि, इति नेदमकृत्स्नं हेयानर्थोत्कर्ष इति यत्किञ्चिदेतत् । किञ्च । अनेकान्तवादिनो मानमपि न मानमेव, स्यान्मानमिति तत्त्वनीतेः, इत्थं तदाभासमपि । ततश्चैवं तदतदात्मके प्रमाणप्रमेयरूपे सर्वस्मिन्नेवास्मिन् वस्तुतत्त्वे विरोधभाजि अस्य तदतद्वादिनो निष्कलङ्कमतिसमुत्प्रेक्षितसन्न्यायानुसारतः सर्वमेव प्रमाणादि प्रतिनियतं न घटत इत्यलमत्रातिनिर्बन्धेन ॥**

इहैवाभ्युच्चयमभिधातुमाह– **न चाऽस्मिन्नित्यादि** । न चास्मिस्तप-कर्मक्षयवादे, सत्यपि मोक्षसौविहित्य मोक्षस्य सुविहितभाव । कुत-

इत्याह— **अनेकान्तोपद्रवानिवृत्तेः** अनेकान्त स्याद्वाद स एवोपद्रवस्तदितररूपापादनेन तदनिवृत्तेरिति । एतदेव स्पष्टयति— **तथाहीत्यादिना** । तथाहि मुक्तोऽपि न मुक्त एव एकान्तेन । कुत इत्याह— **अनेकान्तवादहानेः** । अपि त्वमुक्तोऽप्यनेकान्ताङ्गीकरणात् । इत्येवम्, नेद मुक्तत्वम्, अपुष्कलमसम्पूर्ण सर्वथामुक्तताऽभावेन, उपादेयफलप्रकर्ष उपादेय च तत्फल चेति विग्रह तस्य प्रकर्ष पर्यन्तो न । कुत इत्याह— **तदन्यसाधारणत्वात्** । तस्मान्मुक्तादन्योऽमुक्त तत्साधारणत्वादधिकृतमुक्तत्वस्य । कथमेतदेवमित्याह— **इत्थं** एवमुक्तवदमुक्तत्वयोगेन, सापवादस्यापुष्कलस्य, मुक्तत्वस्येति प्रक्रम । ससारिष्वपि प्राणिषु, भावात् । एतदेव भावयति— **तथाहीत्यादिना** । तथाहि—न व न युष्माकम्, ससार्यपि प्राणी, सर्वथा ससार्येवाससारिव्यवच्छेदेन । कुतइत्याह— **एकान्तवादापत्तेः** कारणात्, अपि त्वससार्यपि स्याद्वादनीते । इत्येवम्, नेद ससारित्व अकृत्स्नमसम्पूर्ण एकान्तेन ससारित्वाभावेन, हेयानर्थोत्कर्ष हेयश्चासौ अनर्थश्चेति विग्रह, तदुत्कर्षो निष्ठा न । इत्येवम्, यत्किञ्चिदेतदसारमधिकृतमनेकान्तदर्शनमिति ॥ **किञ्चेत्यादि** । किञ्चायमपरो दोष —अनेकान्तवादिनो वादिन, मानमपि प्रत्यक्षादि, न मानमेवैकान्तेन, अपि त्वमानमपि । कुत इत्याह— **स्यान्मानमिति तत्त्वनीतेः** । कथञ्चिन्मानमिति न्यायात् । **इत्थमित्यादि** । एव तदाभासमपि मानाभासमपि न तदेव, स्यात्तदाभासमिति तत्त्वनीते । **ततश्चेत्यादि** । ततश्चैवमुक्तेन न्यायेन, तदतदात्मके तच्चातच्च तदतदी ते आत्मा यस्य तत् तथा तस्मिन्, प्रमाणप्रमेयरूपे सर्वास्मिन्नेवास्मिन्ननन्तरोदिते, वस्तुतत्त्वे विरोधभाजि विरोध भजते तच्छील यत्तत्तथा तस्मिन्, अस्य तदतद्वादिनोऽनेकान्तवादिन, निष्कलङ्कमतिसमुत्प्रेक्षितसन्न्यायानुसारत निष्कलङ्कमतयो बौद्धास्तै समुत्प्रेक्षितो य सन्न्याय उक्तलक्षणस्तदनुसारेण, सर्वमेव प्रमाणादि आदिशब्दात्प्रमेयग्रह, प्रतिनियतमितररूपाननुषक्तम्, न घटत इति कृत्वा, अलमत्रातिनिर्बन्धेन निरर्थकेन, अस्थानाभिनिवेश एष इति ॥

तथा चोक्तम्–

“यः पश्यत्यात्मानं तत्रास्याहमिति शाश्वतः स्नेहः ।
स्नेहात् सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते ॥ १ ॥
गुणदर्शी परितृष्यन् ममेति तत्साधनान्युपादत्ते ।
तेनात्माभिनिवेशो यावत्तावत् स संसारे ॥ २ ॥
आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ ।
अनयोः सम्प्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥ ३ ॥
कर्मक्षयाद्धि मोक्षः स च तपसस्तच्च कायसन्तापः ।
कर्मफलत्वान्नारकदुःखमिव कथ तपस्तत्स्यात् ? ॥ ४ ॥
न स्वेच्छाप्रतिपत्त्या विशिष्टसुखभावतुल्यवृत्तित्वात् ।
इष्टौ प्रतीतिकोपस्तदन्यबन्धो द्वयेऽपि समः ॥ ५ ॥
चित्रं च कर्म कार्यात् सङ्क्लेशादेव तत्क्षयोऽयुक्तः ।
दुःख्येव तपस्वीति च तदभावो योगिनां चैव ॥ ६ ॥
अन्यदपि चैकरूपं तच्चित्रक्षयनिबन्धनं न स्यात् ।
तच्छक्तिसङ्करक्षयकारीत्यपि वचनमात्रं तु ॥ ७ ॥
अक्लेशात् स्तोकेऽपि क्षीणे सर्वक्षयप्रसङ्गो यत् ।
साङ्कर्यादेर्न्यायात् तद्भेदो ह्यन्यथा नियमात् ॥ ८ ॥
मुक्तो न मुक्त एव हि संसार्यपि सर्वथा न संसारी ।
मानमपि मानमेव हि हेत्वाभासोऽप्यसावेव ॥ ९ ॥
एवं सप्रतिपक्षे सर्वस्मिन्नेव वस्तुतत्त्वे ऽस्मिन् ।
स्याद्वादिनः सुनीत्या न युज्यते सर्वमेवेह” ॥१०॥ इत्यादि ।

तथा चोक्तमन्यैरपि, एतदेवेत्याह– यः पश्यतीत्यादि । य. पश्यत्यात्मानमनादिमोहात्, तत्रात्मनि, अस्यात्मदर्शिन , अहमित्येव, शाश्वत स्नेह विषयनित्यतया । तत किमित्याह– स्नेहाद्धेतो, सुखेषु तृष्यत्यभिष्वङ्ग करोति । एवमपि किमित्याह– तृष्णा दोषांस्तिरस्कुरुते स्थगयति ॥ १ ॥ तथा गुणदर्शी सन्, परितृष्यन्मोहान्ममेत्येवं

विप्रलब्ध , तत्साधनानि गुणसाधनानि, उपादत्ते गृह्णात्यश्रान्त । येनै-तदेवम्, तेनात्माभिनिवेशो यावत्प्राणिन , तावत्ससारे प्राणी ॥ २ ॥ तथा, आत्मनि सति परसञ्ज्ञा भवति, स्वपरविभागात् परिग्रहद्वेषौ भवत , अनयो सम्प्रतिबद्धा परिग्रहद्वेषयो , सर्वे दोषा प्रजायन्ते रागादय ॥ ३ ॥ कर्मक्षयाद्धि मोक्षो न भावनात , स च तपस कर्म-क्षय , तच्च कायसन्तापस्तप इति पूर्वपक्ष । कर्मफलत्वात्कारणात्, नारकदु खमिवेति दृष्टान्त , कथ तपस्तत्स्यात्कायसन्तापरूपमित्युत्तरम् ॥ ४ ॥ न स्वेच्छाप्रतिपत्त्या तत्तप । कुत इत्याह— **विशिष्टसुखभा-वतुल्यरूपत्वात्** । स्वेच्छाप्रतिपत्तिमद्राज्यसुखादेरपि तपस्त्वप्रसङ्गादि-त्यर्थ । इष्टौ प्रतीतिकोप अधिकृतराज्यसुखादेरपि तपस्त्वे । तदन्यबन्ध प्रमादार्त्तध्यानाभ्याम्, द्वयेऽपि प्रस्तुतराज्यसुखे, प्रस्तुततपसि च, सम-स्तुल्य ॥५॥ चित्रं च कर्म कार्यात् तुच्छभोगादिफलदर्शनात्, अत सङ्क्ले-शादेवैकरूपात्, तत्क्षयोऽयुक्त चित्रकर्मक्षय अघटमानक इति । दु ख्येव तपस्वीति चायुक्तम् , तदभावस्तपस्वित्वाभाव , योगिना चैवा-युक्त ॥ ६ ॥ अन्यदपि चायुक्तम् , एकरूप तत्तप । तत किमित्याह— **चित्रक्षयनिबन्धनं न स्यात्** चित्रं च कर्म, तच्छक्तिसङ्करक्षय-कारि कर्मशक्तिसङ्करक्षयकारि तप , इत्यपि वचनमात्रमेव ॥ ७ ॥ कुत-इत्याह— **अक्लेशात्** एकरोमोत्पाटनेन, स्तोकेऽपि कर्मणि, क्षीणे सति, सर्व-क्षयप्रसङ्ग , यद् यस्मात् । कुत इत्याह— **साङ्कर्यादेर्न्यायात्** आदि-शब्दात् स्तोककर्मक्षय । तद्भेद कर्मशक्तिभेद , कर्मशक्तिभेदो ह्य-न्यथा सर्वक्षयमन्तरेण नियमादत इत्यपि वचनमात्रमेवेति स्थितम् ॥ ८ ॥ तथा, मुक्तो न मुक्त एव ह्येकान्तेन, ससार्यपि सर्वथा न ससारी एकान्तवादापत्ते , मानमपि मानमेव हि न, स्याद्वादप्रामाण्यात्, हेत्वा-भासोऽपि प्रमाणाभासोपलक्षणमेतत् असावेव हेत्वाभास एव न, तत-एव हेतोरिति ॥ ९ ॥ **एवमित्यादि** । एवमुक्तेन प्रकारेण, सप्रतिपक्षे सर्वस्मिन्नेव प्रमाणादिरूपे, वस्तुतत्त्वेऽस्मिन् लोकसिद्धे, स्याद्वादिनोऽने-कान्तवादिन , सुनीत्योक्तवत्, न युज्यते सर्वमेवेह दृष्टम् ॥ १० ॥ इत्यादि । एष पूर्वपक्ष ॥

तदेवमेते मन्दमतयो दुस्तर्कोपहतास्तीर्थ्याः स्वयं नष्टाः परानपि नाशयन्ति मन्दमतीन्, अतः प्रतिविधीयते। तत्र यत्ताव-दुक्तं कथमेकमेव घटादिरूपं वस्तु सच्चासच्च भवति। तदेतदागो-पालाङ्गनादि प्रसिद्धमनाशङ्कनीयमेव। यतस्तत्स्वद्रव्यक्षेत्रकाल-भावरूपेण सद्वर्तते, परद्रव्यक्षेत्रकालभावरूपेण चासत्, ततश्च सच्चासच्च भवति; अन्यथा तदभावप्रसङ्गात्। तथाहि—यदि तद्यथा स्वद्रव्यक्षेत्रकालभावरूपेण सत्, एवं परद्रव्यादिरूपेणापि स्यात्, ततश्च तद् घटवस्त्वेव न स्यात्, परद्रव्यादिरूपेणापि सत्त्वात्; तदन्यस्वात्मवत्। तथा यदि यथा परद्रव्यक्षेत्रकालभावरूपेणासत्, एवं स्वद्रव्यादिरूपेणापि स्यात्, इत्थमपि तद् घटवस्त्वेव न स्यात्, स्वद्रव्यादिरूपेणाप्यसत्त्वात्; खरविषाणवत्। इत्येवं तदभावप्रस-ङ्गात् सदसद्रूपं तदङ्गीकर्तव्यमिति। तथा च तद् द्रव्यतः पार्थिवत्वेन सत्, नाबादित्वेन; तथा क्षेत्रत इहत्यत्वेन, न पाटलिपुत्रकादि-त्वेन; तथा कालतो घटकालत्वेन, न मृत्पिण्डादिकालत्वेन; तथा भावत श्यामत्वेन, न रक्तत्वादिनेति; अन्यथेतररूपापत्त्या तत्स्व-रूपहानिप्रसङ्ग इति ॥

एनमुपन्यस्यात्र दूषणमभिधातुमाह— तदेवमित्यादि। तच्छब्द प्रस्तुतार्थप्रदर्शक, एव यथोक्तम्, एते शाक्यादय, एववादितया लोके सिद्धा, मन्दमतय विशिष्टक्षयोपशमाभावेन, दुस्तर्कोपहता एका-न्तविषयतर्कपीडिता, तीर्थ्या शाक्यादय एव, न स्वय नष्टा एव सन्न्यायाज्ञानादिति गम्यते, परानपि नाशयन्ति न सामान्येनेत्याह— मन्दमतीन् जडबुद्धीन्। यत एवम्, अत प्रतिविधीयते सर्वत्रैवात्र प्रति-क्रियत इत्यर्थ। तत्रेत्यादि। तत्र यत्तावदुक्तमादौ, कथमेकमेव घटादि-रूप वस्तु सच्चासच्च भवतीति पूर्वपक्षे। तदेतदित्यादि। तदेतद् घ-टादिरूप वस्तु सच्चासच्चेति, आगोपालाङ्गनादि प्रसिद्ध तथोपलम्भार्थक्रि-याभ्या प्रतिष्ठितम्, अनाशङ्कनीयमेव। यतस्तद्घटादिरूप वस्तु, स्वद्र-

व्यक्षेत्रकालभावरूपेण सद्वर्त्तते, परद्रव्यक्षेत्रकालभावरूपेण च पटादिगतेन, असन् । ततश्च सच्चासच्च भवति तद्वस्तु शबलम् । अन्यथैवमनङ्गीकरणे, तदभावप्रसङ्गात् तस्य घटादिरूपस्य वस्तुन अभावप्रसङ्गात् । एनमेव भावयति–तथाहीत्यादिना । तथाहि–यदि तद् घटादिरूप वस्तु, यथा स्वद्रव्यक्षेत्रकालभावरूपेण सत् , एव परद्रव्यादिरूपेणापि स्यात् , आदिशब्दात्परक्षेत्रकालभावरूपपरिग्रह । ततश्चैव सति, तद् घटवस्त्वेव न स्यात् । कुत इत्याह– परद्रव्यादिरूपेणापि सत्त्वात् तदन्यस्वात्मवत् पटादिस्वात्मवदित्यर्थ । तथा यदि यथा परद्रव्यक्षेत्रकालभावरूपेणासत् तद् घटादिरूप वस्तु, एव स्वद्रव्यादिरूपेणापि स्यात् आदिशब्दात्स्वक्षेत्रकालभावपरिग्रह । इत्थमप्येवमपि, तद् घटवस्त्वेव न स्यात्, स्वद्रव्यादिरूपेणाप्यसत्त्वात् । किंवदित्याह– खरविषाणवत् । खरविषाण हि पररूपेण, स्वरूपेण चाऽसत्तुच्छमिति भावनीयम् । इत्येवमुक्तन्यायेन, तदभावप्रसङ्गात् तस्य घटादिरूपस्य वस्तुनोऽभावप्रसङ्गात् , सदसद्रूप तदङ्गीकर्त्तव्यमिति । एतदेव विशेषेणाह– तथा चेत्यादि । तथा च तद् घटादिरूप वस्तु, द्रव्यत द्रव्यमाश्रित्य, पार्थिवत्वेन सत्तथापरिणतपृथ्वीविकारत्वेन सत्, नाबादित्वेन । तथा क्षेत्रत क्षेत्रमाश्रित्य, इहत्यत्वेन इह भव इहत्यस्तद्भावेन, न पाटलिपुत्रकादित्वेन । तथा कालत कालमाश्रित्य, घटकालत्वेन तथातात्स्थितिस्वभावत्वलक्षणेन, न मृत्पिण्डकपालकालत्वेन । तथा भावत भावमाश्रित्य, श्यामत्वेन श्यामत्वभावेन, न रक्तत्वादिना सदिति । इत्थ चैतदङ्गीकर्त्तव्यम् । अन्यथैवमनङ्गीकरणे, इतररूपापत्त्या अबादिरूपेणापि सत्त्वेन तस्य घटादिरूपस्य वस्तुन स्वरूपहानिप्रसङ्ग पार्थिवत्वाद्यभावादिति ॥

द्रव्याद्यात्मकत्वं च घटस्य तैर्विनाऽभावात्, तथाहि–न मृदादिद्रव्यमात्रमेव तथाविधक्षेत्राननुविद्धं ऋते तत्कालभावितां कृष्णादिभावशून्यं घटस्तथानुपलम्भात्, तत्तदन्यतममात्रत्वे तदितरवैकल्येन तत्स्वरूपानुपपत्तेः; विविक्तानामसम्भवात् सम्भवेऽपि तन्मात्रत्वेन तद् द्रव्यत्वादिबुद्धिहेतुत्वतो घटबुद्ध्यभावप्रसङ्गः ।

**न च पार्थिवद्रव्यत्वादिबुद्धिरेव घटबुद्धिस्तथाऽप्रतीतेः, इति निर्लोठयिष्याम ।**

द्रव्याद्यात्मकत्व च यथोदितम्, घटस्याधिकृतवस्तुन, कथमित्याह— **तैर्विनाऽभावात् ।** तैर्द्रव्यक्षेत्रकालभावैर्विनाऽभावात् । एतदेव भावयति— **तथाहीत्यादिना ।** तथाहि--न मृदादिद्रव्यमात्रमेवैकान्तैकस्वभावम्, तथाविधक्षेत्राननुविद्ध तथाधारत्वपरिणतक्षेत्रानाधेयस्वभावम्, ऋते तत्कालभाविता विना स्वस्थितिकालभाविताम्, कृष्णादिभावशून्य कृष्णोर्द्धादिभावशून्य घट । कुत इत्याह— **तथानुपलम्भात् ।** तथा तेन प्रकारेण तथाविधक्षेत्राद्यनुवेधादिरहितमृदादिद्रव्यमात्रलक्षणेन, अनुपलम्भात् । अत्रैव कारणमभिधातुमाह— **तत्तदन्यतमेत्यादि ।** तस्य घटस्य तेषा पार्थिवद्रव्यत्वादीनामन्यतममात्रत्वे पार्थिवद्रव्यमात्रत्वे सति, तादितरवैकल्येन इहत्यत्वाद्यभावेन, तत्स्वरूपत्वानुपपत्ते अधिकृतपार्थिवद्रव्यत्वस्वरूपानुपपत्ते, घटबुद्ध्यभावप्रसङ्ग इति योग । अनुपपत्तिश्च विविक्तानामसभवात्, पार्थिवद्रव्यत्वादीनामिति प्रक्रम । **सम्भवेऽपीत्यादि ।** सभवेऽप्यधिकृतपार्थिवद्रव्यत्वादीनाम्, तन्मात्रत्वेन पार्थिवद्रव्यादिमात्रत्वेन हेतुना, तद्द्रव्यत्वादिबुद्धिहेतुत्वत पार्थिवद्रव्यत्वादिबुद्धिहेतुत्वत, तेषा घटबुद्ध्यभावप्रसङ्ग, नान्यालम्बनाऽन्या बुद्धि साध्वी भवितुमर्हतीति भावनीयम् । **न चेत्यादि ।** निष्णातव्यपदेशोऽयम् । द्रव्यत पार्थिवत्वेन सदित्यत्र सत्त्वम्, पार्थिवद्रव्यत्वमिति कृत्वा, न च पार्थिवद्रव्यत्वबुद्धिरेव पार्थिवद्रव्यभावबुद्धिरेव, घटबुद्धि । कुत इत्याह— **तथाऽप्रतीतेः ।** पार्थिवद्रव्यभावबुद्धेर्घटबुद्धित्वेनाप्रतीते । एतान्निर्लोठयिष्याम उपरिष्टाद्विज्ञानवादनिराकृतौ अवयविचिन्ताधिकारे प्रायो विप्रतिपत्तिनिराकरणेन सुनिर्लोठनादिति ॥

**स्यादेतत्, स्वद्रव्यादिसत्त्वमेव परद्रव्याद्यसत्त्वं, तथा च घटवस्तुनः पार्थिवद्रव्यसत्त्वमेव अबादिद्रव्यासत्त्वम्, इह क्षेत्रसत्त्वमेव पाटलिपुत्राद्यसत्त्वम्, घटकालसत्त्वमेव मृत्पिण्डकालाद्यसत्त्वम्, श्यामत्वसत्त्वमेव रक्तत्वाद्यसत्त्वम्; इति यथोक्तदोषानुपपत्तिरेव।**

गुरुर्धर्मोपदेशकः ॥७७॥

गृणाति धर्मं गुरुः "कृग्र ऋत उच्च"॥ (उणा-७३४) ॥ इति उः । धर्मस्योपदेष्टा धर्मोपदेशकः । निषेकादिकरो गुरुरित्यन्ये ॥ १ ॥ ७७ ॥

अनुयोगकृदाचार्यः

अनुयोगं व्याख्यां करोत्यनुयोगकृत् । आचर्यते सेव्यत इत्याचार्यः, आचारे साधुरिति वा । आचारं ग्राहयतीति नैरुक्तः, मन्त्रव्याख्याकृदाचार्य इत्यन्ये ॥१॥

उपाध्यायस्तु पाठकः ।

उपेत्याधीयतेऽस्मादित्युपाध्यायः "इङोऽपादाने तु टिद्वा" ॥५।३।१९॥ इति घञ् ॥ १ ॥ पाठयति इति पाठकोऽध्यापकः ॥ २ ॥

अनूचानः प्रवचने साङ्गेऽधीती गणिश्च सः ॥७८॥

अनूवाचेत्यनूचानः ॥ "वेयिवदनाश्वदनूचानम्"॥५।२।३॥ इति काने साधु ॥१॥ प्रोच्यते प्रवचनमागमस्तत्र साङ्गे इत्याचाराद्यङ्गयुक्ते अधीतमनेनाधीती "इष्टादेः" ॥७।१।१६८॥ इतीनि "व्याप्ये क्तेनः"॥२।२।९९॥ इति कर्मणि सप्तमी । गण्यते पूज्यतया इति गणिः "खरेभ्य इः" ॥ (उणा-६०६) ॥ इति इः ॥ २ ॥ ७८ ॥

शिष्यो विनेयोऽन्तेवासी

शासनीयः शिष्यः "दृवृग्स्तुजुषेतिशासः" ॥५।१।४०॥ इति क्यपि । "इसासः शासः"॥४।४।११८॥ इतीसादेशः ॥ १ ॥ विनीयते विनेयः । "य एचातः"॥५।१।२८॥ इति यः ॥ २ ॥ गुरोरन्ते वसत्यवश्य इति अन्तेवासी "शयवासिवासेष्वकालात्" ॥३।२।२५॥ इति सप्तम्या अलुप् ॥ ३ ॥ शेषश्चात्र "शिष्ये छात्रः" ॥

शैक्षः प्राथमकल्पिकः ।

शिक्षाशीलमस्य शैक्षः । "अद्स्याच्छत्रादेरञ्"॥६।४।६०॥ इत्यञ् । शिक्षायां भव इति वा "शिक्षादेश्चाण्"॥६।३।१४८॥ इत्यण् ॥ १ ॥ प्रथमकल्प आद्यारम्भः प्रयोजनमस्य प्राथमकल्पिकः, प्रथमकल्पमधीत इति वा "पदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकात्" ॥६।२।११९॥ इतीकण् ॥ २ ॥

सतीर्थ्यास्त्वेकगुरवः

---

१ एकम् । २ एकम् ।

तरन्त्यनेन विद्याम्भोधिमिति तीर्थं गुरु, समाने तीर्थे वसन्ति सतीर्थ्या "सतीर्थ्य"॥६।४।७८॥ इति यान्तो निपात्यते ॥ १ ॥ एक समानो गुरुरेषामेकगुरव ॥ २ ॥

[1]विवेक पृथगात्मता ॥७९॥

विवेचन हेयोपादेयज्ञान विवेक । अविवेकात् पृथक् भिन्न आत्मा पृथगात्मा तद्भाव पृथगात्मता ॥ ७९ ॥

एकब्रह्मव्रताचारा मिथ [2]सब्रह्मचारिण ।

तुल्यागमास्तुल्यव्रतारतुल्याचाराश्च अन्योन्य समाने ब्रह्मण्यागमे गुरुकुले वा व्रत चरन्तात्येवशीला सब्रह्मचारिण, समाना ब्रह्मचारिण इति वा "सब्रह्मचारी" ॥३।२।१५०॥ इति निपात्यते ॥

स्यात्पारम्पर्यमाम्नाय सम्प्रदायो गुरुक्रम ॥८०॥

परम्पराया गुरुशिष्यप्रशिष्यादिसन्तानरूपाया भाव पारम्पर्यम् ॥१॥ आम्नायते आम्नाय ॥२॥ सम्यक् प्रदीयते सम्प्रदाय ॥३॥ गुरो क्रमो गुरुक्रम ॥४॥८०॥

व्रतादान परिव्रज्या तपस्या नियमस्थिति.

व्रत शास्त्रविहितो नियमस्तस्यादान व्रतादानम् ॥१॥ परिव्रजन परिव्रज्या । प्रव्रज्यापि । "आस्याटिव्रज्यज क्यप्"॥५ ३।९७॥ इति क्यप् ॥ २ ॥ तपस करण तपस्या "तपस क्यन्"॥३।४।३६॥ इति क्यनि "शासिप्रत्ययात्"॥५।३।१०५॥ इति अ ॥३॥ नियम व्रतेऽवस्थान नियमस्थिति ॥ ४ ॥

अहिंसासूनृतास्तेयब्रह्माकिञ्चनता [3]यमाः ॥८१॥

हिंसा प्राणव्यपरोपण तदभावोऽहिंसा ॥ १ ॥ सूनृत प्रिय सत्य च वच ॥२॥ स्तेयमदत्तादान तदभावोऽस्तेयम् ॥३॥ ब्रह्मेति ब्रह्मचर्य मैथुनत्याग ॥४॥ अकिञ्चनता परिग्रहत्याग ॥५॥ यम्यते चित्तमेभिरिति यमा ॥ ८१ ॥

[4]नियमा [5]शौचसन्तोषौ स्वाध्यायतपसी अपि ।
देवताप्रणिधान च

नियम्यते चित्तमेभिर्नियमा । शुचेर्भाव कर्म वा शौच कायमनसो शुद्धि ॥१॥ सन्तोष सन्निहितसाधनादधिकस्याऽनुपादित्सा ॥२॥ स्वकीयमध्ययन स्वाध्यायो

१ एकम् । २ एकम् । ३ एकम् । ४ एकम् । ५ शौच सन्तोष इत्यपि पाठ ।

मोक्षशास्त्रा ययन प्रणवजपो वा ॥ ३ ॥ तप्यते तदिति तपश्चान्द्रायणादि ॥ ४ ॥ देवताया वीतरागस्य प्रणिधानमात्मना सर्वत सम्भेद ॥ ५ ॥

करण पुनरासनम् ॥८२॥

क्रियते मनोऽवश्यमनेन करणम् ॥ १ ॥ आस्यतेऽनेन आसन पद्मासनादि ॥ २ ॥ ८२ ॥

प्राणायाम प्राणयम श्वासप्रश्वासरोधनम् ।

प्राणस्य आयमन प्राणायाम ॥१॥ प्राणस्य यमन प्राणयम ॥२॥ सत्यासने बाह्यस्य वायोराचमन श्वास, कोष्ठ्यस्य वायोर्नि श्वसन प्रश्वास, तयो रोधन गतिच्छेद ॥

प्रत्याहारस्त्विन्द्रियाणा विषयेभ्य समाहृति ॥८३॥

प्रतीपमाहरण विषयेभ्य इन्द्रियाणा प्रत्याहार ॥ १ ॥ ८३ ॥

धारणा[1] तु क्वचिद्धयेये चित्तस्य स्थिरबन्धनम् ।

धारण धारणा क्वचिदिति देवतादौ ध्यातव्ये चित्तस्य स्थिरो बन्ध स्थैर्यमिति यावत् ॥

ध्यान[2] तु विषये तस्मिन्नेकप्रत्ययसन्तति ॥८४॥

ध्यायते ध्यान विषये तस्मिन्निति देवतादौ ध्येये एका प्रत्ययान्तरेणापरामृष्टा प्रत्ययस्य ध्येयालम्बनस्य सन्तति सदृश प्रवाह इति ॥ ८४ ॥

समाधिस्तु[3] तदेवार्थमात्राभासनरूपकम् ।

सम्यगाधीयते समाधि तदेव ध्यानमेवार्थमात्राभासनरूप ध्येयाकारनिर्भासात्मक ध्येयस्वभावावेशात् ॥

उपसहारमाह—

एव योगो यमाद्यङ्गैरष्टभि सम्मतोऽष्टधा ॥८५॥

स्पष्टम् ॥ ८५ ॥

श्व श्रेयस शुभशिवे कल्याणं श्वोवसीयस श्रेयः ।

क्षेम भावुकभविककुशलमङ्गलभद्रमद्रशस्तानि ॥८६॥

---

१ एकम् । २ एकम् । ३ एकम् ।

शोभन श्रेय श्व श्रेयस, श्व आगामि श्रेयो वा । "निसश्च श्रेयस" ॥७।३। १२२॥ इत्यत्समासान्त ॥१॥ शोभते शुभम् ॥२॥ शेतेऽशुभमनेन शिवम् ॥ ३ ॥ कल्यते वार्यते कल्याणम् । "कल्याणपर्याणादय" ॥ ( उणा-१९३ )॥ इत्याणान्तो निपात्यते, कल्य नीरजत्वमणतीति वा ॥४॥ वसुमच्छब्दादीयसौ मतोरन्त्यस्वरादेश्च लोपे वसीय शोभन वसीय श्वोवसीयस, श्व आगामि वसीयो वा "श्वसो वसीयस" ॥७।३।१२१॥ इत्यत्समासान्त ॥५॥ अतिशयेन प्रशस्य श्रेय ॥६॥ क्षीयन्ते क्लेशा अनेन क्षेम पुक्लीबलिङ्ग । "अर्तीरि"॥ (उणा-३३८) ॥ इति म ॥७॥ भवनशील भावुकम् ॥ ८ ॥ भवोऽस्त्यस्य भविकम् ॥ ९ ॥ कुश्यति पुण्यात्मना सम्बध्यते कुशलम् । "तृपिवपिकुपिकुशि"-॥ (उणा-४६८) ॥ इत्यलक् । कुश लातीति वा ॥ १० ॥ मङ्ग्यते सेव्यते मङ्गलम् । मृदिकन्दि-॥ ( उणा-४६५ ) ॥ इत्यल ॥ ११ ॥ भन्दते भद्र "भन्देर्वा" ॥ ( उणा-३९१ )॥ इति रो नलुक् च, भन्द्रमपि ॥ १२ ॥ माद्यति हृष्यत्यनेन मद्रम् । "भीवृवि"-॥ ( उणा-३८७ )॥ इति र ॥ १३ ॥ शस्यते स्तूयते इति शस्तम् । प्रशस्तमित्यपि ॥ १४ ॥ शेषश्चात्र "भद्रे भव्य काम्य सुकृतसूनृते" ॥ ८६ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिताया स्वोपज्ञाभिधानचिन्तामणिनाममालाटीकाया देवाधिदेवकाण्ड प्रथम ॥ १ ॥

अर्हम्

## अथ देवकाण्डः

अथ द्वितीय देवकाण्ड व्याख्यायते । तत्र देवानामाश्रय स्वर्ग इति प्रथम स्वर्गनामान्युच्यन्ते—

**स्वर्गस्त्रिविष्टप द्योदिवौ भुविस्तविषताविषौ नाक ।**
**गौस्त्रिदिवमूर्ध्वलोक सुरालय**

स्वर्यते सुखहेतुतया कथ्यते इति स्वर्ग "गम्यमिरमि"-॥ ( उणा-९२ ) ॥ इति ग । सुष्ठु अर्ज्यते इति वा भावाकर्त्रोर्घञ् ॥ १ ॥ तृतीय विष्टप त्रिविष्टपम् । "भूर्भुव स्व" इति श्रुते , अत्र मयूरव्यसकादित्वात्समासे पूरणप्रत्ययलोप । त्रिपिष्टपमिति प्राच्या , ते हि प्रायेण पवौ शसौ च व्यत्यस्य पठन्ति ॥ २ ॥ द्युक् अभिगमे द्यौति अभिगच्छति अमू सुरजन इति "द्युगमिभ्या डो" ॥ (उणा-८६७) ॥

इति डोप्रत्यये, द्योशब्द ओकारान्त ॥ ३ ॥ दीव्यन्त्यस्या देवा इति "दिवेर्डिव्" ॥ ( उणा–९४९ ) ॥ इति डिव्प्रत्यये दिव्शब्दो वन्त ॥ द्वयोरपि सौ द्यौ स्त्रीलिङ्ग ॥ ४ ॥ भवत्यस्या सुखमिति "तुभूस्तुभ्य कित्" ॥ (उणा–९९६) ॥ इति इस् प्रत्यये भुवि स्त्रीलिङ्ग यद्वाचस्पति – "त्रिपिष्टप देवलोको भुवि स्त्री द्योदिवौ स्त्रियौ" ॥५॥ तव गताविति सौत्रो धातु तव्यते शुभकर्मवशादस्मिन्निति "तवेर्वा" ॥ ( उणा–५५० ) ॥ इति वा णिति इषे तविष ताविष ॥ ६ ॥ ७ ॥ नास्मिन्नक दु खमस्तीति नाक पुक्लीबलिङ्ग । नखादित्वात् " अन् स्वरे " ॥३।२।१२९॥ इत्यन् न भवति । न आकम्यते अभिलष्यते नास्तिकैरिति " नञ क्रमिगमि"– ॥ ( उणा—४ ) ॥ इति डिति अप्रत्यये वा नाक ॥ ८ ॥ गच्छन्त्याश्रयन्ति देवास्ता मिति "द्युगमिभ्या डो ॥ ( उणा–८६७) ॥ इति डोप्रत्यये गौ स्त्रीपुसलिङ्ग ॥९॥ तृतीय दिव लोकस्त्रिदिवम् । पुक्लीबलिङ्ग । मयूरव्यसकादित्वात् समासस्तीयलोपश्च । अत्र दीव्यन्त्यस्मिन्निति घञर्थे "स्थादिभ्य क"॥५।३।८२॥ इति कप्रत्यये दिवमिति सिद्धम् ॥ १० ॥ ऊर्ध्वश्चासौ लोकश्च ऊर्ध्वलोक ॥ ११ ॥ सुराणामालय आवास सुरालय ॥ १२ ॥ अस्य यौगिकत्वात् त्रिदशावासदेवलोकप्रभृतयो गृह्यन्ते । शेषश्चात्र—

"फलोदयो मेरुपृष्ठ वासवावाससैरिकौ ।
दिदिविर्दीदिविर्द्युश्च दिव च स्वर्गवाचका " ॥१॥

स्वरव्ययेषु वक्ष्यते ॥

अथ देवनामानि—

**तत्सदस्त्वमरा ॥ १ ॥**

**देवा सुपर्वसुरनिर्जरदेवतर्भु-**
**बर्हिर्मुखानिमिषदैवतनाकिलेखा ।**
**वृन्दारका सुमनसास्त्रिदशा अमर्त्या**
**स्वाहास्वधाक्रतुसुधाभुज आदितेया ॥२॥**
**गीर्वाणा मरुतोऽस्वप्ना विबुधा दानवारय ।**

तत्सद इति तच्छब्देन स्वर्ग परामृश्यते । तत्र सीदन्तीति तत्सद स्वर्गसद "क्विप्"॥५।१।१४८॥ इति क्विप् । यौगिकत्वात् द्युसद्मान इत्यादय ॥ १ ॥ न म्रियन्त इत्यमरा अमरशब्दश्चिरस्थायित्वादिलक्षणया देवेषु यौगिको रूढश्च ॥२॥ ॥ १ ॥ दीव्यन्ति क्रीडन्तीति देवा "लिहादिभ्य"॥५।१।५०॥ इत्यच् ॥ ३ ॥

शोभन पर्व चारितमुत्सवो वा येषा ते सुपर्वाण ॥ ४ ॥ सुरत् ऐश्वर्यदीप्त्यो सुरन्तीति सुरा । "नाम्युपान्त्य "॥५।१।५४॥ इति क । सुन्वन्तीति वा "ऋज्याजितञ्चि " ॥ (उणा–३८८) ॥ इत्यादिना कित् र । सुष्ठु राजन्त इति या "क्वचित्" ॥५।१।१७१॥ इति ड । सुरा एषामस्तीति वा "अभ्रादिभ्य "॥७।२।४६॥ इत्यप्रत्यय । यतोऽब्धिजा सुरा तै पीतेति प्रसिद्धि ॥ ५ ॥ निष्क्रान्ता जराया निर्जरा सदायौवनत्वात्तेषाम् ॥ ६ ॥ देवा एव देवता स्त्रीलिङ्ग "देवात्तल्" ॥ ७।२।१६२॥ इति तल् ॥ ७ ॥ रभन्ते पुण्यकार्येषु उत्सुका भवन्तीति ऋभव । "रभिप्रथिभ्यामृच्च रस्य" ॥ (उणा–७३०) ॥ इति उप्रत्यय । ऋशब्दोऽदितिवाची ततो भवन्तीति वा "केवयुभुरण्"– ॥ ( उणा–७४६ ) ॥ इति डु ॥ ८ ॥ बर्हि रग्निर्मुखमेषा बर्हिर्मुखा ॥ ९ ॥ न निमिषन्तीत्यनिमिपा ॥ १० ॥ देवता एव दैवता पुक्लीबलिङ्ग " प्रज्ञादिभ्योऽण् " ॥७।२।१६५॥ इत्यण् ॥ ११ ॥ नाक स्वर्गो विद्यते येषा ते नाकिन । यौगिकत्वात् स्वगिण , त्रिदिवाधीशा इत्यादयोऽपि ॥ १२ ॥ लिख्यन्ते चित्रादौ ध्यानार्थमिति लेखा , हस्तादौ प्रशस्ता लेखा सन्त्ये षामिति वा अभ्रादित्वाद ॥ १३ ॥ प्रशस्त वृन्दमस्त्येषा वृन्दारका "वृन्दादारक ॥७।२।११॥ इत्यारक ॥ १४ ॥ शोभन मनो येषा ते सुमनस सङ्कल्पमात्रेण लब्ध-सिद्धित्वात्, मलिनसङ्कल्पाभावाद्वा । सुष्ठु मान्यन्ते इति वा "विहायस्सु मनस्" ॥ (उणा ९७६)॥ इत्यसन्तो निपात्यते ॥१५॥ त्रिर्दश त्रिदशा "प्रमाणीसख्याड्ड "॥७। ३।१२८॥ इति ड "त्रिशादेता देवतास्त्रयस्त्रिशदेतास्त्रिशदक्षरा ।वराड्"इति श्रुते । तिस्रो दशा वयोऽवस्था येषा ते त्रिदशास्त्रिशद्वषा मनुष्ययुवान त्रिदशा इव त्रिदशा इति वा ॥ १६ ॥ न म्रियन्ते इत्यमर्त्त्या "मृशीपसिवस्यनिभ्यस्तादि " ॥ ( उणा– ३६० ) ॥ इति तकारादिर्यप्रत्यय । म्रियन्त इति मर्त्ता "लृम्रो वा"॥ ( उणा– २०२ ) ॥ इति तप्रत्यय मर्त्ता एव मर्त्त्या "मर्त्तादिभ्यो य " ॥७।२।१५९॥ इति स्वार्थे य , न मर्त्त्या अमर्त्त्या इति वा ॥ १७ ॥ स्वाहास्वधाक्रतुसुधाभुज इति भुक् शब्द स्वाहादीना प्रत्येक सबध्यते तेन स्वाहाभुज , स्वधाभुज , क्रतुभुज , सुधाभु-जश्च स्वाहा भुञ्जते इत्यादि कृत्वा । एषा यौगिकत्वात् स्वाहाशना , स्वधाशना , यज्ञा-शना , अमृतान्धस इत्यादयोऽपि ॥ २१ ॥ न ददाति दु खमित्यदिति । "नञो दागो डिति "॥ (उणा–६६७) ॥ इति डिति । अदितेर्ज्यामदिती, तस्या अपत्यानि आदितेया "ड्याप्त्यूड "॥६।१।७०॥ इत्येयण् । यौगिकत्वादादित्या , अदितिजा इत्यादयोऽपि ॥ २२ ॥ २ ॥ गीरेव वाणोऽस्त्र येषा ते गीर्वाणा ॥ २३ ॥ म्रियन्ते पुण्यक्षयाच्च्यवन्त इति मरुत "म्र उत्" ॥ ( उणा–८८९ )॥ इति उत् ॥ २४ ॥ नास्ति स्वप्नो निद्रा येषा ते अस्वप्ना ॥ २५ ॥ विबुध्यन्ते जानन्त्यवधिनेति विबुधा ॥ २६ ॥ दानवानामरयो दानवारय । यौगिकत्वात् दनुजद्विष इत्यादय ॥ २७ ॥

शेषश्चात्र–

"निलिम्पा कामरूपाश्च साध्या शोभाश्चिरायुष ।
पूजिता मर्त्यमहिता सुबाला वायुभा सुरा ॥ १ ॥

तथा—

"द्वादशार्का वसवोऽष्टौ विश्वेदेवास्त्रयोदश ।
षट्त्रिंशत्तुषिताश्चैव षष्टिराभास्वरा अपि ॥ २ ॥
षट्त्रिंशदधिके माहाराजिकाश्च शते उभे ।
रुद्रा एकादशैकोनपञ्चाशद्वायवोऽपरे ॥ ३ ॥
चतुर्दश तु वैकुण्ठा सुशर्माण पुनर्दश ।
सा याश्च द्वादशेत्याद्या विज्ञेया गणदेवता " ॥ ४ ॥

तेषा यान विमान

तेषा देवाना यान वाहन देवयान सुरयानमित्यादि । विमान्ति वर्त्तन्तेऽस्मिन् देवा इति विमान पुक्लीबलिङ्ग । व्योम्नि यान्त्यऽनेन व्योमयानमित्यपि । तेषा विमानो यानमिति सबन्धात् विमानयाना , वैमानिका , विमानिका इत्यादीनि यौगिकानि देवनामानि ज्ञेयानि ॥

अन्ध पीयूषममृत सुधा ॥३॥

तेषा देवानामन्धोऽन्न भोज्यमाहार इति यावत् देवान्धो, देवान्न, देवभोज्य, देवाहार इत्यादि । पीयि सौत्रो धातु पीयत इति पीयूषम् । "खलिफलि " ॥ (उणा–५६०) ॥ इत्यादिना ऊष , पेयूषमित्यपि ॥ १ ॥ नास्ति मृतमत्रेत्यमृतम् ॥ २ ॥ सुष्ठु धीयते पीयत इति सुधा "उपसर्गादात " ॥५।३।११०॥ इत्यङ् ॥ ३ ॥ समुद्रनवनीतमपि । देवाश्च जैनसमये भवनपतिव्यन्तरज्योतिष्कवैमानिकभेदाश्चतुर्धा भवन्ति ॥ ३ ॥

तत्र भवनपतीनाह–

असुरा नागास्तडित सुपर्णका वह्नयोऽनिला स्तनिता ।
उदधिद्वीपदिशो दश भवनाधीशा कुमारान्ता ॥४॥

दशेति दशसख्या असुरादय रत्नप्रभाया मध्ये भवन्तीति भवनानि आवासा तेषामधीशा भवनाऽधीशा कुमारान्ता कुमारशब्दान्ता । तेन असुरकुमारा , नागकुमारा , तडित्कुमारा , सुपर्णकुमारा , वह्निकुमारा , अनिलकुमारा , स्तनितकुमारा , उदधिकुमारा , द्वीपकुमारा , दिक्कुमारा इत्युच्यन्ते । कुमारवदेते कान्तदर्शना

सुकुमारा मृदुमधुरललितगतय श्रृगाराभिजातरूपविक्रिया कुमारवच्चोद्धतवेषभाषाभरणप्रहरणावरणयानवाहना । कुमारवच्चोल्बणरागा क्रीडनपराश्चेत्यत कुमारा-इत्युन्यन्ते ॥ ४ ॥

अथ व्यन्तरानाह–

स्यु पिशाचा भूता यक्षा राक्षसा किन्नरा अपि ।
किपुरुषा महोरगा गन्धर्वा व्यन्तरा अमी ॥५॥

पिशाचादयोऽष्टौ विविधेषु शैलकन्दरान्तरवनविवरादिषु प्रतिवसन्तीति व्यन्तरा, वनाना समूहो वान तस्यान्तरे भवन्तीति पृषोदरादित्वाद्वानमन्तरा इत्यपि ॥५॥

अथ ज्योतिष्कानाह—

ज्योतिष्का पञ्च चन्द्रार्कग्रहनक्षत्रतारका ।

द्योतन्त इति ज्योतीषि विमानानि तान्यावासतया सन्त्येषा ज्योतिष्का । व्रीह्यादिभ्यस्तौ"॥७।२।५॥ इतीकप्रत्यय । भास्वरशरीरत्वात् समस्तादिग्मण्डलद्योतनाद् ज्योतीषि देवा ज्योतीष्येव वा ज्योतिष्का । पञ्चेति पञ्चसख्या पञ्चविधा इत्यर्थ । ते तु चन्द्रा अर्का ग्रहा नक्षत्राणि तारकाश्च ॥

वैमानिकानाह—

वैमानिका पुन कल्पभवा द्वादश ते त्वमी ॥ ६ ॥
सौधर्मेशानसनत्कुमारमाहेन्द्रब्रह्मलान्तकजा ।
शुक्रसहस्रारानतप्राणतजा आरणाच्युतजा ॥ ७ ॥
कल्पातीता नव ग्रैवेयका पञ्च त्वनुत्तरा ।

विमानेषु भवा वैमानिका । अध्यात्मादित्वादिकण् । ते च द्विविधा' कल्पभवा कल्पातीताश्च । इन्द्रादिदशतया कल्पनात् कल्प समुदाय सन्निवेशो विमानमात्रपृथिवीप्रस्तारस्तत्र भवा कल्पभवा द्वादश ते पुनरमी ॥६॥ सुधर्मा देवसभा साऽस्मिन्नस्तीति सौधर्म कल्प "तदत्रास्ति"॥६।२।७०॥ इत्यण् । तत्र जाता' सौधर्मजा, ईशानस्येन्द्रस्य निवास ऐशान कल्पस्तत्र जाता ऐशानजा, एव सनत्कुमारादिकल्पेषु जाता सनत्कुमारजा, माहेन्द्रजा, ब्रह्मा ब्रह्मलोकोऽभिधीयते भीमो भीमसेन इति न्यायादिति ब्रह्मजा, लान्तकजा, महाशुक्रजा, सहस्रारजा, आनतजा, प्राणतजा, आरणजा, अच्युतजा । अत्रार्याया तु ब्रप्राक्षरयो पूर्वौ द्रतो ह्रादिसयोगवर्जनात् गुरू न भवत ॥७॥ कल्पानतीता कल्पातीता कल्पान् अतिक्रम्यो-

परि स्थिता इत्यर्थ । नवसख्या नव, लोकपुरुषस्य ग्रीवाप्रदेशविनिविष्टा ग्रीवाभरणभूता ग्रैवेयका । "कुलकुक्षिग्रीवाभ्यश्श्वास्यलङ्कारे" ॥६।३।१२॥ इत्येयकञ् । पञ्च त्विति पञ्चसख्या , न विद्यते उत्तरो येभ्यस्ते अनुत्तरा विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धनामान ॥

उपसहारमाह—

निकायभेदादेव स्युर्देवा किल चतुर्विधा ॥ ८ ॥

एवमुक्तप्रकारेण, देवा भवनपत्यादय चतुर्विधा निकायभेदात् निकायो निवास उत्पादस्थान तद्भेदात् । तथाहि— भवनपतयोऽशीतिसहस्राधिकयोजनलक्षपिण्डाया रत्नप्रभायामूर्ध्वमधश्च योजनसहस्रमेकैकमपहाय जन्माऽऽसादयन्ति । व्यन्तरास्तस्या एवोपरि यत्परित्यक्त योजनसहस्र तस्याध ऊर्ध्वं च योजनशतमेकैकमपहाय मध्येऽष्टसु योजनशतेषु जन्म प्रतिलभन्ते । ज्योतिष्कास्तु समतलाद् भूभागात् सप्त शतानि नवत्यधिकानि योजनानामारभ्य दशोत्तरयोजनशतपिण्डे नभोदेशे लोकान्तात् किञ्चिन्न्यूने जन्म गृह्णन्ति। वैमानिका रज्जुमध्यर्द्धामधिरुह्याऽत सौधर्मादिषु कल्पेषु सर्वार्थसिद्धविमानपर्यवसानेषूत्पद्यन्ते, तदेवमुत्पादनिवासभेदाच्चतुर्विधा देवा । स्वधामसूत्पन्ना भवनपत्यादयोऽन्यत्रापि लवणजलधिमन्दरवर्षधराद्रिद्रुमगहनप्रभृतिषु वसन्ति । उक्तस्थानव्यतिरेकेणान्यत्रैषामुत्पादो जन्म नास्तीति निवासार्थ , सङ्घार्थो वा निकायशब्द ॥ ८ ॥

अथ देवविशेषनामान्याह—

आदित्य सवितार्यमा खरसहस्रोष्णांशुरश्मू रवि-
मार्तण्डस्तरणिर्गभस्तिररुणो भानुर्नभोऽहर्मणि ।
सूर्योऽर्क किरणो भगो ग्रहपुष पूषा पतङ्ग खगो
मार्ताण्डो यमुनाकृतान्तजनक प्रद्योतनस्तापन ॥ ९ ॥

ब्रध्नो हसश्चित्रभानुर्विवस्वान्सूरस्त्वष्टा द्वादशात्मा च हेलि ।
मित्रो ध्वान्ताराातिरब्जांशुहस्तश्चक्राब्जाहर्बान्धव सप्तसप्ति: ॥ १० ॥
दिवादिनाहर्दिवसप्रभाविभाभास कर स्यान्मिहिरो विरोचन ।
ग्रहाब्जिनीगोद्युपतिर्विकर्तनो हरि शुचीनौ गगनाद्ध्वजाध्वगौ ॥ ११ ॥

हरिदश्वो जगत्कर्मसाक्षी भास्वान्विभावसु ।
त्रयीतनुर्जगच्चक्षुस्तपनोऽरुणसारथि ॥ १२ ॥

अदितेरपत्य लोकरूढ्या आदित्य । " अनिदमि- "॥६।१।१५॥ इत्यादिना ञ्य ॥१॥ सूते प्रकाश सविता ॥२॥ अरीनामयति अर्यमा " श्वन्मातरिश्वन्"-॥ (उणा-९०२) ॥ इत्यादिना अन्नन्तो निपात्यते ॥३॥ खरा , सहस्रम्, उष्णाश्चाशवो यस्य खरसहस्रोष्णाशु खराशु , सहस्राशु , उष्णाशु , यौगिकत्वात् खररश्मि , दश-शतरश्मि , शीतेतररश्मिरित्यादयोऽपि ॥६॥ अश्नुते या अशु "अशेरान्नोऽन्तश्च" ॥ ( उणा-७१९ ) ॥ इति उर्नोऽन्तश्च ॥ ७ ॥ रूयते स्तूयते रवि "खरेभ्य इ. " ॥ (उणा-६०६) ॥ इति इ ॥८॥ मृतण्डस्यापत्य मार्त्तण्ड "ऋषि-"॥६।१।६१॥ इत्या-दिनाऽण् ॥९॥ तरन्त्यनेन तम इति तरणि पुन्नीलिङ्ग । "ऋहृसृ "॥ (उणा-६३८)॥ इत्यादिना अणि ॥१०॥ गृ ग्यते अभिकाङ्क्ष्यते लोकैरसाविति गभस्ति "गृधेर्गभ च" ॥ (उणा-६६१) ॥ इति अस्तिक् गृधेर्गभादेशश्च, गा बभस्ति दीपयतीति वा पृषो-दरादित्वात् ॥११॥ अरुण सारथिरस्यास्तीत्यरुण । अभ्रादित्वादप्रत्यय , अरुणवर्ण-त्वाद्वा अरुण ॥१२॥ भातीति भानु "दाभाभ्या नु "॥ (उणा-७८६) ॥ इति नु ॥१३॥ नभोऽह्नोर्मणिर्नभोऽह्र्मणि मणिशब्द प्रत्येक सब यते तेन नभोमणि , अह-र्मणि । यौगिकत्वाद्व्योमरत्न, दिनरत्नमित्यादि ॥१४॥१५॥ सरति सुवति वा कर्मसु लोकानिति सूर्य । "कुप्यभिद्य "॥५।१।३९॥ इत्यादिना क्यन्निपात । सूर एव वा सूर्य मर्त्यादित्वाद्य ॥१६॥ अर्च्यते स्तूयते इत्यर्क । अर्च्यत इति वा "भीण्शलि-" ॥(उणा-२१) ॥ इति क. ॥१७॥ किरति तमासीति किरण । "कॄगॄपॄकृपिवृषिभ्य कित् " ॥ ( उणा-१८८) ॥ इत्यण ॥१८॥ भज्यते आश्रीयते अनेन कृत्वा लोकै-रालोक इति भग । "गोचरसञ्चर " ॥५।३।१३१॥ इत्यादिना घ ॥१९॥ ग्रहान् पुष्णातीति ग्रहपुष । "मूलविभुजादय " ॥५।१।१४४॥ इति क ॥ आदित्यो हि सुषुम्णाभिर्नाडिभिर्ग्रहान् पुष्णाति ।

यद्याडि —"सुषुम्णाद्याश्च नाड्योऽस्य पुष्णन्ति सतत ग्रहान्" ॥२०॥

पूषति वर्द्धते ऋतुभेदाद्रश्मिभिरिति " उक्षितक्षि- " ॥ ( उणा-९०० ) ॥ इत्यादिना अनि पूषा ।

यद्याडि —

"ऋतुभेदात् पुनस्तस्यातिरिच्यन्तेऽपि रश्मय ।
शतानि द्वादश मधौ त्रयोदशैव माधवे ॥ १ ॥
चतुर्दश पुनर्ज्येष्ठे नभोनभस्ययोस्तथा ।
पञ्चदशैव त्वाषाढे षोडशैव तथाश्विने ॥ २ ॥
कार्त्तिके त्वेकादश शतान्येव तपस्यपि ।
मार्गे तु दश सार्द्धानि शतान्येव च फाल्गुने ॥ ३ ॥

पौष एव पर मासि सहस्रं किरणा रवे ” ॥२१॥

पतति गच्छति व्योम्नीति पतङ्ग । “पतितमि ”॥ (उणा–९८) ॥ इत्यादिना अङ्ग , पत सन् गच्छतीति वा “नाम्नो गम' खड्डौ च-”॥५।१।१३१॥ इत्यादिना खड् ॥२२॥ खे गच्छतीति डे खग ॥२३॥ मृतमण्डमस्येति मृताण्ड । “मृतमण्डमजायत” इति श्रुते । तस्यापत्यमृष्यणि माताण्ड ॥२४॥ यमुनाया , कृतान्तस्य च जनक यमुनाजनक , कृतान्तजनक । यौगिकत्वात्कालिन्दीसू , यमसूरित्यादयोऽपि ॥२५॥२६॥ प्रद्योतते प्रद्योतन ॥२७॥ तापयनीति तापन नन्द्यादित्वादन ॥२८॥९॥ बध्नाति तेजसा दृष्टीरिति ब्रध्न “दिननम्न-”॥(उणा–२६८)॥ इत्यादिना निपात ॥२९॥ हन्ति तमो हस “मावावद्यमि ”॥ (उणा–५६४)॥ इत्यादिना स ॥३०॥ चित्रा नानाप्रकारा भानवो यस्य चित्रभानु ॥ ३१ ॥ विवस्तेजोऽस्यास्तीति विवस्वान् मतु ॥ ३२ ॥ सूते तेज इति सूर “ऋज्यजि-”–॥ ( उणा–३८८ ) ॥ इत्यादिना रक् । तालव्यादिरित्यन्ये ॥ ३३ ॥ त्वेषति दीप्यते त्वष्टा “त्वष्टृक्षत्तृदुहित्रादय ” ॥ ( उणा–८६५ ) ॥ इति निपातनात् ॥ ३४ ॥ द्वादशात्मानो रूपाण्यस्य द्वादशात्मा । द्वादश ह्यादित्या इति रूढि ॥ ३५ ॥ हेलयति क्रीडयत्यशूनिति हेलि । “ स्वरेभ्य-इ ” ॥ ( उणा–६०६ ) ॥ इति इ ॥ ३६ ॥ मेद्यति मित्र “ चिमिदिशसिभ्य कित्” ॥ ( उणा–४५४ ) ॥ इति त्र ॥ ३७ ॥ ध्वान्तस्यारातिर्ध्वान्ताराति । यौगिकत्वात्तिमिराररित्यादय ॥ ३८ ॥ अब्जानि अशवश्च हस्ते यस्य स तथा अब्जहस्त , अशुहस्त । यौगिकत्वात् पद्मपाणि , गभस्तिपाणिरित्यादय ॥३९॥४०॥ चक्रस्याब्जस्याह्नश्च बान्धव चक्रबान्धव , अब्जबान्धव , अहर्बान्धव । यौगिकत्वात् चक्रवाकबन्धु , पद्मबन्धु , दिनबन्धुरित्यादय ॥४१॥४२॥४३॥ सप्तसख्या सप्तयो यस्य सप्तसप्ति । यौगिकत्वाद्विषमाश्व इत्यादय । सप्तभिर्नामभिरुपलक्षितोऽश्वो यस्येति वा सप्तसप्ति । यद्वेदे “सप्त युञ्जन्ति रथमेकचक्रमेकोऽश्वो वहति सप्तनामा” ॥४४॥१०॥ दिवादिभ्य. सप्तभ्य शब्देभ्य करशब्द तेन दिवाकर , दिनकर , अहस्कर , दिवसकर , प्रभाकर , विभाकर , भास्कर । दिवा करोतीत्यादिव्युत्पत्तौ “सख्याहर्दिवा ”॥५।१।१०२॥ इत्यादिना ट । यौगिकत्वाद्वासरकृद् , दिनप्रणी , दिनकृदित्यादय ॥ ५१ ॥ मेहति सिञ्चति मिहेर “शुषीषि-” ॥ (उणा–४१६) ॥ इत्यादिना इरक् “आदित्याज्जायते वृष्टि ” इति हि स्मृति ॥ ५२ ॥ विरोचते इति विरोचन नन्द्यादित्वादन ॥ ५३ ॥ ग्रहाणामब्जिनीना गवा दिवा च पति ग्रहपति , अब्जिनीपति , गोपति , द्युपति । यौगिकत्वात् ग्रहेश , पद्मिनिशि , त्विषामीश , दिनेश इत्यादयोऽपि ॥ ५७ ॥ विकृन्तत्यात्मान, विविध कर्त्तनमस्येति वा विकर्त्तन चक्रभ्रमेण तेज शातनात् ॥ ५८॥ हरति तमासीति हरि । “स्वरेभ्य-इ ” ॥ ( उणा–६०६ ) ॥ इति इ ॥ ५९ ॥ शोचत्यस्मिन्नुलूक इति शुचि ।

नाम्युपान्त्यत्वादि कित् ॥ ६० ॥ एति इन "जीर्णशादीबुध्यविमीभ्य कित्" ॥ (उणा–२६१) ॥ इति न ॥६१॥ गगनशब्दाद् ध्वजशब्दोऽध्वगशब्दश्च गगनध्वज , गगनाध्वग । यौगिकत्वान्नभ केतन , नभ पान्थ इत्यादय ॥६२॥६३॥११॥ हरितो नीला अश्वा अस्य हरिदश्व ॥ ६४ ॥ जगत , कर्मणा च साक्षी जगत्साक्षी, कर्मसाक्षी च ॥ ६६ ॥ भास सन्त्यस्य भास्वान् । यौगिकत्वादशुमान्, अशुमालीत्यादय ॥ ६७ ॥ विभा दीप्तिर्वसु धनमस्य विभावसु ॥ ६८ ॥ त्रयो वेदास्त्रयी सा तनुरस्य त्रयीतनु । "त्रयीतेजोमयो भानु" इति स्मृते ॥ ६९ ॥ जगता चक्षुर्जगच्चक्षु प्रकाशकत्वात् ॥ ७० ॥ तपतीति तपन नन्द्यादित्वादन ॥ ७१ ॥ अरुण सारथिरस्यारुणसारथि ॥ ७२ ॥ शेषश्चात्र—

"सूर्ये वाजीलोकबन्धुर्भानेमिर्भानुकेसर ।
सहस्राङ्क्षो दिवापुष्ट कालभृद्रात्रिनाशन ॥ १ ॥
पपी सदागति पीतु सावत्सररथ कपि ।
इशान पुष्करो ब्रह्मा बहुरूपश्च कर्णसू ॥ २ ॥
वेदोदय खतिलक प्रत्यूषाण्ड सुरात्रत ।
लोकप्रकाशन पीथो जगद्दीपोऽम्बुतस्कर" ॥ ३ ॥ १२ ॥

**रोचिरुस्ररुचिशोचिरशुगोज्योतिरर्चिरुपधृत्यभीशव ।**
**प्रग्रह' शुचिमरीचिदीप्तयो धाम केतुवृणिरश्मिपृश्नय: ॥१३॥**
**पाददीधितिकरद्युतिद्युतो रुग्विरोकाकिरणत्विषित्विष ।**
**भा प्रभावसुगभस्तिभानवो भा मयूखमहसी छविर्विभा ॥१४॥**

रोचत इति रोचि क्लीबलिङ्ग "रुच्यर्चि" ॥ (उणा–९८९) ॥ इत्यादिना इस् ॥ १ ॥ वसन्त्यस्मिन् रसा इत्युस्र "ऋज्यजि-" ॥ (उणा–३८८) ॥ इत्यादिना र कित् ॥ २ ॥ रोचते रुचि स्त्रीलिङ्ग । नाम्युपान्त्यत्वादि कित् ॥ ३ ॥ शोचति तमोऽस्मिन्निति इसि शोचि क्लीबलिङ्ग ॥ ४ ॥ अश्नुते द्यामित्यशु पुलिङ्ग ॥ ५ ॥ गच्छत्यस्मात्तम इति गौ पुस्त्रीलिङ्ग ॥ ६ ॥ द्योतते ज्योति क्लीबलिङ्ग । "द्युतेरादेश्च ज" ॥ (उणा–९९१) ॥ इति इस् ॥ ७ ॥ अर्च्यत इति इसि अर्चि स्त्रीक्लीबलिङ्ग ॥ ८ ॥ उपध्रियते अवतिष्ठते रसोऽस्मिन्निति उपधृति । "दृमुषि-" ॥ (उणा–६५१)॥ इत्यादिना बहुवचनात् ति कित् ॥९॥ अभ्यश्नाति तमांसीत्यभीशु' पुलिङ्गौ । "केवयुभुरण्य्वध्वर्य्वादय" ॥ (उणा–७४६) ॥ इति उदन्तो निपात्यते । अभीषुरिति गौड ॥ १० ॥ प्रगृह्यतेऽनेनेति अलि प्रग्रह ॥ ११ ॥ शुचिर्नैर्मल्यार्थेऽस्य शोचतीति शुचि, पुलिङ्ग कित् इ ॥ १२ ॥ म्रियते तमोऽस्मिन्निति मरीचि

पुस्त्रीलिङ्ग । "मृश्विकण्याणिदम्याविभ्य ईचि" ॥(उणा–६२७)॥ इति ईचि ॥ १३ ॥ दीप्यतेऽनयेति दीप्ति स्त्रिया क्ति ॥ १४ ॥ धीयते धाम "मन्" ॥ (उणा-९११)॥ इति मन् ॥ १५ ॥ चाय्यते पूज्यते केतु "चाय के च-" ॥ (उणा–७७८) ॥ इति तु ॥ १६ ॥ घराति घृणि "ऋदद्घृसृकुवृषिभ्य कित्" ॥ ( उणा–६३५ ) ॥ इति णि ॥ १७ ॥ अश्नुते यामिति रश्मि, एते त्रय पुलिङ्गा "अशो रश्चादि" ॥ (उणा–६८८) ॥ इति मि ॥ १८ ॥ पृच्छयते पृश्नि पुस्त्रीलिङ्ग "लूधूप्रच्छिभ्य कित्" ॥ ( उणा–६७९ ) ॥ इति नि, पृष्णिरित्येके, वृष्णिरित्यन्ये ॥१९॥१३॥ पद्यतेऽनेन पाद ॥ २० ॥ दीधीयते दीप्यतेऽस्या दीधिति स्त्रिया क्ति ॥ २१ ॥ कीर्यते कर अल् ॥ २२ ॥ द्योतते द्युति स्त्रीलिङ्ग ॥ २३ ॥ द्योतन द्युत् । "क्रुत्सपदादिभ्य क्विप्" ॥५।३।११४॥ इति क्विप् ॥ २४ ॥ रोचन रुक् ॥ २५ ॥ विरोचतेऽनेन विरोक ॥ २६ ॥ किरण प्राग्वत् ॥ २७ ॥ त्वेषते त्विषि स्त्रीलिङ्ग ॥ २८ ॥ त्वेषण त्विट् ॥ २९ ॥ भासते भा पुस्त्रीलिङ्ग ॥ ३० ॥ प्रभान प्रभा ॥ ३१ ॥ वसति रवाविति वसु । "भृमृतॄत्सरि-" ॥ (उणा–७१६) ॥ इत्यु ॥३२॥ गभस्तिभानू पूर्ववत् त्रयोऽपि पुलिङ्गा॰ ॥ ३४ ॥ भान भा "मृगयेच्छा-"॥५।३। १०१॥ इत्यादिना निपात्यते ॥ ३५ ॥ मयते विस्तार गच्छति मयूख । "मये-धिभ्यामूखेखौ" ॥ ( उणा–९१ ) ॥ इत्यूख ॥ ३६ ॥ मह्यते मह । "अस्" ॥ (उणा–९५२) ॥ इत्यस् ॥ ३७ ॥ छयति तम इति च्छवि स्त्रीलिङ्ग । "छवि-च्छिवि"॥ (उणा–७०६ ॥ इत्यादिना निपात्यते ॥३८॥ विभान विभा ॥३९॥१४॥

प्रकाशस्तेज उद्द्योत आलोको वर्च आतप ।

प्रकाशते प्रकाश ॥ १ ॥ तेजयति तेज ॥ २ ॥ उद्द्योतते उद्द्योत ॥ ३ ॥ आलोकते जनोऽनेनेत्यालोक ॥४॥ वर्चते दीप्यते वर्च ॥ ५ ॥ आतपति आतप । द्योत इत्यपि ॥ ६ ॥

मरीचिका मृगतृष्णा

मरीचिप्रतिकृतिर्मरीचिका । "तस्य तुल्ये क सज्ञाप्रतिकृत्यो"॥७।१।१०८॥ इति क । ग्रीष्मे हि सिकताश्शर्कराः प्रतिफलिता जलत्वेनाभान्ति, अत एव मरुम-रीचिकेत्युच्यते ॥१॥ मृगाणा तृष्णाऽस्या मृगतृष्णा ॥ २ ॥

मण्डल तूपसूर्यकम् ॥ १९ ॥

परिधि परिवेषश्च

मण्डयति मण्डल त्रिलिङ्ग "मृदिकन्दि" ॥ ( उणा ४६५ ) ॥ इत्यादिना अल ॥१॥ समीपे सूर्यस्य प्रतिकृतिरुपसूर्यक क्लीबम् ॥२॥१५॥ परितो धीयते परिधि

पुलिङ्ग "उपसर्गाद् कि."॥५।३।८७॥ इति कि ॥३॥ परितो विष्यते व्याप्यतेऽनेन परिवेष ॥ ४ ॥

सूरसूतस्तु काश्यपि ।
अनूरुर्विनतासूनुररुणो गरुडाग्रज ॥ १६ ॥

सूरस्य सूत सूरसूत । यौगिकत्वाद्रविसारथिरित्यादय ॥ १ ॥ कश्यपस्यापत्य काश्यपि ऋष्यण बाधित्वा "बाह्वादिभ्यो गोत्रे"॥६।१।३२॥ इतीञ् ॥२॥ न विद्येते ऊरू अस्य अनूरु ॥३॥ विनताया सूनुर्विनतासूनु यौगिकत्वाद्वैनतेय इत्यादय ॥४॥ अरुणवर्णत्वादरुण ॥५॥ गरुडस्याग्रजो गरुडाग्रज ॥ ६ ॥ शेषश्चात्र–"अरुणे विपुलस्कन्धो महासारथिराश्मन" ॥ १६ ॥

रेवन्तस्त्वर्करेतोज प्लवगो हयवाहन ।

रेवते गच्छति हयेनेति रेवन्त । "तॄजिभूवदि" ॥ (उणा–२२१)॥ इत्यादिना अन्त ॥ १ ॥ अर्करेतसो जात अर्करेतोज । "अजाते पञ्चम्या" ॥५।१।१७०॥ इति ड. ॥२॥ प्लवमानो गच्छति प्लवग ॥३॥ हयो वाहनमस्य हयवाहन ॥४॥

अष्टादश माठराद्या सवितु पारिपार्श्विका ॥१७॥

मठरस्यापत्य माठर ॥ "विदादेर्वृद्धे"॥६।१।४१॥ इत्यञ्। माठराद्या माठरप्रभृतय , ते यथा—माठर पिङ्गल दण्डो राजश्रोथौ खरद्वारिकौ कल्माषपक्षिणौ जातृकार कुतापकौ पिङ्गगजौ दण्डिपुरुषौ किशोरकाविति । यद्याडि —

"सुरावृतस्त्वसावष्टादशभि पारिपार्श्विकै ।
इन्द्रादयश्च ते देवा सर्वे नामान्तरै स्थिता ॥ १ ॥
तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायक ।
वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामनश्च स ॥ २ ॥
पूर्वद्वारे गुहहरौ राजश्रोथौ क्रमेण तौ ।
द्वितीये तु धर्माधर्मौ तौ खरद्वारिकौ क्रमात् ॥ ३ ॥
तृतीये तु यमतार्क्ष्यौ क्रमात् कल्माषपक्षिणौ ।
चित्रगुप्तश्च कालश्च रवेर्दक्षिणपार्श्वगौ ॥ ४ ॥
प्रथमो जातृकाराख्यो माठराख्यो द्वितीयक ।
पश्चिमेनाब्धिवरुणौ तौ प्राप्नुयात् कुतापकौ ॥ ५ ॥
उदीच्या यक्षहेरम्बौ तौ च पिङ्गगजौ क्रमात् ।
प्राच्या तु रुद्ररेवन्तौ तौ दण्डिपुरुषौ क्रमात् ॥ ६ ॥

आश्विनौ तु पार्श्वद्वये तौ द्वावेव किशोरकौ ।
इत्यष्टादशको वर्गश्चण्डाशो पारिपार्श्विक" ॥ ७ ॥

परित पार्श्वे वर्त्तन्ते पारिपार्श्विका । "परेर्मुखपार्श्वात्"॥६।४।२९॥ इतीकण् ॥१७॥

**चन्द्रमा कुमुदबान्धवो दशश्वेतवाज्यमृतसूस्तिथिप्रणी ।**
**कौमुदीकुमुदिनीभदक्षजारोहिणीद्विजनिशौषधीपति ॥१८॥**
**जैवातृकोऽब्जश्च कलाशशैणच्छायाभृदिन्दुर्विधुरात्रिदृग्ज ।**
**राजा निशो रत्नकरौ च चन्द्र सोमोऽमृतश्वेतहिमद्युतिर्ग्लौ ॥१९॥**

चन्दति दीप्यते, आह्लादयति वा चन्द्रमा । "चन्दो रमस्॥ (उणा–९८६)॥ इति रमस् ॥ १ ॥ कुमुदाना बान्धव कुमुदबान्धव, यौगिकत्वात् कैरवबन्धुरित्यादय, सुहृदपि बन्धुप्रायत्वाद्बन्धुरेवेति कुमुदसुहृदित्यादयोऽपि ॥ २ ॥ दशसख्या श्वेताश्च वाजिनो यस्य स तथा दशवाजी, दशाश्व । यदाह व्याडि —

"अश्वास्तु दश चन्द्रस्य यजुश्चन्द्रमना वृष ।
सप्तधातुर्हयो वाजी हसो व्योममृगो नर ॥ १ ॥
अर्वा चाथ चन्द्रमन स्थानेऽस्ति त्रिघना क्वचित् ।
सप्तधातो पुन स्थाने सहरण्योऽस्ति कुत्रचित्" ॥ २ ॥

श्वेतवाजी सिताश्व ॥ ४ ॥ अमृत सूते अमृतसू, यौगिकत्वात् सुधासूरित्यादय ॥ ५ ॥ तिथी प्रणयति तिथिप्रणी ॥ ६ ॥ कौमुद्या कुमुदिन्या भाना दक्षजाना रोहिण्या द्विजाना निशाया औषधीना च पति॰ कौमुदीपति, कुमुदिनीपति, भपति, दक्षजापति, रोहिणीपति, द्विजपति, निशापति॰, औषधीपति । योगिकत्वात् ज्योत्स्नेश, कुमुद्वतीश, नक्षत्रेश, दाक्षायणीश, रोहिणीश॰, द्विजेश, निशेश, औषधीश इत्यादय ॥१४॥१८॥ जीवत्यनेन अमृतवर्षित्वाज्जगदिति जैवातृक । "जीवेरातृको जैव् च" ॥ (उणा–६७) ॥ इत्यातृक ॥१५॥ अप्सु जातोऽब्ज, समुद्रजातत्वात् समुद्रनवनीतमपि ॥ १६ ॥ कला शशमेण छाया च बिभर्त्ति कलाशशैणच्छायाभृत् कलाभृत्, शशभृत्, एणभृत्, छायाभृत्, यौगिकत्वात् कलानिधि, शशधर, मृगलाञ्छन, छायाङ्क इत्यादय॰ ॥ २० ॥ इन्दति इन्दु "भृमृ" ॥ ( उणा–७१६ ) ॥ इत्यादिना उ ॥ २१ ॥ विध्यति ताडयति विरहिण कैरिति विधु । "पृकाहृपि" ॥ (उणा–७२९) ॥ इत्यादिना उ कित् ॥ २२ ॥ अत्रेर्मुनेर्दृशो नेत्राज्जात अत्रिदृग्ज, यौगिकत्वादत्रिनेत्रप्रसूत इत्यादय॰ ॥२३॥ राजते राजा "उक्षितक्षि" ॥ (उणा ९००) ॥ इत्यादिना अन् ॥ २४ ॥ निशाशब्दाद्रत्न करश्च शब्दौ निशारत्नम्, निशाकर यौगिकत्वान्निशामणि, रजनी-

कर ॥२६॥ चन्दति चन्द्र "भीवृधि-" ॥ (उणा–३८७) ॥ इत्यादिना र ॥२७॥ सुनोति धातूनामनेकार्थत्वात् सूतेऽमृतमिति सोम "अर्त्तीरि" ॥ (उणा–३३८)॥ इत्यादिना म, सूयते वा सोम ॥ "नवो नवो भवति जायमान" इति श्रुते ॥२८॥ अमृत श्वेता हिमाश्च द्युतयो यस्य स तथा अमृतद्युति, श्वेतद्युति, हिमद्युति, यौगिकत्वात् सुधांशु, सितांशु, शीतांशुरित्यादय ॥३१॥ ग्लायते क्षीयते ग्लौ। "ग्लानुदिभ्यां डौ" ॥ (उणा–८६८) ॥ इति डौ ॥३२॥

शेषश्चात्र—

"चन्द्रस्तु मास्तपोराजौ शुभ्रांशु श्वेतवाहन।
जर्ण सूप्रो राजराजो यजत कृत्तिकाभव।
यज्ञराडौषधीगर्भस्तपस शयतो बुध ॥ १ ॥
स्यन्द खसिन्धु सिन्धूत्थ श्रविष्ठारमणस्तथा।
आकाशचमस पीतु क्लेदु पर्वरिचिक्लिदौ ॥ २ ॥
परिज्वा युवनो नेमिश्चन्दिर स्नेहुरेकभू" ॥ १९ ॥

षोडशोऽश कला

चन्द्रस्येति शेष। षोडशाना पूरण षोडश सख्यापूरणे डट्। कलयति सख्या कला ॥ १ ॥

चिह्न लक्षण लक्ष्म लाञ्छनम्।
अङ्क कलङ्कोऽभिज्ञान

चाह्यति चिह्न "दिननग्न" ॥ (उणा–२६८) ॥ इत्यादिना नान्तो निपात्यते ॥ १ ॥ लक्ष्यते अनेनेति लक्षण लक्ष्म च "मन्" ॥ ( उणा–९११ ) ॥ इति मन् ॥ २ ॥ ३ ॥ लाञ्छ्यते अनेनेति लाञ्छनम् ॥ ४ ॥ अङ्क्यते अनेन अङ्क ॥५॥ किरति सन्देह कलङ्क। "किरोऽङ्को रो लश्च वा" ॥ (उणा–६२) ॥ इत्यङ्क ॥६॥ अभिज्ञायतेऽनेनेत्यभिज्ञानम् ॥ ७ ॥

चन्द्रिका चन्द्रगोलिका ॥ २० ॥
चन्द्रातप कौमुदी च ज्योत्स्ना

चन्द्रोऽस्त्यस्या चन्द्रिका "अतोऽनेकस्वरात्"॥७।२।६॥ इतीक ॥१॥ चन्द्रगोलोऽस्त्यस्या चन्द्रगोलिका ॥२॥२०॥ चन्द्रस्यातपश्चन्द्रातप ॥ ३ ॥ कुमुदानामिव विकाशहेतुत्वात् कौमुदी ॥ ४ ॥ ज्योतिरस्त्यस्या ज्योत्स्ना "तमिस्रार्णवज्योत्स्ना" ॥७।२।५२॥ इति निपात्यते चन्द्रिमेत्यपि वाचस्पति ॥ ५ ॥

काल: किं०, कियानित्यनिर्दिष्टप्रमाणः, केव, कलेव पञ्चदशलव-प्रमितवेलेव, अभूद्बभूव। अनेन सर्वसुखाधिक्यमसूसुचत्सूत्रकृत् ।

इह च मङ्गलरूपतया प्रथमसर्गस्यान्तिमे काव्येऽपि श्रीशब्द-प्रयोगः । तदुक्तं च प्राचीनानेकच्छेकैः— 'मङ्गलादीनि मङ्गलम-ध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते श्रोतारोऽध्येतारश्च कुशलिनः कुशलाश्च भवन्तीति'। तथेदं हरिणीनामकं वृत्तम्— 'रसयुगहयैन्सौ म्रौ स्लौ गो यदा हरिणी तदा', इति लक्षणप्रति-पादनात् । ननु सर्गान्ते वृत्तपरावृत्तिः किमवलम्बनेति चेत् । उच्यते— 'सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ।

सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम्' ॥ १ ॥

इत्याद्यनेकपुराणमहाकविवचनालम्बनेति तत्त्वम् ॥ ७७ ॥

• • • • • • • • • • • • • • • • • • • • • • • • •

इति भट्टारककोटीत्यादेरारभ्य प्रथमः सर्ग इति यावत् सर्व सुगमम् । नवरं विजयप्रशस्तिनाम्नि महाकाव्य इत्यत्र महाकाव्यत्व चास्य काव्यस्य, सर्गबन्धात्मकत्वात्, पुरनृपकुमारमन्त्रिप्रभृ-तिवर्ण्यवस्तूनां वर्णनाच्च। यदुक्तम्- 'सर्गबन्धो महाकाव्यमिति' ।

'पुरनृपकुमारमन्त्रिप्रयाणरणदूतभवनवनगिरयः ।

एते यत्र कवीन्द्रैर्वर्ण्यन्ते तन्महाकाव्यम्' ॥ १ ॥

इत्याद्युक्तत्वाच्चेति ध्येयम् ।

इतिसुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौली-यमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितश्रीविद्या-विजयगणिविनेयाणुवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाऽभिधानधारिकायां श्रीविजयप्रशस्ति-महाकाव्यटीकायां प्रथमः सर्गोऽर्थतः समर्थितः ।

———o———

## अथ द्वितीयः सर्गः ।



तत्रेदमाद्यं पद्यम्—

अथान्यदा श्रीपरमेष्ठिनाम-
मन्त्रस्मृतिप्रीतमना अनाधिः ।
बभार सा श्रेष्ठिकमाभिधस्य
पत्नी निधानं वसुधेव गर्भम् ॥ १ ॥

अथेत्यानन्तर्ये, मङ्गलार्थे च; अन्यदा एकस्मिन् दिने, श्रीपरमेष्ठिनाममन्त्रस्मृतिप्रीतमनाः; श्रिया चतुस्त्रिंशदतिशयादिलक्ष्म्योपेताः, परमेष्ठिनः श्रीपरमेष्ठिनस्ते चार्हत्सिद्धाचार्योपाध्यायसाधुलक्षणाः पञ्च, तेषां यो नाममन्त्रोऽर्थात् पञ्चपरमेष्ठिनमस्काररूपस्तस्य; अथवा श्रिया सहिताः परमेष्ठिनः श्रीपरमेष्ठिनोऽर्हन्त एव, श्रीवृषभदेवादिमाः श्रीमहावीरान्तिमाश्चतुर्विंशतिस्तीर्थङ्करास्तेषां; ओं वृषभाय नमः, ओं श्रीमहावीरवर्द्धमानस्वामिने नम इत्येवरूपो यो नाममन्त्रस्तस्य स्मृतेः स्मरणात्, प्रीतं हृष्टं, मनो यस्याः सा; पुनः किं०, अनाधिः नास्ति आधिर्मानसी व्यथा यस्याः सा, बभारेति बिभर्ति स्म; सा श्रेष्ठिकमाभिधस्य पत्नी कोडिमदेवी गर्भं दोहदलक्षणम् । दृष्टान्तो यथा, वसुधा मही, निधानमित्यर्थः ॥ १ ॥

अत्र सर्गे उपजातिच्छन्दस्तल्लक्षणं चेदम्—

'स्यादिन्द्रवज्रा यदि तौ जगौ गः, उपेन्द्रवज्रा जतजास्ततो गौ ।
अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' ॥१ ॥
इत्यादि पुरतोऽपि प्रयोज्यम् ।

अथ काव्यत्रयेण तदा तया स्वप्नदृष्टं सिंहं वर्णयति—

स्तम्बेरमत्रासनिदाननाद-
क्षुब्धाखिलक्षोणितलं सहेलम् ।
सोद्द्योतविद्युद्द्युतिजित्वराक्षि-
द्वयीकमद्वैततरोवरोरुम् ॥ २ ॥

गुञ्जातुले तालुनि पद्मपत्र-
मित्रं रसज्ञाऽङ्कुरमादधानम् ।
व्यात्ताननं काननकुञ्जराजं
रौद्रं रसं मूर्त्तमिवोग्रमूर्तिम् ॥ ३ ॥

वक्रीकृतातुच्छसुपुच्छगुच्छं
स्वप्नान्तरस्वप्नमनोविनोदम् ।
निश्शङ्कमङ्काभरणीभवन्तं
तदैव सा केसरिणं ददर्श ॥ ४ ॥

( त्रिभिर्विशेषकम् )

तदैव गर्भाधानसमय एव, सा कोडिमदेवी, केसरिणं सिंहं, ददर्श व्यलोकयत् । कीदृशं, स्तम्बेरमा हस्तिनस्तेषां, त्रासनिदानं भयहेतुर्यो नादः क्ष्वेडालक्षणस्तेन क्षुब्धं क्षोभितं, अखिलं समस्तं, क्षोणितलं भूवलयं, येन यस्माद्वा तम्;

पुनः किं०, सहेलं लीलावन्तम्, पुनः किं०, सोद्योता उद्योतवती या विद्युत् तस्या द्युतिर्ज्योतिस्ताज्जित्वरी तज्जैत्री अक्षिद्वयी नेत्रयुगली यस्य तं सोद्योतविद्युद्द्युतिजित्वराक्षिद्वयीकं; पुनः कि०, अद्वैतमद्वितीयं तरो बलं ययोस्ते वरे श्रेष्ठे ऊरू यस्य तं अद्वैततरोवरोरुम् ॥२॥ पुनः सिह किं कुर्वाणम्, आदधानं बिभ्राणं; किं० रसज्ञाऽङ्कुरं जिह्वाप्ररोहम्ः क, तालुनि; कीदृशे, गुञ्जायास्तुला औपम्यं यस्मिंस्तस्मिन् गुञ्जातुले; रसज्ञाऽङ्कुरं कि०, पद्मपत्रमित्रं कमलदलसोदरम्; पुनः कि०, व्यात्तं विदारितं, आननं मुखं येन तं, व्यात्ताननम्। पुनः कि०, काननकुञ्जराजं बनगह्वरेश्वरम्; पुनः कि०, उग्रमूर्त्ति घोराकारम्। अत एवोत्प्रेक्ष्यते— रौद्रं रसं सप्तमं रसं, मूर्त मूर्तिमन्तमिवेति। अत्रोत्प्रेक्षामुखेन सिंहस्य बह्वी क्रूरता दर्शिता; पुण्यवन्माता तु सर्व स्वप्नं सौम्यमेव पश्यतीति चेत्। सत्यम्। परं पञ्चाननस्यात्र वास्तववर्णकविधानाददुष्टतेति निष्टङ्कनीयम् ॥ ३ ॥ पुनः किं० सिंहं, वक्रीकृतोऽतुच्छोऽनल्पः सुपुच्छगुच्छो येन तं वक्रीकृतातुच्छसुपुच्छगुच्छम्। कदा सिंहं ददर्शेत्याह— स्वप्नान्तः स्वापावस्थायाम्। पुनः सिंहं किं०, अस्वप्नानां देवानां मनोविनोदो यस्मात्तम्। पुनः किं०, निश्शङ्कं निर्भयं; अथवा निश्शङ्कं यथा स्यात्तथेति क्रियाविशेषणमिति। अङ्काभरणीभवन्तम् उत्सङ्गसङ्गिनमिति वृत्तत्रयार्थः ॥ ४ ॥

विनाशयन्तं तिमिरद्विपौघान्

दृष्ट्वाऽतिहृष्टा हरिमुल्लसन्तम्।

आमोदिनी वक्त्रवितीर्णमुद्रां
निद्रां जहौ वारिजिनीव साऽथ ॥ ५ ॥

तिमिरोपमाः अत्यन्तश्यामाः ये द्विपौघा गजव्रजास्तान्; पक्षे तिमिररूपा ये द्विपौघास्तान् तिमिरद्विपौघान् ध्वान्तगजव्रजान्, विनाशयन्तं घ्नन्तं, हरिं सिंहं, सूर्यं च; दृष्ट्वा, आमोदिनी हर्षवती, गन्धवती च; सा, वारिजिनीव पद्मिनीव, निद्रां, जहौ त्यजति स्म । निद्रां किं०, वक्त्रे मुखे, वितीर्णा दत्ता, मुद्रा यया तामिति । अत्र वारिजिनी हि सूर्यं दृष्ट्वा निद्रां जहात्येवेति श्लेषमुखेन स्पष्ट एव दृष्टान्तः ॥ ५ ॥

स्वप्नः शुभः प्रातरवश्यमुच्चै-
रार्याय पूज्याय निवेदनीयः ।
आर्यश्च पूज्यश्च पतिव्रतानां
भर्त्तैव विस्मेरविलोचनानाम् ॥ ६ ॥

प्रातः प्रभाते, स्वप्नः, किं०, शुभः श्रेयान्, अवश्यं निश्चयेन, आर्याय सज्जनाय, किं०, पूज्याय महनीयायार्थाद् गुरुजनाय, निवेदनीयो निरूप्यः । स च आर्यः पूज्यश्च, पतिव्रतानां, विस्मेरविलोचनानां सतीनां स्त्रीणां, भर्त्तैव पतिरेवेति तात्पर्यार्थः ॥ ६ ॥

मत्वेति सा कोडिमदेव्युदार-
मनाः सना धर्मधनाऽघनाशा ।

त स्वप्नमस्वप्नगुरूपमाय
पत्यै प्रभाते निजगाद सद्यः ॥ ७ ॥

( अर्थतो युग्ममिदम् )

इतीति पूर्वोक्तमर्थं, मत्वा ज्ञात्वा, सा कोडिमदेवी; कीदृशी, उदारमना स्फारचेताः; पुनः किं०, धर्मधना पुण्यविभवा, कथं, सना निरन्तरं, पुनः किं०, घना बह्व्यः आशाः स्पृहाः पुत्रप्रसूतिलालनपालनादिलक्षणा यस्याः सा, अथवा अघस्य पापस्य नाशो यस्याः सा, तं स्वप्नं, पत्यै प्राणनाथाय; कीदृशाय, अस्वप्नगुरूपमाय बृहस्पतितुल्याय, बुद्ध्येत्यध्याह्रियते, निजगादेति वदति स्मेत्यर्थः ॥ ७ ॥

प्राप्तत्रिलोकीप्रभुतामिवाष्ट-
सिद्धिप्रसिद्धोदयिनीमिवैनाम् ।
मेने पतिः स प्रणयप्रसन्नः
सुस्वप्नमेवं प्रतिपादयन्तीम् ॥ ८ ॥

प्राप्ता त्रिलोक्याः स्वर्गमर्त्यपाताललक्षणायाः प्रभुताऽऽधिपत्यं यया तां; पुनः किं०, अष्टानां महासिद्धीनां प्रसिद्धः प्रतीत उदयो विद्यते अस्यामिति तां, स्थानद्वयेऽपि इवेत्युपमायाम् । स पतिः, कमाख्यश्रेष्ठी; कीदृशः, प्रणयेन स्नेहेन प्रसन्नः सौम्याननः, तां पत्नीं, मेने जानाति स्म । तां किं कुर्वती, प्रतिपादयन्तीं वदन्ती; कं, सुस्वप्नं, हर्षोद्रेकेणेतिगम्यम्; कथम्, एवमिति पुरो वक्ष्यमाणम् ॥ ८ ॥

अथाहमर्हत्स्मृतिचारुचित्ता
सुप्ता निशि श्रीरिव पद्मतल्पे ।
सौत्सुक्यमुत्सङ्गमुपेयिवांसं
पञ्चास्यमत्रासमना अपश्यम् ॥ ९ ॥

अथ, निशि रात्रौ, अहं; किं०, अर्हत्स्मृतिचारुचित्ता परमेष्ठिस्मरणसाधुस्वान्ता, सुप्ता सती, श्रीर्देवीव । यथा पद्मतल्पे कमलशय्यायां, सौत्सुक्यं सरणरणकं यथा स्यात्तथेति क्रियाविशेषणम् । उत्सङ्गमुपेयिवांसं क्रोडमागच्छन्तं, पञ्चास्यं केसरिणं; अहं किं०, अत्रासमना निर्भयहृदया, अपश्यमित्यालोकितवती ॥ ९ ॥

स्वप्नादमुष्मादनिलादुदीच्या-
दिवाम्बुदी वृष्टिरनिष्टहन्त्री ।
प्रिये ! भवत्या भविता तनूज-
प्रसूतिरानन्दितविश्वविश्वा ॥१०॥

अमुष्मात् अस्मात् हर्यक्षलक्षणात् स्वप्नात्, उदीच्यात उत्तरादिग्भवात्, अनिलात् पवनाद्, यथा आम्बुदी वृष्टिर्वारिदसम्बन्धिनी वृष्टिर्मेघवर्षणं, तथा हे प्रिये पत्नि ! भवत्यास्तव, तनूजप्रसूतिः पुत्रोत्पत्तिर्भविता भविष्यति । विशेषणद्वयीद्वारा मेघवृष्टिपुत्रोत्पत्त्योः समानधर्मतामाह— किं०, अनिष्टहन्त्री अनिष्टस्याप्रियस्य, दुष्कालदेश्च वारिणी । पुनः किं०, आनन्दितं विश्वं समस्तं, विश्वं जगद्, यया; अथवा आनन्दिता विश्वाविश्वा

समस्तपृथिवी, यया सेति । उभयत्रापि यथासम्भवं विशेषण-
द्वयी द्रष्टव्येति स्पष्टं शेषम् ॥१०॥

इत्युक्तियुक्त्या मुदितां पतिस्तां
शिखण्डिनीमब्द इव व्यधत्त ।
ततो निजं स्थानमियं विवेश
भोगांश्च भर्त्रा सह निर्विवेश ॥११॥

( अर्थतोऽत्रापि युग्मम् )

इत्युक्तियुक्त्याऽनेन उक्तप्रकारेण वाक्यव्यतिकरेण, पतिः प्राणेशः, ता प्रेयसी कोडिमदेवी, मुदितां व्यधत्त हर्षवतीमकरोत् । कः कामिवेत्याह— इव यथाऽब्दो मेघः, शिखण्डिनी मयूरीमिति । ततोऽनन्तरं, इयं प्रेयसी, निजं स्थानं स्वास्पदं, विवेश प्रविष्टा । च पुनर्भर्त्रा सह भोगान् शब्दादीन् पञ्चविषयान्, निर्विवेश भुङ्क्ते स्मेतिभावार्थः ॥११॥

दौर्गत्यदावानलनीरदः सत्-
फलाभिरामः सुमनःप्रियात्मा ।
स्वःक्ष्माधरोर्व्यामिव कल्पसाल-
स्तदीयकुक्षौ बवृधेऽथ गर्भः ॥१२॥

अथानन्तरं, तदीयकुक्षौ कोडिमदेव्युदरे गर्भो, बवृधे वृद्धिमाससादेत्यन्वयः। कस्या क इवेत्याह—स्वःक्ष्माधरोर्व्यामिव मेरुभूमौ यथा, कल्पसालः कल्पवृक्षः । अथ कल्पसालः गर्भश्च कीदृश इत्याह— दौर्गत्यदावानले दारिद्र्यवनवह्नौ, नीरदो मेघस्त-

च्छमापकत्वात् द्वयोरपि तुल्यं विशेषणमिदं, दारिद्र्यविद्रावणप्रवणत्वादिति; पुनः किं० सत्फलैरभिरामो रम्यः, कल्पसालपक्षे तु फलैः प्रतीतैरिति, पुत्रपक्षे तु, सन्ति शोभनानि फलानि कुटुम्बकप्रभृतिप्राभृतलाभरूपाणि तैरभिराम इति; पुनः किं० सुमनसां देवानां पण्डितानां च प्रिय आत्मा यस्य स सुमनःप्रियात्मेति ॥१२॥

अथ काव्यकलापकेन कविः कोडिमदेवीदोहदान् वर्णयति—

सद्यः प्रदत्ताऽभिमतार्थमर्हत्-
पादारविन्दद्वयमर्चयामि ।
अनल्पसङ्कल्पितकल्पवृक्षान्
साक्षाज्जिताक्षाञ्छ्रमणान्नमामि ॥ १३ ॥

प्रकर्षेण दत्तः प्रदत्तः अभिमतार्थो वाञ्छितपदार्थो येन तत् प्रदत्ताऽभिमतार्थं, अर्हत्पादारविन्दद्वयं जिनक्रमकमलयमलं, अर्चयामि । पुनः अनल्पसङ्कल्पिते प्रभूतसमीहिते कल्पवृक्षान्, कथं साक्षादिति प्रत्यक्षान्, पुनः किं० जिताक्षान् जितेन्द्रियान्, श्रमणान् साधून्, नमामि नमस्करोमि । इति दोहदद्वयोद्भावः॥१३॥

सुधामुधाकारकरीं जिनोक्तिं
तापं हरन्तीं प्रमनाः पिबामि ।
दीनार्थिसाधुष्वनुकम्पया च
सक्त्या च भक्त्या च ददामि दानम् ॥ १४ ॥

सुधामुधाकारकरीं पीयूषतिरस्कारकारिणीं, जिनोक्तिं सर्व-

ङ्गगिरं, किंकुर्वती, हरन्ती, कं तापं पापसन्तापरूपमिति, अहं कि० प्रमना हृष्टमानसा सती, पिबामि । पुनर्दीना अनाथा वराकादयः, अर्थिनश्च याचका भट्टमाणवकादिकाः, साधवस्तु निर्ग्रन्थास्तेषु यथाक्रमेण अनुकम्पया कृपया, पुनः सक्तिरासक्तिः दानाभिष्वङ्गरूपा तया सक्त्या, दातृत्वस्वभावेन न तु पात्रबुद्ध्येति, पुनर्भक्त्या अन्तरङ्गप्रीतिसमुद्भूतप्रभूताऽद्भुतभावरूपया, दानं ददामि । इत्यत्रापि दोहदद्वयोद्भावना ॥ १४ ॥

घनाघसङ्घातविघाति सङ्घ-
वात्सल्यमुत्साहिमनास्तनोमि ।
तीर्थेषु तीर्थेषु च जीर्णचैत्यो-
द्धार धनाधारमह करोमि ॥ १५ ॥

पुनः, सङ्घेषु चतुर्विधेषु, वात्सल्यं वत्सलत्वं समानधार्मिकाणामशनवसनादिप्रदानरूप, किं० घनाऽघसङ्घातविघाति निबिडपातकप्रकरापहारि, अह कि० उत्साहिमनाः उत्साहवन्मनो यस्याः सा सोत्साहमानसा सती, तनोमीति । पुनस्तीर्थानां भूयस्त्वात् तीर्थेषु तीर्थेष्विति न पौनरुक्त्यं जीर्णचैत्यानां पुराणविहाराणां उद्धार, किं० धनस्य आधारो निक्षेपस्थान, यतस्तत्र क्षिप्त हि वित्तं जन्मान्तरादावपि सुप्रापं भवतीति धनाधारस्तं धनाधारं, करोमि । इहापि दोहदद्वय दर्शितमिति ॥ १५ ॥

शत्रुञ्जयोर्वीधररैवताद्रि-
श्रीअर्बुदाद्यादिषु विश्रुतेषु ।

तीर्थेषु यात्रामतिमात्रभक्ति
सत्रा स्वभर्त्रा ननु सूत्रयामि ॥ १६ ॥

शत्रुञ्जयोर्वीधरः सिद्धशैलः, रैवताद्रिश्च गिरिनारनामा महागिरिः, श्रीअर्बुदादिश्चेत्यादिषु प्रसिद्धेषु तीर्थेषु, अहं, किं० अतिमात्रभक्तिः अनर्गलभक्तिमती सती, स्वभर्त्रा सत्रा स्वकान्तेन सार्द्धं, यात्रामुत्सवं, गमनं वा; सूत्रयामि विरचयामि । अत्र तु तीर्थयात्रागमनात्मक एक एव दोहदोऽदर्शीति ॥ १६ ॥

इत्थं शुभोदर्कवितर्कमूलं
ये येऽभिलाषा अभवन् स्वपत्न्याः ।
ते ते लतास्तोयमुचेव पत्या
प्रचक्रिरे द्राक् सफलाः स्वशक्त्या ॥ १७ ॥

इत्थमित्येतैर्वर्णिताः, ये ये अभिलाषा मनोरथाः, स्वपत्न्याः कोडिमदेव्याः, अभवन् बभूवुः; अभिलाषाः कीदृशाः, शुभोदर्कवितर्कमूलं शुभः श्रेयान् यः उदर्कः उत्तरकालभवं फलं, तस्य 'वितर्कः संशयेहयोः' इत्यनेकार्थत्वात् वितर्क ईहा तस्या मूलं हेतवः, ते ते पत्या स्वामिना, स्वशक्त्या निजसामर्थ्यात्, सफलाः, प्रचक्रिरे कृता इतिः यथा तोयमुचा मेघेन, लतावल्ल्यः, इति दृष्टान्तः ॥ १७ ॥

तथापि तां म्लानमुखीं हिमानी-
दग्धामिवाम्भोरुहिणीं निरीक्ष्य ।

पत्नीमुपांशु प्रणयप्रसन्न-
मना अपृच्छत् स वणिग्वरेण्यः ॥ १८ ॥

तथापि, तद्दोहदपूर्तिकरणेऽपि, तां पत्नीं, हिमान्या महाहिमेन दग्धामम्भोरुहिणी पद्मिनीमिव,म्लानमुखी विच्छायवदनां, निरीक्ष्य, स वणिग्वरेण्यो व्यवहारिवरः, कीदृशः प्रणयेन स्नेहेन, प्रसन्नमनाः सन्, कथं 'उपांशु विजनेऽव्ययम्' इत्यनेकार्थवचनात् उपांश्वित्येकान्ते,अपृच्छत् प्रश्नविषयीकरुते स्मेति ॥१८॥

यत् पृष्टवांस्तदाह—

इन्दोः कलाया अहनीव केयं
प्रिये दशा ते दृगशर्ममूलम् ।
पत्युः पुरस्तादथ सा निदानं
तादृग्दशायाः कथमप्युवाच ॥ १९ ॥

इव यथा, इन्दोश्चन्द्रस्य, कलायाः षोडशांशरूपायाः, अहनि वासरे, तथा हे प्रिये भार्ये, केयं ते दशाऽवस्था,कीदृशी दृगशर्ममूलं दृशोश्चक्षुषोः अशर्ममूलमसुखहेतुर्ममेति गम्यम् । अथेति तत्पृच्छानन्तरं, पत्युः पुरस्ताद्भर्तुरग्रतः, तादृशदशाया निदानं कारणं, कथमपीति महता निर्बन्धेन, सा कोडिमदेवी, उवाचाऽब्रवीत् ॥ १९ ॥

भूमिं भयानामपि कर्णजाहं
गृह्णामि शार्दूलमहं करेण ।

अपूर्यमाणः प्रियदोहदोऽयं
दुनोति मां राहुरिवेन्दुमूर्त्तिम् ॥ २० ॥

भयानां भीतीनां, भूमिमपि स्थानमपि, शार्दूलं द्वीपिनं, कर्णजाहं श्रोत्रमूल, गृह्णाम्यहमित्याक्षेपः । अत्र धातोर्द्विकर्मकत्वादयं प्रयोगः । अयं दोहदोऽपूर्यमाणो मां दुनोति पीडयति । राहुरिव यथा, इन्दुमूर्त्तिं मृगाङ्कमण्डलीमिति दृष्टान्तः स्पष्टएवेति ॥ २० ॥

अथ तद्वचनश्रुतेरनु श्रेष्ठी यदाचिन्तयत्तदाह—

गर्भानुभावादशुभाः शुभाश्च
स्युर्दोहदाः स्मेरदृशामवश्यम् ।
लोकोऽपि वक्तीत्यशनेन साकं
नोद्गारवाता व्यभिचारवन्तः ॥ २१ ॥

गर्भानुभावात् गर्भप्रभावात्, स्मेरदृशां स्त्रीणां शुभा अशुभाश्च दोहदाः, स्युर्भवन्तीत्यन्वयः । अत्र दोहदशब्दस्य पुनपुंसकलिङ्गत्वात् दोहदा इत्यदुष्टम् । एनमेवार्थं द्रढयति—लोकोऽपि इति वक्ति, किमित्याह यत् अशनेन साकं सार्द्धं, उद्गारवायवो व्यभिचारिणो न स्युः । यादृग् आहारस्तादृग् उद्गार इति श्रुतेः ॥ २१ ॥

स्याद्दोहदाऽपूर्त्तिवशाद् वशाया-
गर्भस्य वा निश्चयतो विनाशः ।

श्रेष्ठीति चिन्तामधरन्मनोऽन्तः
संक्लेशमूलं जलराडिवौर्वम् ॥ २२ ॥

दोहदाऽपूर्तिवशात्, वशाया नार्याः, गर्भस्य भ्रूणस्य वा, निश्चयतो, विनाशः, स्याद्भवतीत्यन्वयः । श्रेष्ठी कमाख्यः, इतीति इमां पूर्वार्द्धोदितां, चिन्तां, मनोऽन्तः, अधरद्धराति स्म । चिन्तां किं० संक्लेशस्य मूलं । दृष्टान्तमाह—जलराट् समुद्रः, इव यथा, और्वं वडवानलमिति ॥ २२ ॥

अनेन कोऽप्यद्भुतदोहदेन
कुक्षावमुष्याः सुवृषोऽवतीर्णः ।
एवं सदैवं वणिजां वतंसं
तमभ्यगान्मुज्जलधिं धुनीव ॥ २३ ॥

अनेन निरूपितस्वरूपेण, अद्भुतदोहदेन आश्चर्यकृद्दौर्हृदेन, अमुष्या भार्यायाः, कुक्षौ, कोऽपि सुवृषः वृषो बलवतीति वचनात् सुवृषः शोभनबलवान्, जीवोऽवतीर्णोऽवततार, एवमित्यमुना प्रकारेण, सदैवं भाग्यवन्तं, तं वणिजां वतंसं व्यवहारिणा शेखरम्, मुद् हर्षोऽभ्यगादेति स्म । यथा जलधिं समुद्रं, धुनी नदीति दृष्टान्तः ॥ २३ ॥

दुःसाध्यतार्त्तिः खलु दोहदस्य
मुच्च प्रताप्यङ्गजलब्धिसिद्धा ।
द्राग् व्यानशाते तमिमे अपि द्वे
मेरोरिवोर्वी रजनिर्दिनं च ॥ २४ ॥

खल्विति वितर्के निश्चये चेति, तस्योक्तपूर्वस्य दोहदस्य, दुःसाध्यतार्त्तिः दुःखेन साध्यते इति दुःसाध्यं तस्य भावस्तत्ता तस्या आर्त्तिः पीडा, एका त्वियं, अपरा; च पुनर्मुद् कीदृशी प्रताप्यङ्गजलब्धिसिद्धा प्रतापी प्रभाववान् यः अङ्गजः पुत्रस्तस्य लब्धेः प्राप्तेः सिद्धा निष्पन्ना, इमे द्वे अपि, तं श्रेष्ठिनं,द्राक् शीघ्रं, व्यानशाते व्याप्नुतः स्म । दृष्टान्तं स्पष्टयति—मेरोरिव यथा, उर्वी पृथ्वी, रजनिर्निशा, दिनं वासरश्चेत्यर्थः, ॥ २४ ॥

प्रपूरिते पुण्यवता प्रियेण
तद्दोहदे द्राक् प्रतिभाप्रकर्षात् ।
दिने दिने साऽथ पुपोष रूप-
श्रिय कलेन्दोरिव शुक्लपक्षे ॥ २५ ॥

पुण्यवता धर्मिणा, प्रियेण प्रेयसा, प्रातिभाप्रकर्षात् प्रज्ञापाटवात्, तद्दोहदे शार्दूलकर्णजाहग्राहलक्षणे, प्रपूरिते पूर्णीकृते सति, सा दिने दिने रूपश्रियं सौन्दर्य्यलक्ष्मी; पुपोष पुष्णाति स्म । दृष्टान्तमाह—इन्दोः कला षोडशोऽशः, इव शुक्लपक्षे ॥ २५ ॥

क्रमादथाऽस्मिन् शुभभाजि गर्भे
उपेयुषि श्रीमति वृद्धिमिद्धाम् ।
सौभाग्यभाक् स्फारफलप्रपञ्चा
रसालशाखेव बभूव सोच्चैः ॥ २६ ॥

अस्मिन् गर्भे, किं० शुभभाजि कुशलिनि, पुनः किं० श्री-

मति शोभाजुषि, वृद्धिमुपेयुषि वृद्धिमासादयति सति, सौभाग्यभाग् सुभगन्धशालिनी, पुनः किं० स्फार उदारः फलप्रपञ्चो गर्भरूपोऽन्यत्र तु चूतफलविस्तारो यस्याः सा, रसालस्य सहकारस्य शाखा, इव यथा, प्रोक्ताविशेषणविशिष्टा सती, सौभाग्यभाग् भवति, तथा सा कोडिमदेव्यपि, बभूव । उच्चैरित्यतिशयार्थवाचकोऽव्ययः ॥ २६ ॥

गर्भानुभावात् स्वपरिच्छदे सा
सोत्साहवात्सल्यवती बभूव ।
परागपूरात् सहवासभाजि
द्विरेफवृन्दे नवपद्मिनीव ॥ २७ ॥

गर्भस्यानुभावः प्रभावस्तस्मात्, सा कोडिमदेवी, स्वपरिच्छदे निजपरिवारे, सोत्साहं यद्वात्सल्यमानुकूल्य तद्वती बभूवेत्यन्वयः। दृष्टान्तोऽत्र—इव यथा, परागपूरात् मकरन्दातिशयात्, सहवासभाजि सहचारिणि, परिकरभूते इति यावत्, द्विरेफवृन्दे भृङ्गवर्गे, नवपद्मिनी नूतनाम्भोरुहिणीत्यर्थः ॥ २७ ॥

लावण्यवर्णाङ्कुरवारिदेऽस्मिन्
गर्भे भृशं स्फातिमिते मृगाक्ष्याः ।
अस्या अशोभिष्ट शरीरयष्टिः
क्षेत्रस्य धान्येऽम्बुधिमेखलेव ॥ २८ ॥

सद्गमनसन्निरीक्षणसज्जल्पनलक्षण यल्लावण्यं वर्णश्च शरीरवर्णः स एवाङ्कुरः प्ररोहस्तत्र वारिदे पानीयवाहे तद्वृद्धिहेतुत्वात्,

अस्मिन् गर्भे, स्फातिमिते वृद्धिं प्राप्ते सति, अस्या मृगाक्ष्याः कोडिमदेव्याः, शरीरयष्टिस्तनुलता, अशोभिष्ट शुशुभे । यष्टिर्लते-त्युणादिविवरणे । दृष्टान्तो- यथा क्षेत्रस्य शस्याद्युत्पत्तिनिमि-त्तस्य, अम्बुधिमेखला मही क्षेत्रक्षोणीव, धान्ये स्फातिमिते, शोभते, तथेयमपीति ॥ २८ ॥

यानासनस्नाननिपानगाना-
शनाभियानादिषु सा सयत्ना ।
तं पालयामास सुखेन गर्भं
वैद्योपदिष्टैर्विधिभिर्विशिष्टैः ॥ २९ ॥

यानं गमनम्, आसनमुपवेशनं, स्नानं प्रतीतं, नितरां पानं पानीयप्रभृतेर्निपानं, गानं गीतादेः प्रसिद्धं, अशनं भोजनं, अभियानं अभिमुखं गमनं, आदिशब्दात् ग्राम्यधर्मसेवन-भूरि-भारवाहन-दूरतरप्रधावन-प्रपतन प्रस्खलन-प्रपीडन-हनन-विष-मशयन-निरशन-रोदन-वमन-विरेचन-प्रेङ्खोलन-हसन-नखच्छेद-न-तैलाभ्यञ्जन-गन्धविलेपनप्रमुखशरीरशुश्रूषापरिग्रहः, एतेषु; सा कोडिमदेवी, सयत्ना यत्नवती सती, तं गर्भं, सुखेन, पालया-मास । कैरित्याह-विधिभिः प्रकारैः, कि० वैद्योपदिष्टैर्भिषग्नि-रूपितैः, पुनः किविशिष्टैर्विशिष्टैर्मनोवचनतनूनामानुकूल्यका-रिभिरिति ॥ २९ ॥

प्रेक्ष्य प्रसन्नां प्रसवोन्मुखीं तां
परिच्छदेनोल्लसित सलीलम् ।
आसन्नभानूदयिनीं दिनादा-
वैन्द्रीमिवाशां कमलाकरेण ॥ ३० ॥

तां कोडिमदेवीनाम्नी, प्रसवोन्मुखी आसन्नप्रसवां, पुनः

किं० प्रसन्नां सौम्याननप्रभां, प्रेक्ष्य, परिच्छदेन परीवारेण, उल्लसितं समुल्लासिना बभूवे । सलीलमिति क्रियाविशेषणम् । अत्र दृष्टान्तं प्रकटयति–आसन्नः समीपवर्त्ती भानूदयो यस्याः सा, तां संनिकृष्टसूर्योद्गमां; ऐन्द्री आशां पूर्वां दिशं, प्रेक्ष्य, दिनादौ प्रभाते, कमलाकरेणेव सरसा, सरसीरुहसमूहेन वा; यथेत्यर्थः ॥ ३० ॥

अथ काव्यत्रयेण गुरुजन्मसंवत्सरमासतिथिलग्नाद्याह—

वर्षे युगाकाशरसेन्दुसंख्ये
मासे तपस्ये तिथिपूर्णिमायाम् ।
लग्ने वृषाख्ये हरिगे हिमांशौ
राहौ तुलायां च शनौ धनुःस्थे ॥ ३१ ॥

वर्षे संवत्सरे, कीदृशे, युगाकाशरसेन्दुसंख्ये, युगानि कृतत्रेताद्वापरकलिनामकानि चत्वारीति, आकाशं शून्यत्वाद् बिन्दुस्थानीयं, रसास्तिक्तकटुककषायाम्लमधुरलवणाख्याः षट्, इन्दुरेकस्तेनैतेषां संख्या यस्मिंस्तस्मिन्नित्यत्र "अङ्कानां वामतो गतिः" इतिवचनात् पश्चानुपूर्व्या विन्यस्यमानेष्वेतेष्वङ्केषु विक्रमात् संवत् १६०४ वर्षे इत्यागतं, पुनर्मासे, तपस्ये फाल्गुने, पुनस्तिथिपूर्णिमायां तिथौ पूर्णिमाख्ये । अथ पश्चिमार्द्धेनाग्रेतनकाव्येन च द्वादशभवनविभागेन गुरोर्जन्मग्रहानाह-जन्मकुण्डलिकास्थापना, यथा, लग्ने, किं० वृषाख्ये द्वितीये लग्ने वहमाने उदयिनि सति, पुनर्हरिगे सिंहस्थिते, हिमांशौ चन्द्रमसि, लग्नाच्चतुर्थे केन्द्रभवने सतीति शेषः, पुनः राहौ सैंहिकेये, तुलायां लग्नात् षष्ठे भवने गते इति प्रयोज्यं, पुनः शनौ शनैश्चरे, धनुःस्थे लग्नादष्टमभवने स्थिते सतीति ॥ ३१ ॥

कुम्भस्थयोरर्कशशाङ्कसून्वो-

मीनस्थयोर्वाक्पतिदैत्यगुर्वोः ।

धरातनूजे हरिणाननस्थे

मेषस्थिते चाहिकनाम्नि खेटे ॥ ३२ ॥

अर्कशशाङ्कसून्वोः सूर्यबुधयोः, किं० कुम्भस्थयोः सतोर्लग्नाद्दशमे केन्द्रभवने प्राप्तयोरिति शेषः, पुनः वाक्पतिदैत्यगुर्वोः बृहस्पतिशुक्रयोः, किं० मीनस्थयोः सतोः लग्नादेकादशे लाभभवने गतयोरिति, पुनः धरातनूजे मङ्गले, किं० हरिणाननो मकरस्तत्रस्थे सति लग्नान्नवमे भवने वर्तिनि, च पुनः, आहिकनाम्नि, खेटे केतुनामके ग्रहे, मेषस्थिते सति द्वादशभवनभाजि ।

| | | |
|---|---|---|
| ३<br>४ | २ | १ के०<br>१२<br>शु० बृ० |
| ५ चं० | श्री | ११ बु० र० |
| ६<br>७<br>रा० | ८ | १० मं०<br>९ श० |

इति जन्मकुण्डलिकाग्रहाः ॥ ३२ ॥

सार्द्धैः शुभैः सप्तदिनैर्युतेषु

यातेषु मासेषु नवस्वथो सा ।

पूर्वेव धर्मांशुमसूत पद्मो-

ल्लासं तनूजं महसाभिरामम् ॥ ३३ ॥

सह अर्द्धेन वर्त्तन्ते ये ते सार्द्धास्तैः सार्द्धैः, सप्तभिर्दिनैर्युतेषु नवसु मासेषु, गर्भाधानदिनात् यातेषु गतेषु सत्सु, सा कोडिमदेवी, तनूजं सुतं, असूत सूते स्म; दृष्टान्तेन विशिनष्टि-इव यथा, पूर्वा प्राची दिक्, घर्मांशुं सूर्य, विशेषणद्वयद्वारा समानधर्मतामाह एकत्र पद्मायाः लक्ष्म्याः, उल्लासो यस्मात् तं, पक्षे पद्मानां पङ्कजानामिति, पुनः किं० महसा तेजसा, उत्सवेन च; अभिरामम् ॥ ३३ ॥

आकर्ण्य कर्णोत्सवमात्मजन्म-
जन्मातिशर्माथ महेभ्यमुख्यः ।
हर्षं स लेभे प्रसभं प्रबर्ह
बर्हीव गर्जारवमम्बुदस्य ॥ ३४ ॥

अथात्मजन्मनः पुत्रस्य, जन्मावतारं, कीदृशं, कर्णयोः श्रोत्रयोरुत्सवमुत्सवतुल्यं, तदाह्लादकत्वात्, अत एव पुनः किं० अतिशयेन शर्म यस्मात्तदतिशर्म, आकर्ण्य श्रुत्वा, स कमाख्यो, महेभ्यमुख्यः, हर्षं लेभे किं० प्रसभं, प्रबर्हं प्रधानमिति, क्रियाविशेषणद्वयमिदमथवा, अम्बुदस्य मेघस्य, गर्जारवं श्रुत्वा, इव यथा, बर्ही मयूरः, इति दृष्टान्तः ॥ ३४ ॥

कमः समोऽभूत् सुतजन्मशंसि-
जनेषु वर्द्धापनिकां ददानः ।
भागेषु विश्वेषु वसुन्धराया-
वारीणि वर्षन्निव वारिवाहः ॥ ३५ ॥

कम इति कमाख्यः श्रेष्ठी, सर्वेष्वपि, सुतजन्मशंसिजनेषु पुत्रोत्पत्तिवर्द्धापनिकादायकेषु, वर्द्धापनिकां ददानः सन्तुष्टिदानं सृजन्, समस्तुल्योऽभूत् नान्तरमकार्षीदिति । दृष्टान्तमाह-

इव यथा, वसुन्धराया वसुधाया, विश्वेषु सर्वेषु, भागेषु, वारिवाहो मेघो, वारीणि जलानि, वर्षन्नान्तरं कुरुते; तथायमपीत्यर्थः ॥ ३५ ॥

धनी धनान्यात्मजजन्महृष्ट-

स्तथा प्रदत्ते स्म स मार्गणेभ्यः ।

पुंरूप एष त्रिदशद्रुमस्तै-

र्मेने यथा भूवलयाऽवतीर्णः ॥ ३६ ॥

आत्मजजन्मना पुत्रावतारेण, हृष्टो हर्षितः, स धनी व्यवहारी, मार्गणेभ्यो याचकेभ्यस्तथा, धनानि, प्रदत्ते स्म दत्तवान्, यथा तैर्याचकैः, एष श्रेष्ठी, पुंरूपः पुरुषरूपधारी, त्रिदशद्रुमः कल्पवृक्षः, मेनेऽमानि ज्ञात इति यावत् । किं० भूवलये मेदिनीमण्डले अवतीर्णो लब्धावतार इति ॥ ३६ ॥

सोऽमूमुचद् गुप्तिगृहे निबद्धा-

न्नरान्नृपात्प्राभृतदानतुष्टात् ।

एतादृशां जन्मनि युक्तमेतत्

प्रख्यापयन्नेवमशेषलोकान् ॥ ३७ ॥

स श्रेष्ठी, गुप्तिगृहे कारागारे, निबद्धान्, नरान् मनुष्यान्, प्राभृतदानेन सुवर्णमणिमाणिक्यप्रमुखाऽशेषविशेषवस्तुढौकनेन तुष्टो हृष्टस्तस्मात् प्राभृतदानतुष्टात्, नृपात्तदानी महाराजाधिराजमहाराणश्रीउदयसिंहनामकात्, कमनीयताकमलाकुम्भे कुम्भलमेरौ महादुर्गे स्थायिन इति शेषः, अमूमुचत् मोचयामासेत्यर्थः, एतादृशामेवंविधानां पुरुषाणां, जन्मनि जनौ, एतद्युक्तं, एवमिति प्रख्यापयन् ज्ञापयन्, अशेषलोकान् सर्वजनानिति ॥ ३७ ॥

उलूलुलीलारवशालिनीनां
सम्बन्धिनीनां वरवर्णिनीनाम् ।
दुकूलदिव्याम्बरभूषणाद्यैः
सत्कारकारी स बभूव भूरि ॥ ३८ ॥

उलूलुर्मंगलध्वनिस्तल्लक्षणो यो लीलारवः केलिनादस्तेन, शालिनीनां शोभमानानां, सम्बन्धिनीनां स्वगोत्रीयकुटुम्बिनीनां, वरवर्णिनीनां मुख्ययोषितां; दुकूलानि पट्टकूलानि, तान्येव दिव्याम्बराणि वर्य्यवस्त्राणि भूषणानि च, तिलककुण्डलकङ्कणकटककेयूरहारार्द्धहारग्रैवेयकबाहुरक्षकमुद्रिकादीनि, तदाद्यैरन्यैरपि रत्नकाञ्चनधनादिभिः, स श्रेष्ठी, सत्कारकारी सत्क्रियाकारको, बभूवाऽभवत्, भूरीति यथा स्यात्तथा क्रियाविशेषणम् ॥३८॥

सेशाङ्गनामङ्गलमञ्जुगीत-
वर्य्याणि तूर्य्याणि बहूनि नेदुः ।
द्वारे तदीये शुभशातकुम्भ-
कुम्भाङ्किते कौतुककेलिकान्ते ॥ ३९ ॥

सह ईशेन स्वामिना वर्त्तन्ते यास्ताः सेशाः सधवा इतियावत् ततः सेशा या अङ्गना नार्यस्तासां मङ्गलेन मञ्जूनि मनोहराणि, यानि गीतानि गेयपदानि, लोके, धवलनामकानि तैर्वर्य्याणि, तूर्याणि वाद्यानि किं० बहूनि भूयांसि, ततघनशुषिरानद्धरूपाणि वीणावेणुतालकंसालवंशचङ्गमृदङ्गप्रभृतीनि, तदीये द्वारे श्रेष्ठिधामद्वारे, नेदुर्नदन्ति स्म। द्वारे किं० शुभं भव्यं यत् शातकुम्भं काञ्चनं, तस्य कुम्भाः कलशास्तैरङ्किते भूषिते। पुनः किं० कौतुकस्य नन्दनजननोत्सवकुतूहलस्य या केलिः

क्रीडा, अर्थान्नागरनागरीमण्डिततताण्डवमयी, तया कौतुककेल्या, कान्ते कमनीये ॥ ३९ ॥

सकुङ्कुमैर्बन्धुरगन्धगन्ध-
सारद्रवैर्न्यस्तसुशस्तहस्तैः ।
तन्मन्दिरं सेन्दिरमस्त्यनेक-
रूपैरुपेतैरिव भानुबिम्बैः ॥ ४० ॥

सकुङ्कुमैर्घुसृणामिश्रितैः, बन्धुरो मनोज्ञोऽर्थात् सुरभिरिति, सचाऽसौ गन्धो घ्राणग्राह्यो गुणो यस्याऽसौ गन्धसारश्चन्दनं, तस्य द्रवै रसैः, न्यस्ताः स्थापिताः, सुष्ठु अतिशयेन शस्ताः प्रशस्ताः, ये हस्ताः पञ्चाङ्गुलीगर्भितचपेटाकारा माङ्गल्यविशेषाः स्थासकाः इति तैः। तस्य श्रेष्ठिनो मन्दिरं सदनं। कीदृशं सेन्दिरं सश्रीकं, तदानीमस्तीति शेषः। इवेत्याशङ्कते, भानुबिम्बैर्मार्त्तण्ड-मण्डलैः किं० उपेतैः समागतैः, पुनः कीदृशैः अनेकरूपैर्बहुरूपधारकैरिति अत्र कथञ्चिद् वर्णाकारयोः सावर्ण्याद् हस्तकानां गभस्त्युपमानम् ॥ ४० ॥

आनन्दिबन्दिध्वनिबन्धुरे तद्-
द्वारे विरेजे सहकारपत्रैः ।
विनिर्मिता मङ्गलतोरणालि-
रिष्येण किं प्रैषि निजर्द्धिरेषा ॥ ४१ ॥

आनन्दिनो हर्षुला वित्तवितरणादिना तुष्टा, ये बन्दिनो मङ्गलपाठकास्तेषां ध्वनिभिर्नादैर्बन्धुरे तद्द्वारे, सहकारपत्रैराम्र-दलैः,विनिर्मिता विरचिता, मङ्गलतोरणालिर्मङ्गलार्थं तोरणश्रेणिः, विरेजे शुशुभे । किमित्युत्प्रेक्ष्यते इष्येण वसन्तर्तुना, निजर्द्धिः स्वसम्पत्तिः, प्रैषि प्रहितेति ॥ ४१ ॥

द्वाःपार्श्वयोस्तस्य गृहस्य रम्भा-
स्तम्भौ व्यभातां नवपर्णपूर्णौ ।
धम्मिल्लफुल्लोत्पलशालिमौली
सरस्वतीसिन्धुसुते किमेते ॥ ४२ ॥

तस्य श्रेष्ठिनो, गृहस्य द्वाःपार्श्वयोर्द्वारमूलयोः, नवैः सद्यस्कैः पर्णैः पत्रैः पूरितौ, रम्भायाः कदल्याः स्तम्भौ व्यभातां भ्रेजतुः, धम्मिल्लेषु संयतकेशेषु यानि फुल्लोत्पलानि विस्मेरकुवलयानि, तैः शाली शोभितो मौलिर्ययोस्ते, सरस्वतीसिन्धुसुते भारती-कमले, द्वे अपि देव्यौ, किमित्युत्प्रेक्ष्यते—एते प्राप्ते, तत्प्रसूत-तनयपुण्योदयादिति गम्यम् ॥ ४२ ॥

विरेजिरे द्वारजिरे तदीये
दूर्वाङ्कुरास्तत्र भृशं लसन्तः ।
निकेतनाम्भोनिधिनन्दनाया-
मनोहराः केशभरा इवामी ॥ ४३ ॥

तत्र क्षणे तदीये द्वारजिरे द्वाराङ्गणे, दूर्वाङ्कुराः हरितालिकाप्ररोहाः, विरेजिरे भान्ति स्मेति किं० भृशं लसन्तोऽतिभ्राजमानाः, इवोत्प्रेक्ष्यते–निकेतनस्य सदनस्य याम्भोनिधिनन्दना लक्ष्मीस्तस्या निकेतनाम्भोनिधिनन्दनाया गृहलक्ष्म्या इति यावत्, मनोहरा मनोज्ञाः, केशभराः कुन्तलकलापाः, मृदुत्वात्तनुत्वान्नीलवर्णत्वाच्चैतदुपमानम् ॥ ४३ ॥

सुहासिनीसन्ततयः समीयु-
र्द्वारे तदीयेऽक्षतपूर्णपात्राः ।

त्व त्वेव भुवनोपकारकरणेनैवाऽसि तृप्त सदा
त्वामेव विबुधा स्तुवन्ति गुणिषु प्राप्तैकरेख समम् ॥२२५॥

त्वत्कण्ठोपमिति मुनीश्वर ! समासाद्यैव कम्बुर्वर
कृष्णस्याऽपि जयप्रदाननिपुण सजायते मङ्गलम् ।
तत्रत्या स्वरसारता बुधजना पीत्वैव तृप्ता इद
भाषन्तेऽमृतपूर्णपूर्णकलश कि वेधसाऽय कृत ? ॥२२६॥

विद्याभिस्तव गच्छनाथ ! हृदय सर्वाभिरप्याश्रित
क्षीराम्भोधिरिवाऽमलाभिरमल स्रोतस्विनीभि श्रिये ।
तज्जानेऽजनि सर्वत पृथुतर तद्वासदानाय यत्
सन्त स्युर्वसतिप्रदानमतय स्वैकाश्रयप्राणिनाम् ॥२२७॥

देव ! त्वद्भुजयामल मतिमता दृग्मार्गमभ्यागत
हृद्येव विदधाति तर्कमिह कि धात्रा समर्थाविमौ ? ।
सृष्टौ मूर्द्धनि दुष्प्रहारविधये दण्डौ त्रिलोकोद्भव-
स्यानङ्गस्य महाभटस्य परमस्थाम्नाऽधिकत्वस्पृशा ॥२२८॥

त्वत्कोष्ठे जलधाविवाऽतिगहने सिद्धान्तरत्नान्यहो !
तिष्ठन्ति प्रकटानि नायक ! तथा तस्थुर्यथा निर्मले ।
श्रीसौधर्मगणेशमुख्यसकलाचार्योदरे तद्बुधा-
मत्वेतीव वदन्ति तत्तदनुग त्वा ख्यातविद्यागुणम् ॥२२९॥

उत्सङ्गस्तव देव ! देववनितातुल्याङ्गनालिङ्गन-
त्यागी शैशवजातितोऽपि विबुधाधीशोऽस्ति मन्ये तत ।
साधुत्वे सदृशेऽपि देववनितोत्सङ्गा वशिष्ठादिका-
लज्जातो मुनयो गता क्वचिदहो ! निर्मानुषे कानने ॥२३०॥

देवोरुद्वयमद्भुत तव सदारम्भाफलाभ्यन्तर-
स्पर्श नैव कदाचिदद्भुततर पस्पर्श नारीतलम् ।
मत्वेतीव सुवृत्तजानुमिषत सद्वृत्तकोश न्यधा-
द्धाता तत्र ततस्तपोगणपते ! सद्वृत्तता ते मता ॥२३१॥

देव ! त्वच्चरणौ सुरासुरनराधीशप्रणामोचितौ
मत्वेतीव विधिश्चकार विशदच्छत्रादिचिह्नाङ्कितौ ।

सर्वोर्द्ध्वार्थविशेषसगमवशात्तत्रोर्द्ध्वरेखा व्यधा-
देव त्वा स्तवन नयन्ति विबुधा श्रीहीरभट्टारक ! ॥२३२॥

मङ्गलाख्ये पुरे मोदादेव काव्य जगद्गुरो ।
चकार सर्वसिद्ध्यर्थ पण्डित पद्मसागर ॥ २३३ ॥

इति महोपाध्यायश्रीधर्मसागरगणिपण्डितोत्तंसपं-श्रीविमलसागर-गणिशिष्यपं-पद्मसागरगणीविराचितं जगद्गुरुकाव्यं संपूर्णम् ।

लिखित मङ्गलपुरे सवत् १६४६ वर्षे द्वितीयभाद्रपदसित ११ दिने ॥

## ॥ शोधनपत्रम् ॥

| पृष्ठम् | पङ्क्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २४ | नौचेदे- | नौ चेदे- |
| ५ | ७ | षण्मासी तपसा | षण्मासीतपसा |
| ,, | १६ | गुरु- | -गुरो- |
| १३ | २७ | वच स्थितिं | वच स्थितिं |
| १४ | ५ | -सुतेऽ- | -सुते- |
| ,, | २६ | -श्चित्ते | -श्चित्तेऽ- |
| १९ | २० | तृणोघै | तृणौघे |
| २४ | २ | नाथ- | नाथ ! |
| २५ | ५ | -गिरिप्र- | -गिरि प्र- |
| ,, | ६ | -च्छासनस्था | -च्छासनास्थां |
| २६ | २१ | भो | भो ! |

अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [१४]



श्रीपद्मसागरगणिविरचितम्–

# जगद्गुरुकाव्यम् ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरि-
पादाम्भोजचञ्चरीकायमाणाभ्यां
पं–हरगोविन्ददास–बेचरदासाभ्यां संशोधितम् ।

Published by Shah Harakhchand Bhurabhai Benares
Printed by Gauri Shanker Lal
at the Chandraprabha Press, Benares City

मूल्यम् ।)

•

# ॥ प्रस्तावना ॥

अस्य खण्डकाव्यस्य कर्त्तार श्रीपद्मसागरगणय सुप्रतीता एव जैनानाम्। एतेषा सत्तासमयो जगद्गुरुश्रीहीरविजयसूरिसमान एवेत्यस्यैव काव्यस्य समूलचूलमालोकनत,

"चक्रे शास्त्रमिद यत्नात् त्र्यम्बिषट्चन्द्रवत्सरे ।
पद्मसागरसञ्ज्ञेन बुधेन स्वात्मबुद्धये" ॥ ४ ॥

इत्येतैरेव विक्रमात् १६३३ सवत्सरे विरचितस्य स्वोपज्ञटीकासहितस्य श्रीनयप्रकाशाष्टकस्यान्तिमभागतश्च नि सन्दिग्ध व्यक्तीभवति ।

एभिर्ग्रन्थकर्त्तृभि अन्येऽपि शीलप्रकाश–युक्तिप्रकाश–तट्टीका–श्रीउत्तराध्ययनकथासग्रहादयोऽनेके ग्रन्था निरमायिषत । यैर्न्याय-साहित्यादिविषयेषु तेषा अपूर्वा प्रतिभाशालिता स्पष्टमाविर्भवति ।

काव्यस्यैतस्य नायकाना श्रीहीरविजयसूरीणा इतिहासोपयोगि अधिक वृत्तान्त पाठकानामावश्यक मत्वा महोपाध्यायश्रीधर्मसागरगणिनिर्मिततपागच्छपट्टावलीतोऽत्रोद्ध्रियते—

"श्रीविजयदानसूरिपट्टेऽष्टपञ्चाशत्तमा श्रीहीरविजयसूरय । किंविशिष्टा सप्रति तपागच्छे आदित्यसदृशास्तदुद्द्योतकत्वात् । तेषा विक्रमत त्र्यशीत्याधिके पञ्चदशशतवर्षे १५८३ मार्गशीर्षशुक्लनवमीदिने प्रह्लादनपुरवास्तव्य–ऊकेशज्ञातीय-सा–कुराभार्यानाथीगृहे जन्म । षण्णवत्यऽधिके १५९६ कार्त्तिकबहुलद्वितीयाया २ पत्तननगरे दीक्षा । सप्ताऽधिके षोडशशतवर्षे १६०७ नारदपुर्या श्रीऋषभदेवप्रासादे पण्डितपदम् । अष्टाधिके १६०८ माघशुक्लपञ्चमीदिने नारदपुर्या श्रीवरकाणकपार्श्वनाथसनाथे श्रीनेमिनाथप्रासादे वाचकपदम् । दशाधिके १६१० सीरोहीनगरे सूरिपदम् । तथा येषा सौभाग्यवैराग्यनि स्पृहतादिगुणश्रेणेरेकमपि गुण वचोगोचरीकर्तु वाचस्पतिरप्यचतुर । तथा स्तम्भतीर्थे येषु स्थितेषु तत्रत्य-श्रद्धालुभि टङ्ककानामेका कोटि प्रभावनादिभिर्व्ययीकृता । येषा चरणविन्यासे प्रतिपद सुवर्णटङ्करूप्यनाणकमोचन, पुरतश्च मुक्ताफलादिभि स्वस्तिकरचन, प्रायस्तदुपरि च रौप्यकनाणकमोचन चेत्यादि सप्रत्यऽपि प्रत्यक्षसिद्धम् । यैश्च सीरोह्या श्रीकुन्थुनाथबिम्बाना प्रतिष्ठा कृता । तथा नारदपुर्यामनेकानि जिनबिम्बानि प्रतिष्ठितानि । तथा स्तम्भतीर्थाऽहम्मदावादपत्तननगरादौ अनेकटङ्कलक्षव्यय प्रकृष्टाभिरनेकाभि प्रतिष्ठाभि सहस्रशो बिम्बानि प्रतिष्ठितानि । येषा च विहारादौ युगप्रधानसमानाऽतिशया प्रत्यक्षसिद्धा एव । तथाऽहम्मदावादनगरे लुङ्कामता-

ऽधिपति ऋषिमेघजीनामा स्वकीयमताऽऽधिपत्यं दुर्गतिहेतुरिति मत्वा रज इव परित्यज्य पञ्चविंशतिमुनिभिः सह सकलराजाधिराजपातिसाहिश्रीअकब्बरराजाज्ञापूर्वकं तदीयाऽऽतोद्यवादनादिना महामहपुरस्सरं प्रव्रज्य यदीयपादाम्भोजसेवापरायणो जातः। एतादृशं च न कस्याप्याचार्यस्य श्रुतपूर्वम्। किञ्च। येषामशेषसविग्नसूरिशेखराणामुपदेशात् सहस्रशो गजानां, लक्षशो वाजिनां, गूर्जर मालव-विहार–अयोध्या–प्रयाग–फतेपुर–दिल्ली–लाहुर-मुलतान–क्याबिल–अजमेर बङ्गाला-द्यभिधानानामनेकदेशसमुदायात्मकानां द्वादशसूबानां चाधीश्वरो महाराजाधिराज शिरःशेखरः पातिसाहिश्रीअकब्बरनरपतिः स्वकीयाऽखिलदेशेषु षाण्मासिकामारि-प्रवर्त्तनं जीजीयाऽभिधानकरमोचनं च विधाय सकललोकेषु जाग्रत्प्रभावभवनं श्रीमज्जिनशासनं जनितवान्। तद्व्यतिकरो विस्तरतः श्रीहीरसौभाग्यकाव्यादिभ्योऽवसेयः। समासतस्त्वेवम्–एकदा कदाचित्प्रधानपुरुषाणां मुखवार्त्तया श्रीमद्गुरूणां निरुपमशमदमसंवेगवैराग्यादिगुणगणश्रवणतश्चमत्कृतचेतसा पातिसाहिश्रीअकब्बरेण स्वनामाङ्कितं फुरमानं प्रेष्याऽतिबहुमानपुरस्सरं गन्धारबन्दिरात् दिल्लीदेशे आगराख्यनगरासन्नश्रीफतेपुरनगरे दर्शनकृते समाकारिताः सन्तोऽनेकभव्यजनक्षेत्रेषु बोधिबीजं वपन्तः श्रीगुरवः क्रमेण विहारं कुर्वाणाः विक्रमतः एकोनचत्वारिंशदधिकषोडशशतवर्षे १६३९ ज्येष्ठबहुलत्रयोदशीदिने तत्र सम्प्राप्ताः। तदानीमेव च तदीयप्रधानशिरोमणिशेषश्रीअबलफजलाख्यद्वारा उपाध्यायश्रीविमलहर्षगणिप्रभृत्यनेकमुनिनिकरपरिकरिताः श्रीसाहिना समं मिलिताः। तदवसरे च श्रीमत्साहिना सादरं स्वागतादि पृष्ट्वा, स्वकीयास्थानमण्डपे समुपवेश्य च परमेश्वरस्वरूपं, धर्मस्वरूपं च कीदृशं कथं च परमेश्वरः प्राप्यत इत्यादिधर्मगोचरो विचारः प्रष्टुमारेभे। तदनु श्रीगुरुभिरमृतमधुरया गिराऽष्टादशदोषविधुरपरमेश्वरपञ्चमहाव्रतस्वरूपानिरूपणादिना तथा धर्मोपदेशो ददे यथा आगराद्रङ्गतोऽजमेरनगरं यावदध्वनि प्रतिक्रोशं कूपिकोपेतमनारान्विधाय स्वकीयाखेटककलाकुशलताप्रकटनकृते प्रतिमनारं शतशो हरिणविषाणारोपणविधानादिना प्राग् हिंसादिकरणरतिरपि स भूपतिर्दयादानयतिसङ्गतिकरणादिप्रवणमतिः सञ्जातः। ततोऽतीवसन्तुष्टमनसा श्रीसाहिना प्रोक्तम्। यत् पुत्रकलत्रधनस्वजनदेहादिषु निरीहेभ्यः श्रीमद्भ्यो हिरण्यादिदानं न युक्तिमत्। अतो यदस्मदीयमन्दिरे पुरातनं जैनसिद्धान्तादिपुस्तकं समस्ति, तल्लात्वाऽस्माकमनुग्रहो विधेयः। पश्चात् पुनः पुनराग्रहवशात् तत्समादाय श्रीगुरुभिः आगराख्यनगरे चित्कोशतयाऽमोचि। तत्र साधिकप्रहरं यावद्धर्मगोष्ठी विधाय श्रीमत्साहिना समनुज्ञाताः श्रीगुरवो महताडम्बरेण उपाश्रये समाजग्मुः। ततः सकलेऽपि लोके प्रवचनोन्नतिः स्फीतिमती सञ्जाता। तस्मिन् वर्षे आगराख्यनगरे चतुर्मासककरणानन्तरं सौरीपुरे श्रीनेमिजिनयात्राकृते समागतैः

श्रीगुरुभि पुरातनयोः श्रीऋषभदेवश्रीनेमिनाथसम्बन्धिन्योर्महत्योः प्रतिमयोः, तदानीमेव निर्मितश्रीनेमिजिनपादुकायाश्च प्रतिष्ठा कृता। तदनु आगराख्यनगरे सा–मानसिंहकल्याणमल्लकारितश्रीचिन्तामणिपार्श्वनाथादिबिम्बाना प्रतिष्ठा शतश सुवर्णटङ्कव्ययादिना महामहेन निर्मिता। तत्तीर्थं च प्रथितप्रभाव सञ्जातमस्ति। तत श्रीगुरव पुनरपि फतेपुरनगरे समागत्य श्रीसाहिना साक मिलिता। तदवसरे च प्रहर यावद्धर्मप्रवृत्तिकरणानन्तर श्रीसाहिरवदत् यत् श्रीमन्तो मया दर्शनोत्कण्ठितेन दूरदेशादाकारिता। अस्मदीय च न किमपि गृह्यते। तेनास्मत्सकाशात् श्रीमद्भि सचित्त याचनीय येन वय कृतार्था भवाम। तत् सम्यग्विचार्य श्रीगुरुभिस्तदीयाखिलदेशेषु पर्युषणापर्वसत्काष्टाह्निकायाममारिप्रवर्त्तन बन्दिजनमोचन चायाचि। ततो निर्लोभताशान्तताद्यतिशयितगुणगणातिचमत्कृतचेतसा श्रीसाहिना अस्मदीयान्यपि चत्वारि दिनानि समधिकानि भवन्त्विति कथयित्वा स्ववशीकृतदेशेषु श्रावणबहुलदशमीत प्रारभ्य भाद्रपदशुक्लषष्ठीं यावदमारिप्रवर्त्तनाय द्वादशदिनामारिसत्कानि काञ्चनरचनाञ्चितानि स्वनामाङ्कितानि षट् फुरमानानि त्वरितमेव श्रीगुरूणा समर्पितानि। तेषा व्यक्ति प्रथम गूर्जरदेशीय, द्वितीय मालवदेशसत्क, तृतीय अजमेरदेशीयं, चतुर्थं दिल्लीफत्तेपुरदेशसम्बन्धि, पञ्चम लाहुरमुलतानमण्डलसत्कम्, श्रीगुरूणा पार्श्वे रक्षणाय षष्ठ देशपञ्चकसबन्धि साधारण चेति। तेषा च तत्तद्देशेषु प्रेषणेनामारिपटहोद्घोषणवारिणा सिक्ता सती पुराऽज्ञायमाननामाऽपि कृपावल्ली सर्वत्रार्यानार्येकुलमण्डपेषु विस्तारवती बभूव। तथा बन्दिजनमोचनस्याप्यङ्गीकारपुरस्सर श्रीसाहिना श्रीगुरूणा पार्श्वादुत्थाय तदैवानेकगव्यूतमिते डाबरनाम्नि महासरसि गत्वा साधुसमक्ष स्वहस्तेन नानाजातीयाना देशान्तरीयजनप्राभृतीकृताना पक्षिणां मोचन चक्रे। तथा प्रभाते कारागारस्थबहुजनाना बन्धनभञ्जनमप्यकारि। एवमनेकश श्रीमत्साहेर्मिलनेन श्रीगुरूणा धरित्रीमरुमण्डलादिषु श्रीजिनप्रासादोपाश्रयाणामुपद्रवनिवारणायानेकफुरमानविधापनादिना प्रवचनप्रभावनादिप्रभावो यो लाभोऽभवत् स केन वर्णयितु शक्यते?। तदवसरे च सजातगुरुतरगुरभक्तिरागेण मेडतीयसा—सदारङ्गेण मार्गणगणेभ्यो मूर्त्तिमद्गजदानाद्विपशदऽश्वदानलक्षप्रासादविधानादिना, दिल्लीदेशे श्राद्धाना प्रतिगृह सेरद्वयप्रमाणखण्डलम्भनिकानिर्माणादिना च श्रीजिनशासनोन्नतिश्चक्रे। तथैका प्रतिष्ठा सा–थानसिघकारिता। अपरा च सा–दूजणमल्लकारिता श्रीफतेपुरनगरेऽनेकटङ्कलक्षव्ययादिना महामहोत्सवोपेता विहिता। किञ्च। प्रथमचतुर्मासकमागराख्यद्रङ्गे, द्वितीय फतेपुरे, तृतीयमभिरामाबादे, चतुर्थ पुनरप्यागराख्ये चेति चतुर्मासीचतुष्टय तत्र देशे कृत्वा गूर्जरदेशस्थश्रीविजयसेनप्रभृतिसघस्याऽऽग्रहवशात् श्रीगुरुचरणा धरित्रीपवित्रीकरणप्रवणान्त करणा श्रीशेषूजी श्रीपाहूजा श्रीदानीआराभिधपुत्रादिप्रवरपरिकराणा श्रीमत्साहिपुरन्दराणा पार्श्वे

फुरमानादिकार्यकरणतत्परानुपाध्यायश्रीशान्तिचन्द्रगणिवरान् मुक्त्वा मेडतादिमार्गे विहार कुर्वाणा नागपुरे चतुर्मासी विधाय क्रमेण सीरोहीनगरे समागता । तत्रापि नवीनचतुर्मुखप्रासादे श्रीआदिनाथादिबिम्बाना, श्रीअजितजिनप्रासादे श्रीअजितजिनादिबिम्बाना च क्रमेण प्रतिष्ठाद्वय विधाय अर्बुदाचले यात्रार्थं प्रस्थिता । तत्र विधिना यात्रा विधाय यावद्धरित्रीदिशि पादावधारण विदधति तावत् महारायश्रीसुलतानजाकेन सीरोहीदेशे पुरा करातिपीडितस्य लोकस्य अथ पीडा न विधास्यामि, मारिनिवारण च करिष्यामीत्यादिविज्ञप्ति स्वप्रधानपुरुषमुखेन विधाय श्रीगुरव सारोह्या चतुर्मासीकरणायात्याग्रहात् समाकारिता । पश्चात् तद्राजोपरोधेन, तद्देशाय लोकानुकम्पया च तत्र चतुर्मासी विधाय क्रमेण रोहसरोतरामार्गे विहार कुर्वन्त श्रीपत्तननगर पावितवन्त । अथ पुरा श्रीसूरिराजै श्रीसाहिहृदयालवालारोपिता कृपालतोपाध्यायश्रीशान्तिचन्द्रगणिभि स्वोपज्ञकृपारसकोशाख्यशास्त्रश्रावणजलेन सिक्ता सती वृद्धिमती बभूव। तदभिज्ञान च श्रीमत्साहिजन्मसम्बन्धी मास , श्रीपर्युषणापर्वसत्कानि द्वादश दिनानि, सर्वेऽपि रविवारा , सर्वसङ्क्रान्तितिथय , नवरोजसत्को मास , सर्वे ईदीवासरा , सर्वे मिहरवासरा , सोफीआनवासराश्चेति षाण्मासिकामारिसत्क फुरमान, जीजीआभिधानकरमोचनसत्कानि फुरमानानि च श्रीमत्साहिपार्श्वात्समानीय धरित्रीदेशे श्रीगुरूणा प्राभृतीकृतानीति । एतच्च सर्वजनप्रतीतमेव । तत्र नवरोजादिवासराणा व्यक्तिस्तत्फुरमानतोऽवसेया । किञ्च । अस्मिन् दिल्लीदेशविहारे श्रीमद्गुरूणा श्रीमत्साहिप्रदत्तबहुमानत निष्प्रतिमरूपादिगुणगणाना श्रवणवीक्षणतश्चानेकम्लेच्छादिजातीया अपि सद्यो मद्यमासाशनजीवाहिंसनादिरति परित्यज्य सद्धर्मकर्मासक्तमतय , तथा केचन प्रवचनप्रत्यनीका अपि निर्भरभक्तिरतय , अन्यपक्षीया अपि कक्षीकृतसद्भूतोद्भूतगुणततयश्चासन्। इत्याद्यनेकेऽवदाता षड्दर्शनप्रतीता एव । तथा श्रीपत्तननगरे चतुर्मासककरणादनु विक्रमत षट्चत्वारिंशदधिकषोडश शत १६४६ वर्षे स्तम्भतीर्थे सो–तेजपालकारिता सहस्रशो रूप्यकव्ययादिनाऽतीव श्रेष्ठा प्रतिष्ठा विधाय श्रीजिनशासनोन्नति तन्वाना श्रीसूरिराजो विजयन्ते"

**अस्यैकैव प्रति अणहिल्लपुरपत्तनस्य ( पाटन ) "फोफलीयावाडा आगलीशेरी" इत्यस्य भाण्डागारात् श्रेष्ठिश्रीभोगीलाल-हालाभाई-द्वारोपलब्धा। अतोऽत्र स्थले तस्य श्रेष्ठिनो धन्यवादपुरस्सर उपकार मन्यावहे ।**

**तदेवमेकस्यैव पुस्तकस्याधारेण शोधितमुद्रितेऽप्यस्मिन् ग्रन्थे जाता स्खलना सहृदया कृपा विधाय शोधयिष्यन्तीति—**

निवेदयतो—

**हरगोविन्द—बेचरदासौ ।**

विश्ववल्लभता, वृत्तभावो वृत्तता चेति गुणत्रयी चन्द्रस्येव यस्य श्रेष्ठिनो, गुणत्रयी जातेत्यर्थः ॥५१॥

औदार्यधैर्यशुभशौर्यमुखा असंख्याः
सर्वे गुणाः प्रविविशुः सममेव यस्मिन् ।
जह्नूष्णरश्मिहिमरश्मिसुताद्यतुल्य-
कुल्याप्रवाहनिवहा इव वारिराशौ ॥५२॥

औदार्य दानिता, धैर्य धीरता, शुभशौर्य श्रेयःशूरता, तन्मुखाः सर्वे गुणाः। कि० असङ्ख्याः संख्यारहिता अप्रमाणा इति। सममेव युगपदेव, यस्मिन् श्रेष्ठिनि, प्रविविशुः विशन्ति स्म। के कस्मिन्निवेत्याकाङ्क्षायां दृष्टान्तमाह— जह्नोः सगरचक्रवरसूनोः, उष्णरश्मेः सूर्यस्य, हिमरश्मेश्चन्द्रस्य, सुताः पुत्र्यः, क्रमेण गङ्गायमुनानर्मदास्तदादीनाम्, अतुल्यकुल्यानां महानदीनां, प्रवाहनिवहा ओघसङ्घा इव, यथा वारिराशौ समुद्रे॥५२॥

येन श्रियेश्वरसुहृद्धिषणो धिया च
तुल्योऽपि नो सुभगतां बिभराम्बभूव ।
एकः कुबेर इति वित्तिमुपागतो य-
द्दोषाकरौकसि महत्त्वमुपैति चाऽन्यः ॥५३॥

येन श्रेष्ठिना, श्रिया लक्ष्म्या, ईश्वरसुहृद् धनदः, धिया बुद्ध्या च, धिषणो बृहस्पतिः, तुल्योऽपि, सुभगतां सौभाग्यं, नो बिभराम्बभूव न बभारेति। तत्र हेतुमाह— यदिति ।

यस्माद्धेतोः, एको धनदः कुष्ठित्वात् कुबेरः कुत्सितशरीर इति वित्तिं ख्यातिम्, उपागतः प्राप्त इति दोषदुष्टः । अन्यो द्वितीयो धिषणः, सोऽपि, दोषाकरस्य चन्द्रस्यौकसि गृहे कुलीरे, महत्त्वम् उपैति । 'कर्कस्थो गुरुरुच्चः' इतिवचनात् । अयमपि शब्दच्छलात् दोषाकराश्रये दोषाणां आकरे खानिभूते, आश्रये गृहे, माहात्म्यभृत्त्वाद्दोषदूषित इति ॥ ५३ ॥

उत्पत्तिसंस्थितिविनाशमयत्रिपद्या
पूताऽर्हदुक्तिरभजद्धृदि यस्य वासम् ।
ओघैस्त्रिभिस्त्रिजगतां शुचितां सृजन्ती
जह्नोः सुतेव शिरसि स्मरसूदनस्य ॥५४॥

उत्पत्तिरुत्पादः, संस्थितिर्ध्रौव्यम्, विनाशो विगमः, तन्मयी या त्रिपदी । यदागमः— 'उप्पण्णेति वा विगमेति वा धुवेति वा' इत्यादिप्रवचनप्रणीतया त्रिपद्या, पूता पवित्रा, अर्हदुक्तिर्भगवद्वाणी, यद्धृदि यस्य हृदये, वासमभजत्, दृष्टान्तमाह—ओघैः प्रवाहैः । किं० त्रिभिस्त्रैलोक्यवर्त्तित्वात् त्रिजगतां, शुचितां नैर्मल्यं, सृजन्ती । यथा जह्नोः सुता मन्दाकिनी, स्मरसूदनस्य महादेवस्य, शिरसि शीर्षे, वासं भजतीत्यर्थः ॥ ५४ ॥

गृह्णाति काचशकलं कुलमर्चिषां को
मुक्त्वा मणिं हृदि विदन्निति किं महात्मा ।
सार्वज्ञमंह्रियमलं विमलं विहाय
नो संलयेऽप्यपरदेवमसावनंसीत् ॥५५॥

अर्चिषां ज्योतिषां, कुलं धाम, मणिं रत्नं, मुक्त्वा त्यक्त्वा, काचस्य, शकलं खण्डं, को गृह्णाति ? । किमित्युत्प्रेक्ष्यते— हृदि मनसि, इति विदन् ज्ञानगोचरीकुर्वन्, असौ श्रेष्ठी, सार्वज्ञं वैतरागं, अंह्रियमलं पादद्वयं, कि० विमलं विगतमलं, विहाय हित्वा, अपरदेवं भूदेववासुदेवमहादेवादिकं, संलयेऽपि स्वापेऽपि, नानंसीन्न नेमे ॥ ५५ ॥

क्षान्त्यादिधर्मनिधिषु श्रमणेषु येन
चित्तं न्यधायि मुदिरेषु शिखण्डिनेव ।
शुश्रूषकः शमवतामयमित्यवाप
तद्यः प्रसिद्धिमतुलां श्रुतिशर्ममूलम् ॥५६॥

क्षान्तिः क्षमा, आदौ धुरि, यत्र स धर्मो अर्थाद्यतिधर्मो दशविधः ।

यदुक्तं निर्युक्तिकृता श्रीभद्रबाहुगणभृता—

'खंती[1] य मद्दव[2]ज्जव[3] मुत्ती[4] तवे[5] सञ्जमे[6] अ बोधव्वे ।
सच्चं[7] सोयं[8] आकिंचणं[9] च बंभं[10] च जइधम्मो' ॥ १ ॥

इत्याद्यागमोक्तस्य यतिधर्मस्य, निधयो निधानभूताः, क्षान्त्यादिधर्माधारा इत्यर्थः; तेषु श्रमणेषु साधुषु, येन श्रेष्ठिना, चित्तं मानसं, न्यधायि स्थापितमिति । केष्विव केनेत्याह— मुदिरेषु मेघेषु, यथा शिखण्डिना मयूरेणेति । तादिति तस्माद्धेतोः, अयं श्राद्धः, शमवतां शुश्रूषक इति प्रसिद्धिं श्रमणोपासकेति ख्यातिमवाप प्राप्तवान् । कीदृशी, श्रुत्योः कर्णयोः, शर्म्ममूलं सुखकारणम् ॥ ५६ ॥

देवे गुरौ भगवदुक्तिषु तत्त्वरूपा
श्रद्धा यदीयहृदि मुक्तिवशाऽऽतिदूती ।
प्रोच्चैः प्रकाशमकरोदनघं घनश्रीः
स्नेहाढ्यदीपकलिकेव गृहान्तराले ॥५७॥

देवे देवाधिदेवे, गुरौ सुविहितसाधौ, भगवदुक्तिषु जिनागमेषु, तत्त्वरूपा यथार्थाऽवबोधरूपा, श्रद्धा श्रद्धानं सम्यक्त्वमित्यर्थः । यदाहुः श्रीहेमचन्द्रसूरीन्द्राः—

'या देवे देवताबुद्धिर्गुरौ च गुरुतामतिः ।
धर्मे च धर्मधीः शुद्धा सम्यक्त्वमिदमुच्यते' ॥ १ ॥

इत्यादिशास्त्रोक्तस्वरूपसम्यग्देवगुरुधर्मास्तिक्यलक्षणा श्रद्धा; कि० मुक्तिवशा सिद्धिवधूस्तत्प्राप्तौ दूती संदेशहारिका, तन्मेलापककारित्वात् ; यदीयहृदि यस्य श्रेष्ठिनो मनसि, प्रकाशमुद्द्योतमकरोत् कुरुते स्म । कथं, अनघं मनोज्ञं निष्पापं निर्मलम्, यथा स्यात् तथेति क्रियाविशेषणम् । अत्र दृष्टान्तमुद्भावयति— यथा स्नेहाढ्या दीपकलिका, गृहान्तराले वासमध्ये, प्रकाशं कुरुत इत्यादि ॥ ५७ ॥

अथ गुरोः पितुर्वर्णनानन्तरं मातरं दशभिर्वृत्तैर्वर्णयति । तथाहि—

विष्णोः पयोधिदुहितेव पुलोमजेव
वास्तोष्पतेः रतिरिवासमसायकस्य ।

तस्यातिसत्यजनि कोडिमदेव्यहार्य-
माधुर्यधाम गृहिणी गृहमेव मूर्त्तम् ॥५८॥

विष्णोर्नारायणस्य, पयोधिदुहिता लक्ष्मीर्यथा, पुनः वास्तोष्पतेः शक्रस्य, पुलोमजा यथा शची; पुनः असमसायकस्य पञ्चबाणस्य, यथा रतिः, तथा तस्य कमाख्यश्रेष्ठिनः, कोडिमदेवीति नाम्नी गृहिणी, जाता । कीदृशी, अतिसती अधिकं श्रेष्ठा, अथवा अतिक्रान्ता स्त्रीगुणैः सती पार्वती यया सा अतिसती । पुनः कि० अहार्यं हर्तुमशक्यं यन्माधुर्यं मनोज्ञत्वं, तस्य धाम स्थानम् । पुनः कि० मूर्त्तं मूर्त्तिमद् गृहमेवेति निश्चये॥५८॥

मन्त्र मृगध्वजमृगौ विजितौ ययाऽऽस्य-
दृग्भ्यां दिवि प्रकुरुतः किमु तत्तुलाऽऽप्त्यै ।
नो चेन्नभश्चरवनेचरयोरियं कै-
कत्र स्थितिर्गगनवल्लिरिवात्यनर्हा ॥५९॥

यया कोडिमदेव्या, आस्यदृग्भ्यां वदननयनाभ्यां, विजितौ मृगध्वजमृगौ शशाङ्कसारङ्गौ, तयोरास्यदृशोस्तुलाऽऽप्त्यै तुल्यताप्रापणाय, दिवि आकाशे, किमु मन्त्रं रहस्यालोचनं, प्रकुरुत इति । अमुमेवार्थं समर्थयति— नोचेदिति, नैवं चेद् यदि तदा, नभश्चरवनेचरयोः खेचरभूचरयोर्द्वयोरियमेकत्र स्थितिः, का कीदृशी, गगनवल्लिरिव व्योमलतावत्, अत्यनर्हा भृशमनुपपद्यमाना ॥ ५९ ॥

यस्याः सुखातिशयिना ध्वनिना निरस्ता
नूनं वनावनिमगुः कलकण्ठकान्ताः ।
नो चेत्कुतः स्वरचमत्कृतविष्टपाना-
मासामिहासुखविधायि वनप्रियत्वम् ॥६०॥

यस्याः श्रेष्ठिन्याः, सुखस्यातिशय आधिक्यं यस्मात्तेन सुखातिशयिना, ध्वनिना नादेन, निरस्ताः ध्वस्ताः, कलकण्ठकान्ताः कोकिलाः, वनाऽवनिमगुः काननकाश्यपी जग्मुरित्यन्वयः । चेद् यदि इति न, तदा स्वरचमत्कृतविष्टपानाम्, अपीत्यध्याहार्यम्, तेन नादप्रीणितजगतामपि, आसां कोकिलानां, वनप्रियत्वं अरण्यवल्लभत्वं, कुतः कीदृशं, असुखविधायि दुःखदायीतिशेषः ॥ ६० ॥

चक्राङ्कुशध्वजसरोजमुखाङ्किते य-
त्पादद्वये दशनखा अरुणाः स्म भान्ति ।
लग्नाः समं किमु दिगब्जदृशां ललाट-
पट्टात्प्रणत्यवसरे वरधीरपुण्ड्राः ॥६१॥

चक्रं रथाङ्गम्, अङ्कुशः सृणिः, ध्वजः केतुः, सरोजं वारिजम्, तत्प्रमुखैश्चिह्नैराङ्किते भूषिते, यत्पादद्वये यस्याश्चरणयुगले, दशनखाः, कि० अरुणा रक्ता, भान्ति स्मेत्यन्वयः । किमु इत्याशङ्कायां उत्प्रेक्ष्यते— दिगब्जदृशां काष्ठाकामिनीनां, प्रणत्यवसरे नतिक्षणे, ललाटपट्टाद् भालफलकात्, वरधीरस्य कमनीयकुङ्कुमस्य, पुण्ड्रास्तिलका, लग्नाः, समं युगपदिति । अत्रोत्प्रेक्षामु-

त्वेनास्याः पुत्रो दशदिग्जनपूज्यो भावीति जनन्या अपि दश-दिक्प्रणामः प्रमाणतामर्हतीतीतिभावार्थः ॥ ६१ ॥

पीनत्ववित्तमतिशायि निरीक्ष्य यस्या-
वक्षोजयोः कृशिमभाक् कटिरीर्ष्ययेव ।
स्तब्धात्मनामसिततुण्डभृता विभूति-
मालोक्य कस्य भुवि न प्रभवत्यसूया ? ॥६२॥

यस्याः वक्षोजयोः स्तनयोः, पीनत्ववित्तं पुष्टताधनं, कि० अतिशायि अधिकं, निरीक्ष्य, कटिर्मध्यदेशः; इवोत्प्रेक्ष्यते—ईर्ष्यया मत्सरेणेव, कृशिमभाक् तनुत्ववानजनि । एनमेवार्थं समर्थयति— स्तब्धात्मनाम् अनम्राणाम्, पुनः कि० असिततुण्डभृतां श्याममुखधारिणां, विभूति सम्पत्ति, दृष्ट्वा, भुवि पृथिव्यां, कस्य, असूया, न प्रभवति न स्यात्, अपि तु सर्वस्यापि स्यादेवेति ॥ ६२ ॥

दोषाकरत्वपरिमुक्तममुक्तवृत्तं
कृत्वा यदाननमुदंशु मुधा सुधांशुम् ।
वेधा विदन्निव मर्षीं मिषतः शशस्य
चिक्षेप साक्षरसभातिलकस्तदन्तः ॥६३॥

दोषाणां आकरो दोषाकरस्तस्य भावस्तत्त्वं, तेन परिमुक्तं दोषाकरत्वपरिमुक्तं, पुनः कि० अमुक्तमनुज्झितं, वृत्तं वर्तुलत्वं शीलं वा येन तत् अमुक्तवृत्तं, पुनः कि० उदंशु अतिकान्ति, इति विशेषणत्रिकविशिष्टं यदाननं यस्या मुख, कृत्वा निर्माय,

सुधांशुं चन्द्रं, दोषां रात्रिं करोतीति दोषाकरस्तत्त्वेन, कदाचिन्मुक्तवृत्तत्वेन च, मुधा विदन् मिथ्या जानन्, वेधा स्रष्टा, तदन्तश्चन्द्रान्तः, शशमिषात्, मषीं मसिं, चिक्षेप क्षिपति स्मेवेत्युत्प्रेक्षा । वेधाः किं० साक्षराणां पण्डितानां, सभासु तिलको विशेषकः । यतः सारं रक्षितवानसारं तु मष्या विलुप्तवानिति ॥ ६३ ॥

दुःसाध्यसाध्वसमुदन्वति वाडवाग्ने-
राहोर्विहायसि गृहे च बलेरहीनाम् ।
ध्यात्वा सुखैकसदनं वदनं यदीयं
जिह्वामिषादनिमिषाशनमागतं किम् ? ॥६४॥

उदन्वति समुद्रे, वाडवाग्नेर्वडवानलस्य, पुनर्विहायसि आकाशे, राहोः सैंहिकेयस्य, च पुनर्बलेर्गृहे पाताले, अहीनां भुजङ्गमानामिति; त्रिषु स्थानेषु, दुस्साध्यं यत्साध्वसं दुर्निवारं भयं, ध्यात्वा चिन्तयित्वा । किमिवोत्प्रेक्ष्यते— यदीयं वदनं यस्या मुखं, किं० सुखैकसदनं सौख्यैकभवनं, अनेन निर्भयत्वमसूचीति; यद्वदनं, निर्भयं ज्ञात्वा, जिह्वामिषाद्रसनाकैतवात्, अनिमिषाशनम् अमृतं, आगतं प्राप्तमिति ॥ ६४ ॥

स्वर्गाङ्गनाः स्फुटमपत्रपिताः कलासु
कौशल्यमध्वनि दृशोः प्रविधाय यस्याः ।
अध्येतुमिच्छव इवातिशयं कलाना-
मद्यापि नो जहति ताः खलु लेखशालाम् ॥६५॥

पुनः फतेपुरे पुरे, सूरि श्रीहीरसूरि, आगतं निशम्य भूपः कि०, सुकृताभिलाषुकः पुण्यार्थी, पुनः कि०, अच्छदृक् निर्मलमतिः, गुरोर्मिलनोत्सुको बभूव गरिष्ठो गुरुरपि तन्मनास्तन्मिलनोत्सुकः, अजनिष्ट जात इति ॥ ५२ ॥

अथ प्रभूतप्रतिभाढ्यपण्डित-
व्रतिव्रजालङ्कृतसंनिधिः सुधीः ।
अगच्छदत्यच्छमनाः स गच्छराड्
धराधिभूधाम निकामवामदृक् ॥ ५३ ॥

अथ शाहिनाऽऽकारितः सन् स गच्छराट्, कि०, प्रभूतप्रतिभाढ्या महामतिमन्तो ये पण्डिता व्रतिनो गीतार्थमुनयस्तेषां व्रजेनाऽलङ्कृतो भूषितः संनिधिः समीपं यस्य सः, एतावताऽन्यान् मुनीनुपाश्रये संस्थाप्य केवलं कोविदैरेव परिवृतः, पुनः कि०, अत्यच्छमनाः प्रसन्नचेताः, पुनः कि०, निकामं प्रकामं वामा मनोज्ञा दृग् यस्य चित्तोत्साहेन हसितनयन इति, धराधिभूधाम राजेन्द्रगृहं, अगच्छद् गतवानिति ॥ ५३ ॥

जनाक्षिनीलोत्पलपङ्क्तिकान्तिकृद्
दयोदधेः वृद्धिकरः कलानिधिः ।
सूरेण राज्ञा ददृशे प्रमोदकृत्
स सप्ततिश्चन्द्र इवर्षिभिर्युतः ॥ ५४ ॥

जनाक्षिनीलोत्पलपङ्क्तिकान्तिकृद् लोकनयनकुवलयश्रेणिशोभाकरः तद्विस्मेरताकरणात्, पुनः, दयोदधेः कृपासमुद्रस्य, वृद्धिकरः तदुल्लासित्वात्, पुनः, कलानिधिरिति प्रतीतं चन्द्र इव, स गुरुः, सूरेण सूर्येण, गुरुपक्षे सुभटेन राज्ञाऽनेन शाहिना, चन्द्रपक्षे सूरेण ग्रहेण ददृशे, कि०, सप्तभिः ऋषिभिः

युतस्तदानीं स्थानकसप्तकस्य सद्भावात्, चन्द्रपक्षेऽपि सप्तर्षिभिर्युतः इति, प्रमोदकृदिति विशेषणं सूर्यस्य चन्द्रमित्रत्वेन न्याय्यमिति "चन्द्रस्याऽर्कबुधौ मित्रे" इति ज्योतिःशास्त्रवचनात् ॥५४॥

सदस्सदुल्लासविलासकोविदै-
र्वचोभिराचार्यसभाशिरोमणेः ।
गुरोर्मुदं प्रापदपापदृग् नृपः
प्रसेनजित्सूनुरिवान्तिमाऽर्हतः ॥ ५५ ॥

नृपः शाहिः, कि०, अपापदृक् निष्पापमतिः निष्पापनेत्रो वा, आचार्यसभाशिरोमणेः सूरिपर्षच्चूडामणेः, गुरोर्वचोभिः सदसोऽर्थाद् राजसभायाः सदुल्लासः शोभनोल्लासस्तद्विलासे कोविदैः निपुणैः, मुदं प्रापत् । कः कस्येवेत्याह—अन्तिमार्हतो महावीरस्य, वचोभिः प्रसेनजित्सूनुः श्रेणिक इव, इति दृष्टान्तोत्प्रेक्षे ॥ ५५ ॥

गुरोर्गिराऽथावनिजानिरब्जिनी-
प्रियप्रमाहःफुरमानपत्रकम् ।
समस्तजीवाभयदायि तत्क्षणा-
दलीलिखत् स्वाखिलमण्डलेष्वऽपि ॥ ५६ ॥

अथ गुरोर्गिरा अवनिजानिः शाहिः, अब्जनीप्रियप्रमाहःफुरमानपत्रकं द्वादशदिवसाना फुरमानपत्रं, कि०, समस्तजीवाभयदायि सर्वजन्तुभयनिवृत्तिकारि, तत्क्षणाद् गुरुवाक्याकर्णनादनन्तरमेव, अलीलिखद् लेखयामास । केष्वित्याह—स्वाखिलमण्डलेष्वऽपि निजाज्ञावर्तिषु सकलेष्वपि देशेषु, मेवडाख्यकिङ्करैः प्रतिदेशं प्रैषीच्चापिशब्दादिति गम्यम् ॥ ५६ ॥

अमूमुचद् गुप्तिगृहाच्च बन्दिनो

विहङ्गवृन्दं दृढपञ्जरात् पुनः ।
निशानिबद्धान् मधुपानिवाऽम्बुजो-
दरादुदारोऽम्बुजिनीजनिः स्फुरन् ॥ ५७ ॥

च पुनः, गुप्तिगृहात् कारागारात्, बन्दिनो नियन्त्रितनरान्, अमूमुचत् शाहिरिति, गुरुगिरेति गम्यम्; पुनः, दृढपञ्जराद् विहङ्गवृन्दं अमूमुचत्। दृष्टान्तमाह—इव यथा, अम्बुजोदरात् पद्ममध्यात्, निशानिबद्धान् रात्रिबद्धान्, मधुपान् भृङ्गान्, अम्बुजिनीजनिरिव रविर्यथेति ॥ ५७ ॥

मदाधिपत्य भुवि यावदस्त्यदो
न हन्ति कोऽप्यत्र झषादिदेहिनः ।
वदन्निति क्षोणिपतिः पुरो गुरो-
रुपप्रदानेऽकृत डाबर सरः ॥ ५८ ॥

भुवि भूमौ, अदो मदाधिपत्यमेतद् मत्साम्राज्यं, यावदस्ति वर्तते, तावदत्र कोऽपि झषादिदेहिनो मीनमकरशिशुमारकूर्मकुलीरादिप्राणिनो जलचरविशेषान्, न हन्ति इति क्षोणिपतिरकब्बरः, गुरोः पुरो वदन् डाबरं नाम सरोवरं सीकरीसमीपस्थं योजनत्रयीप्रमाणं नैकलक्षजालजालपतन्मत्स्यसंहारसंजायमानामानधनागममपि, उपप्रदानेऽकृत ढौकनीकृतवानित्यर्थः ॥ ५८ ॥

नभोऽशुनेवातिविभासुरं जगत्
सदाऽमुना श्रीगुरुणेति जल्पता ।
अतिप्रभूताद्भुतमानदानत-
स्तदाऽयमुच्चैः सदकारि भूभुजा ॥ ५९ ॥

अंशुना सूर्येण, नभ इव, अमुना श्रीगुरुणा, जगद् विश्वं, अतिविभासुरं कृतमिति शेषः, इति जल्पता भूभुजा अति प्रभूतमतिशयेन बहु पुनरद्भुतमाश्चर्यकारि यन्मानं तस्य दानतः, तदा तत्र क्षणे, अयं गुरुः, उच्चैः सदकारि सच्चक्रे ॥ ५९ ॥

अथो चतुर्मासकमुल्लसत्सुखे
फतेपुरे दत्तजयोत्सवे गुरुः ।
निरस्तमन्युर्गणभृद् महाव्रती
हरः शिवाया मनसीव तस्थिवान् ॥ ६० ॥

अथो गुरुः उल्लसत्सुखे दीप्तिमत्सातें, फतेपुरे, पुनः कि०, दत्तो जयोत्सवोऽकब्बरशाहेः श्रीगुरोश्च येन तस्मिन्, शिवायाः पार्वत्याः, मनसि कि०, दत्तजयोत्सवे दत्तो जयायास्तत्सख्या उत्सवो येन तत्र, हर इव, कि०, निरस्तो गुरुपक्षे मन्युः क्रोधो येन, हरपक्षे मन्युर्यागो येन, स हि मखध्वंसीति श्रुतेः; पुनः किं०, गुरुपक्षे गणं गच्छं बिभर्तीति, हरपक्षे "प्रमथाः पार्षदा गणाः" तान् बिभर्तीति गणभृत्, पुनः कि०, महाव्रती गुरुश्च हरश्चेति प्रतीतं, चतुर्मासकं तत्र तस्थिवान् स्थित इति ॥ ६० ॥

अथ छन्दःपरावृत्त्या सर्गमुपसंहरति—

अरिधरणिपतिस्त्रीदृग्जलासारधारा-
निकरकरणवर्षोत्कर्षखड्गाग्रधारे ।
लसति सति हमाऊनन्दने राज्ञि तत्र
स्थितिमकृत कृतर्द्धि ज्यायसीं सूरिराजः ॥ ६१ ॥

तत्र सीकरीनगरे, हमाऊनन्दने राज्ञि शाहिश्रीमदकब्बरे, लसति सति, कि०, अरिधरणिपतिस्त्रीणां वैरिराजयो-

षितां यो दृग्जलासारधारानिकरो नयननीरवेगवद्वर्षणधारासमूहस्तत्करणे तदुत्पादने वर्षोत्कर्ष इव वर्षाकालप्रकर्ष इव खड्गाग्रधारा यस्य तस्मिन् अरिधरणिपतिस्त्रीदृग्जलासारधारानिकरकरणवर्षोत्कर्षखड्गाग्रधारे, सूरिराजः ज्यायसी ज्येष्ठस्थिति, कि०, कृता ऋद्धिः यशःसमृद्धिरूपा यया तां, अकृत अकरोत् ॥ ६१ ॥

कमलकुवलयाना कोकघूकाङ्गनाना-
महिममहसि पूर्वे पर्वते प्रापुषीव ।
स्थितवति पुरि तस्यामोजसा धाम्नि सूरि-
द्युसदि सदसतां द्राग् भूत्यभूती अभूताम्॥६२॥

ओजसां बलाना तेजसां वा, धाम्नि गेहे, सूरिद्युसदि सूरिदेवे, तस्यां पुरि सीकरीनाम्न्यां, स्थितवति सति, सदसता हिताऽहितजनानां, भूत्यभूती संपदाऽऽपदे, यथाक्रमं अभूतां बभूवतुरित्यन्वयः । दृष्टान्तेन द्रढयति–पूर्वे पर्वते उदयाचले, अहिममहसि सूर्ये, प्रापुषि सति यथा कमलकुवलयानां पङ्कजोत्पलानां, भूत्यभूती स्यातां–कमलानां स्मेरतारूपा श्रीः, कुवलयानां च म्लानिरूपाऽश्रीः; पुनः कोकघूकाङ्गनानां यथा भूत्यभूती स्यातां–कोकाङ्गनानां चक्रवाकस्त्रीणां तद्वल्लभसंगमादिष्टापत्तिरूपा श्रीः, घूकाङ्गनानां चाऽन्धत्वाऽऽगमादनिष्टापत्तिरूपाऽश्रीश्चेति ॥ ६२ ॥

कारुण्याम्भोनिधिमधि पतच्चित्तवृत्त्यण्डजेन
स्फूर्जन्नीतिस्मितनयनयाऽऽश्लिष्टवक्षःस्थलेन ।
नित्यं नीतो हृदयपदवीं श्रीहमाऊसुतेन
द्रङ्गे तत्र स्थितिमधिगतो हीरसूरिः श्रिये वः ॥६३॥

श्रीहमाऊसुतेन अकब्बरशाहिना, किं०, कारुण्याम्भोनिधि करुणारसार्णवं, अधि लक्षीकृत्य, पतच्चित्तवृत्तिरेव अण्डजो मत्स्यो यस्य तेन दयोदधिनिमग्नमनोमीनेनेत्यर्थः; पुनः किं०, स्फूर्जन्नीतिस्मितनयनया चञ्चन्न्यायप्रवृत्तिकामिन्या आश्लिष्ट-मालिङ्गितं वक्षःस्थलं यस्य तेन, हृदयपदवीं नीतो मनसि स्थापितः, हीरसूरिस्तत्र द्रङ्गे फतेपुरे, स्थितिमधिगतश्चतु-र्मासीमासीनः, वो युष्माकं, श्रिये संपदे, स्तादिति शेषः ॥६३॥

अत्र सर्गे भूम्ना वंशस्थं नाम च्छन्दः "जतौ तु वंशस्थ-मुदीरितं जरौ" इति लक्षणात् ; कुत्राऽप्युपजातिरपि । अन्त्ये वृत्तत्रये द्वे वृत्ते मालिनीच्छन्दसा, तल्लक्षणं तूक्तपूर्वम् ; तृतीयं तु मन्दाक्रान्तावृत्तम्, तल्लक्षणं यथा—मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद् गुरू चेत्" इति ।

. . . . . . . . . . . . . . . . .

इतीति सर्वं सुगमम् ।

इति सुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौली-यमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दर-प्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकगुणविजय-गणिविरचितायां विजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटी-काया नवमः सर्गोऽर्थतः समर्थितः ।



अर्हम्

# अथ दशमः सर्गः ।

अथ दशमः सर्गः प्रारभ्यते—

आचार्यवर्यो विजहार पत्तना-
दन्यत्र धात्रीषु पवित्रपद्धतिः ।
भृङ्गा इवामोदनिमग्नमानसा-
स्तिष्ठन्ति नैकत्र चरित्रिणो यतः ॥ १ ॥

आचार्यवर्योऽष्टमसर्गव्यावर्णितस्वरूपोऽनूचानमुख्यः श्रीविजयसेनसूरिः, किं०, पवित्रा पद्धतिः संयमप्रवृत्तिरूपा यस्य सः, पत्तनाद् नगराद् अन्यत्र धात्रीषु गूर्जरत्रादेश एवान्यग्रामनगरावनीषु, विजहार विहृतवान्; यतः कारणात्, चरित्रिणो भृङ्गा इव, किं०, आमोदे निमग्नं मानसं येषा ते, चरित्रिणः किं०, आमोदनिमग्नमानसा हर्षमग्नमानसाः, भृङ्गाः किं०, आमोदे गन्धे मग्न मनो येषा ते, एकत्र स्थाने, न तिष्ठन्तीति ॥१॥

वक्षोजवेदर्तुसुधांशुसमिते
वर्षे सुखोत्कर्षिणि हर्षवर्षिणि ।
लोकेहितायाऽर्क इव प्रतापभृत्
सूरिः स एतः पुनरेव पत्तने ॥ २ ॥

वक्षोजौ स्तनौ द्वौ, वेदा ऋग्यजुःसामाऽथर्वणाख्याश्चत्वारः, ऋतवो हिमशिशिरवसन्तग्रीष्मवर्षाशरत्संज्ञकाः षट्, सुधांशुश्चन्द्रमा एकः, तेनैतैरङ्कैर्वामगतिविन्यस्तैः संमिते वर्षे

१६४२इतिसंख्ये संवत्सरे, किं०, सुखस्योत्कर्षो यस्मिन् तस्मिन् सुखोत्कर्षिणि, पुनः, हर्षवर्षिणि प्रमोददायिनि, लोकेहिताय लोकानामीहिताय वाञ्छितपूरणाय, अथवा लोके लोकविषये, हितायाऽऽनुकूल्याय, स सूरिराचार्यः, पुनः चतुर्मासकद्वयादनन्तर, तृतीयं चतुर्मासकं कर्तुकामः पत्तने नगरे, पुनरेतः प्राप्तः, किं०, अर्क इव प्रतापभृत् तेजस्वित्वात् ॥ २ ॥

दुष्पाक्षिकोलूकसहस्ररश्मिभिः
श्रीसागरैर्वाचकधर्मसागरैः ।
क्लृप्तस्य शास्त्रस्य हरेरिव श्वभिः
सूरेर्विवादः सममौष्ट्रिकैरभूत् ॥ ३ ॥

वाचकधर्मसागरैः, किं०, दुष्पाक्षिकाः कुपाक्षिका एव उलूका घूकास्तेषु सहस्ररश्मिभिः, पुनः, शास्त्रादिश्रियः सागरैः, क्लृप्तस्य शास्त्रस्य प्रवचनपरीक्षाभिधानस्य, विवादः सूरेः श्रीविजयसेनस्य, औष्ट्रिकैः खरतरैः, सममभूत् । कैः सह कस्येवेत्याह— हरेः सिंहस्य, इव यथा, श्वभिः श्वानैरिति दृष्टान्त उत्प्रेक्षा वा ॥३॥

ततो विवादे किं जातमित्याह—

पार्षद्यहृद्ये सदसि क्षमेशितु-
र्वेदत्रियामारमणैर्दिनैर्महान् ।
श्रीस्मेरराजीवदृगेककार्मण
तत्राऽप्यनूचानपतेरभूज्जयः ॥ ४ ॥

क्षमेशितुर्भूपस्य, सदसि, किं०, पार्षद्यैः सभ्यैर्हृद्ये रम्ये, अत्र सदःशब्दस्य स्त्रीक्लीबलिङ्गत्वाद् विशेषणमिदमदुष्टमिति, दिनैः किं०, वेदाश्चत्वारः, त्रियामारमणश्चन्द्रश्चैकः, ततो वामगतिमीलितैर्वेदचन्द्राङ्कैश्चतुर्दशभिः, दिनैर्विवादं कुर्वतो-

ऽनूचानपतेः श्रीविजयसेनसूरीन्दोः, तत्र पत्तने नगरे, जयो
वादिविजयरूपः, किं०, श्रीः शोभा सैव स्मेरराजीवदृक् का-
मिनी तस्याः कार्मणं शोभाया एकहेतुर्वादे जयोऽभूदिति ॥४॥

वत्साभिधस्याऽथ नृपाधिकारिणः
कल्याणराजापरनामधारिणः ।
कक्षा प्रविष्टैः सुमहानहम्मदा-
वादे विवादः पुनरौष्ट्रिकैः कृतः ॥ ५ ॥

अथ वत्साख्यस्य नृपाधिकारिणः, किं०, कल्याणराजे-
त्यपरनाम्नः, कक्षां प्रविष्टैस्तद्गृह्यीभूय, औष्ट्रिकैः खरतरैः,
पुनरहम्मदावादे नगरे, सुमहान् विवादः कृत इति ॥ ५ ॥

अथ तत्रापि यज्जातं, तत् त्रिभिर्वृत्तैः प्राह—

तेषामनूचानवितानवज्रिणां
धाम्ना महिम्ना च वचोऽतिशायिना ।
स्फीतस्फुरद्वाङ्मयवित्तिवित्तमैः
शिष्योत्तमैः सत्तमशक्तिशालिभिः ॥ ६ ॥

श्रीखानखानासदसि प्रबुद्धधी-
र्विप्रोम्बरामुख्यजनैर्विराजिनि ।
तद्वाङ्मयव्यक्तविचारिवाचन-
व्यक्तैः सभाविस्मयकारिवाग्भरैः ॥ ७ ॥

कल्याणराजस्य तथौष्ट्रिकाध्वभू-
त्सघस्य निर्मूलमहारि विभ्रमः ।
चन्द्रस्य तारानिकरस्य चाऽभितो

ध्वान्तं हरद्भिः किरणै रवेरिव ॥ ८ ॥

अनूचानविनानवज्रिणा आचार्यव्रजवज्रपाणीनां, तेषां धाम्ना तेजसा, च पुनः, वचोऽतिशायिना वचनागोचरेण, महिम्ना माहात्म्येन, शिष्योत्तमैर्विनेयमुख्यैः, किं०, स्फीतानि च स्फुरन्ति च यानि वाङ्मयानि शास्त्राणि तेषां या वित्तिर्विचारणा ज्ञानमिति तत्र वित्तमैश्चतुरतरैः, अत एव सत्तमशक्तिशालिभिः अतिश्रेष्ठशास्त्रादिसामर्थ्यधारिभिः ॥६॥ पुनः केत्याह—श्रीखानखानाख्यमहाराजेन्द्रसदसि, किं०, प्रबुद्धधियो ये महाप्राज्ञा विप्रास्ताकिकभट्टाः पुनर्ये च उम्बरा राजविशेषाः सामन्तादिस्थानीयास्तन्मुख्यजनैस्तत्प्रमुखानेकराजलोकनागरलोकैः,विराजिनि भ्राजमाने, पुनः, शिष्यैस्तस्य वाङ्मयस्य प्रवचनपरीक्षाख्यस्य व्यक्तं स्फुटं यद् विचारि विचारवद् वाचनं तत्र व्यक्तैर्निपुणैः, अत एव सभाविस्मयकारिवाग्भरैः पर्षदाश्चर्यकृद्वाक्यप्रकर्षैः ॥ ७ ॥ ईदृग्विधैस्तैः शिष्यैर्यत्कृतं तदाह—तस्य कल्याणराजस्य तथा औष्ट्रिकाऽध्वभृत्संघस्य च खरतरसंबन्धिपक्षस्य च, निर्मूलमिति क्रियाविशेषण समूलं, विभ्रमोऽहारि हत इति । चन्द्रस्य तारानिकरस्य च रवेः किरणैः, किं०, ध्वान्तं हरद्भिः सद्भिरिव यथेति दृष्टान्तः । इति काव्यत्रयीव्याख्या ॥८॥

अथ खरतरान् विजित्य श्राद्धैर्हृष्टैर्यत् कृतं तदाह—

श्रीखानखानार्पितवाद्यवादनै-
र्वाचालतानीतसमस्तदिग्मुखैः ।
शास्त्रं प्रति स्थानमनीयताऽखिल-
श्राद्धैस्तदुत्साहकृदुत्सवोत्सुकैः ॥ ९ ॥

श्रीखानखानार्पितैर्वादित्रध्वनिभिर्वाचालतां मुखरत्वं नीतानि समस्तानि दिग्मुखानि यैस्तैः, श्राद्धैस्तच्छास्त्रं स्था-

नं प्रति अनीयत आनीतं, श्राद्धैः किं०, उत्साहकारी य उत्सवस्तत्रोत्सुकैः ॥ ९ ॥

एषा जयोक्तिर्जिनशासनस्थिति-
स्मेरेक्षणाभालमणीविशेषकः ।
पृथ्वी पृथिव्या प्रथिमानमासदत्
तैलस्य बिन्दुः पयसीव तत्क्षणात् ॥ १० ॥

एषा वर्णिता, जयोक्तिर्विजयवाग्, कि०, जिनशासनस्थितिरेव स्मेरेक्षणा स्त्री तद्भाले मणीविशेषको रत्नतिलकं, स्त्रीलिङ्गवाच्यस्य शब्दस्य पुंलिङ्गवाच्यं विशेषक इति विशेषणमदुष्टं 'लिङ्गभेदं तु मेनिरे' इति वचनात्; पुनर्जयोक्तिः कि०, पृथ्वी विस्तीर्णा, अत एव पृथिव्यां प्रथिमानं विस्तारभावं आसदत्, यथा तैलस्य बिन्दुः पयसि वारिणीति दृष्टान्तः ॥१०॥

सर्वोऽपि सघो जिनशासनोन्नते-
रुक्त्याऽनया प्रीतिमवाप निर्भरम् ।
अप्रीतिमुच्चैश्च कुपाक्षिकव्रजः
कोकश्च घूकश्च रवेरिवोदये ॥ ११ ॥

जिनशासनोन्नतेरनया उक्त्या सर्वोऽपि संघस्तपागच्छसत्कः, प्रीतिमवाप प्राप्तवान्, च पुनः, कुपाक्षिकव्रजः कुतीर्थिकनिकरः, अप्रीतिमवाप, यथा रवेरुदये सति, कोकघूकौ चक्रवाकोलूकौ, प्रीतिमप्रीतिं च क्रमेण प्राप्नुत इति दृष्टान्तद्वयम् ॥ ११ ॥

मत्वाऽनयोक्त्याऽत्यमलामहम्मदा-
वाद पुरी द्राक् शरदेव दीर्घिकाम् ।

आसीद् वलक्षद्विजवत् सुपक्षभाक्
पद्मोदयेच्छुर्गुरुरेतुमुत्सुकः ॥ १२ ॥

शरदा शरत्कालेन, दीर्घिकां वापीमिव, अनया जयोक्त्या वादजयवाचा, अमलां विशदां, अहम्मदावादं पुरी मत्वा गुरुर्विजयसेनसूरिः, वलक्षद्विजवत् कलहंस इव, किं०, सुपक्षभाक् शोभनच्छदभृत्, गुरुपक्षे सुपक्षो धर्मपक्षस्तद्वानिति, पुनः किं०, पद्मोदयेच्छुः हंसपक्षे पद्मानां पङ्कजानां, गुरुपक्षे पद्माया लक्ष्म्या उदयाभिलाषी इति, एतुं आगन्तुं, उत्सुकोऽभूदिति ॥ १२ ॥

क्ष्मा पावयन् पादपयोजपांसुभि-
र्गाङ्गः प्रवाहोऽद्भिरिवर्षिशेखरः ।
प्राप क्रमेण प्रमना अहम्मदा-
वादं पुर हर्ष इवर्षिमानसम् ॥ १३ ॥

ऋषिशेखरः सूरिः, पादपयोजपांसुभिश्चरणकमलरेणुभिः, अद्भिः पानीयैः, गाङ्गः प्रवाह इव क्ष्मा पृथ्वी, पावयन् क्रमेण प्रमना हृष्टमानसः सन्, अहम्मदावादं पुरं प्राप, ऋषिमानसं सर्वदा शान्तरसपूर्णत्वाद् हर्षः प्रमोद इवेति दृष्टान्तो वोत्प्रेक्षा वा ॥ १३ ॥

श्रीसूरिसूरस्य समागमोल्लस-
न्नेत्रास्यपद्मा भृशमास्तिका अथ ।
साफल्यमिच्छन्तमुपार्जितश्रिय-
श्चक्रुः प्रवेशोत्सवसूत्रणामिति ॥ १४ ॥

अथ आस्तिकास्तत्रत्याः श्राद्धलोकाः, किं०, श्रीसूरि-

सूरस्य गुरुसूर्यस्य, समागमेन उल्लसन्ति नेत्रास्यपद्मानि नयनाननलिनानि येषां ते, उपार्जितायाः श्रियो लक्ष्म्याः, साफल्यं इच्छन्तः सन्तः, प्रवेशोत्सवस्य सूत्रणा निष्पत्ति, इति वक्ष्यमाणस्वरूपां, चक्रुरिति ॥ १४ ॥

अथ सप्तदशभिर्वृत्तैः प्रवेशोत्सवं वर्णयति—

श्रीखानखानावनिजानिवज्रिणा
दत्ताऽतिमत्तद्विरदैः पुरस्सरैः।
सिक्ता धरित्री पतता मदाम्भसा
कस्तूरिकाकर्दमसंचयेन किम्? ॥ १५ ॥

श्रीखानखानाख्येन अवनिजानिवज्रिणा राजेन्द्रेण, तदा तदाधिपत्यशालिना, दत्ताऽतिमत्तैर्द्विरदैर्गजैः, पुरस्सरैरग्रेसरैः, पतता मदाम्भसा मदवारिणा, धरित्री भूः, सिक्ता। किमित्युत्प्रेक्ष्यते—कस्तूरिकाकर्दमसंचयेन मृगमदपङ्कपानीयेनेवेति॥ १५ ॥

वर्त्माऽभवद् मत्तविहस्तहस्तिनां
घण्टाटणत्काररवैर्मनोहरम्।
कासारकूलं तपनोदयादिव
त्यक्तप्रमीलार्जुनवाजिकूजितैः ॥ १६ ॥

मत्ता अत एव ये विहस्ता व्याकुला हस्तिनो मदव्यग्रगजेन्द्रास्तेषां, घण्टाटणत्काररवैः नगरवर्त्म मनोहरं अभवत्। इव यथा, तपनोदयात् सूर्योदयात्, त्यक्तप्रमीला गतनिद्रा ये अर्जुनवाजिनो धवलविहङ्गमाः "वाजी हये खगे" इत्यनेकार्थत्वात्, अर्जुनवाजिनो राजहंसास्तेषां कूजितैः शब्दितैर्जाग्रद्राजहंसरुतैः, कासारकूलं तटाकतटं, यथा मनोहरं भवति तथेति ॥१६॥

धत्ते स्म धात्री पुरि तत्र दन्तिना
सिन्दूरपूरैर्निपतद्भिरिन्दिराम् ।
स्वाहाऽशनाना पदवीव नूतन-
प्रद्योतनस्योस्रभरैरिवोषसि ॥ १७ ॥

तत्र पुरि दन्तिना सिन्दूरपूरैर्निपतद्भिः सद्भिः, धात्री भूमिः, इन्दिरा श्रियं, धत्ते स्माऽधात्; यथा उषसि प्रभाते, नूतनप्रद्योतनस्य उद्यद्भानोः, उस्रभरैः किरणगणैः, स्वाहाशनानां पदवी गगनमिवेति दृष्टान्तः ॥ १७ ॥

शृङ्गारिभृङ्गारमनोज्ञमस्तका-
अग्रे व्रजन्त्यो व्यभुरब्जलोचनाः ।
किं सचरन्त्यो भुजगेश्वरस्त्रियः
कुम्भं सुधायाः प्रविधाय मूर्धनि ? ॥ १८ ॥

तदा अग्रे गुरोः पुरः, व्रजन्त्योऽब्जलोचनाः स्त्रियः, व्यभुः शोभन्ते स्म । किं०, शृङ्गारी शृङ्गारवान् यो भृङ्गारः पूर्णकुम्भस्तेन मनोज्ञं मस्तकं यासा ताः, किं०, भुजगेश्वरस्त्रियो नागेन्द्रनार्यः, सुधायाः कुम्भं मूर्धनि प्रविधाय संचरन्त्यः सन्ति, किमित्युत्प्रेक्षा ॥ १८ ॥

सौवर्णरात्नाभरणा विरेजिरे
श्राद्धास्तदा तत्र करीन्द्रकुम्भगाः ।
आगाद् गजस्थस्त्रिदिवाद् विवन्दिषू-
रूपैरनेकैरिव नाकिनायकः ॥ १९ ॥

तदा तत्र पुरे, श्राद्धाः किं०, सौवर्णानि सुवर्णसंबन्धीनि

रात्नानि रत्नसंबन्धीनि आभरणानि येषां ते, पुनः कि०, करीन्द्रकुम्भगा हस्तिशीर्षस्थाः, विरेजिरे रेजुः । इवोत्प्रेक्ष्यते–नाकिनायकः शक्रः, कि०, गजस्थः, पुन कि०, विवन्दिषु-गुरुवन्दनेच्छुः सन्, त्रिदिवात् स्वर्गात्, अनेकै रूपैरागात् आगत इति ॥ १९ ॥

पर्याणवर्यास्तुरगाः पुरो व्यभु-
भूयिष्ठभूर्याभरणा असादिनः ।
खिन्ना इवोत्तेरुरमी भ्रमिश्रमा-
च्चन्द्रार्यमस्यन्दनगा नभस्तलात् ॥ २० ॥

पुनस्तत्र पर्याणैर्वर्याः सपर्याणाः, पुनः कि०, भूयिष्ठानि भूर्याभरणानि स्वर्णाभरणानि येषा ते "भूरि सुवर्णे" इति, पुनः कि०, असादिनः अश्ववाररहितास्तुरगाः, पुरोऽग्रतः, व्यभुर्भान्ति स्म । इवोत्प्रेक्ष्यते–नभस्तलाच्चन्द्रार्यमस्यन्दनगाश्चन्द्रसूर्यरथसत्कास्तुरगाः, भ्रमिश्रमात् खिन्ना इव, उत्तेरुरुत्तीर्णा इति ॥ २० ॥

निःस्वानभेरीमुखभूरितूरभू-
स्वानैश्च गन्धर्वरवैश्च गीतजैः ।
कोलाहलैश्चातुललोकसम्भवै-
रेजे तदा शब्दमयीव रोदसी ॥ २१ ॥

तदा रोदसी द्यावाभूरूपा, शब्दमयीव रेजे इत्यन्वयः । कैरित्याह–निःस्वानभेरीप्रमुखबहुतूर्योत्थस्वानैः, पुनः, गीतजैः गान्धर्वरवैः गायनध्वनिभिः, च पुनः, अतुललोकजैः कोलाहलैः, शब्दमयी द्यौर्भूमिश्च तदा जातेति ॥ २१ ॥

मुक्ताफलस्वर्णमणीविभूषणै-

दिव्यैर्दुकूलैर्वसनैश्च शोभनाः ।
एणीदृशो गीतसृजस्तदा व्यभु-
र्नत्यै गुरोरप्सरसः किमागताः ? ॥ २२ ॥

मुक्ताफलस्वर्णमणीविभूषणैर्मौक्तिककनकरत्नाभरणैः, च पुनः, दिव्यैर्दुकूलवसनैः पट्टकूलपरिधानैः, शोभना रम्याः, गीतसृजो गानकारिण्यः, एणीदृशः स्त्रियः, व्यभुः शोभन्ते स्म, तदोत्सवे गुरोर्नत्यै नमनाय, किं०, अप्सरसः स्वर्गाङ्गना-आगता इति ॥ २२ ॥

श्राद्धैर्ददद्भिर्धनमर्थिनां तदा
यद्भालतोऽलोपि लिपिः सदर्थिता ।
स्वःसन्मणीगोद्रुमुखाग्रतोऽपि यत्
तैस्तत्प्रभृत्यत्र न जातमर्थिभिः ॥ २३ ॥

तदा श्राद्धैर्जनैः, अर्थिनां याचकानां, धनं ददद्भिः यद्भालतः सदर्थिता लिपिः विद्यमानाऽर्थित्वलिपिः, अलोपि लुप्ता । उत्तरार्धेन तद्धेतुमेव व्यञ्जयति—स्वःसन्मणीगोद्रुमुखाणामपि सुरमणिसुरगवीसुरतरुप्रमुखाणामपि, अग्रतः पुरः, तैरर्थिभिः, तत्प्रभृति तद्दिनात्, यदिति यस्मात् कारणात्, अर्थिभिर्याचनाकृद्भिः, न जातं, अर्थिभिः पुनरर्थिभिर्न बभूवे इति भावः ॥ २३ ॥

रेजुर्ध्वजाः पुष्कलवर्णपेशला
उत्तम्भिता हट्टगृहाट्टवर्त्मसु ।
किं केतवोऽमी युगपत्कुपाक्षिका-
हङ्काराधिक्कारकृते समुद्गताः ? ॥ २४ ॥

पुष्कलैर्बहुभिर्वर्णैः पेशला रम्याः, पुनर्हट्टगृहाऽट्टवर्त्मसु उत्तम्भिता ऊर्ध्वीकृताः, ध्वजा रेजुर्व्यभुः । किमित्युत्प्रेक्ष्यते—केतवो धूमग्रहविशेषाः, अमी युगपत् समकालं, कृपाक्षिकाहङ्कार-धिक्कारकृते समुद्गता उदिता इवेति ॥ २४ ॥

मुक्ताफलैस्तत्र परस्पराहति-
स्त्रीस्तोमहारात् पतितैर्मही बभौ ।
कर्तुं स्वयं स्वस्तिकपङ्क्तिमागता
किं ताम्रपर्णीतटिनी स्वमौक्तिकैः ? ॥२५॥

तत्र पुरे, परस्परं आहतिः संघट्टो यासां ताः परस्परा-हतयो याः स्त्रियस्तासां यः स्तोमो व्रजस्तद्धारादित्यत्र जात्यपे-क्षया एकत्वम् ; तेन हारेभ्यो निपातितैर्मुक्ताफलैः, मही भूः, बभौ; किं ताम्रपर्णीतटिनी मुक्ताफलनदी, स्वमौक्तिकैः स्वस्तिकप-ङ्क्तिं कर्तुं स्वयमागतेति ॥ २५ ॥

वक्रभ्रुवस्तत्र गवाक्षसंगता
लाजान् गुरोर्मूर्ध्नि वरानवाकिरन् ।
वर्षन्त्यमूरप्सरसः परस्परा-
हपूर्विकोत्का इव मौक्तिकोत्करैः ॥ २६ ॥

तत्र गवाक्षसंगता वातायनस्थिताः, वक्रभ्रुवो नार्यः, गुरो-र्मूर्ध्नि वरान् लाजान् अक्षताक्षतान्, अवाकिरन् क्षेपयामासुः । इवोत्प्रेक्ष्यते—परस्परमन्योन्यं अहंपूर्वमहंपूर्वामितिरूपाऽहंपूर्विका तया उत्का उत्सुकाः परस्पराहंपूर्विकोत्का इव, अमूः अप्सरसः, मौक्तिकोत्करैर्मुक्ताफलपटलैः, वर्षन्ति ॥ २६ ॥

वध्वो बभुस्तत्र विलोललोचनैः

सेह गुरोर्दर्शनवृत्तवृत्तयः ।
नीलोत्पलैः फुल्लतमैरिवाप्सरः-
श्रेण्योऽर्चयन्त्यः पथि संस्थिता इमाः ॥ २७ ॥

तत्र विलोललोचनैश्चपलनेत्रैः, वध्वो नार्यः, बभुः; कि०, गुरोर्दर्शने वृत्ता प्रवृत्ता वृत्तिश्चित्तवृत्तिर्यासां ताः, कथं, सेहं सस्पृहं यथा स्यात् तथेति गुरुदर्शनाभिलाषित्वाद्, द्विधाऽपि चपलेक्षणाः स्त्रियो भान्ति स्मेति । इवोत्प्रेक्ष्यते—इमा अप्सरःश्रेण्यः नीलोत्पलैः, कि०, फुल्लतमैः स्मेरतरैः कुवलयैरर्चयन्त्यः पथि संस्थितास्तस्थुरिव ॥ २७ ॥

हृष्टाननैः सूरिसमागमाज्जनै-
राभात् पुरं तद्वरवेषकल्पनैः ।
पाथोजिनीप्राणपतेरिवोदयात्
सद्यः प्रफुल्लैः सरसीरुहैः सरः ॥ २८ ॥

सूरिसमागमाद् गुर्वागमात्, जनैः कि०, हृष्टाननैः हर्षितमुखैः, अत एव पुनर्जनैः कि०, वरवेषकल्पनैः श्रेष्ठनेपथ्यरचनैः, तत् पुरं नगरं, आभात् भाति स्म । इवेति यथा वा, उत्प्रेक्ष्यते वा । पाथोजिनीप्राणपतेः सूर्यस्य, उदयात् प्रफुल्लैर्निर्निद्रैः, सरसीरुहैः कमलैः, सरः कासार इवेति दृष्टान्तोत्प्रेक्षे ॥ २८ ॥

चामीकरं द्राक् क्रियमाणमर्थिसा-
दालोक्य लोकाङ्गगतं च पुष्कलम् ।
ध्यातं तदेत्यन्यपुरागतैर्जनै-
र्देङ्गेऽत्र किं वर्षति काञ्चनो घनः ? ॥२९॥

तदा चामीकरं कनकं, अर्थिसाद् याचकाधीनं क्रियमाणं

याचकानां दीयमानं, आलोक्य, च पुनः, लोकाङ्गगतं व्यवहारिनरनारीशरीरप्राप्तं च, पुष्कलं पूर्णं, आलोक्य, तदाऽन्यपुरागतैर्जनैरन्यस्थानीयैरागन्तुकैः लोकैः, इति ख्यातमित्यचिन्ति । तदेवाह—किं अत्र द्रङ्गे राजनगरे, काञ्चनो घनो हेममयो मेघः, वर्षतीति ॥ २९ ॥

गेहे गवाक्षेऽध्वनि चत्वरे तदा
तस्थुर्गुरोर्दर्शनमिच्छवो जनाः ।
शीते प्रभाते कपयो दिदृक्षवः
सूर्यं द्रुमोर्वीधरमेदिनीष्विव ॥ ३० ॥

तदा गुरोर्दर्शनमिच्छवो जना गुरुं द्रष्टुकामा लोकाः, गेहे गवाक्षे अध्वनि वर्त्मनि, चत्वरे वर्त्मचतुष्करूपे, तस्थुः, यथा शीते हिमसमये सति, प्रभाते प्रातर्वेलायां, सूर्यं दिदृक्षवः कपयो वानराः, द्रुमोर्वीधरमेदिनीषु भूरुहभूधरभूमिषु, तिष्ठन्तीति दृष्टान्तः ॥ ३० ॥

भूयानभूत् तत्र पुरे कुपाक्षिक-
व्रातैककाकारिदिवाकरोदयः ।
एवं प्रवेशोत्सव एष लोकदृग्-
वल्ल्यालिचञ्चन्मलयाचलानिलः ॥ ३१ ॥

तत्र पुरे एवमिति व्यावर्णितप्रकारः, एष प्रवेशोत्सवो गुरुप्रवेशमहः, भूयान् महीयान्, अभूदित्यन्वयः । किं०, कुपाक्षिकव्राताः कुतीर्थिसार्था एव काकारयो घूकास्तेषु दिवाकरोदयः सूर्योदयतुल्यः, तेषामन्धत्वरूपदुःखापादनात्, पुनः किं०, लोकदृग्वल्ल्यालिचञ्चन्मलयाचलानिलः लोकदृश एव वल्ल्यालयो लतापङ्क्तयः तासां तासु वा चञ्चन्मलयाचलानिलः लसन्

दाक्षिणात्यो वात इवेति, लोकदृग्लतानां लास्यकारित्वात्'॥ ३१ ॥

साडम्बरं मौक्तिकमञ्जुजालक
नानावितानैः कृतवर्यविभ्रमम् ।
साश्चर्यचर्यं बहुबद्धकुट्टिमं
धर्माभिधक्षोणिपतेरिवाश्रमम् ॥ ३२ ॥
कामप्रमोदं सुमनोमनोरम
शश्वद् वृषानन्दनिदानमुन्नतम् ।
रम्यं सुधर्मानुजमागताः क्रमात्
पूज्या अलञ्चक्रुरुपाश्रय वरम् ॥ ३३ ॥

सहाऽऽडम्बरेण श्रृङ्गारलक्षणेन वर्तते यस्तं, पुनः कि०, मौक्तिकैर्मञ्जूनि जालकानि यत्र तं, पुनः कि०, नानावितानैर्विचित्रचन्द्रोदयैः कृता वर्या विभ्रमाः शोभा यत्र तं, पुनः कि०, सह आश्चर्यचर्यया वर्तते यस्तं, पुनः कि०, बहुबद्धं कुट्टिम यत्र तम्। इवोत्प्रेक्ष्यते–धर्माभिधक्षोणिपतेः सुकृतभूभर्तुः, आश्रमं स्थानमिति॥३२॥ पुनः कि०, सुधर्मायाः शक्रसभाया अनुजं लघुभ्रातरं, तत्तुल्यत्वात्। सुधर्मानुजत्वमेव विशेषणत्रयेण व्यञ्जयति–कामेति। कामं प्रमोदो यत्र, पक्षे कामस्य स्मरस्य प्रमोदो यत्र तं; पुनः कि०, सुमनोभिः पण्डितैः, पक्षे सुमनोभिः सुरैः मनोरमं; पुनः कि०, वृषस्य धर्मस्य आनन्दस्य च हर्षस्य निदानं बीजं, पक्षे वृषानन्दस्य इन्द्राह्लादस्य निदानं, पुनः, उन्नतमुत्तुङ्गं, भूमिचतुष्कसद्भावात्; अत एव रम्यम्, क्रमाद् नगरमध्यमागताः सन्तः पूज्या उपाश्रयमलञ्चक्रुः । इति युग्मव्याख्या ॥ ३३ ॥

अग्रे गुरोश्चक्रुरदभ्रविभ्रमाः
पीठे भुवोऽङ्के घुसृणार्णसारुणे ।
मुक्ताक्षतैः स्वस्तिकपङ्क्तिमङ्गना
रूपश्रिया निर्जितनिर्जराङ्गनाः ॥ ३४ ॥

गुरोरग्रे अङ्गनाः, कि०, अदभ्रा बहवो विभ्रमा भ्रूविलासाः षोडशशृङ्गाररूपशोभा वा यासां ताः, पुनः कि०, रूपश्रिया निर्जिता निर्जराङ्गनाः सुराङ्गना याभिस्ताः, पीठे पादपीठपट्टिसादौ, पुनः, भुवोऽङ्के भूत्सङ्गे, कि०, घुसृणाऽर्णसाऽरुणे कुङ्कुमपानीयेनाऽरुणे पाटले विहिते सति, मुक्ताक्षतैः स्वस्तिकपङ्क्ति चक्रुः ॥ ३४ ॥

पुष्पैः प्रभूतैस्तपनीयजन्मभि-
र्वर्धापयन्ति स्म गुरु मृगीदृशः ।
फुल्लैः प्रफुल्लैरिव चारुचाम्पकै-
र्ऋत्वब्जनेत्राः स्मरराजमागतम् ॥ ३५ ॥

प्रभूतैः बहुभिः, तपनीयजन्मभि सौवर्णैः, पुष्पैः गुरुं मृगीदृशो वर्धापयन्ति स्मेत्यन्वयः । उत्प्रेक्षामाह—इवोत्प्रेक्ष्यते—चारुचाम्पकैः चञ्चच्चम्पकसंबन्धिभिः, फुल्लैः पुष्पैः, कि०, प्रफुल्लैः, स्मेरैः, ऋतुस्त्रिय आगतं स्मरराजं कामभूपं, वर्धापयन्ति स्मेति । पुष्पवाचकफुल्लशब्दोऽपि लिङ्गानुशासनविवरणगतोऽस्तीति ध्येयम् ॥ ३५ ॥

आनर्च चामीकररूप्यनाणकैः
सघस्तदा श्रीगुरुराजमादरात् ।
लब्धप्रसादः स्मितरम्यमालती-

पुष्पैः वसन्तेशमिव द्रुमोत्करः ॥ ३६ ॥

तदा संघ आदरात् श्रीगुरुराजं चामीकररूप्यनाणकै-रानर्चेत्यन्वयः । यथा द्रुमोत्करस्तरुनिकरः, कि०, लब्धः प्रसादो विभूतिप्राप्तिरूपो येन सः, स्मितरम्यमालतीपुष्पै-र्विकसितजात्यजातीकुसुमैः, वसन्तेशं स्वस्वामिनं, पूजयतीति दृष्टान्तः ॥ ३६ ॥

श्रेयःफलश्रीफलरूप्यनाणकैः

श्राद्धा व्यधुः कीर्तिकरीः प्रभावनाः ।

वृष्टीः पयोदा इव पुण्यजीवना-

स्तोयैर्जगत्प्रीतिलतामहोदयैः ॥ ३७ ॥

श्रीफला नालिकेराः, रूप्यनाणकानि प्रतीतानि, तैः, कि०, श्रेयसां मङ्गलानां धर्माणां वा फलैः, श्राद्धाः कीर्तिकरीः प्रभावना व्यधुश्चक्रुः, इव यथा, पयोदा मेघाः, तोयैः जलैः, कि०, जगत्प्रीतिरेव लता तस्या महोदयोद्गमो येभ्यस्तैः, वृष्टीः कि०, पुण्यं जीवनं यासु ताः, प्रभावनाः कि०, पुण्यस्य जीवनं यासु ताः, कुर्वन्तीति दृष्टान्तः ॥ ३७ ॥

पूजाः प्रमोदात् प्रतिचैत्यमर्हता

श्राद्धैः क्रियन्ते स्म तदाऽतिबन्धुराः ।

सपत्तयो द्राक् प्रतिकाननं सुखो-

ल्लासैरपाचीपवनैरिवाभितः ॥ ३८ ॥

तदा श्राद्धैः प्रतिचैत्यमर्हता पूजाः क्रियन्ते स्म, यथाऽ-पाचीपवनैर्दक्षिणाशावातैः, कि०, सुखोल्लासैः सौख्योल्ला-सिभिः, प्रतिकाननं वनं वनं प्रति, संपत्तयः कुसुमादिरूपाः, क्रियन्तेऽभितः सर्वत्र इति ॥ ३८ ॥

श्राद्धा व्यधुः प्रत्यहमुन्नतोन्नत

सङ्घेषु वात्सल्यमतुच्छमुत्सुकाः ।

प्राज्यप्रजाप्रीतिपरैरपाभरैः

पाथोधराश्चातकपोतकेष्विव ॥ ३९ ॥

प्रत्यहं निरन्तरं, संघेषु वात्सल्यं, कि०, उन्नतोन्नतं द्रव्यतोऽपि भावतोऽपि च, श्राद्धा व्यधुः । दृष्टान्तमाह—इव यथा, पाथोधरा जलदाः, अपाभरैः जलप्राग्भारैः, कि०, प्राज्या याः प्रजा लोकास्तत्प्रीतिकरणे तत्परैः, चातकपोतकेषु बप्पीहबालकेष्विति ॥ ३९ ॥

कुर्वत्सु हृत्प्रीतिमखण्डितान्तरां

धर्मेष्वमीषु प्रसभं भवत्स्विति ।

तत्र प्रतापः सुगुरोरभूत्तमा

घर्मस्य घस्रेषु तमोरिपोरिव ॥ ४० ॥

अखण्डितान्तरां निरन्तरां, हृत्प्रीतिं कुर्वत्सु अमीषु उक्तलक्षणेषु, धर्मेषु पुण्यकृत्येषु, इति प्रसभं अहंपूर्विकया हठेनैव, भवत्सु जायमानेषु सत्सु, तत्र नगरे, सुगुरोः प्रतापोऽभूत्तमाम् । दृष्टान्तो यथा—घर्मस्य ग्रीष्मस्य, घस्रेषु दिवसेषु, तमोरिपोः सूर्यस्य, इवेति ॥ ४० ॥

गच्छत्स्वतुच्छोत्सवशालिषु प्रति-

स्थानं गुरोर्द्राग् महिमा दिनेष्वभूत् ।

पुण्यैकपाथोनिधिवृद्धिदायिनः

पक्षस्य शुक्लस्य निशापतेरिव ॥ ४१ ॥

दिनेषु कि०, अतुच्छाः पूर्णा ये उत्सवास्तच्छालिषु,

गच्छत्सु सत्सु, गुरोर्महिमा प्रतिस्थानमभूद्, गीयमान इति शेषः। यथा निशापतेश्चन्द्रस्य, कि०, पुण्यैकपाथोनिधिवृद्धिदायिनः सुकृतसिन्धुवृद्धिकर्तुः, शुक्लस्य पक्षस्य दिनेषु गच्छत्सु तेजोमहत्त्वरूपो महिमा भवेत् ॥ ४१ ॥

अत्यर्थमानन्दिमना मनस्विराट्
श्रीखानखानाऽवनिजानिकुञ्जरः ।
जज्ञे गुरोर्दर्शनमिच्छुरुत्सुको
ज्योत्स्नाप्रियः शीतरुचेरिवाऽन्यदा ॥ ४२ ॥

श्रीखानखानाख्योऽवनिजानिकुञ्जरः राजेन्द्रगजेन्द्रः, कि०, अत्यर्थ आनन्दिमना मुदितचेताः सन्, पुनः कि०, मनस्विराट् सहृदयमुख्यः, अन्यदा उत्सुकः सन् गुरोर्दर्शनमिच्छुः जज्ञे जात इति। दृष्टान्तमाह—यथा शीतरुचेः शशिनः, ज्योत्स्नाप्रियश्चकोर इति ॥ ४२ ॥

आकारितः श्रीगुरुरादरस्पृशा
श्रीखानखानाऽवनिजानिना ययौ ।
सौधं तदीय बहुमानमञ्जुल
वित्तेशितेव स्फटिकावनीधरम् ॥ ४३ ॥

आदरस्पृशा भक्तिमता, श्रीखानखानावनिजानिना बहुमानमञ्जुलं यथा स्यात् तथा, आकारित आहूतः सन्, श्रीगुरुस्तदीयं सौध ययौ, वित्तेशिता धनद इव, स्फटिकावनीधरं कैलासम् , इति दृष्टान्तोत्प्रेक्षे ॥ ४३ ॥

तद्धाम्नि लेभे सुमनोभिरावृतः
सद्दक्षजाते स महत्त्वमद्भुतम् ।

उच्चैः पदं राजनिकेतने गुरुः

प्राप्नोति यत् तद् नहि विस्मयावहम् ॥४४॥

तद्धाम्नि तद्गेहे, स गुरुर्महत्त्वं माहात्म्यं, लेभे लब्धवान्, स किं०, सुमनोभिः पण्डितैरावृतः, अन्यत्र सुमनोभिर्देवैः, तद्धाम्नि किं०, सद्विद्यमानं साधु वा दक्षजातं विद्वद्वृन्दं यत्र तत्र। अमुमेवार्थं श्लेषद्वारा समर्थयति--राजनिकेतने गुरुर्यदुच्चैः पदं प्राप्नोति तद्विस्मयावहं नहि; यतो गुरुर्बृहस्पतिः, राज्ञः शशाङ्कस्य निकेतने कर्कलग्ने, किं०, सद्दक्षजाते सत्यो दक्षजाता दाक्षायिण्यो यत्र तत्र, गतः सन् उच्चत्वं यत् प्राप्नोति न तच्चित्रमिति ॥ ४४ ॥

धर्मस्य मार्गोऽभिदधेऽथ सूरिणा

शुद्धो धराधीशमनोमनोहरः ।

सर्वाऽपि ससद् मुमुदे निशम्य तं

कामं मयूरीव पयोदगर्जितम् ॥ ४५ ॥

अथ तत्र गतेन सूरिणा धर्ममार्गोऽभिदधे उक्तः, किं०, शुद्धः सर्वज्ञोक्तः, पुनः किं०, धराधीशमनोमनोहरो राजेन्द्रचेतःप्रियः, सर्वाऽपि संसत् सभा, तं धर्ममार्गं, निशम्य मुमुदे । पयोदगर्जितं मेघध्वनि, श्रुत्वा यथा मयूरीति दृष्टान्तः ॥ ४५ ॥

अस्वप्नशाखीव मरौ निरन्तर-

च्छायो महानन्दफलप्रदः सदा ।

पन्थाः प्रशस्तोऽत्र समस्तशस्तकृत्

स्वामिन्नसौ वः परमेश्वराप्तिकृत् ॥ ४६ ॥

हे स्वामिन् गुरो! असौ वो युष्माकं, पन्थाः, किं०, अत्र

कलौ, प्रशस्तः प्रकर्षेण श्लाघ्यो वर्त्तत इति, किं०, समस्तशस्तकृत् सर्वमङ्गलकारी, पुनः, परमेश्वराप्तिकृद् जगदीशप्रापकः सिद्धिस्थानार्पक इति, पक्षे भावप्रधानत्वाद् निर्देशस्य परमेश्वरशब्देन परमेश्वरत्वं प्रकृष्टधनित्वं तस्य आप्तिकृत् । दृष्टान्तोऽत्र यथा--मरौ मरुस्थलीदेशे, अस्वप्नशाखी कल्पवृक्षः, किं०, निरन्तरं छाया शोभाऽनातपो वा यस्य सः, पुनः, महानन्दो मोक्षः, महानानन्दो वा तद्रूपं फलं प्रददातीति यः सः ॥४६॥

राज्ञाऽमुनैव विनुतः प्रतिश्रयं
प्राप्तस्तदा ख्यातिमवाप भूयसीम् ।
किं चित्रमत्रात्मनिवासगो गुरु-
र्माहात्म्यमाप्नोति गिरामगोचरम् ? ॥ ४७ ॥

अमुना राज्ञा खानखानाभिधानेन, एवं विनुतः सन्, प्रतिश्रयं प्राप्तस्तदा ख्यातिं भूयसीमवाप प्राप्तवान्, अत्र किं चित्रम्?, यदात्मनिवासगः स्वभवनस्थो गुरुर्माहात्म्यं किं०, गिरामगोचरं वचनाविषयं, आप्नोति; स्वक्षेत्रगो हि गुरुर्महाबली इति ज्योतिर्विदां मतमिति युग्मव्याख्येति ॥ ४७ ॥

श्रीमन्महावीरपरंपरादिवि
प्रद्योतनोद्द्योत इव प्रभास्वरः ।
तिष्ठन् पुरे तत्र पवित्रदृग्गुरु-
श्चक्रे चतुर्मासकपूर्त्तिमार्त्तिभित् ॥ ४८ ॥

प्रद्योतनोद्द्योत इव सूर्यालोक इव, प्रभास्वरोऽतिभासुरः, कस्यामित्याह—श्रीमन्महावीरस्य परम्परादिवि वंशाकाशे, पुनः किं०, पवित्रदृक् पुण्यदर्शनः, गुरुस्तत्र पुरे राजनगरे, तिष्ठन् चतुर्मासकपूर्त्तिं चक्रे, किं०, आर्तिभित् पीडापहारीति ॥४८॥

इतश्च—

श्रीराजदेशावनिवामलोचना-
भालस्थलस्थूलललामलक्ष्मिकृत् ।
आसीदिलादुर्गपुरी वरीयसी
भोगावतीवाऽतुलभोगिभासुरा ॥ ४९ ॥

इतश्चेत्यव्ययपदेनाथ भाविनो गुरुपट्टधरस्य श्रीविजयदेवसूरेश्वरितं प्रपञ्चयति—इलादुर्गपुरी आसीदित्यन्वयः। कि०, वरीयसी वरिष्ठा, पुनः कि०, श्रिया स्वर्गखण्डस्पर्धिन्या विचित्रचित्रारामकामकेलिवनानेककेलीवनवापीकूपतटाकतटिनीगिरिवरतरुवरतरुणतरतरुणीरामणीयकेन निखिललोकलोचनाह्लादवर्धिन्या युक्तो राजदेशनामा यो देशस्तस्याऽवनिवामलोचनाया भूभामिन्या भालस्थले स्थूलां पीनां ललामलक्ष्मि तिलकलक्ष्मी करोतीति श्रीराजदेशावनिवामलोचनाभालस्थलस्थूलललामलक्ष्मिकृत् , लक्ष्मीवल्लक्ष्मिशब्दः शब्दप्रभेदनामकोशगतोऽवसेय इति । इवोत्प्रेक्ष्यते–भोगावतीव नागपुरीव, कि०, अतुलभोगिभिर्बहुप्रधानलोकैः, पक्षेऽतुलभोगिभिर्भूरिभुजङ्गमैर्भासुरा दीप्तेति॥४९॥

तत्राऽभवत् सभ्यमहेभ्यमण्डनः
श्रेष्ठी स्थिराख्यः स्थिरधीः शुभाऽध्वनि ।
स्फूर्जत्प्रभः पुण्यजनेषु विश्रुतः
श्रीदोऽलकायामिव सपदा पदम् ॥ ५० ॥

तत्रेलादुर्गे, स्थिराख्य श्रेष्ठी अभवदित्यन्वयः । कि०, सभ्येषु सभाऽऽस्तारेषु पुनर्महेभ्येषु महाधनिषु मण्डनोऽलङ्कारः, तद्भूषणत्वात् , पुनः कि०, स्थिरधीर्निश्चलमतिः,

केत्याह—शुभाऽध्वनि पुण्यमार्गे, इव यथा, अलकायां श्रीदः कुबेर इव, किं०, संपदां श्रीणां पदं, इदं विशेषणं द्वयोस्तुल्यं; पुनः किं०, स्फूर्जत्प्रभो लसत्कान्तिः, पक्षे स्फूर्जन्ती प्रभा अलकानगरी यस्य "पुरी प्रभा" इति नाममालायां भणनात्, पुनः किं०, पुण्यजनेषु धर्मिलोकेषु विश्रुतः, पक्षे पुण्यजनेषु यक्षेषु विश्रुत इति ॥ ५० ॥

लक्ष्मीर्मुरारेरिव काममुत्प्रदा
स्वामिप्रसादा गिरिजेव धूर्जटेः ।
रूपाइसञ्ज्ञाऽजनि तस्य गेहिनी
सौभाग्यभाग्यादिगुणौघशालिनी ॥ ५१ ॥

तस्य श्रेष्ठिनः, रूपाइसंज्ञा गेहिनी गृहिणी, अजनि जातेत्यन्वयः। कस्य केवेत्याह—मुरारेर्विष्णोः,लक्ष्मीरिव, किं०, कामं अत्यर्थ मुत्प्रदा हर्षदा सर्वेषामपि, लक्ष्मीपक्षे कामस्य स्वपुत्रस्य मुत्प्रदा, पुनः, धूर्जटेर्महादेवस्य, गिरिजा पार्वतीव, किं०, स्वामिनो भर्तुः प्रसादो यस्याः सा, पार्वतीपक्षे स्वामिनि स्वपुत्रकार्तिकेये प्रसादो यस्याः सा, पुनः किं०, सौभाग्यभाग्यादिगुणौघेन शालिनीति ॥ ५१ ॥

सिंहेन सिंह्येव समुद्यतौजसा
नित्यात्मरूपेण सदाऽवियोगिना ।
सार्धं स्वभर्त्रा रममाणयाऽनया
बभ्रेऽथ गर्भो वनभूविभूषणः ॥ ५२ ॥

अनया रूपाइनाम्न्या, स्वभर्त्रा सार्धं रममाणया सिंह्या सिंहिकया इव, सिंहेन केसरिणा, किं०, समुद्यतं सोद्यममोजो बलं यस्य तेन, पतिपक्षे सोद्यमं ओजो धातुतेजो यस्य

तेन, पुनः कि०, नित्यमात्मरूपेण स्वतुल्येनेति, पुनः सदाऽवियोगिना वियोगवर्जितेन, गर्भो बभ्रे धृतः, कि०, वनभूविभूषणः पुत्रपक्षे वनभुवो गेहभूमेः, सिंहपक्षे वनभुवः काननभूमेर्विभूषणः "वन गेहे काननेऽपि" इत्यनेकार्थत्वादिति ॥ ५२ ॥

अथ त्रिभिर्वृत्तैर्गुरुजन्मवर्षमासग्रहाद्याह—

वर्षे चतुष्पावकपार्थिवे त्रयो-
दश्या दशाश्वद्युतिदीप्रदिग्भृति ।
लग्ने वृषे वासरराजवासरे
मासे सहस्ये विधिभे विधौ सति ॥ ५३ ॥

इन्दौ विलग्ने युवतौ च वाक्पतौ
माहेयदैत्यार्चितयोरलौ सतोः ।
राशौ झषाख्ये च तथा विधुन्तुदे
चापे बुधक्रोडसहस्ररश्मिषु ॥ ५४ ॥

प्राचीव बिम्बं तरणेस्तमोपहं
राकेव चन्द्रं कुमुदुन्नतिप्रदम् ।
आमोदमूलं सुषुवेऽथ सा सुत
पुत्रीव जह्नोस्तपनीयपङ्कजम् ॥ ५५ ॥

वर्षे, किं०, चत्वारः, पावकास्त्रयश्च, पार्थिवाः षोडश च, एतेऽङ्का यस्मिंस्तस्मिंश्चतुष्पावकपार्थिवे वामगतिमीलिते १६३४ वर्षे इति, पुनस्त्रयोदश्यां तिथौ, कि०, दशाश्वश्चन्द्रस्तस्य द्युत्या कान्त्या दीप्रां दिशं बिभर्तीति तत्र, पुनः, लग्ने वृषे वृषनाम्नि लग्ने वहमाने सति, पुनः, वासरराजस्य वासरे रविवारे सति, पुनः, सहस्ये पौषे मासे सति, पुनः, विधिभे रोहिणीनामके

नक्षत्रे, विधौ चन्द्रे सति ॥ ५३ ॥ अथ ग्रहसंस्थितिमाह—विलग्ने मूर्तिस्थाने वृषलग्नरूपे प्रथमे भवने, इन्दौ चन्द्रे सति, च पुनः, वाक्पतौ बृहस्पतौ, युवतौ कन्यायां पञ्चमे भवने सति, पुनः, माहेयो मङ्गलः, दैत्यार्चितश्च शुक्रस्तयोर्माहेयदैत्यार्चितयोर्भौमशुक्रयोः, अलौ वृश्चिके सप्तमे भवने स्थितयोः, पुनः, झषाख्ये मीनराशावेकादशे भवने, विधुन्तुदे राहौ सति, पुनश्चापे धनुषि अष्टमे भवने, बुधक्रोडसहस्ररश्मिषु ज्ञशनिसूर्येषु सत्स्विति ॥ ५४ ॥ ग्रहस्थितिकुण्डली यथा—

| | | |
|---|---|---|
| ३ / ४ | २ च | १ / १२ रा |
| ५ | श्री | ११ |
| ६ के बृ / ७ श | ८ / शु म | ९ / १० / श र बु |

अथ सा रूपाइनाम्नी, सुतं सुषुवे सूते स्मेत्यन्वयः । केवेत्याह—प्राची यथा तरणेर्बिम्बम्, कि०, तमोपहं, पुत्रपक्षे पापापहं, रविबिम्बपक्षे तमोऽपहं ध्वान्तापहं, राकेव पूर्णिमेव, चन्द्रं, किं०, कुमुदुन्नतिप्रदं पुत्रपक्षे कोः पृथिव्याः मुदुन्नतिप्रदं हर्षोन्नतिदायिनं, चन्द्रपक्षे कुमुदां कैरवाणामुन्नतिप्रदं 'कुमुदं च कुमुच्च' इति शब्दप्रभेदे, जह्नवी गङ्गेव, तपनीयपङ्कजं स्वर्णकमलं, कि०, आमोदमूलं, सु० आमोदस्य हर्षस्य, कमलपक्षे आमोदस्य गन्धस्य मूलं "आमोदो गन्धहर्षयोः" इत्यनेकार्थत्वादिति । इति त्रयाणां व्याख्या ॥५५॥

कृत्वा महोत्साहमयं महोत्सव

तस्याऽभिधानं तनुजन्मनस्तदा ।

चक्रे पितृभ्यां दिवसेऽतिशोभने
वासेति नित्यं सुहृदा मुदा पदम् ॥ ५६ ॥

महान् य उत्साहश्चित्तोत्कर्षलक्षणस्तन्मयं तत्प्रधानं चित्तोत्साहानुसारिणं, महोत्सवं कृत्वा तस्य तनुजन्मनः सूनोः, अतिशोभने दिवसे पितृभ्यां वासाख्य इत्यभिधानं चक्रे, किं०, सुहृदां मित्राणां, मुदां पदं हर्षस्थानमिति ॥ ५६ ॥

उज्झन् वयः शैशवमुन्मना अयं
प्राज्ञः कुमारः प्रपठन्नशाठ्यधीः ।
प्राप्नोति वृद्धिं पितृनेत्रकैरवो-
ल्लासी शशीवाशितिपक्षगः क्रमात् ॥ ५७ ॥

अयं वासाख्यकुमारः, शैशवं वय उज्झन् बाल्यमतिक्रामन्, पुनः किं०, उन्मनाः सन् प्रपठन्, पुनः, अशाठ्यधीर्निर्मायमतिः, पुनः, अशितिपक्षगः शशीव शुक्लपक्षगतचन्द्र इव, किं०, पितृनेत्रकैरवोल्लासी जनकजननीनयनकुमुदोल्लासकृत्, क्रमादनुक्रमेण, वृद्धिं प्राप्नोतीति ॥ ५७ ॥

तातेऽन्यदा सद्विधिना समाधिना
स्वःकामिनीनामतिथित्वमीयुषि ।
वैराग्यवान् वासणकः कुमारराड्
रूपाइसञ्ज्ञां निजगाद मातरम् ॥ ५८ ॥

अन्यदा ताते स्थिराख्ये श्रेष्ठिनि, सद्विधिनाऽनशनादिना, पुनः समाधिना मनोवाक्तनुस्वास्थ्यरूपेण, स्वःकामिनीनां देवाङ्गनानां, अतिथित्वमीयुषि स्वर्गं गते सति, वासाकः कुमारराट्, किं०, वैराग्यवान् सन् रूपाइसंज्ञां मातरं निज-

गादाऽब्रवीत् , यदब्रवीत्तदग्रेतनवृत्ते प्राह ॥ ५८ ॥

भक्तं बुभुक्षार्त इवाहमम्बिके !
दीक्षां जिघृक्षुः शिवशर्मकारणम् ।
मत्वाऽऽत्मसूनोर्नियमस्थितौ स्थिरं
चेतः प्रचेता वचनं जनन्यवक् ॥ ५९ ॥

हे अम्बिके मातः !, बुभुक्षार्तः पुमान् , भक्तं भोज्यमिव, अहं दीक्षां जिघृक्षुरस्मीति योगः । किं०, शिवशर्मकारणं मोक्षसुखनिदानं, इति आत्मसूनोः स्वपुत्रस्य, नियमस्थितौ दीक्षायां, चेतः स्थिरं मत्वा प्रचेता हृष्टमना जननी, अवक् जगौ । यज्जगौ तदग्रे प्राह ॥ ५९ ॥

त्वं नन्दन ! द्रागनुगंस्यसे मया
घस्रश्रियाऽऽदित्य इव स्फुरत्प्रभः ।
एतां निशम्याऽऽत्ममनोरथोचितां
वाचं स्वमातुर्मुमुदे शिशुर्भृशम् ॥ ६० ॥

हे नन्दन ! मया त्वं घस्रश्रिया वासरलक्ष्म्या, आदित्य इव, किं०, स्फुरत्प्रभः लसत्कान्तिः, इदं द्वयोरपि तुल्यं विशेषणम् ; अनुगंस्यसे अन्वागमिष्यसे त्वया सार्धमनुप्रव्रजिष्यामीत्यर्थः । एतां आत्ममनोरथोचितां स्वमातुर्वाचं निशम्य शिशुर्वासाख्यः, भृशं मुमुदेऽत्यमोदिष्ट ॥ ६० ॥

रत्नं सुवर्णस्य समीपभाक् श्रियं
धत्तेऽवगत्येति सुतान्विता सती ।
गन्तुं मनः सा स्म दधात्यहम्मदा-
वादे पुरे पूज्यपदाब्जपाविते ॥ ६१ ॥

रत्नं सुवर्णपार्श्वस्थायि सत्, श्रियं शोभां, धत्ते; तथा स्वर्णस्थानीयस्य गुरोः पार्श्वे पुत्ररत्नमिदमर्हतीत्यवगत्य ज्ञात्वा, सा सती रूपाईनाम्नी, अहम्मदावादे पुरे कि०, पूज्यपदाब्जैः श्रीविजयसेनसूरिचरणकमलैः पाविते, गन्तुं मनो दधाति स्माऽकरोत् ॥ ६१ ॥

श्रेष्ठिस्थिराह्वानमहेभ्यभामिनी-
रूपाइसूर्वासणनामनन्दनः ।
सद्योऽथ हृद्यर्द्धिजनाकुलादिला-
दुर्गाद् गुरोः पार्श्वमगात् सहाऽम्बया ॥६२॥

श्रेष्ठी स्थिराह्वानो यो महेभ्यस्तद्भामिनी भार्या या रूपाईनाम्नी तत्सूस्तत्सुतो वासाभिधानो नन्दनः, अथेलादुर्गादीडरनगरात्, कि०, हृद्यर्द्धयो मनोज्ञसंपत्तयो ये जनास्तैराकुलात् संकीर्णात्, अम्बया सह गुरोः पार्श्वमगाद् राजनगरे प्राप्त इति ॥ ६२ ॥

सौम्याननं स्फारविलोचनद्वयं
दृष्ट्वाऽथ साक्षाज्जयमेनमागतम् ।
इत्यात्मचित्ते निरणायि सूरिणा
भाव्येष शिष्योऽखिलसंघतोषकृत् ॥ ६३ ॥

अथैनं वासकुमारं, आगतं दृष्ट्वा, कि०, सौम्याननं स्मितमुखत्वात् प्रसन्नवदनं, पुनः कि०, स्फारं विस्तीर्णं विलोचनद्वयं यस्य तं, आयतनेत्रत्वात्, साक्षात् प्रत्यक्षं, जयं शक्रपुत्रम्, इवेत्याध्याहार्यं, सूरिणा गुरुणा, आत्मचित्ते इति निरणायि निश्चिक्ये । इतीति किमित्याह—एष शिष्योऽखिलसंघतोषकृद् भावीति ॥ ६३ ॥

पुनर्गुरुणा यदचिन्ति तदाह—

कि दस्रयोरेकतमोऽयमाययौ
किं प्रीतिभृद् मूर्त इवाथवाऽऽत्मभूः ? ।
निध्यायतैन च मुहुर्मुहुः शिशुं
मेने मनोऽन्तर्मुनिमेदिनीभुजा ॥ ६४ ॥

दस्रयोरश्विनीपुत्रयोर्द्वयोर्मध्यात्, एकतम एकः, किमयमाययौ ?, रूपवत्त्वे हि तयोरुदाहरणं काव्यकल्पलतादौ प्रतीतमिति, अथवा प्रीतिभृत्प्रीतिशाली, आत्मभूः कामः, किं०, मूर्त इति मूर्तिमान्, आययौ ? एनं शिशुं मुहुर्वारं वारं, निध्यायता पश्यता, मुनिमेदिनीभुजा सूरिराजेन, मनोऽन्तश्चित्तान्तः, इति मेनेऽमानि ॥ ६४ ॥

जन्मग्रहैरङ्गगतैश्च लक्षणै-
श्चित्ते व्यचिन्ति व्रतिनायकेन च ।
बालोऽयमुच्चैर्भविता तिथिप्रणी-
र्धिष्ण्येष्विवोल्लासिमहा जनेष्विह ॥ ६५ ॥

च पुनः, जन्मग्रहैर्द्वादशभवनस्थितैर्ग्रहैरुच्चपरमोच्चत्रिकोणादिभिः, पुनः, अङ्गगतैर्लक्षणैर्लाञ्छनमषीतिलकादिभिः, द्वात्रिंशत्संख्यैर्वा दृष्टैः सद्भिः, गुरुणा इति चित्ते व्यचिन्ति--धिष्ण्येषु नक्षत्रेषु, इव तिथिप्रणीश्चन्द्रमा इव, किं०, उल्लासिमहा उल्लासवत्तेजाः, अयं बालो जनेषु उच्चैर्भविता महान् भावीति भावार्थः॥६५॥

मात्रा समं काममिवाब्जवासया
ज्ञात्वा तपस्योद्यतमेनमर्भकम् ।
गुर्वी गुरुः प्रापदपापदृग् मुदं

दृष्ट्वा शुभं स्वप्नमिवोदये रवेः ॥ ६६ ॥

अब्जवासया लक्ष्म्या, समं काममिव एनं अर्भकं बालकं, मात्रा रूपानाम्न्या, समं तपस्योद्यतं दीक्षोत्सुकं, ज्ञात्वा गुरुः, किं०, अपापदृग् निरवद्यमतिर्निष्पापदर्शनो वा, गुर्वीं महती, मुदं प्रापत्, रवेरुदये शुभं स्वप्नं दृष्ट्वा यथा मुद् भवतीति दृष्टान्तः, यतो 'दृष्टः सूर्योदये स्वप्नः सद्यः फलति' इति नियमात् ॥६६॥

सङ्घोऽनघोऽसावथ वासणं व्रता-
दानोद्यतं वीक्ष्य शिशुं सहाऽम्बया ।
लेभे मुदं स्वर्लतया सम द्रुमं
कल्पं पुलोमारिरिवोद्गमोद्यतम् ॥ ६७ ॥

असौ राजनगरीयः संघः, अथाऽम्बया सह वासणं शिशुं व्रतादानोद्यतं वीक्ष्य मुदं लेभे, यथा कल्पं द्रुमं स्वर्लतया समं कल्पवल्ल्या सह, उद्गमोद्यतं वीक्ष्य पुलोमारिरिन्द्रः, मुदं प्राप्नोतीति ॥ ६७ ॥

सप्तार्चिरम्भोधिकलाङ्कवत्सरे
माघे दशम्या तुहिनाशुतेजसि ।
द्राग् दीक्षयामास घनैर्महोत्सवैः
सारं कुमारं सममम्बया गुरुः ॥ ६८ ॥

सप्तार्चिषः कृशानवस्त्रयः, अम्भोधयश्च चत्वारः, कलाः षोडश, एभिरङ्कैर्वामगत्या विन्यस्तैर्यः संवत्सरो भवति तस्मिन् सप्तार्चिरम्भोधिकलाङ्कवत्सरे १६४३ वर्षे, पुनः, माघे मासि, पुनः, दशम्यां तिथौ, कि०, तुहिनाशोश्चन्द्रस्य तेजो यस्यां तस्यां शुक्लायामिति, पुनर्महोत्सवैः कुमारं, कि०, सारं शृङ्गाररूपाभ्यां

विशेषतः प्रधानम्, अम्बया समं गुरुः श्रीविजयसेनसूरिः, दीक्षयामासेति ॥ ६८ ॥

तस्य स्थिराह्वानमहेभ्यजन्मनः
शिष्यस्य निःशेषगुणैकवारिधेः ।
सूरिर्जगल्लोकसुखप्रथाप्रपां
नामाऽथ विद्याविजयेति निर्ममे ॥ ६९ ॥

तस्य स्थिराख्यमहेभ्यपुत्रस्य शिष्यस्य, पुनः कि०, निःशेषगुणैकवारिधेः समस्तगुणार्णवस्य, विद्याविजयेति नाम, कि०, जगल्लोकसुखस्य प्रथायाः प्रपां जगज्जनसौख्यकारित्वात्, सूरिर्निर्ममेऽकरोत् ॥ ६९ ॥

सौरूप्यरूपर्द्धिसमृद्ध उल्लस-
द्विद्यः स विद्याविजयोऽन्तिषन्मणिः ।
भूतं प्रभूतं विनयं सृजन् गुरोः
शास्त्राण्यपाठीदशठो मठो धियाम् ॥ ७० ॥

स विद्याविजयोऽन्तिषन्मणिः शिष्यरत्नं, कि०, सौरूप्यं सुरूपवत्त्वं तद्रूपा या ऋद्धिः, अथवा सौरूप्यं पाण्डित्यं, रूपं च सुन्दराकृतिमत्त्वं तयोर्या ऋद्धिरुत्कर्षस्तया समृद्धः संपन्नः, पुनः, उल्लसन्ती विद्या यस्य सः, पुनः, गुरोर्भूतं सत्यं, पुनः, प्रभूतं भूयिष्ठं, विनयं सृजन् कुर्वन्, पुनः कि०, धियां बुद्धीनां, मठ आश्रयः, पुनः, अशठो निष्कपटः सन्, शास्त्राणि अपाठीदपठत् ॥७०॥

छायाकृदुल्लासपलाशसन्ततेः
स्फूर्जद्यशःपुष्पकलापसंपदः ।
विद्या अवद्यार्तिहृतः स आसदत्

पूज्यांह्रिसेवासुरवीरुधः फलम् ॥ ७१ ॥

स शिष्यः, पूज्यांह्रिसेवासुरवीरुधः गुरुचरणोपास्तिकल्पवल्लेः, कि०, छाया शोभाऽनातपश्च, ततश्छाया करोतीति छायाकृत् य उल्लासश्चित्तानन्दरूपस्तद्रूपा पलाशसन्ततिः पत्रपङ्क्तिर्यस्यास्तस्याश्छायाकृदुल्लासपलाशसततेः, पुनः, स्फूर्जद्यशोरूपस्य पुष्पकलापस्य प्रसूनजातस्य संपद् यस्यास्तस्याः स्फूर्जद्यशःपुष्पकलापसपदः, पुनः, अवद्यार्तिहृतः पापपीडापहारिण्याः, विद्याः फलं शास्त्रज्ञानरूपं फलं, आसदत् प्राप्तवान् ॥ ७१ ॥

सौभाग्यभाजोऽहिवदेऽभिधानभृ-

च्छ्राद्ध्यास्त्रिवेदर्तुहिमांशुवत्सरे ।

एकादशे चन्द्रयुतेऽह्नि फाल्गुने

प्रौढां प्रतिष्ठां विदधेऽथ सूरिराट् ॥ ७२ ॥

अथेत्यस्मिन्नवसरे, तत्रैव राजनगरे, अहिवदेऽभिधानभृत्श्राद्ध्या अहिवदेनाम्न्याः श्राविकायाः, कि०, सौभाग्यभाजः सुभगत्ववत्याः, गृहे इति शेषः। कस्मिन्, त्रयश्च वेदाश्च ऋतवश्च हिमांशुश्च त्रिवेदर्तुहिमांशवस्तैर्वामगतिगणितैर्यः संवत्सरस्तस्मिन् १६४३ संवत्सरे, पुनरह्नि दिने तिथौ, कि०, एकादशे ११ तिथौ कि०, चन्द्रयुते शुक्ले, पुनर्मासे फाल्गुने, प्रौढां प्रतिष्ठां जिनबिम्बस्थापना, सूरिराड् विदधेऽकरोत् ॥ ७२ ॥

गन्धारवास्तव्यजनेन्द्र इन्द्रजी-

नामा महेभ्यः सुगुरोर्नमस्कृते ।

अभ्यागमत् प्रीतमना अहम्मदा-

वाद पुर प्राञ्जलिरभ्यधत्त च ॥ ७३ ॥

गन्धारबन्दिरवास्तव्या ये जनास्तेष्विन्द्रस्तन्मुख्यत्वात्,

इन्द्रजीनामा महेभ्यः, सुगुरोराचार्यपादस्य, नमस्कृते वन्दनाय, अहम्मदावाद पुरं, अभ्यागमत् ; च पुनः, प्राञ्जलिः कृताञ्जलिः सन, अभ्यधत्ताऽवदत् ॥ ७३ ॥

स्वामिन् ! महावीरविभोः प्रतिष्ठया
कर्तास्मि जन्म स्वमहं स्फुरत्फलम् ।
तद् मङ्क्षु गन्धारपुर पवित्रय
स्वैः पादपाथोरुहपांसुभिः प्रभो ! ॥ ७४ ॥

हे स्वामिन् गुरो ! महावीरविभोः प्रतिष्ठयाऽहं स्वं जन्म, कि०, स्फुरत्फलं फलभाग् कर्तास्मि जन्मफलं लातुकामोऽस्मीत्यर्थः । तत् तस्माद्धेतोः, गन्धारपुरं बन्दिरं, स्वैः पादपाथोरुहपासुभिः हे प्रभो ! त्वं पवित्रयेति ॥ ७४ ॥

हृष्टो महेभ्यव्रजराजहस्तिन-
स्तस्येति वाचा विनयप्रपञ्चया ।
सूरिर्महत्त्वैकपदं क्रमादगाद्
गन्धारमादित्य इवाश्विनीं पुरम् ॥ ७५ ॥

तस्येन्द्रजीनाम्नः, कि०, महेभ्यव्रजराजहास्तिनो व्यवहारिकुञ्जरस्य, वाचा, कि०, विनयस्य प्रपञ्चो यस्यां तया, हृष्टः सन् सूरिस्ततोऽहम्मदावादतश्चलन् क्रमात् अनुक्रमेण, आदित्य इवाऽश्विनीं नक्षत्रं, गन्धारं पुरं नगरी, कि०, महत्त्वस्य माहात्म्यस्य, सूर्यपक्षे महत्त्वस्योच्चत्वलक्षणस्य पदं स्थानं, अश्विनीस्थितो हि सूर्यो मेषराशिसद्भावादुच्च इति ज्योतिर्विदां मतम् ; अगाद् गतवानिति ॥ ७५ ॥

वर्षेऽथ हव्याशनवेदपार्थिवे

ज्येष्ठाह्वमासे दशमे तिथौ सिते ।
शुद्धेऽह्नि तस्या पुरि सूरिरिन्द्रजी-
गेहे प्रतिष्ठां चरमार्हतोऽकरोत् ॥ ७६ ॥

अथ वर्षे, कि०, हव्याशना अग्नयस्त्रयः, वेदाश्चत्वारः, पार्थिवाः षोडश, एते वामगतिजुषो यत्र तत्र हव्याशनवेदपार्थिवे वर्षे १६४३ प्रमाणे, पुनः, ज्येष्ठाख्ये मासे, पुनः, दशमे तिथौ, किं०, सिते शुक्के, अथवा सिते शुक्रे वारे सति, पुनः, अह्नि दिने, कि०, शुद्धे धवले, अथवा शुद्धे निर्दोषे दिने, तस्यां पुरि गन्धारनाम्न्यां, इन्द्रजीगेहे चरमाऽर्हतः श्रीवीरस्य, प्रतिष्ठां सूरिरकरोत् ॥ ७६ ॥

अत्रैव वर्षे बहुहर्षवर्षिणि
श्रीस्तम्भतीर्थे नगरे गरीयसि ।
भूयोभिरुल्लासपयःपयोधरै-
रानन्दिताशेषजनेक्षणैः क्षणैः ॥ ७७ ॥

एकादशाख्येऽथ तिथौ तिथिप्रणी-
युक्तेतरे मासि च शुक्रसञ्ज्ञके ।
प्रौढा प्रतिष्ठा पुनरार्हतीं गुरुः
श्राद्धीधनाईवरमन्दिरे व्यधात् ॥ ७८ ॥

अथाऽस्मिन्नेव वर्षे पूर्वकाव्योक्ते संवत्सरे, गन्धारतः क्रमेणागत्य, क्व, श्रीस्तम्भतीर्थे नगरे, कि०, गरीयसि द्रव्यभावाभ्या महति, भूयोभिर्बहुभिः, उल्लास एव पयः पाथस्तस्य पयोधरैर्मेघैः, पुनः, आनन्दितानि अशेषजनानामीक्षणानि नयनानि यैस्तैः, क्षणैरुत्सवैः, जायमानैरिति शेषः ॥ ७७ ॥ पुनः,

एकादशाख्ये तिथौ, कि०, तिथिप्रणीश्चन्द्रमास्तद्युक्तो धवलस्त-स्मादितरः श्याम इति ११ दिनेऽशुक्ले च, पुनः, मासि शुक्रसं-ज्ञके ज्येष्ठमासे, श्राद्धीधनाईश्वरमन्दिरे गुरुरार्हती प्रतिष्ठा, व्यधाच्चक्रे । इति युग्मव्याख्या ॥ ७८ ॥

अत्रैव तीर्थेऽथ विनिर्ममे चतु-
र्मासी समासीनसुखार्थवृत्तिना ।
श्रीसूरिसिंहेन घनर्द्धिसङ्घदृक्-
पाथोजिनीप्रीतिसहस्ररश्मिना ॥ ७९ ॥

अथाऽत्रैवाऽस्मिन्, तीर्थे स्तम्भतीर्थे, श्रीसूरिसिंहेन चतु-र्मासी विनिर्ममे कृता, किंविशिष्टेन, समासीना स्थापिता सुखा-र्था सुखकारिणी वृत्तिराचरणरूपा येन तेन, पुनः कि०, घनर्द्धिः श्रीमान् यः संघस्तस्य दृगेव पाथोजिनी पद्मिनी तस्याः प्रीतौ सहस्ररश्मिना सूर्येणेति ॥ ७९ ॥

अथ स्तम्भतीर्थं गुरुं च वर्णयन् सर्गं चोपसंहरन् कवि-श्छन्दः परावर्तयति—

लसदतिशयसंपत्सिन्धुभूसिन्धुरस्य
प्रविशत इह मध्ये स्प्रष्टुमर्ही मुनीन्दोः ।
मम भवति दुरन्तो विघ्न एषोऽन्तराभू-
रिति जलधिरनिन्दद् यस्य सालं विशालम्॥८०॥

यस्य स्तम्भतीर्थस्य, विशालं विस्तीर्णं, सालं वप्रं, जलधिः समुद्रः, इति हेतोः, अनिन्दत् निन्दाविषयीचकारेत्यन्वयः। पद-त्रयेण निन्दाहेतुमेव व्यनक्ति–लसदिति। लसदतिशया या संपत् अथवा लसन्ती याऽतिशयानां संपत् समृद्धिः सैव सिन्धुभूर्नदीभूमिका अर्थाद् रेवा नाम नदीभूस्तत्र सिन्धुरस्य ग-

तदाकारतासिद्धेः, तस्य प्रतिभावनियमात्, बोधामूर्तत्वरूपतया तत्तुल्याकारताऽयोगात्, स्वाकारस्य तु विकल्पेऽपि भावात्, तस्यापि तन्निश्चयात्मकत्वेन तदनुगुणत्वात्। इति व्यवहारतः स्वभावभेदाभावः ॥

न चेत्यादि। न चानयो प्रक्रमात् सविकल्पाविकल्पयो प्रस्तुतज्ञानयो, स्वभावभेद एवैकान्तेन। कुत इत्याह– तत्त्वत परमार्थेन, एकविषयत्वात्। कथमेतदेवामित्याह– विकल्पस्यापि पारम्पर्येण तद्वस्त्वालम्बनत्वात्। एतच्च परदर्शने विकल्पस्य गृहीतग्राहित्वाभ्युपगमेन, स्वदर्शने त्ववग्रहा ऽपायभावेन, इति सामान्येनैव तद्वस्त्वालम्बनत्वमाह। तदुत्थज्ञानोपादानत्वात् विवक्षितविषयोत्थाविकल्पज्ञानोपादानत्वाद् विकल्पस्य। यदि नामैव तत किमित्याह–तत्स्वभावेत्यादि। तत्स्वभावानुकारातिरेकेण तदुत्थज्ञानस्वभावानुकारातिरेकेण, विकल्पस्येति प्रक्रम, तदुपादानत्वायोगात् तदुत्थज्ञानोपादानत्वायोगाद् विकल्पस्य। न ह्यमृत्स्वभावमुदक मृदुपादानम्, अपि तु घट एव, तत्स्वभावानुकारादिति भावनीयम्। दोषान्तरपरिजिहीर्षयाह– न चेत्यादि। न च तद्विषयवस्तु अतीतामिति कृत्वा क्षणिकत्वेन, अनालम्बन, प्रक्रमाद्विकल्पस्य, किन्त्वालबनमेव। कुत इत्याह– अविकल्पस्यालम्बनत्वात् अतीतत्वेऽपीत्यभिप्राय। न च तद्भावकालेऽविकल्पभावकाले, तद्भावो विषयवस्तुभाव। कुत इत्याह– तदसदुदयाभ्युपगमात् तस्मिन् विषयवस्तुन्यसत्युदयाभ्युपगमात्, प्रक्रमादविकल्पस्य। न चैवमपि तदसदुदयेऽपि, न तदतीतता न विषयवस्त्वतीतता। कुत इत्याह– तदा विकल्पोदयकाले, तदसत्त्वेन विषयवस्त्वसत्त्वेन, तदुपपत्तेरतीततोपपत्ते। न च तदाकारतादिना विषयवस्त्वाकारतादिना, आदिशब्दादानन्तर्यादिग्रह, भेद सविकल्पाविकल्पयोरिति प्रक्रम। कुत इत्याह– द्वयोरपि अनयो, तदाकारताऽसिद्धेर्विषयवस्त्वाकारताऽसिद्धे, तस्याकारस्य प्रतिभावनियमाद् भाव भाव प्रति नियमात्। न ह्यन्य-

भावाकारोऽन्यभावे भवति, तदेकत्वप्रसङ्गादित्यर्थः । तत्तुल्याकारतैव तदाकारता,इत्यप्यसदित्यावेदयन्नाह- बोधेत्यादि । बोधाऽमूर्तत्वरूपेण हेतुनाऽविकल्पज्ञानस्य, तत्तुल्याकारताऽयोगाद् विषयवस्तुतुल्याकारतायोगात् । स्वाकार एव तदाकारतेत्यप्ययुक्तमित्याह- स्वाकारस्य तु विकल्पेऽपि भावात् । न ह्यविकल्प एव स्वाकार , अपि तु विकल्पेऽपि । तदनुगुणत्वतदाकारतेत्यपि समानमित्यावेदयन्नाह- तस्यापीत्यादि । तस्यापि विकल्पस्य, तन्निश्चयात्मकत्वेन विषयवस्तुनिश्चयात्मकत्वेन, तदनुगुणत्वाद् बोधापेक्षया विषयवस्त्वनुगुणत्वात्, इत्येव, व्यवहारत स्वभावभेदाभाव । निश्चयतस्तु प्रतिव्यक्ति अय विद्यत एवेति ॥

**यच्चोक्तम्- विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यवस्यति, न तु तथा तदिति । एतदप्ययुक्तम् , अनालोचिताभिधानत्वात् ,विचाराक्षमत्वात् , तथाहि- कः पुनरत्र प्रतिपत्ता, यस्य तत्स्वभावभेदादर्शनाद् विमोहः, ऐक्यव्यवसायो वा ? । न तावदेक उभयद्रष्टा, अनभ्युपगमात् । न च सविकल्पाविकल्पे विज्ञाने एव, तयोर्विमोहासिद्धेः, स्वसंवेदनरूपत्वेन स्वस्वभावदर्शनात्; इत्थमपि विमोहे तदनुच्छेदापत्तिः, उपायाभावात् । न चानयोरैक्यव्यवसायः, मिथोभेदाभ्युपगमात् , स्वविषयनियतत्वेन तथाप्रतिभासानुपपत्तेः, एवमपि तदभ्युपगमेऽतिप्रसङ्गात् ॥**

यच्चोक्त पूर्वपक्षग्रन्थे- विमूढ प्रतिपत्ता तमपश्यन्नैक्य व्यवस्यति, न तु तथा तदिति । एतदप्ययुक्तम् । कुत इत्याह- अनालोचिताभिधानत्वात् । अनालोचिताभिधानत्व च विचाराक्षमत्वात् । विचाराक्षमत्वमुपदर्शयन्नाह- तथाहीत्यादि । तथाहि क पुनरत्र प्रतिपत्ता भवतोऽभिप्रेत , यस्य तत्स्वभावभेदादर्शनाद् हेतो , विमोह , ऐक्यव्यवसायो वा? । न तावदेक आत्मा, उभयो सविकल्पाविकल्पयोर्द्रष्टा । कुत इत्याह- अनभ्युपगमात् एवविधैकस्य । न च सविकल्पाविकल्पे ज्ञाने एव प्रतिपत्तृणी । कुत इत्याह-तयोः साविक-

ल्पाविकल्पज्ञानयो , विमोहासिद्धे , असिद्धिश्च स्वसंवेदनरूपत्वेन हेतुना ताभ्या स्वस्वभावदर्शनादिति । इत्थमपि स्वस्वभावदर्शनेऽपि सति, विमोहे तदनुच्छेदापत्तिर्मोहानुच्छेदापत्ति । कुत इत्याह– **उपायाभावात्** । न हि स्वसंवेदनरूपे कदाचिदन्यथा भवत इत्युपायाभाव । **न चेत्यादि** । न चानयो सविकल्पाविकल्पयोर्विज्ञानयो , ऐक्यव्यवसाय । कुत इत्याह– **मिथः** परस्पर, **भेदाभ्युपगमात्** । यदि नामैव तत किमित्याह– **स्वविषयनियतत्वेन** हेतुना, **तथाप्रतिभासानुपपत्ते** , ऐक्यप्रतिभासानुपपत्ते । प्रतिभासश्च व्यवसाय इति । एवमपि तथाप्रतिभासानुपपत्तावपि, **तदभ्युपगमे** ऐक्यव्यवसायाभ्युपगमे, **अतिप्रसङ्गात्** शशविषाणादिव्यवसायापत्ते ॥

**स्यादेतत्, ऐक्यव्यवसायस्तदपरो विकल्प एव, व्यवसायस्य परिच्छेदात्मकत्वात् । स किंविषय इति वाच्यम् । तदुभयविषय इति चेत् । कथमतत्प्रतिभासी तद्विषयः ?। तत्प्रतिभासित्वे वा कथमैक्यं व्यवस्यति ?; न चात्यन्तभिन्नयोस्तथाव्यवसाये निमित्तम् । भ्रान्त एवाऽयमिति चेत् । तदन्यैवंविधभावे कथं नेतरयोर्भेदव्यवसायः?। व्यवसाय एवेति चेत् । न, तथायुक्त्यनुभवाभावेन वाङ्मात्रत्वात् । एतेन 'अन्यत्राऽनयोर्यौगपद्येऽपि भेददर्शनात्' इत्यादि प्रत्युक्तम् , तत्त्वतस्तुल्ययोगक्षेमत्वात् ॥**

**स्यादेतदित्यादि** । स्यादेतत्, **ऐक्यव्यवसायो**ऽधिकृत , ताभ्यां सविकल्पाविकल्पविज्ञानाभ्यामपरोऽन्यो विकल्प एव । कुत इत्याह–**व्यवसायस्य परिच्छेदात्मकत्वात्** । एतदाशङ्क्याह– **स किंविषयो** विकल्प ,इति वाच्यम् । तदुभयविषय सविकल्पाविकल्पविज्ञानोभयविषय इति चेत् । एतदाशङ्क्याह– **कथमतत्प्रतिभासी** सविकल्पाविकल्पविज्ञानाऽप्रतिभासी सन् , तद्विषय सविकल्पाविकल्पज्ञानविषय ?। तत्प्रतिभासित्वे वा सविकल्पाविकल्पविज्ञानप्रतिभासित्वे वा सति, कथमैक्य व्यवस्यति परिच्छिनत्ति ? तद्भेदव्यवसायरूपत्वादित्यर्थ । **न चेत्यादि** । न चात्यन्तभिन्नयोर्जातिभेदेन, सविकल्पाविकल्पविज्ञानयोरिति प्रक्रम.,

तथाव्यवसाय ऐक्येन व्यवसाये, निमित्त नीलपीतयोरिव । भ्रान्त एवायमपरो विकल्प इति चेत् । एतदाशङ्कयाह- तदन्येत्यादि । तस्माद् भ्रान्तादन्योऽभ्रान्त एवंविध उभयविषयस्तस्य भावे सति, कथं न इतरयो सविकल्पाविकल्पविज्ञानयो, भेदव्यवसायस्तदन्येन? न ह्यन्यस्मिन् सत्यरूपेऽसत्यस्य भ्रान्ततेति हृदयम् । व्यवसाय एवेति चेद् अन्येनेतरयो । इत्येतदाशङ्कयाह- नेत्यादि । न नैतदेवम्, तथायुक्त्यनुभवाभावेन हेतुना, वाङ्मात्रत्वादर्थशून्यत्वादधिकृतवचस । युक्त्यभावश्चेह स्वलक्षणसामान्यलक्षणयोरेकत्राप्रतिभासनात्, अनुभवस्य चासंकीर्णोभयग्राहिणोऽभावादिति । एतेनेत्यादि । एतेनानन्तरोदितेन दूषणजातेन 'अन्यत्राऽनयोर्यौगपद्येऽपि भेददर्शनात्' इत्यादि पूर्वपक्षोक्त, प्रत्युक्त निराकृतम् । कुत इत्याह- तत्त्वतः परमार्थत, तुल्ययोगक्षेमत्वादिति ॥

किञ्च, अनयोर्भिन्नविषयत्वेन तथापि जन्माऽयुक्तम्, अन्यदर्शनस्यान्यविकल्पानिमित्तत्वात्, निमित्तत्वे वाऽतिप्रसङ्गात्, नीलदर्शनादपि पीतादिविकल्पापत्तेः, तदभावप्रसङ्गात्, निश्चयबलाद्धि तद्भावसिद्धिः, स चेदन्यदर्शनादप्यन्याविषयः, अप्रमाणिकाऽन्यसत्तेति विश्वस्य नीलमात्रतापत्तिः । भिन्नदर्शनविषयाः पीतादय इति चेत् । न, तेषामनिश्चयात्मकत्वेन तथातानधिगतेः, न च तन्निश्चयात् तदधिगतिर्युक्ता, तस्यान्यतोऽपि भावेन तत्प्रतिबन्धासिद्धेः । स पारम्पर्येण तद्दर्शनसामर्थ्योद्भूत एव, सदाऽतद्दर्शिनोऽभावादिति चेत् । न, इत्थं सर्वत्रानाश्वासेनाऽसमञ्जसत्वापत्तेः, सन्निहितार्थदर्शनबलोत्पन्ननिश्चयादपि पारम्पर्येणार्थान्तरदर्शनशक्तिजत्वाऽऽरेकातः प्रवृत्त्याद्ययोगात् । समानविषययोः पुनरनयोर्भावस्तथा भवन्नपि न नो बाधायै, अक्रमेणाऽप्रवृत्तेः । एवं च 'अतीताद्यर्थगतविकल्पेनापीन्द्रियज्ञानतो रूपादिग्रहणासिद्धेः' इत्यादि यावद् 'भिन्नजातीयत्वात्' इत्येतद् व्युदस्तमवसेयम्, अक्रमप्रवृत्तावतीतादिविकल्परूपादिग्रहणयोरस्य साफल्योपप-

त्तेः, अन्यथा वाङ्मात्रत्वात् ॥

**किञ्चेत्यादिना**ऽभ्युच्चयमाह– किञ्च, अनयो सविकल्पाविकल्पज्ञानयोरुदाहृतयो ,भिन्नविषयत्वेन हेतुना, जातिभेदत , तथापि प्रक्रमात् क्रमेणापि यथैकजातीययोस्तथापि, जन्मायुक्तमघटमानकम् । कुत इत्याह– **अन्यदर्शनस्य** रूपादिदर्शनस्य, अन्यविकल्पानिमित्तत्वाद् अतीताद्यर्थगतविकल्पानिमित्तत्वात् निमित्तत्वे वाऽतिप्रसङ्गात् । एनमेवाह– **नीलदर्शनादपि** सकाशात्, पीतादिविकल्पापत्ते । यदि नामैव तत किमित्याह– **तदभावप्रसङ्गात्** पीताद्यभावप्रसङ्गात् । एतदेव स्पष्टयति– **निश्चयेत्यादिना**– निश्चयबलाद् यस्मात्, तद्भावसिद्धि पीतादिभावसिद्धि , स चेद् निश्चय , अन्यदर्शनादप्यन्यविषयो भवति, अप्रमाणिकाऽन्यसत्ता, इह तावत्प्रक्रमादन्यत् पीतादि, ततश्चाप्रमाणिका पीतादिसत्तेति कृत्वा, विश्वस्य सर्वस्य नीलमात्रतापत्ति , यावत् किञ्चित् सत् तत्सर्वं नीलमिति, पीतादिनिश्चयस्तु नीलदर्शनादेवेति न्यायोपपत्ते , भिन्नदर्शनविषया पीतादिदर्शनविषया , पीतादय इति चेत् । एतदाशङ्क्याह– **नेत्यादि**। न नैतदेव, तेषा दर्शनानाम् , अनिश्चयात्मकत्वेन हेतुना, तथातानधिगते पीतादिरूपतया भिन्नताऽनधिगते । **न चेत्यादि** । न च तन्निश्चयात् पीतादिनिश्चयात्, तदधिगतिर्दर्शनाना तथा भिन्नताधिगतिर्युक्ता । कुत इत्याह– **तस्य** सामान्येन निश्चयस्य, अन्यतोऽपि दर्शनान्तरादपि, भावेन हेतुना, तत्प्रतिबन्धासिद्धे पीतादिदर्शनभेदेन सह पीतादिनिश्चयस्य प्रतिबन्धासिद्धे । स पीतादिनिश्चय , पारम्पर्येण तद्दर्शनसामर्थ्योद्भूत एव पीतादिदर्शनसामर्थ्योद्भूत एव । कुत इत्याह– **सदाऽतद्दर्शिनः** पीताद्यदर्शिन , अभावादिति चेत्। एतदाशङ्क्याह– **नेत्यादि**। न नैतदेवम् । इत्थमेव, सर्वत्रानाश्वासेन हेतुना । किमित्याह– **असमञ्जसत्वापत्तेः** । एनामेवाह– **सन्निहितार्थदर्शनबलोत्पन्ननिश्चयादपि** सकाशात्, पारम्पर्येणार्थान्तरदर्शनशक्तिजत्वाऽऽरेकात आशङ्कात कारणात् , प्रवृत्त्याद्ययोगात् , आदिशब्दात् प्राप्तिपरिग्रह । एव तावद् भिन्नविषययो सविकल्पाविकल्पज्ञानयोर्यौगपद्यमसभव्येव

निदर्श्य साम्प्रतमिदमाह- **समानेत्यादि** । समानविषययो पुनर-नयो सविकल्पाविकल्पज्ञानयोर्भाव, तथा हेतुफलभावेन, भवन्नपि 'अहिरहि' इत्यादौ, न नो बाधायै नास्माकं बाधार्थम् । कुत इत्याह- **अक्रमेणाप्रवृत्तेः** अवग्रहकल्पादविकल्पादवायकल्पसविकल्पभावेन क्रमेण प्रवृत्तेरित्यर्थ । **एवं चेत्यादि** । एव सति 'अतीताद्यर्थगतविकल्पेनापि प्रमात्रा, इन्द्रियज्ञानतो रूपादिग्रहणसिद्धे' इत्यादि पूर्वपक्षोक्त यावद् 'भिन्नजातीयत्वात्' इत्येतद्, व्युदस्तमपाकृतमवसेयम् । कुत इत्याह- **अक्रमप्रवृत्तौ** सत्याम्, अतीतादिविकल्परूपादिग्रहणयोरस्य पूर्वपक्षोक्तस्य, साफल्योपपत्ते अन्यथाऽक्रमप्रवृत्तिमन्तरेण वाङ्मात्रत्वादिति ॥

**आह- यद्यत्र क्रमः, कथं न संलक्ष्यत इति ?। उच्यते -उत्पलपत्रशतव्यातिभेदवत् कालसौक्ष्म्यात्, छद्मस्थप्रमातुरनाभोगबहुलत्वात्, अदृष्टप्रतिबन्धात्, वस्तुनोऽनेकधर्मत्वात्, यथाक्षयोपशममवबोधप्रवृत्तेः, तस्य च तत्तद्धेतुभेदतो वैचित्र्यादिति ॥**

आह-यद्यत्र सविकल्पाविकल्पविज्ञानद्वये, क्रम, कथ न सलक्ष्यते? इति। उच्यते- उत्पलपत्रशतव्यतिभेदवत् कालसौक्ष्म्याद् न सलक्ष्यत इति । किमेतदेवमित्याह- **छद्मस्थप्रमातुरनाभोगबहुलत्वात्** । अनाभोगबहुलत्व चादृष्टकर्मप्रतिबन्धात्, तथा, वस्तुन प्रमेयस्यानेकधर्मकत्वात्, तथा, विभ्रमादिनिबन्धनत्वेन यथाक्षयोपशम यस्य यथा क्षयोपशमस्तथाऽवबोधप्रवृत्ते, तस्य च क्षयोपशमस्य, तत्तद्धेतुभेदतो द्रव्यादिभेदेन, वैचित्र्यात्, क्रमो न सलक्ष्यत इति ॥

**आह- यदि कालसौक्ष्म्यादत्र क्रमाऽलक्षणम् । एवं तर्हि 'सरः' इत्येवमादिकयोर्वर्णयोरुच्चारणे नितरां कालसौक्ष्म्यमित्यक्रमग्रहणं स्यात् । तथाच क्रमालक्षणात् श्रुतिभेदो न भवेत्, यथा सरो रस इति । इतश्च न भवेत्- युगपदगोचरीभूतविषयेन्द्रियवतोऽविच्छेदेन सर्वोपलब्धौ क्रमपक्षेऽप्यक्रमस्यैव दर्शनात्, स हि वंशादिवादयितृ रूपं पश्यति, तदैव ततः शब्दं शृणोति, नीलोत्पलादिगन्धं जिघ्रति, कर्पूरादे रसमास्वादयति, आसनादिस्पर्श**

स्पृशति, चिन्तयति च किञ्चित्, इति तत्त्वतोऽस्यानवरतं सर्वपरिच्छित्तिः। एवं यावदत्राप्ययुगपत्पक्षेऽपि समाश्रीयमाणे पञ्चभिर्विज्ञानैर्व्यवधानेऽपि क्रमभावि सत् तेषामेकैकं विज्ञानमविच्छिन्नमिव प्रतिभाति, तथानुभूतेः। यदैतदेवम्, तदा कथमन्यविज्ञानावृत्तौ वर्णयोर्न सकृच्छ्रुतिः, इत्यविच्छिन्नमेकघनीभूतायतवर्णाकारं दर्शनं न भवति; न च भवति, तथाऽप्रतीतेः, इति यत्र क्रमस्तत्र कालसौक्ष्म्येऽप्युपलभ्यत एव। न च प्रतीतिं विहाय पदार्थतत्त्वव्यवस्थापनोपायः, इति यथाप्रत्ययं युगपद्विज्ञानप्रवृत्तिर्न्यायविदाऽङ्गीकर्तव्या, अन्यथोक्तवद् न्यायोच्छेदप्रसङ्गादिति॥

आह– यदि कालसौक्ष्म्यादत्र अधिकृते सविकल्पाविकल्पज्ञानद्वये, क्रमालक्षणम्, एव तर्हि 'सर' इत्येवमादिकयोर्वर्णयो, आदिशब्दाद् रसादिग्रह, उच्चारणे नितरा कालसौक्ष्म्यम्, अव्यवधानेनोच्चारणात्, इत्यक्रमग्रहण सरवर्णयो स्यात्। तथा चेत्यादि। तथा च सति क्रमालक्षणात् कारणात्, श्रुतिभेद श्रवणभेदो भवेत्; यथा सरो रस इति द्विवर्णविषय। इतश्च न भवेच्छ्रुतिभेद। कुत इत्याह– युगपदित्यादि। युगपदेकदैव, गोचरीभूतविषयाणि च तानीन्द्रियाणि चेति विग्रह, तान्यस्य विद्यन्त इति तद्वान्, तस्याऽविच्छेदेन प्रवन्धवृत्त्या, सर्वेषा प्रक्रमाद्विषयाणामुपलब्धि सर्वोपलब्धि, अस्या सर्वोपलब्धौ सत्याम्। किमित्याह– क्रमपक्षेऽपि विज्ञानविषये, अक्रमस्यैव दर्शनात्। एतदेवाक्रमदर्शनमाह– स हीत्यादिना। स हि युगपद्गोचरीभूतविषयेन्द्रियवान्, वंशादिवादयितू रूप पश्यति, तदैव तत वंशादिवादयितु सकाशात्, शब्द शृणोति, तथा, नीलोत्पलादिगन्ध जिघ्रति, तथा, कर्पूरादे रसमास्वादयति, एवमासनादिस्पर्श स्पृशति, चिन्तयति च किञ्चिन्मनसा, इत्येव, तत्त्वतोऽस्य युगपद्गोचरीभूतविषयेन्द्रियवत प्रमातु। किमित्याह– अनवरतं सर्वपरिच्छित्तिः अनवरतसर्वपरिच्छित्तिरेव, युगपदेवेन्द्रियविषयसबन्धसिद्धे। एव तत्त्वव्यवस्थिते सति, यावदत्रापि युगपदनुभवेऽपि तात्त्विके, अयुगपत्पक्षेऽपि समाश्रीयमाणे किमित्याह

पञ्चभिर्विज्ञानैर्व्यवधानेऽपि सति अधिकृतन्यायेन,क्रमभावि सद् भवत्, तेषा षण्णा विज्ञानानाम्,एकैक विज्ञान शब्दादिगोचरादि,अविच्छिन्नमिव युगपदिव, प्रतिभाति। कुत इत्याह–तथानुभूतेः अविच्छेदेनानुभूते। प्रकृतयोजनामाह– यदेत्यादि। यदैतदेवमनन्तरोदितम्, तदा कथमन्यविज्ञानावृत्तावपान्तराले, वर्णयो सरादिरूपयो, न सकृच्छ्रुतिर्न युगपच्छ्रवणमिति। एतदेवाह– अविच्छिन्नं एकदैव एकघनीभूतश्चासावायतवर्णश्चेति विग्रह, तदाकार दर्शन न भवति। स्यादेतद् भवत्येव, इत्याशङ्कानिरासार्थमाह– न च भवति। कुत इत्याह– तथाऽप्रतीतेः। इत्येव, यत्र क्रमस्तत्र कालसौक्ष्म्येऽप्युपलभ्यत एव यथाऽधिकृतवर्णयो। न च प्रतीति विहाय परित्यज्य, पदार्थतत्त्वव्यवस्थापनोपाय, इत्येव, यथाप्रत्यय यथानुभव, युगपद्विज्ञानप्रवृत्ति षडपेक्षया प्रस्तुतद्वयापेक्षया वा, न्यायविदा प्रमात्रा, अङ्गीकर्तव्या, अन्यथैवमनभ्युपगमे, उक्तवद् यथोक्त तथा, न्यायोच्छेदप्रसङ्गात् प्रतीतिबाधेन न्यायानुपपत्तेस्तस्यापि प्रतिबीजत्वादित्यभिप्राय इति ॥

अत्रोच्यते– यत्किञ्चिदेतत्, वर्णयोः सावयवत्वेनोक्तदोषानुपपत्तेः, सरादयो हि वर्णाः सावयवत्वेनानेकक्षणलब्धवृत्तयः, तथोपलब्धितस्तत्तत्स्वभावत्वात्, अन्यथा तदनुपपत्तेः, न क्षणिकज्ञानग्राह्याः, तस्य परमाणुव्यतिक्रान्तिमात्रत्वेनात्यन्तसूक्ष्मत्वात्, तदनुभवस्य तत्त्वेनैवावार्ग्दर्शिनाऽनुपलक्षणात्, तथाऽप्रतीतेः; इति पूर्ववर्णज्ञानेनोत्तरवर्णज्ञानस्य मिश्रणाभावात्, उभयोः प्रदीर्घस्थूरोपयोगरूपत्वात्; तथा, आलम्बनजातिभेदात्, तत्तत्स्वाभाव्यात्, तथाक्षयोपशमयोगात्, दृढानुभवसिद्धेः, अविगानेन तथावेदनात्, कोटिसङ्गस्याप्रयोजकत्वात्, तद्वीर्यतिरस्करणात्, इत्थमपि तदापादनेऽतिप्रसङ्गात्, नीलपीतज्ञानयोरपि तद्भावेन क्वचिन्मिश्रणप्रसङ्गात्। इति कथं सकारादाविवाविच्छिन्नमेकघनीभूतायतवर्णाकारं दर्शनं भवेत्?। सकारादौ तु कालादिभेदेऽपि प्रभूततरधर्मप्रत्यासत्तेर्भवति,

अर्हम् ।

श्रीविजयधर्मसूरिभ्यो नमः ।

श्रीहेमचन्द्राचार्यविरचितः—

# अभिधानचिन्तामणिः ।

धर्मतीर्थकृतां वाचं नत्वा तत्त्वाभिधायिनीम् ।
स्वोपज्ञनाममालाया विवृतिं विदधाम्यहम् ॥ १ ॥
श्रेयोऽर्थमयमारम्भः किं तत्रात्मविकत्थनैः ? ।
परात्मनिन्दास्तोत्रे हि नाद्रियन्ते मनीषिणः ॥ २ ॥
प्रामाण्यं वासुकेर्व्याडेर्व्युत्पत्तिर्धनपालतः ।
प्रपञ्चश्च वाचस्पतिप्रभृतेरिह लक्ष्यताम् ॥ ३ ॥

तत्रायमादिश्लोकः—

प्रणिपत्यार्हतः सिद्धसाङ्गशब्दानुशासनः ।
रूढयौगिकमिश्राणां नाम्नां मालां तनोम्यहम् ॥ १ ॥

प्रणिपत्यार्हतइति मङ्गलार्थम् । मङ्गलं चाविघ्नेन शास्त्रस्य समाप्त्यर्थम् । सिद्धं प्रतिष्ठां प्राप्तं साङ्गं शब्दानुशासनं यस्येति कर्तृविशेषणम् । अङ्गानि लिङ्गधातुपारायणादीनि । एतावता च शब्दानुशासनेन सहास्या एककर्तृकत्वमाह । एककर्तृकत्वख्यापनं चान्योन्यसंवादात्प्रतीतिदार्ढ्योपदर्शनार्थम् । शब्दानुशासनस्य च कीर्तनं तदधीनः सर्वविद्यानां प्रकर्ष इति प्रदर्शनार्थम् । यदाह—

'वक्तृत्वं च कवित्वं च विद्वत्तायाः फलं विदुः ।
शब्दज्ञानादृते तन्न द्वयमप्युपपद्यते' ॥ १ ॥

रूढादीनां नाम्नां शब्दानां मालामभिधानचिन्तामणिनाम्नीं तनोमि । अहमिति कर्तृनिर्देशः ॥ १ ॥

तत्र रूढान् शब्दान् व्याचष्टे—

व्युत्पत्तिरहिताः शब्दा रूढा आखण्डलादयः ।

प्रकृतिप्रत्ययविभागेनान्वर्थवर्जिता व्युत्पत्तिरहिताः । शब्दा इत्यनुवाद्यनिर्देशः । रूढा इति विधेयपदम् । आखण्डलादय इत्युदाहरणम् । नह्यत्र प्रकृतिप्रत्ययविभागेन

व्युत्पत्तिरस्ति। आदिशब्दात् मण्डपादय ॥ यद्यपि 'नाम च धातुजम्' इति शाकटायनमतेन रूढा अपि व्युत्पत्तिभाज, तथापि वर्णानुपूर्वीविज्ञान[1]मात्रप्रयोजना तेषा व्युत्पत्ति, न पुनरन्वयार्थ[2]प्रवृत्तौ कारणमिति रूढा अव्युत्पन्ना एव ॥

यौगिकान् शब्दान् व्याचष्टे–

योगोऽन्वय स तु गुणक्रियासम्बन्धसभव ॥ २ ॥

शब्दाना परस्परमर्थानुगमनमन्वय स योग । स पुनर्योगो गुणात्, क्रियाया सम्बन्धाच्च भवति। गुणो नीलपीतादि । क्रिया करोत्यादिका। सबन्धो वक्ष्यमाण । तेभ्य सभवो यस्य योगस्य स तथा ॥ २ ॥

गुणक्रियासबन्धसम्भवयोगेन यौगिकानामुदाहरणम्–

गुणतो नीलकण्ठाद्या क्रियात स्रष्टृसन्निभा ।

गुणतो गुणनिबन्धनो येषा योगस्ते शब्दा नीलकण्ठाद्या । नील कण्ठोऽस्य इति गुणप्राधान्यान्नीलकण्ठ शकर । आदिशब्दात् शितिकण्ठ कालकण्ठ इत्यादि ॥ सख्यापि गुण एव इति त्रिलोचन । तेन–पञ्चबाण षण्मुख अष्टश्रवा दशग्रीव इत्यादि सगृहीतम् ॥ क्रियात क्रियानिबन्धनो योगो येषा ते स्रष्टृप्रभृतय । सृजति इति सर्जनप्राधान्यात् स्रष्टा ब्रह्मा । एव धाता इत्यादय ॥

सम्बन्ध व्याचष्टे–

स्वस्वामित्वादिसम्बन्धस्तत्राहुर्नाम तद्वताम् ॥ ३ ॥
स्वात् पाल-धन-भुग्-नेतृ-पति-मत्वर्थकादय ।

स्वम् आत्मीयम्, स्वामी यस्तत्र प्रभविष्णु, तयोर्भाव स्वस्वामित्वम्। तदादि सबन्ध । आदिशब्दाज्जन्यजनकभावादिपरिग्रह । तत्र स्वस्वामिभावसबन्धे पालादय शब्दा स्वात्परे नियोजिता तद्वता स्वामिना नाम आहु ॥३॥ मत्वर्थक इति । मतुस्तद्धित । तस्यार्थोऽस्त्यर्थविशिष्टप्रकृत्यर्थेन सह देवदत्तादे सम्बन्ध । तदाधारो वा "तदस्यास्त्यस्मिन्निति मतु"॥७।२।१॥ इति मतुप्रत्ययविधानात् । मतोरर्थो यस्य स मत्वर्थकस्तद्धितो मतुना समानार्थ इत्यर्थ । स च इन्नणिकादि । मत्वर्थाव्यभिचारान्मतुरपि । आदिशब्दात्पादयोऽपि । 'तत्राहुर्नाम तद्वताम्' इति उत्तरेष्वप्यनुवर्त्तनीयम् ॥

क्रमेणोदाहरणान्याह–

भूपालो भूधनो भूभुग् भूनेता भूपतिस्तथा ॥ ४ ॥

१ निज्ञान इत्यपि पाठ । २ अन्वथोऽर्थ- इत्यपि पाठ ।

भूमाश्चेति

इतिशब्द प्रकारार्थ । तेन भूपादयोऽपि ॥

कविरूढ्या ज्ञेयोदाहरणावली ।

कवीना रूढि परम्परायाता प्रसिद्धिस्तया न तु कविरूढ्यऽतिक्रमेण । यथा 'कपाली' इत्यादौ सत्यपि स्वस्वामिभावसबन्धे 'कपाली' इति मत्वर्थीयान्त एव भवति, न तु 'कपालपाल, कपालधन, कपालभुक्, कपालनेता, कपालपति' इत्यादि ।

जन्यजनकभावसबन्धे यथा—

जन्यात् कृत्-कर्तृ-सृट्-स्रष्टृ-विधातृ-कर-सू समा ॥५॥
जनकाद् योनि-ज-रुह्-जन्म-भू-सूत्यणादय ।

जन्यात्कार्यात्परे कृदादयस्तद्वता जनकाना कारणाना नाम आहु ॥ यथा— विश्वकृत्, विश्वकर्ता, विश्वसृट्, विश्वस्रष्टा, विश्वविधाता, विश्वकर, विश्वसू ब्रह्मा । तस्य हि विश्व जन्यामिति रूढि ॥ समशब्द आद्यर्थ । तेन—'विश्वकारक, विश्वजनक' इत्याद्यपि ॥ कविरूढ्येत्येव । नहि यथा चित्रकृदुच्यते तथा चित्रसू इति ॥५॥ तथा जनकात् परे योन्यादय शब्दास्तद्वता कारणवता कार्याणा नाम आहु ॥ यथा—आत्मयोनि, आत्मज, आत्मरुह, आत्मजन्मा, आत्मभू, आत्मसूति, ब्रह्मा ॥ तस्य ह्यात्मा कारणमिति रूढि ॥ वक्ष्यमाणस्यादिशब्दस्याभिसबन्धात् सभवादयोऽपि गृह्यन्ते ॥ अणादयस्तु—भृगोरपत्य भार्गव । दितेरपत्य दैत्य । वात्स्यस्यापत्य वात्स्यायन इत्यादि ॥ अत्रापि हि भार्गवादीना भृग्वादयो जनका इति रूढि ॥ 'कविरूढ्या' इत्येव । नहि—आत्मयोनिवत् 'आत्मजनक, आत्मकारक' इति भवति ॥

धार्यधारकभावसम्बन्धे यथा—

धार्याद् ध्वजा-ऽस्त्र-पाण्य-ङ्क-मौलि-भूषण-भृन्निभा ॥ ६ ॥
शालि-शेखर-मत्वर्थ-मालि-भर्तृ-धरा अपि ॥

धार्यवाचकात्परे ध्वजादयो धरान्ता धारकस्य नाम आहु ॥ यथा—वृषध्वज, शूलास्त्र, पिनाकपाणि, वृषाङ्क, चन्द्रमौलि, शशिभूषण, शूलभृत् । निभग्रहणात्तत्सदृशा वृषकेतन—शूलायुध—वृषलक्ष्म—चन्द्रशिरस्—चन्द्राभरणादयो गृह्यन्ते ॥६॥ तथा— पिनाकशाली, शशिशेखर, शूली, पिनाकमाली । पिनाक मलते धारयतीति कृत्वा पिनाकभर्ता, गङ्गाधर ॥ 'कविरूढ्या' इत्येव । तेन सत्यपि धार्यधारकसबन्धे न सर्वेभ्यो धार्येभ्यो ध्वजाद्यर्था शब्दा प्रयोज्या । नहि भवति वृषध्वजवत् शूलध्वज, शूलास्त्रवत् चन्द्रास्त्र, पिनाकपाणिवत् अहिपाणि, वृषाङ्कवत् चन्द्राङ्क, चन्द्रमौलिवत् गङ्गा-

दर्शने । सत्त्व प्रसिद्ध, तदसत्त्वपरिहारेणासत्त्वानापत्त्या, व्यवस्थितम्, असत्त्वमपि प्रतीत, सत्त्वपरिहारेण व्यवस्थितमिति वर्त्तते। इत्थ चैतद्-ङ्गीकर्त्तव्यम्। अन्यथैवमनङ्गीकरणे, तयो सत्त्वासत्त्वयो, अविशेष-स्यादभेद स्यात्, न चैतदेवम् । ततश्चेत्यादि । ततश्चैव सति तद्व-स्तु यदि सत् कथमसत्?, अथासत्कथ सदिति?। कि नैवमित्याह–एकत्र वस्तुनि, सदसत्त्वयोर्विरोधात् परस्परपरिहारस्थितिलक्षणोऽयं विरोध-इति। न चैतत्स्वमनीषिकया उच्यत इत्याह– तथा चोक्तं पूर्वसूरि-भि । यस्मादित्यादि। यस्मात्सत्त्वमसत्त्व च विरुद्धम्। हि–हिशब्द-एवकारार्थोऽवधारणे विरुद्धमेव, मिथ परस्परं, द्वयमेतद्, वस्त्वेक सदसद्रूप घटादि, तस्मात् खलु न युज्यते खल्वित्येवकारार्थोऽव-धारणे, स च भिन्नक्रम, न युज्यते एवेत्यर्थ । दोषान्तरमाह– किञ्चेत्यादिना। किञ्चायमपरो दोष –सदसद्रूप वस्त्वभ्युपगच्छता परेण, सत्त्वमसत्त्व च वस्तुधर्मतयाऽभ्युपगत भवति। तत किमि-त्याह– ततश्चात्रापि वक्तव्यम् परेण । धर्मधर्मिणो किं तावद्भेद, आहोस्विदभेद, आहोस्विद्भेदाभेद इति विकल्पा । किञ्चात इत्याह– तत्र यदि तावद्भेदः, धर्मधर्मिणो । तत सदसत्त्वयोर्भिन्नत्वात् धर्मिण सकाशात्, त्रितयमेतत् कथमेक सदसद्रूपमिति?। अथाभेद सदसत्त्वयोर्धर्मिण, तत सदसत्त्वयोरेकत्व एकस्माद्धर्मिण अभि-न्नत्वात्, तत्स्वरूपवद् धर्मिस्वरूपवत्। अतोऽपि कथमेक सदसद्रूप-मिति?, एकमेव तदित्यभिप्राय । धर्मिणो वाऽभेद सदसत्त्वयोर-भिन्नत्वात् तत्स्वात्मवद्धर्मस्वात्मवत् । इत्थमपि कथमेकमुभयरूप?, द्व्यात्मकत्वात्तस्येत्यर्थ ॥

अथ भेदाभेदः। अत्रापि येनाकारेण भेदस्तेन भेद एव, येन चाभेदस्तेनाभेद एव; तदेवमपि नैकमुभयरूपम्। अथ येनै-वाकारेण भेदस्तेनैवाभेदः, येनैव चाभेदस्तेनैव भेद इति। एतद-प्यचारु। विरोधात्। तथाहि–यदि येनाकारेण भेदः कथं तेनैवा-भेदः? अथाभेदः कथ भेद इति?। अथ येनाप्याकारेण भेदस्ते-

नापि भेदश्चाभेदश्च, येनापि चाभेदस्तेनाप्यभेदो भेदश्च। अत्रापि येनाकारेण भेदस्तेन भेद एव, येन चाभेदस्तेनाभेद एवेति तदेवावर्तते । किञ्च । भेदाभेदमभ्युपगच्छता अवश्यमेवेदमङ्गीकर्तव्यम्, इह धर्मधर्मिणोर्धर्मधर्मितया भेदः, स्वभावतः पुनरभेदः; स्वभावतोऽपि हि तयोर्भेदेऽङ्गीक्रियमाणे परस्परतः प्रविभक्तरूपं पदार्थद्वयमेवाङ्गीकृतं स्यान्न पुनरेकं द्विरूपमिति । तदत्रापि निरूप्यते, न ह्यनासादितस्वभावभेदयोर्धर्मधर्मिणोर्धर्मधर्मितयापि भेदो युज्यते । तथाहि–यदि यो धर्मस्य स्वभावः स एव धर्मिणोऽपि, एवं सत्यसौ धर्मी धर्म एव स्यात् तत्स्वभावत्वाद्धर्मस्वरूपवत्, धर्मो वा धर्मिस्वभावाव्यतिरिच्यमानमूर्तिर्धर्मिमात्रमेव स्यादिति। ततश्चैवं धर्मधर्मिणौ स्वभावभेदानासादनेनाप्रतिलब्धभेदौ कथं भेदनिमित्तं भवत इति ?। न च स्वभावतोऽपि तयोर्भेदाभेदकल्पना युक्ता, पूर्वोक्तदोषानतिवृत्तेः ।

तथा चोक्तम्–

"भेदो वा स्यादभेदो वा द्वयं वा धर्मधर्मिणोः ।
भेदे नैकमनेक स्यात् अभेदेऽपि न युज्यते ॥ १ ॥
द्वयपक्षोऽपि चायुक्तो विकल्पानुपपत्तितः ।
तेनानेकान्तवादोऽयमज्ञैः समुपकल्पितः" ॥ २ ॥

अथ भेदाभेद धर्मधर्मिणो । अत्रापि भेदाभेदे, येनाकारेण भेदस्तेन भेद एव, येन चाऽभेदस्तेनाभेद एव । तदेवमपि भेदाभेदाङ्गीकरणेऽपि, नैकमुभयरूप तत्त्वत पूर्वोक्तदोषानतिक्रमात् । अथ येनैवाकारेण भेदस्तेनैवाभेदो धर्मधर्मिणोरिति प्रक्रम , येनैव चाभेदस्तेनैव भेद इति। एतदप्यचारु अशोभनम् । कुत इत्याह विरोधात् तथाहि-यदि येनैवाकारेण भेद कथ तेनैवाभेद ?, अथाभेद कथ भेद इति?, अभिन्ननिमित्तत्वादिति गर्भ । अथ येनाप्याकारेण भेदस्तेनापि भेदश्चाभेदश्चेत्युभयम, येनापि चाभेदस्तेनाप्यभेदश्च भेदश्चेत्युभयमेव। एतदाशङ्क्याह-

**अत्रापीत्यादि**। अत्राप्याकुलवादे, येनाकारेण भेदस्तेन भेद एव प्रवृत्तिनिमित्तभेदात्, येन चाभेदस्तेनाभेद एवाऽभिन्ननिमित्तत्वात्, इत्येव तदेवावर्त्तते पूर्वोक्तम्, इति चक्रकम्, अनवस्था वा ॥ **किञ्चेत्यादि**। किञ्च। भेदाभेदमभ्युपगच्छता परेण, अवश्यमेवेदमङ्गीकर्त्तव्यमिह पक्षे, धर्मधर्मिणोर्धर्मधर्मितया भेद नियतस्वरूपतया, स्वभावत पुनरभेद वस्तुत्वेनेत्यर्थ। किमित्येतदेवमित्याह-**स्वभावतो हि तयोर्धर्मधर्मिणोर्भेदेऽङ्गीक्रियमाणे परस्परतः प्रविभक्तरूपं पदार्थद्वयमेव** धर्मधर्मिरूपम्, अङ्गीकृत स्यान्न पुनरेक वस्तु, द्विरूपमिति। यदि नामैव तत किमित्याशङ्कयाह-**तदत्रापि निरूप्यते** । नहि नैव, अनासादितस्वभावभेदयोर्धर्मधर्मिणोर्धर्मधर्मितयापि नियतस्वरूपतया, भेदो युज्यते। एतदेव भावयति-**तथाहीत्यादिना**। तथाहि—यदि यो धर्मस्य स्वभाव वस्तुत्वलक्षण., स एव धर्मिणोऽपि नान्य । एव सत्यसौ धर्मी धर्म एव स्यात् तत्स्वभावत्वाद्धर्मस्वरूपवदिति दृष्टान्त । धर्मो वा धर्मिस्वरूपव्यतिरिच्यमानमूर्त्ति सन् धर्मिमात्रमेव स्यात् तत्स्वरूपवदिति । ततश्चैव धर्मधर्मिणौ द्वावपि, स्वभावभेदानासादनेन हेतुना, अप्रतिलब्धभेदौ सन्तौ कथ भेदनिमित्त भवत इति ? स्वभावभेदान्नैव भवत इत्यर्थ । **न चेत्यादि** । न च स्वभावतोऽपि सकाशात्, तयोर्धर्मधर्मिणो , भेदाभेदकल्पना युक्ता। कुत इत्याह-**पूर्वोक्तदोषानतिवृत्तेः** । पूर्वोक्तदोषाश्चात्रापि येनाकारेण भेदस्तेन भेद एवेत्यादय । **तथा चोक्त**मिति ज्ञापकमाह—**भेदो वेत्यादिना** । भेदो वा स्यादभेदो वा द्वय वा भेदाऽभेदलक्षणम्, धर्मधर्मिणो । किञ्चात -भेदे नैक वस्तु, अनेक स्यादनेकत्वादेव । अभेदेऽपि न युज्यते एकमनेकमेकत्वादेव, द्वयपक्षोऽपि चायुक्तो भेदाभेदपक्ष । कुत इत्याह-**विकल्पानुपपत्तितः**। इय चोक्तवद्योजनीया। तेनानेकान्तवादोऽयमज्ञै प्राणिभि , समुपकल्पित इति ॥

किञ्च। संविन्निष्ठा विषयव्यवस्थितयः। न च सदसद्रूपं वस्तु संवेद्यते, उभयरूपस्य संवेदनस्याभावात्। तथाहि—नाक्षजे विज्ञाने सदसत्त्वे प्रतिभासेते, असत्त्वस्यारूपत्वात्, रूपत्वे चासत्त्वविरो-

धात्; तथानुभवाभावाच्च । न च कार्यद्वारेणापि सदसद्रूपं वस्तु प्रतिपत्तुं शक्यते। यतो नोभयरूपं कार्यमुपलभ्यते। न च तत्कार्यकरणे प्रवर्त्तमानं केनचिदाकारेण करोति केनचित् न करोति, एकस्य करणाकरणविरोधात्। सर्वात्मना च करणे तद्भावरूपमेव स्यात्। तथाहि- नाभावः कस्यचित् कारणं भवितुमर्हति अभावत्वविरोधात्, तत्कारणत्वे च विश्वमदरिद्रं स्यात्, तत एव कटककुण्डलाद्युत्पत्तेः। न च तस्मान्निरुपाख्यतयाऽविशिष्टात् कस्यचिदेव भावो न सर्वस्येति वक्तुं युज्यते, हेत्वभावात्। अतः श्रद्धागम्यमेवेदं सदसद्रूपं वस्त्विति।

तथा चोक्तम्—

"न च प्रत्यक्षसंवेद्यं कार्यतोऽपि न गम्यते।
श्रद्धागम्यं यदि परं वस्त्वेकमुभयात्मकम्" ॥ १ ॥

इहैवाभ्युच्चयमाह—**किञ्चेत्यादिना** । किञ्चायमपरो दोष —सविन्निष्ठा संवेदनपर्यवसाना, विषयव्यवस्थितय विपयमर्यादा । यदि नामैव बत किमित्याह—**न च सदसद्रूपं वस्तु संवेद्यते** । कुत इत्याह—**उभयरूपस्य संवेदनस्याभावात्** । एतदेव भावयति— **तथाहीत्यादिना** । तथाहि -नाक्षजे विज्ञाने इन्द्रियज्ञाने इत्यर्थ । सदसत्त्वे प्रतिभासेते । कुत इत्याह—**असत्त्वस्यारूपत्वात्** अरसाद्युपलक्षणमेतत् । रूपत्वे चासत्त्वविरोधात्, तथानुभवाभावाच्च नाक्षजज्ञानेन तुच्छानुभव । एव प्रत्यक्षेणोभयरूपस्याग्रहणमभिधायानुमानेनाभिधातुमाह-- **न चेत्यादि** । न च कार्यद्वारेणापि सदसद्रूप वस्तु प्रतिपत्तु शक्यते कार्यमत्र समानजातीयमभिप्रेतम् । तथा चाह—**यतो नोभयरूपं कार्यमुपलभ्यते** । न च तद्वस्तु, कार्यकरणे प्रवर्त्तमान सत्, केनचिदाकारेण करोति केनचिन्न करोति कार्यम् । कुत इत्याह—**एकस्य करणाकरणविरोधात्** । सर्वात्मना च करणे कार्यस्य, तद्भावरूपमेव स्याद्वस्तु । तथाहि—नाभाव कस्यचिद्वस्तुन कारण भवितुमर्हति । कुत इत्याह—

**अभावत्वविरोधात्** सकलशक्तिविकलस्तुच्छोऽयमिति । तत्कारणत्वे चाभावकारणत्वे च विश्वं जगत्, अदरिद्रं स्यात्, तत एवाभावात्, कटककुण्डलाद्युत्पत्तेः । न च तस्मादभावात्, निरुपाख्यतया अविशिष्टात्कस्यचिदेव भावो मृदादेरिव घटादेः, न सर्वस्येति वक्तुं युज्यते । कुत इत्याह-**हेत्वभावात्** मृदादेरिव घटादौ प्रतिनियतशक्त्यभावेनेति । अत श्रद्धागम्यमेवेदं सदसद्रूपं वस्त्विति निगमनम् । **तथा चोक्त**मिति ज्ञापकमाह-**न चेत्यादिना** । न च प्रत्यक्षसंवेद्यमुभयात्मकं वस्तु, कार्यतोऽपि न गम्यते उक्तवदेतत् । श्रद्धागम्यं यदि परं प्रमाणाविषयत्वेन, वस्त्वेकमुभयात्मकं सदसदात्मकमित्यर्थः ॥

एतेन नित्यानित्यमपि प्रत्युक्तमवगन्तव्यम्, विरोधादेव । तथाहि-अप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्यमाख्यायते, प्रकृत्यैकक्षणस्थितिधर्मकं चानित्यमिति, ततश्च तद् यदि नित्यं कथमनित्यम्?, अनित्यं चेत्कथं नित्यमिति? । स्यादारेका नहि कूटस्थनित्यतया नित्यं द्रव्यमभ्युपगम्यतेऽस्माभिः, परिणामानित्यताभ्युपगमात्, किन्तु पूर्वोत्तरक्षणप्रविभागेन प्रबन्धवृत्त्या । न ह्यस्य पर्यायाणामिवोच्छेदस्तद्रूपेण तथाप्रतीतेः । पर्याया एव हि पर्यायरूपेण निरुध्यन्ते, न तु द्रव्यमिति नित्यमभ्युपगम्यते । इयमप्ययुक्ता, यस्मादेषाप्यत्र नित्यता न सम्भवति, पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः । तथाहि-न पर्यायव्यतिरिक्तं द्रव्यमास्ति तथानुभवाभावात्, व्यतिरिक्तभावे वाऽनेकरूपैकवस्तुवादहानिप्रसङ्गः ।

तथा चोक्तम्-

"पर्यायाभेदतोऽनित्यं द्रव्यं स्यात् तत्स्वरूपवत् ।
स्याद्वादविनिवृत्तिश्च नानात्वे सम्प्रसज्यते" ॥ १ ॥

व्यतिरिक्ताव्यतिरिक्तपक्षस्तु विरोधाघ्रातत्वात् न्यायबहिर्भूतत्वादनुद्घोष्य एवेति ॥

अतिदेशेन दूषणान्तरमाह-एतेनेत्यादिना। एतेनानन्तरोदितेन सद-सद्रूपतानिराकरणेन, नित्यानित्यमपि वस्तु, प्रत्युक्त निराकृतम्, अवगन्तव्यम। कुत इत्याह– विरोधादेव। एतद्भावनायैवाह– तथाहीत्यादि। तथाहीत्युपदर्शने। अप्रच्युत अनिवृत्तिस्वभावतया, अनुत्पन्न सदाभावेन स्थिर एवरूपतया एक स्वभावो यस्य तत्तथाविध नित्यमाख्यायते। अथवैव विशेषणसाफल्यम्– एकस्वभाव नित्यमाख्यायत इत्युक्ते क्षणस्थितिस्वभावमप्येकस्वभाव भवति, तद्व्यवच्छेदार्थं स्थिरग्रहणम्। स्थिरैकस्वभावमपि मुक्तवस्तु कैश्चिन्नित्यमिष्यत इति तद्व्यवच्छेदार्थमनुत्पन्नग्रहणम्। अनुत्पन्नस्थिरैकस्वभावमपि स्वप्रच्युतिसमय यावत्कैश्चिन्नित्यमिष्यत इति तद्व्यवच्छेदार्थमप्रच्युतग्रहणमिति। प्रकृत्येत्यादि। प्रकृत्या स्वभावेन, एकक्षणस्थितिधर्मक चानित्यमित्यनित्यमाख्यायते। ततश्च तद्वस्तु यदि नित्य कथमनित्यम्?, अनित्य चेत्कथ नित्यमिति?, विरोधात्। स्यादारेकेत्यादि। स्यादारेका स्यादाशङ्का, नहि नैव, कूटस्थनित्यतयैकरूपतया, नित्य द्रव्यमभ्युपगम्यतेऽस्माभि। कुत इत्याह– परिणामानित्यताभ्युपगमात् कारणात्। किन्त्वेव नित्यमभ्युपगम्यत-इत्याह– पूर्वोत्तरक्षणप्रविभागेन अय पूर्व, अयमुत्तर, अयमनयो प्रविभागोऽत्यन्तभेदरूप इत्येवभूतेन, प्रबन्धवृत्त्या हेतुभूतया। नह्यस्य द्रव्यस्य, पर्यायाणामिवोच्छेद पूर्वोत्तरक्षणप्रविभागेन। कुत इत्याह– तद्रूपेण द्रव्यरूपेण, तथाऽप्रतीते उच्छेदेनाप्रतीते प्रबन्धवृत्त्या। अथवा तद्रूपेण द्रव्यरूपेण, तथाप्रतीतेरनुच्छेदेन प्रतीते। एव च पर्याया एव यस्मात्तत्तत्क्षणस्थितिस्वभावतया पर्यायरूपेण निरुध्यन्ते विनश्यन्ति। न तु द्रव्य तत्तत्स्वभावतया तन्निरोधबीजम्, इत्येव नित्यमभ्युपगम्यते अनित्यतानुविद्ध तदाधारभूतमित्यर्थ। एतदाशङ्क्याह– इयमप्ययुक्ता आरेका, यस्मादेषाप्यनन्तरोदिता, अत्र द्रव्ये, नित्यता न सम्भवति। कुत-इत्याह–पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः स्वत परतश्च। एतदेवाह-तथाहीत्यादिना। तथाहि–न पर्यायव्यतिरिक्त द्रव्यमस्ति। तथानुभवाभावात् न हि पिण्डशिवकादिव्यतिरिक्त मृद्द्रव्यमनुभूयते। व्यतिरिक्त-

भावे वा पर्यायेभ्यो द्रव्यस्य, अनेकरूपमेक वस्त्वितिवादहानिप्रसङ्ग द्वयोरप्येकैकत्वादिति । तथा चोक्तमिति ज्ञापकमाह– पर्यायेत्यादि । पर्यायाभेदत. कारणात्, अनित्य द्रव्य स्यात्तत्स्वरूपवत् पर्यायस्वात्मवत्। स्याद्वादविनिवृत्तिश्चानेकान्तहानिश्च, नानात्वे सम्प्रसज्यते द्रव्यपर्याययो । व्यतिरिक्ताऽव्यतिरिक्तपक्षस्त्वनयो , विरोधाघ्रात्वाद्धेतो , न्यायबहिर्भूतत्वादनुद्घोष्य एवेति ॥

**एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यम्, तथाहि-एकादिधर्मकं सामान्यम्, अनेकादिधर्मका विशेषा । ततश्च तद्यदि सामान्यरूपं कथं विशेषरूपम्?, विशेषरूपं चेत्कथं सामान्यरूपमिति ?। विरोधात् ॥**

अतिदेशेनैव दोषान्तरमाह– **एतेनेत्यादिना** । एतेन नित्यानित्यनिराकरणेन, सामान्यविशेषरूपमपि वस्तु, प्रतिक्षिप्तमवगन्तव्यम्। एतदेव योजयति– **तथाहीत्यादीना** । तथाहि–एकादिधर्मक सामान्यम्, "एक नित्य निरवयवमक्रिय सर्वगत च सामान्यम्" इति वचनात् । अनेकादिधर्मका विशेषा अनेके अनित्या इत्यादि । ततश्च तद्वस्तु, यदि सामान्यरूप कथ विशेषरूपम्?, विशेषरूप चेत्कथ सामान्यरूपम्?, इत्येव विरोधात् प्रतिक्षिप्तमवगन्तव्यमिति ॥

**किञ्च। सामान्यविशेषोभयरूपत्वे सति वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्गः । तथाहि--विषमोदकक्षीरककर्कादिव्यक्त्यभिन्नमनानास्वभावमेकं सामान्य वर्त्तते, ततश्च न विषं विषमेव मोदकाद्यभिन्नसामान्याव्यतिरेकात्। नापि मोदको मोदकएव विषाभिन्नसामान्याभेदात् । किं तर्हि, उभयमप्युभयरूपम् । ततश्च विषार्थी विषे प्रवर्तेत मोदके च, एवं मोदकार्थ्यपि मोदके प्रवर्तेत विषे च। लोकश्च विषार्थी विष एव प्रवर्तते न मोदके, मोदकार्थ्यपि मोदक एव न विषे, इत्यस्य नियमस्योच्छेदः स्यात्। तथा विषे भक्षिते मोदकोऽपि भक्षितः स्यात्, मोदके च भक्षिते विषमपि भक्षितं स्यात्, तथा च प्रतीतिविरोधः; एवं**

क्षीरकर्कादिष्वपि योज्यम् । स्यादेतत् विषादिषु विशेषरूपताप्यस्त्येव, सा तदर्थिनो नियमेन प्रवृत्तेर्बीजम्, तद्भक्षणे च नान्यभक्षणं स्यादिति । एतदप्ययुक्तम् । विकल्पानुपपत्तेः, विशेषरूपता हि सामान्याद्व्यतिरिक्ता वा स्यात्, अव्यतिरिक्ता वा । अव्यतिरिक्तत्वे तत्स्वरूपवन्न तस्यास्तत्त्वम् । व्यतिरिक्तत्वे च तदर्थिप्रवृत्तिविषयत्वात् तस्या एव वस्तुता । व्यतिरिक्ताव्यतिरिक्तेति चेत्, नन्वेवं विरोध इति त्यज्यतामुभयरूपवस्तुवादाभिमानः ।

तथा चोक्तम्-

"प्रवृत्तिनियमो न स्याद्विषादिषु तदर्थिनः ।
मोदकाद्यपृथग्भूतसामान्याभेदवृत्तिषु ॥ १ ॥
भेदे चोभयरूपैकवस्तुवादो न युज्यते ।
भेदाभेदविकल्पस्तु विरोधेनैव बाधितः ॥ २ ॥
विशेषरूपं यत्तेषु तत्प्रवृत्तेर्नियामकम् ।
साध्वेतत्किन्तु वस्तुत्वं तस्यैवेत्थं प्रसज्यते" ॥ ३ ॥

इहैवाभ्युच्चयमाह-किञ्चेत्यादिना । किञ्च । सामान्यविशेषोभयरूपत्वे सति वस्तुन । किमित्याह- सकललोकप्रसिद्धो य सव्यवहारनियमस्तदुच्छेदप्रसङ्ग । तद्भावनायैवाह- तथाहीत्यादि । तथाहीत्युपप्रदर्शने । विषमोदकक्षीरकर्कादिव्यक्तिभ्य कर्कोऽश्वविशेष , आदिशब्दाद्गजादिव्यक्तिग्रह , अभिन्नमव्यतिरिक्तम् , अनानास्वभावमचित्रस्वभावम्, एक सामान्य वर्त्तते । यदि नामैव तत किमित्याह-ततश्च न विषं विषमेवैकान्तत । मोदकाद्यभिन्नसामान्याव्यतिरेकात्कारणाद्विषस्य । नापि मोदको मोदक एव नियतरूपेण, विषाभिन्नसामान्याभेदान्मोदकस्य । कि तर्हि, उभयमपि विपमोदकलक्षणम् , उभयरूप शबलम्, इतरेतराभिन्नसामान्याभेदन विषमोदकरूपमित्यर्थ । ततश्च विषार्थी जन , विषे प्रवर्त्तेत मोदके च, तत्त्वत उभयोस्तुल्यत्वात् । एव मोदकार्थ्यपि मोदके प्रवर्त्तेत विषे च, भावना पूर्ववत् । न चैतदेव-

॥ अर्हम् ॥

श्रीयशोविजयजैनग्रन्थमाला [२३]

श्रीहेमविजयगणिविरचितं

# विजयप्रशस्तिमहाकाव्यम् ।

श्रीगुणविजयगणिविरचितया विजयप्रदीपिकया व्याख्यया सहितम् ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादाम्भोजचञ्चरीकायमाणाभ्या

श्रावकपं०-हरगोविन्ददास-बेचरदासाभ्यां संशोधितम् ।

तच्च

वीसनगरवास्तव्यश्रेष्ठिवर्यमूलचन्द्रात्मजगोकुलभाई-साहाय्येन

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये मुद्रित प्रकाशित च ।

वीरसवत् २४३७ ।

मूल्य रूप्यकपञ्चकम् ।

YASHOVIJAYA JAINA GRANTHAMALA, 23.



*THE*

# VIJAYAPRASHASTI

**OF**

**SHRI HEMAVIJAYA GANI**



WITH THE COMMENTARY,

**VIJAYAPRADEEPIKA**

**OF**

SHRI GUNAVIJAYA GANI

EDITED

UNDER THE PATRONAGE

**OF**

SHASTRAVISHARADA JAINACHARYA

**SHRI VIJAYA DHARMA SURI**

**BY**

*SHRAVAK PANDIT HARGOVINDDAS*

**AND**

*SHRAVAK PANDIT BECHARDAS*

WITH

THE PECUNIARY HELP OF

SHETH GOKULBHAI MULCHAND

OF VISNAGAR



*Printed and Published by Shah Harakhchand Bhurabhai at The DHarmabhyudaya Press, Benares city*



Veer–Era, 2437



Price, Rs 5–0–0

# प्रस्तावना ।



एतस्य विजयप्रशस्तिनाम्नो महाकाव्यस्य विनिर्मातृणा कविमतल्लिकाना श्रीहेमविजयगणीना सत्तासमय सप्तदशशताब्दीरूप, इति तैरेव स्वविरचितेषु ग्रन्थेषूपनिबद्धैस्तैस्तैरुल्लेखै सुस्पष्टं निष्टङ्कयते, तथाहि श्रीपार्श्वनाथचरितमहाकाव्ये—

"तस्याऽणुके निखिलशिष्यभुजिष्यरेखा
यस्मिन् समस्ति गणितेव विशारदेन्दो ।
श्रीपार्श्वनाथचरित रचयाञ्चकार
हर्षेण हेमविजय शिवलक्ष्मिकाङ्क्षी ॥
दृक् कृशानु रस-सोममितेऽब्दे शक्रमन्त्रिणि दिने द्वयसज्ञे ।
हस्तभे च बहुलेतरपक्षे फाल्गुनस्य, चरित व्यरचीदम्" ॥

श्रीऋषभशतकग्रन्थेऽपि—

"श्रीहीरहीरविजयव्रतिराजपट्ट-
पद्माशुमद्विजयसेनमुनीन्द्रराज्ये ।
श्रीस्तम्भतीर्थनगरे रस-बाण भूप
वर्षे समाप्तिमगमच्छतक सदर्थम्" ॥

श्रीकथारत्नाकरे च—

"अहिमन्नगरद्रङ्गे वर्षेऽश्वे-षु रसा-ऽवनौ ।
मूलमार्तण्डसयोगे चतुर्दश्या शुचौ शुचे" ॥

एभि श्रीहेमविजयगणिभि पार्श्वनाथमहाकाव्यम्, कथारत्नाकर, अन्योक्तिमुक्तामहोदधि, कीर्तिकल्लोलिनी, स्तुतित्रिदशतरङ्गिणी, सूक्तरत्नावली, कस्तूरीप्रकर, सद्भावशतकम्, विजयस्तुतय, इत्यादयबहवो विद्वत्तापरिपूर्णा ग्रन्था विनिर्ममिरे, येषामन्यथाऽनुपपद्यमानतया ग्रन्थकर्तॄणा विशिष्टक्षयोपशमाविर्भूतो नैसर्गिक, अन्यान्यविषयग्रन्थसन्दर्भविलोकनसत्कृतश्च संस्कृत प्रतिभाप्रकर्षो नि.सदिग्धमनुमीयते

विदग्धै । सवादमापादयन्ति चैतत् तेषा स्वगुरुभ्रातृत्व ख्यापयन्त श्रीगुणविजयगणयोऽप्यस्या ( विजयप्रशस्ते ) एव टीकाया प्रशस्तौ पद्यान्येतान्युपनिबध्नन्त –

"अथो बृहद्गुरो शिष्यो गुरोश्च गुरुसोदर ।
श्रीहेमविजयोऽभिज्ञो जज्ञे कविषु कुञ्जर ॥ ४७ ॥
श्रीहेमसुकवेस्तस्य हेमसूरेरिवाऽभवत् ।
वाग्लालित्य तथा देवे गुरौ भक्तिश्च भूयसी ॥ ४८ ॥
यदीया कविताकान्ता न केषा कौतुकावहा ? ।
विनाऽपि हि रजो यस्माद् यश सुतमसूत या ॥ ४९ ॥
तेन श्रीविजयसेनसूरे सर्वज्ञचित्तहृत् ।
स्वर्गकल्लोलिनीतुल्या कीर्तिकल्लोलिनी कृता ॥ ५० ॥
अन्येऽपि स्तुतित्रिदशतरङ्गिण्यादयो घना ।
रचयाञ्चक्रिरे ग्रन्था स्तोत्राणि शतश पुन ॥ ५१ ॥
चतुर्विंशत्यर्हता च विजयस्तुतय पुन ।
बाल्येऽप्यबालधीगम्य श्रीपार्श्वचरित महत् ॥ ५२ ॥
सद्भावशतक चापि कस्तूरीप्रकर पुन ।
सूक्तरत्नावलिश्चाप्यन्योक्तिमुक्तामहोदधि ॥ ५३ ॥
चक्रे वक्रेतरो येन कथारत्नाकर स्फुरन् ।
व्याख्यापीयूषलुब्धाना विबुधाना मनो हरन् ॥ ५४ ॥
इत्यादिग्रन्थविधौ सौधे कलसाधिरोपणसवर्णम् ।
विजयप्रशस्तिकाव्य तेन कृत विजयसेनगुरो " ॥ ५५ ॥

एतस्य विजयप्रशस्तिग्रन्थस्य षोडशसर्गीनिर्माणानन्तर वक्रगतिना दैवेन दैवी स्थितिमुपलम्भिता कविपुङ्गवा , इति तत्सब्रह्मचारिशिष्यैर्विज्ञप्रवरै श्रीगुणविजयगणिभिस्तदनुरूप सर्गपञ्चकमवशिष्ट प्रणीय ग्रन्थोऽय सम्पूर्णतया समर्थित । महाकाव्यत्वेन सासर्गिककाठिन्यस्य चैतस्य ग्रन्थस्य सुखावबोधाय तैरेव ( श्रीगुणविजयगणिभि ) विजयप्रदीपिकानाम्नी सरला टीकाऽप्यकारि । अस्याष्टीकाया विरचनाकाल टीकाकृद्भि , टीकाप्रशस्तिप्रान्तेऽनेन पद्येनैवमुपनिबद्ध –

"विजयप्रशस्तिकाव्यप्रकाशिका विजयदीपिका टीका ।
विदधे विक्रमनृपतेर्वर्षे वसु-वसु-नृप १६८८ प्रमिते" ॥ ६२ ॥

टीकाविनिर्मितिस्थलान्यपि तत्प्रशस्तौ ग्रन्थकृद्भिरेकेन श्लोकेन विनिर्दिष्टानि, स चायम्-

"प्रारब्धेलादुर्गे बह्वी विदधे च योधपुरदुर्गे ।
श्रीमालेऽपि च कियती श्रीरोहिण्या च पूर्णेयम्" ॥ ६४ ॥

एतयोश्च मूलकार-टीकाकारयो कविप्रवरयोरत्यासन्नसबन्धित्वेन ममानमेव गुरुपारम्पर्यम्, तच्च

"पूर्वं तपागणेऽभूवन् मुनिसुन्दरसूरय ।
तेषा राज्ये विरेजु श्रीलक्ष्मीभद्राभिधा बुधा" ॥ ३० ॥

इत्यादिभि पद्यै, टीकाकारा प्रशस्तौ विस्तरेण प्रत्यपीपदन्, इति तत एव विदाङ्कुर्वन्तु विद्वास ।

अधिकृत चात्र ग्रन्थे महामहिम्ना चातुर्वैद्यमहोदधीना श्रीहीरविजयसूरि-श्रीविजयसेनसूरिश्रीविजयदेवसूरीश्वराणामैतिहासिक सर्वं वृत्तान्तम् । सम्यग् निर्वर्णित च कविपुरन्दरै रससुधाधाराऽविघातीनि, सुसबद्धपद्धतिमलङ्कुर्वन्ति नानालङ्कारालङ्कृतानि पद्यान्युपन्यस्यद्भिर्विविधवस्तुवर्णनेन महाकाव्यानुरूपस्वरूपम् । प्रागद्त्तया विषयानुक्र-

---

१ एते सूरय श्रीजिनस्तोत्ररत्नकोश- उपदेशरत्नाकर-अध्यात्मकल्पद्रुम-गुर्वावल्यादीन् बहून ग्रन्थान् व्यररचन्, सहस्रावधानित्वेन च परा प्रसिद्धिमासादितवन्त ।

२ एभिरेव श्रीरत्नशेखरसूरीणा श्राद्धप्रतिक्रमणसूत्रवृत्ति सशोधिता, इति श्रीरत्नशेखरसूरय एव वैक्रमे षडङ्कविश्वमिते वर्षे रचिताया तस्यामुल्लिखन्ति-

"चातुर्वैद्योदधिभिर्दधिभिर्दधिशुद्धपरमपरभागम् ।
साऽशोध्यत प्रयत्नाल्लक्ष्मीभद्राह्वविबुधेन्द्रै" ॥

श्रीप्रतिष्ठासोमगणयोऽपि निजे सोमसौभाग्यकाव्ये तेषा विषये नामग्राहमेव वदन्ति—

विदुरहृत्पद्मप्रबोधांशुमान् ।
लक्ष्मीभद्रबुध

णिकया च सुज्ञै सुज्ञानमेतत् , इत्यलमत्र बहुना वक्तव्येनाम्माकम् ।

एतन्मुद्रणसमये यानि हस्तादर्शपुम्तकान्युपयोजितानि तानि तदुपलम्भकमहाशयाना धन्यवादपुरस्सर नामानि चात्रोल्लिख्यन्ते–

१ पन्न्यासश्रीसिद्धिविजयाना पुस्तकमेक नवीन नातिशुद्ध च ।

२ मुनिराजश्रीहसविजयाना " " "

३ वाराणसेययतिवर्यश्रीनेमिचन्द्राणा " प्राचीन प्राय शुद्ध च ।

४ श्रेष्ठिवर्यहीराचन्द्रात्मजवाडीलालद्वारा झवेरीवाडापार्श्वनाथाख्यभाण्डागारस्य प्राचीनमशुद्ध च ।

तदेव पुस्तकचतुष्काधारेण शोधितमुद्रितेऽत्र पुस्तकेऽस्मत्प्रमादसहकृतानि, अक्षरयोजकदोषनिबन्धनानि वा यानि स्खलनानि जातानि भवेयु , सौहार्दावदातहृदया सहृदया कृपया तानि विशोधयन्तु–

इति प्रार्थयेते—

हरगोविन्द–बेचरदासौ ।



# विजयप्रशस्तिकाव्यस्य विषयानुक्रमः ।

## अथ प्रथमः सर्गः ।



## अथ द्वितीयः सर्गः ।

## अथ तृतीयः सर्गः ।



## अथ चतुर्थः सर्गः ।

## अथ सप्तमः सर्गः ।



## अथाष्टमः सर्गः ।

## अथ नवमः सर्गः ।

## अथ द्वादशः सर्गः ।

## अथ त्रयोदशः सर्गः ।

## अथाष्टादशः सर्गः ।

## अथैकोनविंशः सर्गः ।

## अथ विंशः सर्गः ।

## अथैकविंशः सर्गः ।

## इति विजयप्रशस्तिकाव्यस्य विषयसूची समाप्ता ।



दत्त्वा रुचां स्तोममिवात्मनः स्वं
स्वाः प्रेषिताः शीतरुचा स्मिताक्ष्यः ॥ ४४ ॥

सुहासिनीसन्ततयः पौरपुरन्ध्रीधोरणयः, तदीये द्वारे समीयुः समभ्यागमन् । कीदृश्यः, अक्षतैर्लाजैः पूर्णानि पात्राणि माङ्गल्यभाजनानि यासां ता । इवेति वितर्के, आत्मन स्वस्य, स्वं धनं, रुचां स्तोमं ज्योतिषां जालं, दत्त्वा, स्वाः स्मिताक्ष्यो- निजा नार्य्यः, शीतरुचा चन्द्रेण, प्रेषिता इति पुत्रस्योपायनायेति प्रेक्ष्यम् ॥ ४४ ॥

सन्मौक्तिकस्वस्तिकशस्तमाभा-
त्तदङ्गण घौसृणघोललिप्तम् ।
प्रवालजालैर्जटिलाऽत्यखण्ड-
डिण्डीरपिण्डा वसुधेव वार्द्धेः ॥ ४५ ॥

घौसृणः कौङ्कुमो यो घोलः कुङ्कुमरसप्रसर इति, तेन लिप्तम् । पुनः, सन्तः श्रेष्ठा ये मौक्तिकाना मुक्ताफलानां स्वास्ति- कास्तैः शस्तं श्रेयः, तदङ्गणं तस्य श्रेष्ठिनो गृहाङ्गणं, आभाद् बभौ । अथोत्प्रेक्षां प्राह--वार्द्धेः समुद्रस्य, वसुधा महीव । कीदृशी, प्रवालजालैर्विद्रुमवृन्दैर्जटिला व्याप्ता । पुनः कि० अत्यखण्डाः प्रकामपूर्णा डिण्डीरस्य फेनस्य पिण्डा यस्यां साऽत्यखण्ड- डिण्डीरपिण्डेति काव्यस्य पिण्डार्थः ॥४५॥

तेजस्विनो मङ्गलमञ्जुबीज
रेजुस्तदोकस्यलमात्मदर्शाः ।
भासामधीशाः परिवारपद्मो-
ल्लासप्रदानैकपरा इवैते ॥ ४६ ॥

तदोकसि तस्य श्रेष्ठिनो गेहे, अलमत्यर्थं, आत्मदर्शा दर्पणाः, किं० तेजस्विनो ज्योतिष्मन्तः । पुनः किं० मङ्गलानां मञ्जु मनोज्ञं, बीजं निबन्धनं, रेजुर्भ्रेजुरित्यन्वयः । इवोत्प्रेक्ष्यते, एते भासामधीशाः सूर्याः । किं० परिवारस्य परिच्छदस्य या पद्मा लक्ष्मीस्तस्या य उल्लासस्तस्य प्रदानैकपराः; पक्षे परिवारभूतानि यानि पद्मानि कमलानि तेषां उल्लासप्रदानैकपराः परिवारपद्मोल्लासप्रदानैकपरा इति ॥ ४६ ॥

भान्ति स्म नीरन्ध्रमुदः पुरन्ध्र्य-
स्तस्यालये गीतमनोज्ञगीताः ।
उद्यानभूमाविव कान्तकण्ठ्यः
पिक्यः स्वरं पञ्चममुच्चरन्त्यः ॥ ४७ ॥

तस्य श्रेष्ठिन आलये नीरन्ध्रमुदः निबिडहर्षाः, पुरन्ध्र्यः कुटुम्बिन्यो भान्ति स्म । कीदृश्यः, गीतानि गानगोचरीकृतानि, मनोज्ञानि हृदयङ्गमानि, गीतानि गेयपदानि याभिस्ताः गीतमनोज्ञगीताः । दृष्टान्तमाह—इव यथा, उद्यानभूमौ वनावनौ कान्तकण्ठ्यः प्रियध्वनयः, पिक्यः कोकिलाः, सप्तसु षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषधनामकेषु स्वरेषु पञ्चमं संज्ञया सङ्ख्ययाऽपि च स्वरं ग्रामरागाद्यवतारमूलं उच्चरन्त्य इत्युद्गिरन्त्यः ॥ ४७ ॥

तदङ्गणे रङ्गिणि पञ्चवर्ण-
प्रोत्फुल्लपुष्पप्रकरो विरेजे ।
सोमारसौम्यासितशुक्रसूरि-
तारादिराजी सुरवर्त्मनीव ॥ ४८ ॥

तदङ्गणे तस्य श्रेष्ठिनो गृहाङ्गणे, किं० रङ्गिणि हर्षिणि,

रागिणि वा । पञ्च श्वेतपीतरक्तनीलश्यामला वर्णा यस्य स चासौ प्रोत्फुल्लः स्मेरश्चासौ पुष्पप्रकरः कुसुमस्तोमश्चेति कर्मधारयः स पञ्चवर्णप्रोत्फुल्लपुष्पप्रकरः, विरेजे राजति स्मेति । दृष्टान्तमाह— इव यथा, सुरवर्त्मनि गगने, सोमारसौम्यासितशुक्रसूरितारादि-राजी, तत्र सोमः शशी, आरो मङ्गलः, सौम्यो बुध , असितः शनिः, शुक्रो भृगुः, सूरिराचार्यस्तेनेहाचार्योऽधिकाराद् बृहस्प-ति । यदाहुर्ज्योतिर्विदः—"मासं रविबुधशुक्राः सार्द्ध भौमस्त्रयो-दशाचार्यः" इत्याद्युक्तेः सूरिर्गुरुस्ते च, अपरेऽपि च तारादयश्चेति द्वन्द्वस्तेन तेषा सोमारसौम्यासितशुक्रसूरितारादीना राजी श्रेणी राजत इति ॥ ४८ ॥

समानदान वरगीतगानं
सद्वन्दिघोषः पुरलोकपोषः ।
इत्युत्सवैस्तस्य गृह बभौ तत्
प्रमोदराजः किमु राजधानी ? ॥ ४९ ॥

संमानः सत्क्रियाविशेषस्तत्करणं संमानदानं पुनर्वरगी-तगानं धवलादिप्रदानं सधवस्त्रीभिरिति शेषः । पुनः, सद्वन्दि-घोषो भट्टब्राह्मणाद्याशीर्वादरूपः । पुनः, पुरलोकपोषः पुरलो-काना नगरजनानां भोज्यादिना पोषणं पोषः इति व्यावर्णि-तैरुत्सवैः तस्य कमाख्यस्य श्रेष्ठिनस्तदा तद् गृहं, बभौ शुशुभे। प्रमोदराजः हर्षभूपतेः कि राजधानी स्कन्धावारः मुख्यं निवा-सस्थानमिति तात्पर्यम् ॥ ४९ ॥

माता च वप्ता च सुतेन तेन
गिरामगम्या मुदमन्वभूताम् ।
पुलोमपुत्री च पुरन्दरश्च

कामं जयेनेव जयोर्जितेन ॥ ५० ॥

माता जननी, वप्ता पिता, तौ; तेन सुतेन, गिरामगम्यां वचनागोचरां, मुदं हर्षं, अन्वभूतां विदांबभूवतुः । दृष्टान्तोऽत्र यथा-पुलोमपुत्री शची, पुरन्दरः शक्रस्तौ जयेन जयदत्तेनेत्यत्र दृष्टान्ते दार्ष्टान्तिके च चकारद्वयं मातापित्रोस्समानहर्षख्यापनार्थमिति । अन्यत् स्पष्टम् ॥ ५० ॥

सिंहेन निद्रान्तरुदीक्षितेन
तरस्विना तेन च दोहदेन ।
द्विषां जये सिंह इवातिमात्र-
स्थामा सदाऽय भविताऽङ्गजन्मा ॥ ५१ ॥
मत्त्वेत्यतुच्छोत्सववत्सलाभ्यां
समानदानैर्मुदिताचलाभ्याम् ।
अमुष्य सूनोर्जयसिंह इत्य-
न्वर्थं पितृभ्यां विदधेऽभिधानम् ॥५२॥ (युग्मम्)

सिंहेन केसरिणा, कीदृशेन, निद्रान्तः स्वापमध्ये, उदीक्षितेन विलोकितेन, च पुन , तरस्विना बलीयसा, तेन शार्दूलकर्णग्रहणलक्षणेन दोहदेन, द्विषां रिपूणां, जये सिंह इव । कि० अतिमात्रमनर्गलं स्थाम बलं यस्य सः अतिमात्रस्थामा । अयमङ्गजन्मा तनुजो, भविता भावीत्यर्थः ॥ ५१ ॥ इति मत्वाऽतुच्छोत्सवे महति महे, वत्सलाभ्या स्नेहलाभ्यां, पुत्रोत्पत्तिनिमित्तोत्सवकरणप्रवणाभ्यामिति यावत् । पुनः कि० समानैः ससत्कारैर्दानैर्मुदिता अचला पृथिवी याभ्यां ताभ्यां, पितृभ्यां जननीजनकाभ्यां, अमुष्य सूनोः अस्य पुत्रस्य, जयसिंह इति अन्वर्थं सार्थकं, अभिधानं नाम, विदधे निर्मितमित्यर्थः ॥५२॥ युग्मव्याख्येयम् ।

अथ द्वाविंशत्या वृत्तैर्जयसिंहकुमारस्य बालचापल्यपुष्टितुष्टिचेष्टापांशुक्रीडादिकं कविर्वर्णयति—

स मातुरुत्सङ्गमभङ्गरङ्ग-
वृत्तेर्दुकूलाञ्चलशालिलीलः ।
विभूषयन् मूर्त इव प्रमोदः
कदाचिदत्यद्भुतमूर्त्तिरस्थात् ॥ ५३ ॥

स बालः, कदाचिदिति कस्मिंश्चित्समये, अभङ्गरङ्गे वृत्तिः प्रवृत्तिर्यस्यास्तस्या, मातुः कोडिमदेव्या, उत्सङ्गमङ्कं, विभूषयन्नस्थात् तस्थौ । स किं० दुकूलाञ्चलेन शालिनी शोभमाना लीला केलिर्यस्य सः, अत एव पुनः किं० अत्यद्भुताऽत्याश्चर्यकारिणी मूर्त्तिर्यस्य सः । इवोत्प्रेक्ष्यते-मातुर्मूर्त्तो मूर्त्तिमान् प्रमोदो-हर्ष इति ॥ ५३ ॥

स चारुचन्द्रोदयके दुकूल-
निचोलकः कोमलतूलिकायाम् ।
रेमे गुहायामिव सिंहशावः
श्रीपेशले पालनके कदाचित् ॥५४॥

स बालः, किं० दुकूलस्य निचोलः प्रच्छदपटो यस्य स दुकूलनिचोलकः, कदाचित् श्रिया शोभया, पेशले मनोहरे, पालनके, पुनः किं० चारुचन्द्रोदयके रम्यविताने रेमेऽरमत । कस्यामित्याह—कोमलतूलिकाया सुकुमालतूलशय्यायाम्; दृष्टान्तोऽत्र-इव यथा, गुहायां गिरिकन्दरायां, सिंहस्य शावो बालक इति ॥ ५४ ॥

विस्मेरपाथोरुहपेशलास्यः
सच्चक्रचेतःप्रणयप्रणेता ।

बभौ भृश कोडिमदेसखीना-

मङ्के कदाचिद् रुचिमानिवायम् ॥५५॥

विस्मेरं प्रोत्फुल्लं, यत् पाथोरुहं कमलं, तद्वत् पेशलमास्यं मुखं यस्य सः, पुनः कि० सच्चक्रचेतसां सज्जनसमूहमनसां, प्रणयप्रणेता प्रीतिकारकः, अयं बालः, कोडिमदेसखीनां मातुर्वयस्यानां, अङ्के उत्सङ्गे, भृशमतिशयेन, बभौ शोभते स्म । क इव रुचिमानिव सूर्य इव । तत्पक्षे विस्मेराणां पाथोरुहाणा पेशला आस्या स्थितिर्यस्माद् यत्र वेति सः । तस्योदये हि तेषां विस्मेरत्वापत्तेः । पुनः कि० सच्चक्रचेतःप्रणयप्रणेता सन्तो ये चक्राः कोकपक्षिणस्तच्चेतसां प्रणयप्रणेता प्रीतिकारीति ॥ ५५ ॥

कदाचिदुत्फुल्लविलोचनस्य

क्रोडे पितुः कोडिमदेतनूजः ।

अक्रीडदाक्रीडभुवीव हस्ति-

शावः सुख स्थूलकपोलमूलः ॥ ५६ ॥

कोडिमदेतनूजः स जयसिंहः, कदाचित् कुत्रचित् समये, उत्फुल्लविलोचनस्य स्मेरनयनस्य, पितुः कमाख्यश्रेष्ठिनः, क्रोडे उत्सङ्गे, अक्रीडत् क्रीडति स्मेति । दृष्टान्तं प्राह--आक्रीडभुवीव उद्यानमेदिन्यामिव, हस्तिशावो द्विपपोतः, द्वयोर्विशेषणमेकमेवाह--स्थूलकपोलमूल इति । स्थूले पुष्टिमापन्ने कपोलयोर्मूले यस्य स इति ॥ ५६ ॥

सोऽस्यां नगर्या व्यवहारिणोऽस्य

पुत्रः प्रियोऽभूदुदयन् जनानाम् ।

निशान्तविस्तारितकान्तरश्मिः

सरोरुहाणामिव तिग्मरश्मिः ॥ ५७ ॥

अस्य व्यवहारिणः कमाख्यस्य, पुत्रः स जयसिंहः, अस्यां नगर्या नारदपुर्या, उदयन् वृद्धिरूपामुन्नतिं व्रजन्, जनानां प्रियोऽभूत् वल्लभोऽभवदित्यर्थः। एतदेव दृष्टान्तेन स्पष्टयति--इव यथा, तिग्मरश्मिः सूर्यः, सरोरुहाणां पङ्केरुहाणां, प्रियो भवति। बालः सूर्यश्च कीदृश इत्याह--निशान्ते गृहे, विस्तारिता कान्ता रमणीया रश्मयः शरीरकान्तयो येन सः। सूर्यपक्षे निशाया अन्ते निशान्ते प्रभाते, विस्तारिता इत्याद्यग्रेतनं समीचीनमेवेति ॥ ५७ ॥

उल्लासयन् पुण्यपयोधिपाथः
प्रबोधयन् कोविदकैरवाणि ।
क्रमेण बालः स कलाऽभिलाषी
शशीव वृद्धिं बिभराम्बभूव ॥ ५८ ॥

पुण्यमेव पयोधिपाथः समुद्रसलिलं, उल्लासयन् समुन्नतिमानयन्। पुनः० कोविदाः पण्डिता एव कैरवाणि श्वेतोत्पलानि, प्रबोधयन् प्रफुल्लतां नयन्, क्रमेण स बालः, शशीव चन्द्रमा इव, कि० कलानां लिखितगणितादीना, पक्षे कलानां प्रतीतानाम् अभिलाषो यस्यास्तीति स कलाभिलाषी, वृद्धिं बिभराम्बभूव प्रावर्द्धतेत्यर्थ । किं चात्रानेन काव्यद्वयेन दिवाकरनिशाकरयोरुपमानग्रहणात् तस्य बालस्य भीमकान्तगुणात्मकता दर्शितेति तत्त्वम् ॥ ५८ ॥

रिङ्खन् प्रजल्पन्निपतन् प्रपश्य-
न्नश्नन् विनिघ्नन् प्रहसन् पिबंश्च ।
पित्रोर्मुदेऽभूज्जयसिंहशावः
सतां समस्तं हि मुदां निदानम् ॥ ५९ ॥

रिङ्खन् रिङ्खणं कुर्वन् उपविष्ट एव गच्छन्, पुनर्जल्पन्-

भिमुखं सम्भाषणं कुर्वन्, पुनर्निपतन् अध पतन्, पुन प्रपश्यन् स्वजनानां सन्मुखं विलोकयन्, पुन अश्नन् खादन्, पुन विनिघ्नन् चपेटादिना मारयन्, पुनर्हसन् स्मितं कुर्वन्, पुन पिबन् पानं कुर्वन्, स जयासिहशाव, पित्रोर्जननीजनकयोर्मुदेऽभूत् सन्तुष्ट्यै जातवान् । हि निश्चितं, सतां महतां, समस्तमखिलमव्यक्तचेष्टादि कर्मापि मुदा निदानं हर्षहेतु सर्वेषामपीति रहस्यम् ॥ ५९ ॥

प्रौज्झच्च कुण्ठत्वमिवाग्र्यकण्ठः
स क्षीरकण्ठत्वमकुण्ठमुख्यः ।
वयः प्रपेदे तनयः स पांशु-
क्रीडोचित चारुवयोवयस्यः ॥ ६० ॥

स बाल कि० अकुण्ठेषु प्रज्ञावत्सु, मुख्य, कुण्ठत्वमिव मूर्खत्वमिव, क्रमेण क्षीरकण्ठत्वं बालत्वं प्रौज्झत् त्यजति स्मेत्यन्वय । पुन स कि० अग्र्य. प्रधानो लक्षणोपेतत्वात् कण्ठो यस्य स । च पुन, स बाल पांशुक्रीडाया धूलिकेलेरुचितं योग्यं वय प्रपेदे । स कि० चारुवयसस्तुल्यवयस इति यावत्, वयस्या मित्राणि यस्य स इति ॥ ६० ॥

गेहाङ्गणे धूलिविधूसराङ्गः
पित्रोः प्रमोदं प्रथयन् प्रकामम् ।
रेमे कुमारैः सवयोभिरर्भैः
कूलेऽब्जजायाः कलभैरिवेभः ॥ ६१ ॥

धूल्या रेणुना, अर्थान्नगरत्रिकचतुष्कचत्वरादिसम्बन्धिना, विधूसरं अङ्गं यस्य स, धूलिधूसरतनुरिति, स बाल, गेहाङ्गणे मन्दिराजिरे, पित्रो कमाकोडिमदेव्यो, प्रमोदं प्रथयन्

विस्तारयन्, सवयोभि सुहृद्भि कुमारै सह रेमे रमते स्मेति। अत्र दृष्टान्तो यथा—अब्जश्चन्द्रस्तस्माज्जायत इत्यब्जजा "रेवेन्दुजा" इति श्रीहेमाचार्योक्ते अब्जजा नर्मदा, तस्या अब्जजाया नर्मदाया, कूले तटे, कलभैस्त्रिंशद्वार्षिकैर्गजैरिभो हस्ती, महानिति गम्यम्, यतोऽत्रोपमेयसाम्यात् इभोऽपि कलभरूप एव यूथाधिपतिराक्षिप्यते ॥ ६१ ॥

एकं स सादीव शिशुं तुरङ्गी-
कृत्य स्वय वाहयति स्म जातु ।
अनेकपीकृत्य कदाचिदेकं
सोऽर्भं महामात्र इवारुरोह ॥ ६२ ॥

जातु कदाचित्, स बालः, एकं शिशुं दारकं, तुरङ्गीकृत्य हयं विधाय, सादीवाऽश्ववारवद्, वाहयति स्मावाहयत् । कदाचित् पुन स बालः, एकमर्भं बालकं, अनेकपीकृत्य गजं विधाय, महामात्र इव गजाजीव इव, स्वयं आरुरोहारोहति स्मेति ॥६२॥

स वाहयामास वृषौ विधाय
शिशू स्वय सूत इव स्वगन्त्रीम् ।
स विश्वकर्मेव चकार केली-
गृहाणि मृत्स्नाभिरकर्कशाभिः ॥ ६३ ॥

स बालः, द्वौ शिशू बालौ, वृषौ बलीवर्दौ, विधाय; सूत इव सारथिरिव, स्वगन्त्री निजक्रीडावाहनिका, वाहयामास । पुन स बालः, विश्वकर्मेव देववर्द्धकीव, अकर्कशाभिर्मृद्वीभि, मृत्स्नाभिर्मृद्भिर्मृत्तिकाभिरिति यावत्, केलीगृहाणि धूलीरूपाणि, चकार अकार्षीत् ॥ ६३ ॥

आरोहति स्मैष पुरः पुरस्तात्

पर्यन्तभूवर्त्तिषु भूरुहेषु ।
शाखासु शाखामृगवद् भ्रमश्च
तेषा स पक्कानि फलान्यखादत् ॥ ६४ ॥

एष बाल, पुर पुर्य्या नारदपुर्य्या इति यावत्, पर्यन्तभवर्तिषु परिसरस्थेषु, भूरुहेषु कारस्करेषु सहकारराजादनेङ्गुदीदाडिमीकदलीकर्कन्धुप्रमुखेषु, आरोहति स्मारूढवान् । कथं० पुरस्तात् अग्रतोऽपरदारकेभ्यश्छेकतयेति शेषः । च पुनस्तेषा शाखिना शाखासु, शाखामृगवत् कपिरिव, भ्रमन् स कुमारः, पक्कानि परिणतानि, फलानि अखादद्भक्षयति स्मेति ॥६४॥

सस्नौ स सस्नेहमथो पुरस्य
समीपगाया सुभगापगायाम् ।
प्रोत्फुल्लपाथोरुहपेशलायां
स्वर्निम्नगायामिव राजहंसः ॥ ६५ ॥

अथो कदाचित्, स बालः, पुरस्य नगरस्य, समीपगायां सविधवर्त्तिन्यां, सुभगापगायां मनोहरतरङ्गिण्यां, सस्नौ स्नानं व्यधात् । यथा प्रोत्फुल्लपाथोरुहपेशलायां विस्मेराम्भोरुहबन्धुराया, स्वर्निम्नगायां गङ्गाया, राजहंस इवेति दृष्टान्तः ॥६५॥

नानाविनोदै रममाणमेव-
मालोक्य बालं मुमुदे सवित्री ।
मत्ताः करीन्द्रा इव सूनवोऽर्भा
उच्छृङ्खला एव हि तुष्टये स्युः ॥ ६६ ॥

एवमिति व्यावर्णितस्वरूपैः, नानाविनोदैर्विविधविलासैः, रममाणं क्रीडन्तं, बालं विलोक्य, सवित्री माता, मुमुदे हर्षमधात् ।

अमुमेवार्थं समर्थयति -यतः कारणात् अमी बाल्यभाजः, सूनवः पुत्राः, उच्छृङ्खलाश्चापल्यशालिन एव तुष्टये तोषाय, स्युः, सवित्रीवप्त्रोरिति शेषः । यथा मत्ता मदवन्तः करीन्द्रा गजेन्द्राः, उच्छृङ्खला एव तुष्टये भवन्तीति दृष्टान्तः । तथाचोक्तं सूक्तकृता—"वर्षाकाले नद्यः शयने प्रमदा मदोद्धताः करिणः । बालत्वे च कुमारा अविनीता एव शोभन्ते" इत्युक्तेरिति ॥ ६६ ॥

हंसीव फुल्लं नवपुण्डरीकं
हृष्टा हृदाऽम्बाऽथ तमालिलिङ्ग ।
पुष्पं सदामोदमिवालिनी तं
माता मुहुश्चारु चुचुम्ब मूर्ध्नि ॥ ६७ ॥

हंसी राजहंसी, यथा फुल्लं विकसितं, नवपुण्डरीकं, तथेति निदर्शने, अम्बा माता, हृष्टा सती, हृदा हृदयेन, तं बालकं, आलिलिङ्गालिङ्गति स्म । पुनः, सदामोदं सगन्धं सहर्षं च, पुष्पं प्रसूनं, अलिनीव भ्रमरीव, तं माता, मुहुरसकृद्, वारं वारमिति यावत् । मूर्ध्नि मस्तके, चुचुम्ब चुम्बति स्म । चार्विति क्रियाविशेषणम् ॥ ६७ ॥

सत्रा स्वमात्राऽऽर्हतमन्दिरान्तः
शिशुः स तत्र प्रतिमा अनंसीत् ।
प्रत्येकमासन्नमुपाश्रयस्था-
नुक्तोऽम्बया स श्रमणान् ववन्दे ॥६८॥

स शिशुर्जयसिंहबालः, कदाचित् मात्रा सत्रा जनन्या सह, आर्हतमन्दिरान्तर्जिनभवनमध्ये, प्रतिमा अर्हन्मूर्त्तीः, अनंसीत् प्रणमति स्मेति । पुनः, स बालोऽम्बया जनन्या, उक्तो मुनीन् नमेति वाक्येन प्रणुन्नः सन्, उपाश्रयस्थान् पौषधशालास्थि-

नान्, श्रमणान् साधून्, ववन्दे वन्दते स्म । कथमित्याह–प्रत्येकमासन्नं चेति क्रियाविशेषणद्वयम्, ततः समीपं गत्वा, प्रत्येकं प्रत्येकं वन्दते स्मेति तत्त्वम् ॥ ६८ ॥

मात्राऽतिमात्रं परमेष्ठिमन्त्रं
स पाठ्यमानं पठति स्म धीमान् ।
सद्वंशजन्मावनिजन्मनो यत्
फलत्रयीयं गदिताऽऽगमज्ञैः ॥ ६९ ॥

पुनर्मात्रा कोडिमदेव्या, पाठ्यमानमभ्याप्यमानं, परमेष्ठिमन्त्रं पञ्चनमस्कारं, स धीमान् मतिमान्, अतिमात्रं प्रकामं, पठति स्मेति । पश्चिमार्द्धेन प्रतिपादितमेवार्थं समर्थयन् प्रस्तावनामाह–यदिति यस्मात्कारणात्, सद्वंशजन्मावनिजन्मन श्रावककुलावतारतरोः, इयं प्राग्निरूपितस्वरूपा जिननमनगुरुवन्दननमस्कारभणनलक्षणा फलत्रयी, आगमज्ञैर्ज्ञानिभिः, गदिता जगदे। अर्थतो युग्ममिदं व्याख्यातमिति ॥ ६९ ॥

छायास्पदं वाञ्छितवित्तदाता
सुपर्वशाली सुमनोऽभिरामः ।
कल्पद्रुमाङ्कूर इवैष बालः
प्रवर्द्धमानोऽतिमुदे बभूव ॥ ७० ॥

एष बालः, कल्पद्रुमाङ्कूर इव प्रवर्द्धमानः सन्, अतिमुदे बहुहर्षाय, बभूव, पित्रोरिति शेषः । अथ द्वयोरपि बालककल्पवृक्षाङ्कुरयोस्तुल्यविशेषणद्वारा समानधर्मतामाह–छायायाः शोभाया आस्पदं पदं, पक्षे छायाया अनातपस्य आतपाभावस्येति यावत्, यदनेकार्थः–"छायाऽनातपे शोभायां च" इति । पुनः किं० वाञ्छितवित्तदाता कामितार्थप्रदः, इदं द्वयोरपि

तुल्यमेव विशेषणम् । पुनः कि० सुपर्ववत् देववत् शाली शोभमानः, सुपर्वभिः शोभनोत्सवैः शालीति वा, पक्षे सुपर्वभिर्देवैः शाली । पुनः कि० सुष्ठु शोभनं मनो येषां ते सुमनसः पण्डितास्तान् अभिरामयतीति सुमनोभिरामः, पक्षे सुमनोभिः कुसुमैरभिरामो रमणीय इति ॥ ७० ॥

सलक्षणं बन्धुरधातुसन्धि-
बन्ध सदाख्यातमुदारपादम् ।
जहार चेतांसि सता सुवर्णा-
लङ्कारभृत् काव्यमिवाङ्गमस्य ॥ ७१ ॥

अस्य बालस्य, अङ्गं शरीरं, काव्यमिव ग्रन्थवत्, सतां चेतांसि जहाराऽहरदित्यन्वयः । द्वयोर्विशेषणद्वारा तुल्यत्वं व्यनक्ति–अङ्गं कि० सह लक्षणैश्छत्रचामरतामरसतोमरद्विपनिपद्मीपद्मीपिसिन्धुसैन्धवध्वजादिभिः, अथवा "इह भवति सप्तरक्तः षडुन्नतः" इत्यादिश्लोकोक्तैर्द्वात्रिंशता लक्षणैर्वर्त्तते यत्तत्, पक्षे सह लक्षणेन व्याकरणेनाऽथवा लक्षणैः काव्यलक्षणैर्दूषणहानभूषणदानादिभिर्वर्त्तते यत् तत् । पुनः बन्धुरा मनोहरा धातवो रसासृग्मांसमेदोऽस्थिमज्जशुक्राख्याः सप्त, सन्धीना चाङ्गोपाङ्गादिसंबन्धिना बन्धा बन्धनानि यत्र तत्; पक्षे बन्धुरो धातूनां भ्वादीनां सन्धीनां स्वरसन्धिप्रमुखाणां च बन्धो गुम्फो यत्र तत् । पुनः कि० सदा नित्यं ख्यातं प्रसिद्धिं प्राप्तं, पक्षे सन् विद्यमान आख्यातस्त्यादिविभक्तिरूपो यत्र तत् । पुनः कि० उदारौ पादौ चरणौ यत्र तत्, पक्षे उदाराः पादा वृत्तश्लोकादितुरीयांशरूपा यत्र, अथवा पादाः पदानि विभक्त्यन्तानि यत्र तत् । पुनः कि० सुवर्णालङ्कारभृत् काञ्चनाभरणधारि, पक्षे सुवर्णाः शोभनाक्षराणि अलङ्काराश्च चित्रादयस्तान्

बिभर्तीति तदित्यर्थः ॥ ७१ ॥

अशोकशाली तिलकाभिरामः
कान्तालिकः पेशलबालजालः ।
लसत्प्रवालाह्नितलः सुमाढ्यो
बभौ वनोद्देश इवास्य देहः ॥ ७२ ॥

अस्य बालस्य, वनोद्देश इव काननप्रदेश इव, देहः कायः, बभौ। द्वावपि विशिनष्टि-कि० अशोकशाली न शोकशाली अशोकशाली, पक्षे अशोकेन वृक्षविशेषेण शाली। पुनः कि० तिलकेन पुण्ड्रेण अभिरामः, पक्षे तिलकैर्वृक्षैरिति। पुनः कि० कान्तं प्रियं अलिकं भालं यस्य सः, पक्षे कान्ता अलिनो भ्रमरा यत्र सः, स्वार्थे क इति कान्तालिकः। पुनः कि० पेशलं बालजालं केशकलापो यस्य सः, पक्षे बालो ह्रीबेरस्तज्जालं यत्र तत् । पुनः कि० लसत्प्रवालवत् स्फुरद्विद्रुमवत् रक्तं अंह्रितलं यस्य सः, पक्षे लसन्तः प्रवाला नवीनकिशलयाः, अंह्रयो द्रुममूलानि च, तलास्तालाभिधानास्तरुविशेषाश्च यत्र सः । पुनः कि० सुमया शोभनश्रिया आढ्यः, पक्षे सुमैः कुसुमैरिति। शेषं पूर्ववत् ॥७२॥

सरस्वतीशोभितमध्यदेश
विशालशङ्ख वरकेशपाशम् ।
कुन्दावदातद्विजराजमानं
तदास्यमम्भोनिधितां बभार ॥ ७३ ॥

तस्य बालस्य, आस्यं वदनं, अम्भोनिधितां समुद्रभावं, बभारेत्यन्वयः । अथ तद्धेतुभूतानि द्व्यर्थानि विशेषणान्याह— कि० सरस्वत्या वाण्या शोभितो भूषितो मध्यदेशोऽन्तरप्रदेशो यस्य तत्, पक्षे सरस्वतीभिस्तटिनीभिः, अग्रेतनं तथैव। पुनः कि०

विशालौ विस्तीर्णौ शङ्खौ भालश्रोत्रान्तररूपौ शरीरावयवविशेषौ यत्र तत्, पक्षे विशालाः शङ्खाः कम्बवो यत्र । पुनः कि० वरः प्रवरः केशपाशो मूर्द्धजव्रजो यत्र तत्, पक्षे केशो वरुणस्तस्य पाशोऽस्त्रं यत्र । पुनः कि० कुन्दावदाता ये द्विजा दन्तास्तै राजमानं भ्राजमानम्, पक्षे कुन्दावदाता ये द्विजाः पक्षिणः अर्थात् राजहंसास्तैरिति । अपरं पूर्ववत् ॥ ७३ ॥

सदब्जवास श्रुतिशालि हारि-
ब्राह्मीकमत्यद्भुतपुष्पदन्तम् ।
उल्लासभृत्सौम्यमुदारतारं
व्योमेव भाति स्म तदास्यमुच्चैः ॥ ७४ ॥

तस्य बालस्यास्यं व्योमेव गगनमिव, भाति स्मेत्यन्वय । श्लिष्टविशेषणैस्तत्तुल्यतां व्यनक्ति—कि० सती श्लाघ्याऽब्जवासा लक्ष्मीर्यस्य तत्, पक्षे सन् विद्यमानोऽब्जस्य चन्द्रमसो वासो वसतिर्यत्र । पुनः कि० श्रुतिभ्या श्रवणाभ्यां कर्णाभ्यामिति यावत्, शालि मनोज्ञम्, पक्षे श्रुतिः श्रवणनामकं नक्षत्रं तेन शालि । पुनः, हारिणी रम्या ब्राह्मी वाग् यत्र तत्, के ब्राह्मीकम्, पक्षे ब्राह्मी रोहिणी यत्र । पुनः किं० अतिशयेनाद्भुतानि यानि पुष्पाणि कुसुमानि तद्वद्दन्ता रदा यत्र तत्, पक्षे अत्यद्भुतौ पुष्पदन्तौ सूर्याचन्द्रमसौ यत्र । पुनः कि० उल्लासभृत् अत एव सौम्यं प्रसन्नम्, पक्षे उल्लासभृत् सौम्यो बुधो यत्र । पुनः कि० उदारे तारे कनीनिके यत्र तत्, पक्षे उदारास्तारास्तारका यत्रेति ॥ ७४ ॥

इत्युक्तं बाल्यचापल्यचेष्टावपुःपुष्ट्यादिवर्णनम्, अथाग्रेतनं वृत्त षड्भिर्वृत्तैर्वर्णयति—

अन्येद्युरानन्दितसर्वपौरं

रूपश्रिया काममिवाभिरामम् ।
अवीतिधुर्यं निजमात्मजं तं
दृष्ट्वा पितृभ्यामिति हृद्यचिन्ति ॥ ७५ ॥

अन्येद्युरेकदा, आनन्दिताः सर्वे पौरा येन तम्। पुनः किं० रूपश्रिया सौन्दर्य्यसंपत्त्या, काममिवाभिरामं कन्दर्पमिवोत्प्रेक्ष्यम् । पुनः किं० अवीतिधुर्यं पठनसमर्थं, तं निजमात्मजं जयसिंहं, दृष्ट्वा, पितृभ्या कमाकोडिमदेवीभ्या, हृदि मनसि, इति वक्ष्यमाणम्, अचिन्ति चिन्तितम् ॥ ७५ ॥

सौभाग्यभाज्यप्यतिरूपवत्य-
प्यलङ्कृते चाप्यतिवल्लभेऽपि ।
न किंशुकस्येव सुमे जनः स्यात्
कृतादरो मातृमुखे तनूजे ॥ ७६ ॥

पूर्वस्मिन् काव्ये यदचिन्तीत्युक्तं तदेवाह—सौभाग्यभाजि सुभगेऽपि। पुनः किं० अतिरूपवति सुरूपेऽपि। पुनः किं० अलङ्कृते भूषणादिभिर्भूषितेऽपि । पुनः किं० अतिवल्लभे भृशं प्रियेऽपि । किंशुकस्य वृक्षविशेषस्य सुमे पुष्प इव यथा कोऽपि जनः कृतादरो न स्यात्, तथा मातृमुखे तनूजे मूर्खे पुत्रे, पूर्वोक्तविशेषणविशिष्टेऽपि सभाजनः कोऽपि नादरं कुर्वीतेति भावार्थः ॥७६॥

मत्वेति चित्ते तिथिवारधिष्ण्य-
लग्नादिशुद्धिं प्रविधाय सम्यक् ।
सम्पूर्णकामौ सुतलेखशालो-
त्सवोत्सुकौ तौ पितरावभूताम् ॥ ७७ ॥

इति चित्ते मनसि, मत्वा ज्ञात्वा, तिथिः प्रतिपदादिः, वार

सूर्यादिवासरः, धिष्ण्यं नक्षत्रम्, अश्विन्यादिः लग्नं मेषादि, तेषा, आदिशब्दात्करणयोगादीना च सम्यक् शुद्धि शुद्धमुहूर्त्तनिर्णीति, प्रविधाय कृत्वा, ज्योतिषिकद्वारेणेति शेषः; संपूर्णः संपन्नः, कामः सुतजन्मवृद्ध्यादिलक्षणोऽभिलाषो ययोस्तौ, सुतलेखशालोत्सवोत्सुकौ सुतस्य लेखशालायां पाठशालायां, य उत्सवस्तत्र प्रेषणोत्सवस्तत्रोत्सुकौ तत्परौ, तौ पितरौ, अभूतां जातौ ॥ ७७ ॥

नानादुकूलैः सततानुकूलैः
सन्मण्डपोऽमण्डि गृहे स्वकीये ।
श्रान्तिच्छिदे तत्र पुरेऽत्यदभ्रैः
किं प्रावृषेण्यैरवतीर्णमभ्रैः १ ॥ ७८ ॥

नानादुकूलैर्विविधपट्टकूलैः, किं० सततं नित्यं, अनुकूलैश्छायादिसुखहेतुत्वात्, स्वकीये आत्मीये, गृहे सन्मण्डपोऽमण्डि मण्डितः, ताभ्या पितृभ्यामिति शेषः । तत्र पुरेऽत्यदभ्रैर्भृशं भूरिभिः, अभ्रैर्वार्दलैः, कीदृशैः, प्रावृषेण्यैर्वर्षाकालोद्भवैः, पञ्चवर्णैरिति; श्रान्तिच्छिदे श्रमनाशाय, किमवतीर्णं किमुत्तीर्णमिति ? ॥ ७८ ॥

सर्वोऽपि पौरोऽद्भुतभक्तिगौरो
भुङ्क्ते स्म तत्र प्रचुरादरेण ।
सद्यो मनोमोदकमोदकादि-
पक्वान्नपङ्क्त्या सुधयेव साक्षात् ॥७९॥

अद्भुतभक्त्या कमाख्यव्यवहारिराचितया, गौरो विशदः प्रसन्नत्वेनोज्ज्वल इति, सर्वोऽपि पौरो नारदपुरीमहाजनः, प्रचुरादरेण, तत्र भुङ्क्ते स्माऽभुङ्क्त । कयेत्याह—मनोमोदकाश्वि-

१

त्ताह्लादकारका ये मोदका लड्डुकास्तदादीनि यानि पक्वान्नानि घृतपूरखण्डखाद्यलपनश्रीमौक्तिकचूर्णप्रमुखाणि तेषां पङ्क्त्या श्रेण्या, साक्षात्प्रत्यक्षं, सुधया अमृतेनेव, माधुर्येणेति शेषः ॥७९॥

सुशालिदालिप्रचुराज्यपालि-
शाकैश्च साकं बुभुजेऽत्र लोकः ।
जहर्ष पूर्जेमनवारवार-
पर्वण्यसौ वर्षति भूरिवाब्दे ॥ ८० ॥

सु शोभनाः शालयः कलमाद्याः, दालयश्च मुद्गदालिप्रभृतयः, प्रचुरा आज्यपालयो घनघृतधोरणयः, शाकाश्च जीवन्तीप्रभृतयस्तैः, साकं सार्द्धं, तथा लोको बुभुजे यथा जेमनवारस्य सकुटुम्बसकललोकभुक्तिनिर्मितिरूपस्य यो वारोऽवसरस्तल्लक्षणं यत् पर्वोत्सवस्तत्र जेमनवारवारपर्वणि, असौ पूर्नारदपुरी, जहर्ष हर्षवती जातेति । अत्र श्रेष्ठिना निर्विशेषेणाऽशेषा अपि लोका यथेच्छं भोजनं कारिता इत्यसूचि, अन्यथा निखिलाया नगर्या हर्षानुपपत्तेरिति दिक् । दृष्टान्तोऽत्र—अब्दे जलदे, वर्षति सति भूरिव पृथिवीवेति ॥ ८० ॥

अथ षड्भिः काव्यैर्लेखशालाकरणं वर्णयति—

मृदङ्गचङ्गादिकवर्यतूर्य-
व्रजे शुभोल्लासिनि वाद्यमाने ।
मङ्गल्यगीतेषु च गीयमाने-
षूच्चैःस्वरं हासिसुहासिनीभिः ॥ ८१ ॥

शुभस्य कल्याणस्य, उल्लासो यस्मिन् यस्माद् वा तस्मिन् शुभोल्लासिनि, मृदङ्गचङ्गादीनां वर्यतूर्याणां, व्रजे समुदये,

वाद्यमाने सति; पुनर्हासिन्यो हास्यवत्यो विस्मितानना इति यावत्; याः सुहासिन्यः सधवयुवत्यस्ताभिः हासिसुहासिनीभिः, मङ्गल्येषु मनोहरेषु गीतेषु धवलध्वनिरूपेषु, गीयमानेषु सत्सु, कथम्, उच्चैःस्वरं यथा भवति तथेति क्रियाविशेषणम् ॥ ८१ ॥

भुजङ्गवल्लीदलनालिकेर-
वस्त्रादिके वस्तुनि दीयमाने ।
पदे पदे पुष्कललक्ष्मिदानैः
सार्थेऽर्थिनामध्वनि तोष्यमाणे ॥ ८२ ॥

भुजङ्गवल्लीना नागलताना, यानि दलानि पत्राणि, पुनर्नालिकेरवस्त्राणि प्रतीतानि, तदादिके तत्प्रमुखे, वस्तुनि दीयमाने सति। पुन , पदे पदे इति स्थाने स्थाने विश्रामादाने, पुष्कललक्ष्म्या बहुलक्ष्म्या दानैर्वितरणैः, अर्थिना सार्थे समूहे, अध्वनि पथि, तोष्यमाणे सति ॥ ८२ ॥

पुरः पुरः पौरनरेषु शीघ्र
गच्छत्स्वनर्घ्याभरणाद्भुतेषु ।
अमन्दमानन्दभरेण माता-
पित्रोर्मनस्सद्मनि पूर्यमाणे ॥ ८३ ॥

अनर्घ्याभरणाद्भुतेषु बहुमूल्यभूषणभूषितत्वादाश्चर्यकारिषु, पौरनरेषु नागरजनेषु, पुरः पुरोऽग्रतोऽग्रतः, शीघ्रं गच्छत्सु व्रजत्सु सत्सु। पुन अमन्दं यथा स्यात् तथा, आनन्दभरेण हर्षप्रकर्षेण, मातापित्रोर्जननीजनकयो , मनःसद्मनि हृदयमन्दिरे, पूर्यमाणे सति ॥ ८३ ॥

अथ काव्यत्रयेण कुमारस्य वर्णनमाह–

ताम्बूलपूर्णास्य उदारपुष्प-

दामाभिरामः शुचिशुद्धवासाः ।
सविस्मय काम इवाङ्गनाभि-
र्गवाक्षलक्षैर्मुहुरीक्ष्यमाणः ॥ ८४ ॥

स कि०, ताम्बूलेन ताम्बूलीदलपूगीफलादिरूपेण पूर्ण पूरितं आस्यं यस्य स ताम्बूलपूर्णास्यः । पुन कि०, उदाराणा स्फाराणा, पुष्पाणां जातीजपायूथिकामरुबकदमनकचम्पकादीना, दामभिः स्रग्भिः, अभिरामो रम्य इति । पुनः कि०, शुचिशुद्धवासाः शुचीनि धवलानि, शुद्धानि निर्मलानि, वासासि वस्त्राणि यस्य सः । पुनः कि क्रियमाण इत्याह—सविस्मयं सदर्प साश्चर्य वा, अङ्गनाभिर्वधूभिः, गवाक्षाणां जालानां, लक्षैः, मुहुरित्यसकृत्, काम इव, वीक्ष्यमाणो विलोक्यमानः ॥ ८४ ॥

उदारचामीकरशृङ्खलाङ्के
सिन्दूरपूरे द्विरदेऽधिरूढः ।
ऐरावणे स्वर्णविभूषणौघै-
र्विभूषितः सूनुरिवाद्रिशत्रोः ॥ ८५ ॥

उदारचामीकरशृङ्खलस्य चारुकाञ्चनशृङ्खलस्य, अङ्को भूषा यस्मिस्तस्मिन्, पुनः, सिन्दूरस्य पूरो विस्तारो यत्र तत्र, द्विरदे हस्तिनि, अधिरूढः । पुनः कि०, विभूषितोऽलङ्कृतः, कैरित्याह—स्वर्णविभूषणौघैः हिरण्मयाभरणगणैः । इवोत्प्रेक्ष्यते, ऐरावणेऽधिरूढ अद्रिशत्रोः शक्रस्य, सूनुर्जयदत्त इवेति ॥८५॥

शस्तक्षणैरीक्षणवीक्षणैः स्वै-
स्तां पावयन् पुण्यपुरं पुरी सः ।

क्रमात् कुमारो वरलेखशाला-

द्वारं श्रियां धाम समाजगाम ॥ ८६ ॥

"उत्साहोत्सवयो क्षणः" इत्याद्युक्तेः शस्तः प्रशस्त क्षण उत्साहो येषु तैः, अथवा शस्तः क्षण उत्सवो येभ्यस्तैः शस्त-क्षणैः, ईक्षणवीक्षणैर्लोचनालोकनैः, स्वैः स्वकीयैः, तां पुरी, नारदपुरी नगरी, कीदृशी पुण्यस्य धर्मस्य, पुरं गृहं, पावयन् पवित्रयन्, क्रमात् शनैः शनैर्गच्छन्, कुमारो जयसिंह, वरा प्रधाना या लेखशाला अध्यापकधाम तद्द्वारं, कि० श्रियां धाम शोभाऽऽस्पदं,शृङ्गारितत्वात् ; समाजगाम प्राप्तवान्। इति व्याख्यातमन्त्यक्रियं षड्भिः कुलकम् ॥ ८६ ॥

अथ कियद्भिः काव्यै कुमारस्य लेखशालाप्रवेशपाठादि वर्णयति—

उत्तीर्य चातुर्यनिधिः स कुम्भि-

कुम्भस्थलात् कुम्भ इवामराणाम् ।

यच्छन् मनःकामितमर्थमुच्चै-

स्तां प्राविशत् पण्डितलेखशालाम् ॥ ८७ ॥

स जयसिंहकुमारः, कीदृश , चातुर्यस्य वैदग्ध्यस्य, निधि-र्निधानं, कुम्भिनो हस्तिन , कुम्भस्थलात् उत्तीर्य, अमराणा कुम्भ इव कामघट इव, मनःकामितं चेतश्चिन्तितं, अर्थं वित्तं, यच्छन् वितरन्, याचकेभ्य इति शेषः । तां पण्डितलेखशाला प्राविश-त्प्रविष्ट इति ॥ ८७ ॥

आनर्च तत्र श्रुतदेवतां स

मुक्ताफलैः काञ्चनभूषणैश्च ।

यदर्चिता कल्पलतेव दत्ते

सद्यः सतां वाञ्छितमर्थमेषा ॥ ८८ ॥

स तत्र लेखशालायां, पूर्वं श्रुतदेवता सरस्वती, आनर्चाऽपूजयत् । कैरित्याह–मुक्ताफलैर्मौक्तिकैः, पुनः काञ्चनभूषणैः सुवर्णाभरणैः । पूजने हेतुमेवाह–यत् यस्मात् कारणादेषा श्रुतदेवताऽर्चिता सती, सतां वाञ्छितमर्थं विद्याविवेकवाल्लभ्यवैदग्ध्यादिरूपं, कल्पलतेव, दत्ते ददातीति ॥ ८८ ॥

दिव्यैर्दुकूलैः कनकैर्धनैश्च

गुरुं ततः सत्कुरुते स्म सोऽथ ।

निहन्ति जाड्यं ध्रुवमर्यमेव

यतः स सत्कारमनोहरास्यः ॥ ८९ ॥

दिव्यैरद्भुतैः, दुकूलैः पट्टकूलसंबन्धियौतिकादिरूपैरिति शेषः । च पुनः, कनकैः सुवर्णमुद्रिकादिरूपैरिति । पुनः,धनैर्नाणकैः रूप्यकप्रमुखैरिति शेष । गुरुं पाठकं, स बाल , सत्कुरुते स्म । तस्यैव हेतुमाह–यत इति । यतो हेतो ,स गुरु सत्कारेण संमानदानबहुमानप्रदानलक्षणेन मनोहरं आस्यं यस्य स सत्कारमनोहरास्यः सन् , अर्यमेव सूर्य इव, जाड्यं मौर्ख्यं, निहन्ति, पक्षे जाड्यं शैत्यमित्यर्थः ॥ ८९ ॥

खर्जूरपूगीफलनालिकेर-

सितोपलाभाजनमोदकाद्यैः ।

सच्चक्रिरे तेन च लेखशाला-

धाम्नीह पूर्वं शिशवो भणन्तः ॥ ९० ॥

खर्जूरपूगीफलनालिकेरसितोपलाभाजनमोदकाः सुखभक्षिकाविशेषास्तैः आद्यशब्दात् पट्टिकालेखनिकावर्तनकैरिति शेषः । तेन जयसिंहेन, लेखशालायां पूर्वं पुरा भणन्तः शिशवो

बालका लेखशालिका, मम सहाध्यायिनो भाविन इति धिया सच्चक्रिरे सत्क्रियन्ते स्मेति ॥ ९० ॥

अल्पैर्दिनैस्तत्र समस्तविद्या-
संक्रान्तिरासीत् प्रतिभाप्रकाशे ।
कालः कियान् स्यान्मुकुरे करस्थे
बिम्बस्य यातः प्रतिबिम्बभावम् ? ॥ ९१ ॥

तत्र बाले, कीदृशे, प्रतिभाया बुद्ध्याः प्रकाशः पाटवं यत्र तत्र, अल्पैर्दिनैः स्तोकैर्वासरैः, समस्तविद्यासंक्रान्तिः सकलशास्त्र-ज्ञानसंक्रमः, आसीज्जातवान्। दृष्टान्तेनामुमेवार्थं समर्थयति-मुकुरे दर्पणे, करस्थे हस्ततलगते सति, बिम्बस्य सङ्क्रमार्हवस्तुनः, प्रतिबिम्बभावं प्रतिरूपतां, यातो गच्छतः, कियान् कालः स्यात्? न कियानपीति हृदयम् ॥ ९१ ॥

यथा यथाऽयं भणति स्म सूनु-
स्तथा तथा मुद्भवति स्म पित्रोः ।
मृगाङ्कमालोकयतः कलाढ्य
वारां निधेः किं न महासमृद्धिः ? ॥ ९२ ॥

अयं सूनुर्यथा यथा भणति स्म, तथा तथा पित्रोर्जननी-जनकयो, मुद्भवति स्म। एनमेवार्थं दृष्टान्तद्वारा दृढयति—मृगाङ्कं हरिणध्वजं, किं० कलाढ्यं संपूर्णसकलकलं, आलोकयतो वारा निधेः समुद्रस्य, महासमृद्धिः कल्लोलोल्लाससंबन्धिनी किं न स्यात्? अपि तु स्यादेवेति ॥ ९२ ॥

सुते समेते सति लेखशाला-
गुरोर्गृहादात्मगृहं भणित्वा ।

गुरुर्गुरुभ्यां सदकारि वित्तैः
सत्सूपकारो यदलं फलाय ॥ ९३ ॥

लेखशालागुरोरध्यापकस्य, गृहात् सुते पुत्रे, भणित्वाऽधीत्य, आत्मगृहं समेते सति, गुरुभ्यां पितृभ्यां कमाकोडिमदेवीनामकाभ्यां, गुरुः स विद्यागुरु, वित्तैर्धनै, सदकारि सच्चक्रे। यत् यस्मात् कारणात्, सत्सु साधुषु, उपकारोऽलमत्यर्थं, फलाय भवतीति ॥ ९३ ॥

बभौ वदन्नेष पुरः स्वपित्रो-
र्गुरोर्गृहीताखिलहृद्यविद्यः ।
निपीतपाथाः पयसामधीशाद्
वर्षासु गर्जन्निव नीरवाहः ॥ ९४ ॥

एष बालकः, कीदृशः, गुरोः पाठकाद् गृहीताऽखिला हृद्या हृदयङ्गमा विद्या येन सः, स्वपित्रोः पुरो वदन् बभौ पृष्टप्रश्नोत्तराणि प्रयच्छन् शुशुभे । दृष्टान्तमाह—यथा पयसामधीशात् समुद्रात्, निपीतपाथा पीतपानीयो, वर्षासु मेघागमेषु, गर्जन् गर्जारवं कुर्वन्, नीरवाहो मेघ इति ॥ ९४ ॥

अथावशिष्टैर्वृत्तैर्गुरुपितुर्वैराग्योत्पाददीक्षादि वर्णयति—

अथाऽन्यदा धर्मगुरूपदेशा-
दभङ्गवैराग्यतरङ्गरङ्गी ।
कमाभिधः श्रेष्ठिवरः स्वपुत्र-
मधीतमुद्वीक्ष्य हृदीति दध्यौ ॥ ९५ ॥

अथेत्यधुना, अन्यदैकस्मिन् दिने, धर्मगुरूपदेशात् सुकृतोपदेशकोपदेशतः, अभङ्गे वैराग्यतरङ्गे रङ्गो यस्य सः,

कमाख्यः श्रेष्ठिप्रधानः, स्वपुत्रं जयसिंहाभिधानं, अधीतं पठितं, उद्वीक्ष्य दृष्ट्वा, इतीतिवक्ष्यमाणलक्षणं, हृदि मनसि, दध्यौ ध्यातवानित्यर्थः ॥ ९५ ॥

अथ तदेवाह—

असारसंसारधरारुहस्य
सारं फलं ज्ञैः कथितं तपस्या ।
सैवौचितीमञ्चति मेऽथ भुक्त-
भोगस्य विश्राम इव श्रमार्त्तेः ॥ ९६ ॥

असारः फल्गुर्यः संसारधरारुहो भवभूरुहस्तस्यासारसंसारधरारुहस्य, ज्ञैः पण्डितैर्गणधरादिभिः, तपस्या दीक्षा सारं फलं कथितमुक्तम् । तेनाथ मे मम, कीदृशस्य भुक्तभोगस्य निर्विष्टविषयस्य, सैव तपस्यैव, औचितीमञ्चति योग्यतामेति । दृष्टान्तोऽत्र—इव यथा, श्रमार्त्तेः श्रमस्य क्लमस्य आर्त्तिः पीडा यस्य तस्य श्रमार्त्तेः श्रमपीडितस्य पुंसः, विश्रामो व्यायामव्यपोहरूप इति ॥ ९६ ॥

ध्यात्वेति वैराग्यवरैर्वचोभिः
पत्नीं पतिः प्राह विरक्तचेताः ।
प्रिये ! भवत्याऽनुमतोऽधुनाहं
परिव्रजिष्यामि गुरोः समीपे ॥ ९७ ॥

इत्युक्तरूपम्, ध्यात्वा चिन्तयित्वा, विरक्तचेता निःस्पृहमनाः, पतिः प्राणेश, वैराग्यवरैर्निःसङ्गतासारैः, वचोभिर्वाक्यैः, पत्नीं प्राह—प्रिये हे भार्ये !, भवत्याऽनुमतस्त्वयाऽनुज्ञात सन्, गुरोर्विजयदानसूरेः श्रीतपागच्छनायकस्य, समीपे पार्श्वे, परिव्रजिष्यामि, दीक्षां कक्षीकरिष्यामीत्यर्थः ॥ ९७ ॥

पत्युस्तडित्पातनिभं निशम्य
वचो जजल्पाथ सतीवतसः ।
त्वया विनाहं शशिना निशेव
कथं भविष्यामि तमोमयीश!? ॥ ९८ ॥

पत्युः प्राणनाथस्य, वचो वचनं, कीदृशं तडित्पातनिभं विद्युत्पाततुल्यं, निशम्य श्रुत्वा, अथ सतीषु पतिव्रतासु वतंसः शेखरः सतीवतंसः, सा कोडिमदेवी, जजल्पाऽब्रवीत् । हे ईश स्वामिन्! यथा शशिना विना निशा, तथा त्वया विना अहं कि० तमोमयी, अज्ञानमयी, अर्थात् किंकर्त्तव्यतामूढा, पक्षे तमोमयी ध्वान्तमयी, इति कथं भविष्यामि त्वद्विरहेण मम का गतिर्भाविनी?, इति भावार्थः ॥ ९८ ॥

न मातरं नो पितर न पुत्रं
न भ्रातरं नापि हि देवरं च ।
पतिं सतीनां शरण वदन्ति
शीतातुराणामिव सप्तजिह्वम् ॥९९॥

मातरं जननी, पितरं जनकं, पुत्रं तनूजं, भ्रातरं सहोदरं, देवरं प्राणनाथानुजं, नेति सर्वत्र निषेधवाचकोऽव्यय, स तु सूत्रकृतैव प्रतिपदं पृथग् न्यस्तः, तेन सतीनां न मातरं शरणं वदन्ति लोका इति अनया रीत्या प्रत्येकमन्वयः प्रयोज्यो-देवरं यावत्; किन्तु सतीनां स्त्रीणा, पति स्वामिनमेव शरणं वदन्तीति शेषः । शीतातुराणां हिमपीडितानां सप्तजिह्वं वह्निमिवेति दृष्टान्तः ॥ ९९ ॥

पुत्रेण युक्ता तदहं भवद्भिः
साक तपस्याचरणं करिष्ये ।

ममापि मानुष्यमहीरुहस्य

फलं तदेवास्तु भवत्प्रसत्तेः ॥ १०० ॥

तदिति तस्मात् कारणात्, पुत्रेण युक्ताऽहं भवद्भिः सार्कं युष्माभिः सह, तपस्याचरणं व्रतासेवनं करिष्ये। ममापि भवत्-प्रसत्तेस्तव प्रसादात्, मानुष्यमहीरुहस्य मर्त्यजन्ममेदिनी-जन्मन, फलं तदेव तपस्याचरणमेव, अस्तु भवत्विति ॥१००॥

श्रुत्वेत्यमुष्या वचनं सुमुख्याः

श्रेष्ठी स भूयो भणाति स्म भार्याम् ।

फणीव निर्मोकमहं मुमुक्षु-

र्गार्हस्थ्यमत्रास्ति च निश्चयो मे ॥१०१॥

अमुष्याः सुमुख्या अस्या नार्याः कोडिमदेव्याः, इत्युक्त-रूपं, वचः श्रुत्वा स श्रेष्ठी भूयः पुनर्भणाति स्माभाषत। भार्यां प्रति यद्भणाति स्म, तत्पाश्चिमार्द्धेन प्राह—यथा फणी सर्पः, निर्मोकं कञ्चुकं, तथा तद्वत्, अहं गार्हस्थ्यं गृहस्थभावं, मुमुक्षुर्मोक्तुमिच्छुः, अस्मि। अत्रास्मिन्नर्थे, मे मम, निश्चयो निर्णयः, अस्तीति, किन्तु यदहमग्रेतनवृत्तेन वच्मि, तत्त्वं स्वीकुर्या मा निराकुर्या इति ॥ १०१ ॥

किन्त्वस्ति पुत्रस्तव बालकोऽयं

तिष्ठौकसि त्व तदनेन सार्द्धम् ।

वृद्धिं नयैनं स्वयमुत्तमब्धि-

काञ्चीरुहाङ्कुरमिवात्मना च ॥ १०२ ॥

हे प्राणप्रिये ! तव पुत्रोऽयं जयसिंहः, किंतु बालकोऽस्ति तत् तस्मात् कारणात्, अनेन सार्द्धमोकसि गेहे, तिष्ठेति। च

पुनः स्वयमुत्तमब्धिकाञ्चीरुहाङ्कुरमिव निजरोपितपादपप्ररोहमिव, एनं पुत्रं, आत्मना स्वेन, वृद्धिं नय प्रापयेति; अत्र धातोर्द्विकर्मकता ॥ १०२ ॥

वर्षद्वयानन्तरमेनमात्म-
जन्मानमादाय शुभाशये ! त्वम् ।
भवार्णवे नावमिवाददीथा-
दीक्षामवश्यं शिवशर्ममूलम् ॥ १०३ ॥

वर्षद्वयाद् हायनयुग्मात् अनन्तरं पश्चात्, एनं आत्मजन्मानं नन्दनं, आदाय लात्वा, सार्द्धमिति शेष । हे शुभाशये भव्यचित्ते ! त्वं भवार्णवे संसारसागरे, नावमिव नावं तरीमिव तत्तारकत्वात्, दीक्षा तपस्यां, कीदृशी शिवशर्मणो मोक्षसुखस्य, मूलं निमित्तम्, आददीथा गृह्णीथा इति ॥ १०३ ॥

इत्यादिभिः सामवचोभिरात्म-
हितैः स्वकान्तामनुनीय सम्यक् ।
ततः प्रदत्तानुमतिस्तयाऽय-
ममन्यत स्वं सफलाभिलाषम् ॥ १०४ ॥

इत्यादिभिरुक्तरूपैः, सामवचोभिरनुकूलवाक्यै, पुनः किं० आत्मनः स्वस्य हितैः आत्महितै, स्वकान्तां कोडिमदेवीनाम्नी, अनुनीय सान्त्वयित्वा अनुकूलीकृत्येति यावत्, ततस्तया पत्न्या, प्रदत्तानुमतिर्दीक्षार्थमनुज्ञातः सन्, अयं श्रेष्ठी कमाख्यः, स्वं सफलाभिलाषं फलिततपस्यारूपमनोरथं, अमन्यत मेने ॥ १०४ ॥

तस्थौ तदा दुःखवशादधःस्ता-
न्मुखी प्रदोषे बिसिनीव साऽथ ।

पत्युर्वियोगे हि महासतीनां
नितम्बिनीनामिह भूरि दुःखम् ॥१०५॥

अथ सा भार्या, तदा तत्र क्षणे, दुःखवशात् अधःस्तान्मुखी न्यग्वदना, तस्थौ स्थितवती । दृष्टान्तो यथा—प्रदोषे रजनीमुखे, बिसिनी मृणालिनी, यथा न्यग्मुखीभवति, तथेयमपीत्येनमर्थं समर्थयति—हीति यतो हेतोः, पत्युर्वियोगे सति, महासतीनां पतिव्रतानां, नितम्बिनीना नारीणां, भूरि बहु, दुःखं भवतीति भावः ॥१०५॥

अथो यथौचित्यवितीर्णवित्तः
समान्य पौरान् बहुमानगौरान् ।
कल्याणकृत्कल्पितवेष एष
दीक्षां जिघृक्षुः स्वपुरादचालीत् ॥१०६॥

अथो इत्यन्यदा शुभे वासरे, यथौचित्यं यथार्हं वितीर्णं दत्तं वित्तं धनं येन सः, स्वकुटुम्बज्ञातीयादीनामिति शेषः । पुनः किं कृत्वा संमान्य मानयित्वा, कान् पौरान् पुरीजनान्, कि० बहुमानेन पूजया अधिकारादीक्षाविषयकोत्सवोत्साहरूपया गौरानुज्ज्वलान् बहुमानगौरान् । पुनः कल्याणकृद् मङ्गलकारी दीक्षावसरयोग्यः कल्पितः कृतो वेषो रजोहरणमुखपोतिकाप्रमुखो येन सः, एष श्रेष्ठी, दीक्षां जिघृक्षुस्तपस्यामादित्सुः, स्वपुरान्नारदपुरीनगरात्, अचालीच्चचालेति ॥१०६॥

तपाधिपश्रीविजयादिदान-
मुख्याभिधानां शमिसिन्धुराणाम् ।
पादाम्बुजैर्भूषितमस्तदम्भः

स स्तम्भतीर्थं नगरं जगाम ॥ १०७ ॥

तपाधिपास्तपागच्छनायकाः ये श्रीविजयदानेति मुख्या-प्रधानाऽभिधा संज्ञा येषां तेषां श्रीविजयादिदानाभिधानानां, किं० शमिसिन्धुराणां मुनिमतङ्गजानां, पादाम्बुजैश्चलननलिनैः, भूषितं शोभितं, स्तम्भतीर्थं नाम नगरं स श्रेष्ठी, कीदृशः अस्तदम्भो निष्कपटः सन्, जगाम गतवानिति ॥१०७॥

प्रीत्या प्रणम्याऽथ जगाद शुद्ध-

यशोजलैर्धौतदिगन्तराणाम् ।

तेषां पुरः प्राभृतकं प्रकुर्व-

न्निव स्वदन्तद्युतिमौक्तिकौघैः ॥ १०८ ॥

प्रीत्या प्रेम्णा, प्रणम्य तान् गुरूनिति शेषः, जगादाऽवदत् । इवोत्प्रेक्ष्यते—स्वदन्तद्युतिमौक्तिकौघैर्निजदशनकान्तिमुक्ताफलजालैः, प्राभृतकं ढौकनं, प्रकुर्वन्, कथं पुरोऽग्रे, केषां तेषां गुरूणां श्रीविजयदानसूरीणां, किं० शुद्धयशोजलैर्निर्मलकीर्त्तिसलिलैः, धौतानि दिगन्तराणि हरिन्मध्यानि यैस्तेषां, पुरतो जगादाग्रे वक्ष्यमाणमिति ॥१०८॥

कैवल्यकान्तारतिदक्षदीक्षा-

दानेन भट्टारकपूज्यपादाः ! ।

सद्योऽनुगृह्णीत कृपास्पदं मा-

मपां प्रवाहेण महीमिवाब्दाः ॥ १०९ ॥

कैवल्यकान्ता मुक्तिकामिनी तस्या या रतिस्तत्र दक्षं निपुणं यद्दीक्षादानं तपस्याप्रदानं तेन कैवल्यकान्तारतिदक्षदीक्षादानेन, भो भट्टारकपूज्यपादाः भट्टारकैर्भूपैर्देवैर्मुनिभिर्वा पूज्या पादा येषां ते भट्टारकपूज्यपादाः!, तेनात्रैकार्थत्वाद्

न पौनरुक्त्यम्। मा किं० कृपास्पदं दयायोग्यं, अनुगृह्णीता-ऽनुग्रहविषयं कुर्वन्तु, यथा मही पृथिवी, अपा पानीयाना, प्रवाहेणाऽब्दा मेघा इति दृष्टान्तः ॥ १०९ ॥

वर्षे सुधारश्मिवसुन्धराषड्-
मृगाङ्कसङ्ख्येऽहनि चाप्यहीने ।
तेनोदितास्तेऽथ तदेति पूज्याः
प्राव्राजयंस्तं करुणासमुद्राः ॥११०॥

सुधारश्मिश्चन्द्रमा एकः, वसुन्धराप्येका, षडिति षट्सङ्ख्यानिरूपकोऽङ्कः, मृगाङ्कोऽप्येकः; एतैर्वामगत्या मिलितैः एकादशान्वितषोडशशतप्रमाणा (१६११) सङ्ख्या यस्मिस्तस्मिन्, वर्षे संवत्सरे, पुनरप्यहनि दिवसे, किं० अहीने अदुष्टे, तेन कमाख्येन श्रेष्ठिना, इतीत्युक्तरूपया विज्ञप्त्या उदिता प्रेरिताः, ते पूज्याः श्रीविजयदानसूरिपादाः, किं० करुणासमुद्रा इति सुबोधम् , तदा तस्मिन्नेव क्षणे, तं श्रेष्ठिन, प्राव्राजयन् दीक्षयामासुरिति ॥११०॥

प्रपालयन् संयममुग्रखड्ग-
धारोपम निष्प्रातिमप्रवृत्तिः ।
तेषां गुरूणां प्रतिभागुरूणां
श्रियां निदान विनय वितन्वन् ॥१११॥

संयमं चारित्रं पवित्रसप्तदशभेदभिन्नम्; पुनः किं० उग्रखड्गधारोपमं तीव्रासिधारातुल्यं, प्रपालयन्; पुनः स किं० निष्प्रतिमा निस्तुला प्रवृत्तिराचाररूपा यस्य सः; पुनः प्रतिभया बुद्ध्या गुरूणा बृहस्पतीनां, तेषां गुरूणा श्रीविजयदान-

सूरिपुरन्दराणां, श्रियां निदानं सम्पदां निबन्धनं, विनयं जिनधर्ममूलं, वितन्वन् कुर्वन्निति ॥१११॥

सृजस्तपो दुस्तपमत्युदार-
चेताः प्रचेताश्चतुरात्मवृत्तिः ।
स स्फूर्त्तिमान् मूर्त्त इवर्षिधर्मो
बभूव पूर्वर्षिसमः कमर्षिः ॥ ११२ ॥

पुनः किं कुर्वन् दुःखेन तप्यत इति दुस्तपं तपः षष्ठाष्टमदशमादिकं सृजन्, पुन किं० अत्युदारं चेतो यस्य सः, पुनः किं० प्रचेता हृष्टमनाः, पुनः किं० चतुरा निपुणा आत्मनो जीवस्य वृत्तिर्यस्य सः निपुणप्रवृत्तिरिति यावत्; स कमर्षिः कमाभिधानो मुनिः, किं० पूर्वे च ते ऋषयश्च पूर्वर्षयः प्राचीनाऽनगाराधन्यकृतपुण्यशालिभद्रगोभद्रादयस्तैस्तेषां वा समः पूर्वर्षिसमः । इवोत्प्रेक्ष्यते—स्फूर्तिमानतिशायी,मूर्त्तोऽङ्गवान्, ऋषिधर्म साधुधर्म, बभूवाजनीति युग्मव्याख्या ॥ ११२ ॥

श्रुत्वा तपस्या स्वसृभर्तुरिभ्यः
सङ्घाधिपः श्रीजयताभिधानः ।
पल्लीपुरात् प्रीतमना अथ स्व-
स्वसुः ससूनोर्मिलनार्थमागात् ॥ ११३ ॥

स्वसृभर्तुः भगिनीपतेः कमाख्यश्रेष्ठिनः, तपस्यां दीक्षाग्रहणं, श्रुत्वा निशम्य, श्रीजयताभिधानः सङ्घाधिपः, किं० इभ्य इत्याढ्यः, पल्लीपुरात् लोके पालीतिप्रसिद्धात् सिद्धरसाकरपुण्याकरपर्वताभ्यर्णवर्तिन इति, ससूनोः सपुत्रायाः, स्वस्वसुर्निजजामेः, मिलनार्थमागान्नारदपुरीमिति शेषः ॥ ११३ ॥

सङ्घाधिनाथो जयसिंहनाम्ना
स्वभागिनेयेन समं स्वसारम् ।
पञ्चेषुणेवाम्बुनिधेः सुता तां
मूर्त्तामनैषीदथ स स्वमोकः ॥११४॥

अथ तत्र कियत् स्थित्वा, स सङ्घाधिनाथ सङ्घमुख्यो-जयताख्यो मातुलः, स्वभागिनेयेन भागिनीपुत्रेण, जयसिंह-नाम्ना समं सार्द्धं, ता स्वसारं भागिनी कोडिमदेवीनाम्नी, मूर्ता मूर्तिमती, पञ्चेषुणा कन्दर्पेण, समं अम्बुनिधेः सुतां लक्ष्मीमिव, स्वं निजं, ओको निकेतन, अनैषीद् निनायेति ॥ ११४ ॥

रेमेऽतुलं मातुलमातुलानी-
मुख्यं समस्तं परिवारमेषः ।
प्रमोदयंस्तस्य गृहे कुमार-
इवोग्रशक्तिः सुमुखः कुमारः ॥ ११५ ॥

तस्य जयताख्यमातुलस्य, गृहे एष कुमारो जयसिंहः, कीदृश , कुमार इव कार्तिकेय इव, उग्रा शक्तिर्बलं यस्य सः, पक्षे, शक्तिरायुधविशेषो यस्य सः । पुनः कि० सुमुखः शोभनवदनः पण्डितो वा । पुनः कि कुर्वन्, मातुलमातुलपत्नीप्रमुखं समस्तं परिवारं कुटुम्बं, प्रमोदयन्नानन्दयन्, अतुलं बहुतरं, रेमे अर-मतेति ॥ ११५ ॥

अमरगिरिगुहायां स्वर्गिशाखीव साक्षा-
दवनिधरधरायां केसरीवोग्रधामा ।
उडुपतिरिव पक्षे पाण्डुरे सत्कलाभिः
कुवलयसुखहेतुर्वर्द्धते स्मैष तत्र ॥११६॥

अमरगिरेर्मेरोर्गुहायां यथा स्वर्गिशाखी कल्पवृक्षः; पुनः अवनिधरधरायां भूधरभूमिकायां, यथा केसरी सिंहः । किं० उग्रं धाम बलं तेजो वा यस्य स उग्रधामा। पुनः पाण्डुरे धवले पक्षे उडुपतिश्चन्द्रमा यथा । किं० सत्कलाभिः कुवलयस्य भूवलयस्य, पक्षे कुवलयानां नीलोत्पलानां, सुखहेतुः शर्ममूलमुद्बोधकत्वात्, इत्येष बालो जयसिंहकुमार, तत्र पालीपुर्यां, वर्धते स्म प्रावर्धतेति । तथेदं मालिनीनामकं वृत्तं–"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणोक्तेः॥ ११६ ॥

. . . . . . . . . . . . . . . . . . . . . . . .

इतीति सर्वं सुबोधम् ।

इतिसुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितश्रीविद्याविजयगणिविनेयाणुवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाभिधानधारिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां द्वितीयः सर्गोऽर्थत समर्थितः ।

अर्हम्

## अथ तृतीयः सर्गः ।

अथ तृतीयसर्गस्वरूपं निरूप्यते, तत्रेदमादिमं वृत्तम्–

श्रीवर्द्धमानः प्रभुरस्तु भूरि-
भूत्यै प्रभूताद्भुतभूतभद्रः ।
मूलं रमाया इव रत्नराशि-
र्बभूव यः साधुपरम्परायाः ॥ १ ॥

श्रीवर्द्धमानप्रभुः श्रीमहावीरस्वामी शासनाधीश्वरश्चतुर्विंश-स्तीर्थङ्कर, भूरिभूत्यै बहुसम्पदे, अस्तु भूयाद्, युष्माकमिति गम्यम्। किं० प्रभूतानि पुष्कलानि अद्भुतानि आश्चर्यकारीणि भूतानि जातानि भद्राणि कल्याणानि यस्य, अथवा प्रभूता-न्यद्भुतानि भूतानां प्राणिनां भद्राणि यस्मात् स प्रभूताद्भुत-भूतभद्रः, अत्र पूर्वार्धेऽनुक्तोऽपि तच्छब्दो ग्राह्यस्तेन स क-इत्याह—यः साधुपरम्परायाः पञ्चमारकवर्त्तिनोऽनगारान्वयस्य, मूलमादिः, बभूव। अत्र दृष्टान्तो यथा—रमाया इव लक्ष्म्या-यथा, रत्नराशि समुद्र इति। अत्र सर्गे उपजातिनामकं छन्दः, तल्लक्षणं तु पूर्वोदितमिति नेहाभिहितमिति तात्पर्यम् ॥ १ ॥

स पञ्चमः स्ताद् गणभृद् मुदे त-
त्पट्टैकरत्नाकरचन्द्रमा वः।
पञ्चत्वमाविष्प्रकरन्नपीह
महाव्रतानां परिपालको यः ॥ २ ॥

तत्पट्टैकरत्नाकरे चन्द्रमाः श्रीवर्द्धमानस्वामिपट्टैकपाथोनिधौ चन्द्रः, स पञ्चमो गणभृत् सुधर्मस्वामी, वो युष्माकं, मुदे प्रमो-दाय, स्तादित्यन्वयः। स क इत्याह—यो गणभृत्, इह जगति, महाव्रतानां अहिंसासूनृतास्तेयब्रह्माकिञ्चन्यलक्षणानां, पञ्चत्वं निधनं, आविष्प्रकरन्नपि प्रकटीकुर्वन्नपि, परिपालकः समन्ताद्र-क्षकः, बभूवेत्यध्याहारः। तथाऽयं स्फुटो विरोधः, अथ तत्परि-हारस्तु पञ्चानां भावः पञ्चत्वं पञ्चसङ्ख्याकत्वमित्यनेन कृत-इति ॥ २ ॥

सुखाय तत्पट्टपयोजपूषा
जम्बूः स कम्बूज्ज्वलकीर्तिरस्तु ।

जह्रे न हृद् नव्यनितम्बिनीभि-
र्यस्येन्दुपत्नीभिरिवार्कतेजः ॥ ३ ॥

तत्पट्टपयोजपूषा तस्य सुधर्मस्वामिन पट्टपयोजे पूषा सूर्य, तत्रोल्लासकृत्त्वादिति; स जम्बूनामा चरमकेवली द्वितीय पट्टधरः, किं० कम्बुरिव उज्ज्वला विमला कीर्त्तिर्यस्य स कम्बूज्ज्वलकीर्त्तिः शङ्खशुभ्रयशा इति यावत्, सुखाय शर्मणे, अस्तु स्तात् । स क इत्याह–यस्य जम्बूस्वामिनः, हृद् हृदयं, नव्या नवीनाः स्तवनीया वा या नितम्बिन्यो नार्यः, नवोढा इति शेषः; ताभिर्नव्यनितम्बिनीभि, न जह्रे नाहारि । दृष्टान्तमत्राह–इन्दुपत्न्यो दाक्षायण्यः शर्वर्यो वा ताभिर्यथाऽर्कतेजः सूर्यमह, न ह्रियत इति ॥ ३ ॥

तदंह्रिसेवाबिसिनीषडंह्रिः
पुनातु स श्रीप्रभवप्रभुर्वः ।
जम्बूपदेशादभवत्तमास्वि-
न्यपीह यस्य प्रथितप्रकाशा ॥ ४ ॥

तस्य जम्बूस्वामिनः अंह्री पादौ तयोर्या सेवा सपर्या सैव बिसिनी मृणालिनी तस्यां षडंह्रिर्भ्रमर, तत्रातिलुब्धत्वादिति; स श्रीप्रभवप्रभुः प्रथमः श्रुतकेवली, वो युष्मान्, पुनातु पवित्रीकरोतु, इत्यन्वय । यस्य जम्बूपदेशात् तमस्विन्यपि तमाऽपि, प्रथितः प्रकाशो यया सा प्रथितप्रकाशा प्रतिबोधरूपप्रकाशकारिणी, अभवज्जातेति चित्रम् ॥ ४ ॥

तत्पट्टपूर्वाचलहेलिहेलं
तं स्तौमि शय्यम्भवसूरिसिंहम् ।
ध्वान्तं सभारलरुचेव जह्रे

मूर्त्याऽर्हतो यस्य कुदृष्टिमोहः ॥ ५ ॥

तत्पट्टपूर्वाचले प्रभवस्वामिपट्टोदयाद्रौ हेलेः सूर्यस्येव हेला विलासो यस्य तं तत्पट्टपूर्वाचलहेलिहेलं, तं शय्यम्भवसूरिसिंहं स्तौम्यहमित्यन्वयः । तं कमित्याह—सभारत्नरुचेव प्रदीपप्रभयेव यथा ध्वान्तं तमः, तथा यस्य श्रीशय्यम्भवसूरे, गृहस्थावस्थायां कुदृष्टिमोहो मिथ्यात्वमौढ्यं, अर्हतो मूर्त्या श्रीशान्तिजिनप्रतिमया, जह्रे हृत इति । एतदर्थानुवादकं निर्युक्तिकरश्रुतधरवाक्यं यथा—"सिज्जम्भवं गणहरं जिणपडिमादंसणेण पडिबुद्धं" इत्युक्तत्वात्प्राच्योऽर्थः समर्थ इति ॥ ५ ॥

स तत्पदोपास्तिपटुः प्रभूतं
भद्रं यशोभद्रगुरुः करोतु ।
पन्थानमाविष्कुरुते स्म शुद्धं
यस्योष्णरश्मेरिव गौः सदर्था ॥ ६ ॥

तस्य शय्यम्भवस्य पदोपास्तौ पादसेवायां पटुर्निपुणस्तत्पदोपास्तिपटुः, स यशोभद्रगुरुः प्रभूतं भूरि, भद्रं श्रेयः, करोत्वित्यन्वयः । स क इत्याह—यस्य यशोभद्रसूरेः, गौर्वाणी, उष्णरश्मेः सूर्यस्य, गौरिव द्युतिरिव, शुद्धं पन्थानं ज्ञानदर्शनचारित्रात्मकं भावमार्गः सूर्यद्युतिपक्षे तु, द्रव्यमार्गं आविष्कुरुते स्म प्रकटीचक्रे । उभयत्र श्लेषद्वारेणैकं विशेषणमाह—सदर्थेति । सूरेर्गोः पक्षे, सन् शोभनोऽर्थो वाच्यं यस्यां सा; सूर्यस्य गोः पक्षे तु, सन्तोऽर्थाः प्रयोजनानि यस्याः सा सदर्था । सूर्यप्रकाशे हि देवार्चादिकाः क्रियाः क्रियन्ते लोकैरिति दिक् ॥ ६ ॥

भद्रानुभूतिः स दिताभिभूतिः
सम्भूतनामा गुरुरस्तु भूत्यै ।

श्रियं महावीरपरम्परां यः
पृथ्वीं पयोवाह इवानिनाय ॥ ७ ॥

भद्राणां कल्याणानां अनुभूतिरनुभवनं यस्माज्जनानामिति स भद्रानुभूतिः । पुनः किं०, दिता खण्डिताऽभिभूति पराभवोऽर्थात् कर्मणा येन स दिताभिभूतिः, स सम्भूतनामेत्यत्र पदैकदेशे पदसमुदायोपचारात् सम्भूतः सम्भूतविजयनामा गुरु, भूत्यै सम्पत्त्यै, अस्तुः भव्याङ्गिनामिति शेषः । स क इत्याह—यो गुरु पयोवाह इव मेघ इव यथा पृथ्वीं, तथा महावीरपरम्परां श्रीवर्द्धमानस्वामिसन्तति, श्रियं शोभां, आनिनायाऽऽनैषीत् ॥ ७ ॥

स दीर्घबाहुर्गुरुभद्रबाहु-
र्बह्वीं रतिं रातु रमाऽभिरामः ।
वृष्ट्येव कष्टं जलदः प्रजानां
स्तोत्रेण यो द्राग् मरकं जहार ॥ ८ ॥

स गुरुभद्रबाहुः, किं० दीर्घावायतौ बाहू भुजौ यस्य स दीर्घबाहु ; बह्वी भूयसी, रतिं रातु दिशतुः संयमे इति गम्यम् । स कीदृशः, रमया लक्ष्म्याऽपश्चिमसंपूर्णसकलश्रुताद्यतिशयलक्षणयाऽभिरामो रम्यो रमाऽभिरामः । स क इत्याह—यः स्तोत्रेण श्रीउपसर्गहरसंज्ञेन, मरकं व्यन्तरीभूतवराहमिहिरविकृतमारि, जहाराहरत् । यदाहु पूर्वाचार्याः—"उवसग्गहरं थुत्तं काऊणं जेण संघकल्लाणं । करुणापरेण विहियं स भद्दबाहू गुरू जयइ" ॥ १ ॥ इति । अथ दृष्टान्तोऽत्र—इव यथा, जलदो घनाघन , प्रजाना लोकानां, कष्टं तृट्तापोपतापादिरूपं, वृष्ट्या वर्षणेन, हरतीत्यर्थः ॥ ८ ॥

तयोर्द्वयोर्दर्पिमनोमनोज-
विकारधिक्कारकरः परौजाः ।
यो द्योतयामास घनैर्महोभिः
पट्टं प्रभावानिव पूर्वशैलम् ॥ ९ ॥

तयोर्द्वयोः श्रीसम्भूतविजयश्रीभद्रबाहुस्वामिनोः, पट्टं प्रभावानिव भानुरिव, पूर्वशैलमुदयाचलं, घनैर्बहुभि, महोभिस्तेजोभिरुत्सवैर्वा, यो द्योतयामासाऽभूषयत् । यः कि० दर्पि त्रैलोक्यजेतृत्वात् गर्ववन्मनो यस्यासौ मनोजश्चेतोभूस्तस्य यो विकारस्तस्य धिक्कारकर तिरस्कारकृत्, अत एव त्रिभुवनजेतु कन्दर्पस्य जेतृत्वात् परं प्रकृष्टं ओजो बलं प्रशस्तमनोवलरूपं यस्य स इति ॥ ९ ॥

स स्थूलभद्रः प्रकरोतु भद्र
भद्राकृतिर्भद्रविहारभद्रः ।
यत्कीर्तिरद्याप्यतिकीर्त्तनीया
ज्योत्स्नेव विश्वं विशद विधत्ते ॥ १० ॥

स स्थूलभद्रो नामापश्चिमश्रुतकेवली सप्तमः पट्टधर, भद्रं प्रकरोतु । कीदृशः, भद्रा प्रशस्यतरा आकृतिराकारो यस्य स भद्राकृतिः। पुनः कि०, भद्रं श्रेष्ठं विहाराद्विचरणाद् भद्रं मङ्गलं लोकानां यस्मात् स, अथवा भद्रं साधु विहारो गमनं गतिरिति तेन साधुगमनेन भद्र इव वृषभ इव भद्रविहारभद्रः । अद्यापि अद्य यावत्, यत्कीर्तिः, कि० अतिकीर्त्तनीयाऽतिशयेन वर्णनीया, ज्योत्स्नेव कौमुदीव, विश्वं जगद्, विशदं विधत्ते कुरुते । यतस्तत्कीर्त्तिश्रुतेः पापमलप्रणाशाज्जगतो विशदीभवनं युक्तिमदेवेति ॥ १० ॥ इति युग्मव्याख्या ॥

सूरीश्वराः श्रीप्रभवेशमुख्या-
श्चिरं जयन्ति श्रुतकेवलीशाः ।
अमी शमीशा ऋतवोऽवतीर्णाः
स्वैः स्वैर्विलासैः षडपि क्रमात् किम् ? ॥११॥

श्रीप्रभवेशमुख्या प्रभवस्वामिप्रमुखाः, सूरीश्वराश्चिरं जयन्तीत्यन्वयः। किं विशिष्टा इत्याह--श्रुतकेवलीशाः श्रुतकेवलिनश्चतुर्दशपूर्विण सन्त ईशा गच्छाधीशाः सामर्थ्यभाजो वा, यतस्ते हि घटाद् घटसहस्रं पटात् पटसहस्रं विकर्तुं क्षमा इति शेषः। एते षडेव पञ्चमारके श्रुतकेवलिनः। यदाहुः श्रीहेमाचार्यचरणा --"अथ श्रीप्रभवप्रभुः। शय्यंभवो यशोभद्रः सभूतविजयस्ततः। भद्रबाहुः स्थूलभद्रः श्रुतकेवलिनो हि षट्" इति। इवोत्प्रेक्ष्यते--शमीशाः साधुस्वामिनः, अमी षडपि, किं ऋतवोऽवतीर्णाः स्वैः स्वैर्विलासैर्निजनिजलीलाभि, जगन्ति सुखीकर्तुमिति निर्गलितार्थः ॥ ११ ॥

श्रीसुस्थितः सुप्रतिबुद्ध एतौ
सूरी अभूतां तदनुक्रमेण ।
याभ्यां गणोऽभूदिह कौटिकाह्व-
श्चन्द्राऽर्यमभ्यामिव सुप्रकाशः ॥ १२ ॥

तेभ्यः षड्भ्यः श्रुतकेवलिभ्योऽनु पश्चात् तदनुक्रमेण, श्रीस्थूलभद्राचार्यमुख्यशिष्ययोः श्रीमदार्यमहागिरिश्रीमदार्यसुहस्तिनोर्द्वयोर्दशपूर्विणोरष्टमपट्टधरयोर्भवनानन्तरं श्रीसुस्थित सुप्रतिबुद्धश्च एतौ द्वौ, सूरी अभूतां जातौ। याभ्या चन्द्राऽर्यमभ्यां शशधरदिवाकराभ्यां, सुप्रकाश इव विश्वालोक इव, कौटिकाह्वः कौटिकनामा, गणो गच्छ, अभूद् बभूव।

सूरिमन्त्रस्मरणकरणादिति श्रुतिः। किं च, श्रीहेमचन्द्रसूरीन्द्रास्तु सुस्थितसुप्रतिबुद्धेत्यखण्डितनामकमेकमेव मुनिं मन्यन्ते । यदूचिरे ते स्वकीयत्रिषष्टीयचरितप्रान्तप्रशास्तिकायां—"अजनि सुस्थितसुप्रतिबुद्ध इत्यभिधयाऽऽर्यसुहस्तिमहामुनेः। शमधनो दशपूर्वधरोऽन्तिषड्भवमहातरुभञ्जनकुञ्जरः"॥ १ ॥इति । गुर्वावल्यां तु सूरिद्वयमुक्तमिति तेनैतद्ग्रन्थकर्त्राऽपि सूरिद्वयं व्यावर्णितमिति ध्येयम् ॥ १२ ॥

तत्र क्रमात् पापभराद्रिवज्रि-
वज्रः स वज्रर्षिगुरुर्बभूव ।
पाकोऽपि यः पालनके प्रसुप्तोऽ-
प्येकादशाङ्गीमशठः पपाठ ॥ १३ ॥

तत्र कौटिकगणे, क्रमात् श्रीइन्द्रदिन्नसूरिश्रीदिन्नसूरिश्रीसिंहगिरिषु त्रिषु सूरिषु जातेषु सत्सु स वज्रर्षिगुरुरपाश्चिमो दशपूर्वभृद् वज्रस्वामिनामा गुरुस्त्रयोदशपट्टभृद्, बभूव जातवानित्यन्वयः । कीदृशः, पापभराद्रौ दुरितव्रातपर्वते वज्रिणो हरेर्वज्रः कुलिशस्तच्छेदकत्वादिति । अत्र वज्रशब्द पुंनपुंसकतया पठितोऽस्तीति ज्ञेयम् । स क इत्याह-यो वज्रगुरुः पाकोऽपि बालोऽपि।पुन किं०, पालनके प्रसुप्तोऽपि उद्यममन्तरेणापि, एकादशानामङ्गानामाचाराङ्गादिविपाकश्रुतान्तानां समाहारः एकादशाङ्गी ता एकादशाङ्गी, समाहारेऽर्थे स्त्रिया ङी । य किं०, अशठो निर्दम्भः, पपाठेति पठति स्मेति पारिणामिक्या बुद्ध्या पदानुसारिण्या लब्ध्या चेति ध्येयम् ॥ १३ ॥

सूरेस्ततः ख्यातिमतीह वज्र-
शाखाऽभवद्वर्यविनेयशाखा ।

या कीर्तिमद्यापि बिभर्ति लोके
सुधेव ससूत्रितसौमनस्या ॥ १४ ॥

ततस्तस्मात्, सूरे श्रीवज्रस्वामिनः, ख्यातिमती प्रसिद्धिमुपगता, वज्रशाखाऽभवत् । कीदृशी, वर्या विनेयानां शिष्याणा शाखाः पक्षान्तराणि संतातिविशेषा यस्यां सा वर्यविनेयशाखा । या शाखाऽद्यापि लोके तत्परम्परागतमुनिजने, कीर्ति बिभर्ति यशस्विनी प्रवर्त्तत इति । या किं०, संसूत्रितं सम्यग् निर्मितं सौमनस्यं सुमनसो भाव कर्म वा सौमनस्यं पाण्डित्य यया सा संसूत्रितसौमनस्या । केव, सुधेव । सुधापक्षे संसूत्रितं सौमनस्यं निर्जरत्वं यया सेति ॥ १४ ॥

तच्छिष्यमुख्यः स्खलिताक्षसेनः
श्रीवज्रसेनः स गुरुर्बभूव
योऽभूषयत्कौशलधाम वज्र-
शाखामलं कीर इवाम्रशाखाम् ॥ १५ ॥

तस्य श्रीवज्रस्य शिष्येषु मुख्यस्तच्छिष्यमुख्यः, किं०,स्खलिता भग्ना अक्षाणामिन्द्रियाणां सेना येन स स्खलिताऽक्षसेनः, श्रीवज्रसेनो नाम्ना स गुरुर्गच्छराड् बभूव । स क इत्याहयः कीर इव शुक इव, यथा आम्रशाखां, तथा वज्रशाखां श्रीवज्रस्वामिसन्तति अभूषयत् । कथम्, अलमत्यर्थमिति, कीदृशः, कौशलधाम नैपुण्यास्पदम् । इदं द्वयोरपि विशेषणमिति ॥ १५ ॥

नागेन्द्रनामा प्रथमो द्वितीय-
श्चन्द्रोऽथ निर्वृत्यभिधस्तृतीयः ।

विद्याधरस्तुर्य इति प्रतीता-
　　श्चत्वार एतेऽन्तिषदोऽस्य जाताः ॥ १६ ॥

अस्य श्रीवज्रसेनस्य सूरेः, सार्द्धनवपूर्विणश्चतुर्दशपट्ट-धरस्य नागेन्द्रनामेति पदत्रयेण प्रणीता नागेन्द्रचन्द्रनिर्वृति-विद्याधरनामानश्चत्वारोऽन्तिषद शिष्या, कि०, प्रतीताः शास्त्रेषु, जाता जज्ञिरे ॥ १६ ॥

तेषामेवावदातं कीर्तयति—

स्वस्वाह्वयोच्चैर्भुवि विश्रुतानि
　　चत्वारि जातानि कुलानि तेभ्यः ।
भाति स्म यैर्वीरपरम्परेय
　　नित्यानघैर्ब्रह्मतनूरिवास्यैः ॥ १७ ॥

तेभ्यश्चतुर्भ्यः सूरिभ्यो भुवि विश्रुतानि चत्वारि कुलानि जातानि, कया, स्वस्वाह्वया निजनिजनाम्ना, तथाहि—नागेन्द्र-नाम्ना नागेन्द्रं कुलं, चन्द्रनाम्ना चान्द्रं कुलं, निर्वृतिनाम्ना निर्वृतिनामकं कुलं, विद्याधरनाम्ना विद्याधरकुलं चेति; यैश्चतुर्भिः कुलैरियं वीरपरम्परा श्रीवर्धमानस्वामिनः पट्टपरम्परा, भाति स्म शुशुभे । कीदृशैर्यैः, नित्यानघैर्नित्यं निरन्तरमनघैर्निष्पापैः, यथा चतुर्भिरास्यैर्वदनैः, ब्रह्मणो विरञ्चे, तनूर्मूर्त्तिरिति दृष्टान्त उत्प्रेक्षा वा ॥ १७ ॥

पुनरपि तानेव वृत्तद्वयेन वर्णयति—

चत्वार आविष्कृतमुक्तिमार्गा-
　　स्ते सर्वसङ्घस्य दृढानुरागाः ।
ततो विभान्ति स्म गणाधिनाथा-

धर्मस्य भेदा इव दानमुख्याः ॥ १८ ॥

ते चत्वारः पूर्वोक्तनामानः, कीदृशाः, आविष्कृत प्रकटितो मुक्तिमार्गो यैस्ते; पुनः कि०, सर्वसङ्घस्य चतुर्विधश्रमणसङ्घस्य दृढो निविडोऽनुरागो येषु ते सर्वसङ्घस्य दृढानुरागाः। ततस्तस्मात्सूरे, गणाधिनाथा आचार्यपदवी प्राप्ता सन्त, विभान्ति स्म शुशुभिरे । इवोत्प्रेक्ष्यते--दानं मुख्यं प्रथमं येषु येषा वा ते दानशीलतपोभावाख्याः धर्मस्य भेदाः प्रकारा इति ॥१८॥

एभिश्चतुर्भिः सततावदातै-
र्दन्तैश्चतुर्दन्त इवाहितघ्नैः ।
गच्छाधिराजैर्बिभरांबभूव
माहात्म्यमुच्चैर्भुवि सङ्घ एषः ॥ १९ ॥

एभिर्नागेन्द्रादिभिश्चतुर्भिर्गच्छाधिराजैः सूरिवरै, चतुर्दन्त ऐरावण, इव यथा, चतुर्भिर्दन्तैः; कीदृशैः, सततमवदातैः कर्ममलहीनैः, पक्षे नित्योज्ज्वलैः; पुनः कि०, अहितमशुभकर्मादि, पक्षे अहितान् शत्रून घ्नन्तीति अहितघ्नास्तैः अहितघ्नैः; एष सङ्घो माहात्म्यं महत्त्वं, बिभरांबभूवातिशयेन बभार ॥ १९ ॥

एतैश्च शिष्यैर्गुरुणा च तेने-
त्येभिर्बभौ पञ्चभिरेष संघः ।
छायाऽऽढ्यमूलैः सुकृतानुकूलै-
रस्वप्रसालैरिव मेरुशैलः ॥ २० ॥

च पुनः, एतैश्चतुर्भिः शिष्यै, च पुन, तेन गुरुणा इति एभिः पञ्चभिर्मिलितैः सद्भिरेष सङ्घ साधुसाध्वीश्रावकश्राविकारूपश्चतुर्विध श्रमणभगवन्महावीरसङ्घः, बभौ शुशुभे ।

दृष्टान्तोऽत्र–यथा मेरुशैलोऽस्वप्नसालै कल्पवृक्षैः कविरूढ्या पञ्चभि कल्पपारिजातमन्दारहरिचन्दनसन्तानैः, किलक्षणैरिति द्वयोः पञ्चकयो श्लेषद्वारा तुल्यं विशेषणद्वयमाह–छायया शोभया, पक्षे छाययाऽनातपेन, आढ्य मूलं पार्श्व येषां तैश्छाया-ऽऽढ्यमूलैः, पुन किं०, सुकृतात् पुण्यात् अनुकूलैः प्राणिनामिति सुकृतानुकूलैरिति ॥ २० ॥

अथ चतुर्ष्वपि कुलेषु चान्द्रकुलस्य मुख्यत्वमाह–

स्वतेजसा धौतदिगन्तराल
गवां गणैः प्रीणितकौशिकौघम् ।
चान्द्रं कुलं तेष्वधिकं बभासे
कामोत्सव भेष्विव बिम्बमिन्दोः ॥ २१ ॥

तेषु चतुर्षु पूर्वोदिताभिधानेषु कुलेषु, चन्द्राचार्यसंबन्धि चान्द्रं, कुलं द्वितीयं कुलं, अधिकं बभासेऽशुभत् । दृष्टान्तमाह–यथा भेषु नक्षत्रेषु, इन्दोश्चन्द्रस्य बिम्बं मण्डलम्; अथ द्वयोः श्लेषद्वारेण तुल्यविशेषणान्याह–कीदृशं, स्वतेजसा निजमहसा, धौतं क्षालितं, दिगन्तरालं आशामध्यं येन तत्; पुनः किं०, गवा वाचा रुचां च गणै सङ्घातैः, प्रीणित आह्लादित, "कौशिकः शक्रघूकयो" इत्यनेकार्थत्वात् कौशिकानां शक्राणां घूकाना च ओघो येन तत्; पुनः किं०, कामोत्सवं कामं प्रकामं कामस्य च कन्दर्पस्य उत्सवो यस्मात्तत् ॥ २१ ॥

आसन् जगच्चन्द्रमुनीन्द्रमुख्या-
स्तेषु क्रमाच्चन्द्रकुलाब्धिचन्द्राः ।
यैर्भारतं क्षेत्रमभूदपङ्क
द्राक् कातकक्षोदलवैरिवाम्भः ॥ २२ ॥

तेषु चतुर्षु कुलेषु, चन्द्रकुलमूलभूताच्चन्द्राचार्यात् क्रमात् अनुक्रमेण, श्रीसामन्तभद्रसूरि–श्रीवृद्धदेवसूरि–श्रीप्रद्योतनसूरि-श्रीमानदेवसूरि-श्रीमानतुङ्गसूरि–श्रीवीरसूरि–श्रीजयदेवसूरि-श्रीदेवानन्दसूरि-श्रीविक्रमसूरि–श्रीनरसिंहसूरि–श्रीसमुद्रसूरि-श्रीमानदेवसूरि–श्रीविबुधप्रभसूरि–श्रीजयानन्दसूरि-श्रीरविप्र-भसूरि--श्रीयशोदेवसूरि--श्रीप्रद्युम्नसूरि-श्रीमानदेवसूरि--श्रीविम-लचन्द्रसूरि--श्रीउद्द्योतनसूरि--श्रीसर्वदेवसूरि--श्रीदेवसूरि--श्री-सर्वदेवसूरि--श्रीयशोभद्रसूरि--श्रीनेमिचन्द्रसूरि--श्रीमुनिचन्द्रसू-रि--श्रीअजितदेवसूरि--श्रीविजयसिंहसूरिषु व्यतीतेषु मूलतस्त्रि-चत्वारिंशत्तमयोः पट्टधरयोरेकगुरुभ्रात्रो श्रीसोमप्रभसूरिश्री-मणिरत्नसूरीश्वरयोः पट्टधराः श्रीजगच्चन्द्रमुनीन्द्रमुख्या आसन् बभूवु । कीदृशा, चन्द्रकुलाब्धौ चन्द्रास्तद्वृद्धिकारित्वात्, यै श्रीजगच्चन्द्रसूरिभि, भारतं क्षेत्रं भारतवर्ष, अपङ्कं निष्पापं, द्राक् शीघ्रं, अभूत्; भूमौ विहरद्भिरिति शेष । यथा कातकैः कतकसंबन्धिभिः क्षोदलवैः कतकफलचूर्णलेशैः, अम्भः पानी-यम्, अपङ्कमर्थान्निर्मलं भवतीति दृष्टान्तः ॥ २२ ॥

येषा तपो दुस्तपमल्पसत्त्वै-
    र्वितन्वतां द्वादश वत्सराणि ।
आचाम्लरम्यं समभूत् पृथिव्यां
    ध्वस्तापवादं बिरुदं तपेति ॥ २३ ॥

येषां श्रीजगच्चन्द्रसूरीन्द्राणां, अल्पसत्त्वैः कातरै, दुस्तपं आचाम्लरम्यं तपो द्वादश वत्सराणि यावद्, वितन्वता कुर्वतां सतां, पृथिव्यां तपा इति बिरुदं, कि०, ध्वस्तापवादं निर्गतकल-ङ्कं, समभूत्। श्रीमेदपाटदेशे आघाटनाम्नि नगरे गुरुदर्शन-चमत्कृतात् श्रीराणकादिति श्रुतिः ॥ २३ ॥

सवत्सरे सायकसिद्धिवक्षो-
रुहौषधीप्राणपतिप्रमाणे ।
तपेति विख्यातिमवाप सत्यां
ततस्ततौजा अयमत्र गच्छः ॥ २४ ॥

संवत्सरे वर्षे, कीदृशे, सायका बाणाः पञ्च, "पौष्पाः पञ्च शरा" इत्याद्युक्तेः; सिद्धयश्च क्षितिजलज्वलनानिलाद्या अष्टौ महासिद्धयः, वक्षोरुहौ स्तनौ द्वौ, औषधीप्राणपतिश्चन्द्रमा-एकः, एतैर्वामगत्या विन्यस्तैः द्वादशशतोत्तरपञ्चाशीतिसङ्ख्यं (१२८५) प्रमाणं यस्मिंस्तस्मिन् सायकसिद्धिवक्षोरुहौषधीप्राणपतिप्रमाणे; तत इति तेभ्यः श्रीजगच्चन्द्रसूरीन्द्रेभ्य, ततं विस्तीर्णमोजो दलं प्रबलज्ञानक्रियाविषयं यस्य स ततौजाः, अयं गच्छ, तपागच्छ इति विख्याति प्रसिद्धिः; पुनः कीदृशी, सत्या यावज्जीवमाचाम्लाभिग्रहिगुरुतपोगुणनिष्पन्नत्वात् समीचीना, अवाप प्राप्तवानिति ॥ २४ ॥

काव्यत्रयेण तपगच्छमेव वर्णयति–

सदालिशाली सुमनोमनोज्ञो
बर्हप्रबर्हः परभागजातः ।
सदैव-साधुः सुरसार्थहारी
यः स्वर्गिशाखीव बिभर्त्ति शोभाम् ॥२५॥

यस्तपागच्छः, स्वर्गिशाखीव कल्पवृक्ष इव, शोभां राढां, बिभर्तीत्यन्वय । द्वावपि निर्विशेषविशेषणै श्लेषद्वारेण विशिनष्टि--गच्छपक्षे सता साधूना आलिः श्रेणिस्तया शाली सदालिशाली, पक्षे सदा नित्यं अलिभिर्भ्रमरैः शाली शोभन इति; पुनः कि०. सुमनोभिः प्राज्ञैर्मनोज्ञः, पक्षे सुमनोभिः कुसुमैरिति; पुनः

कि०, बर्हेण परिवारेण प्रवर्ह प्रकृष्टः, पक्षे बर्हैः पत्रैः प्रबर्हः; पुन' कि०, परभागस्य गुणोत्कर्षस्य जातं समूहो यस्मिन् सः, पक्षे परा प्रकृष्टा भा कान्तिर्यत्रासौ अगः पर्वतोऽर्थान्मेरुस्तत्र जात-उत्पन्न परभागजात ; पुन कि०, सदैवाः सभागधेया साधवो मुनयो यत्र सः, पक्षे सदैव नित्यमेव साधुर्बन्धुर ; पुन कि०, सुष्ठु शोभनो रसो येषु ते सुरसास्तेऽर्था सूत्राभिधेयानि तानि विद्यन्ते येषु ते सुरसार्था अर्थाद्गीतार्थास्तैर्हारी रम्य , पक्षे सुर-सार्थेन देववृन्देन हारीति ॥ २५ ॥

न दर्शनज्ञानचरित्रकोशः
क्रिया शिवस्त्रीसुखदानदूती ।
अन्यत्र यं गच्छमतुच्छमच्छं
मुक्त्वा कलेन्दोरिव शम्भुभालम् ॥ २६ ॥

अतुच्छमलब्धमध्यत्वात् ; पुन अच्छं निर्मलत्वात् ; यं गच्छं तपागच्छं,मुक्त्वाऽन्यत्र क्रिया सम्यक्करणचरणसामाचारी-समाचरणलक्षणा, न वर्त्तते इत्यन्वय । क्रिया कीदृशी, दर्शनज्ञा-नचरित्राणां कोशो भाण्डागारं तदाधारत्वादिति । पुन कि०, शिवस्त्रीसुखस्य दाने दूतीव दूती तन्मेलापकहेतुत्वात् । अथात्र दृष्टान्तो यथा--शम्भोर्महादेवस्य भालं मुक्त्वा इन्दोश्चन्द्रमस , कलाऽन्यत्रापरपुरुषललाटे, नेति नास्तीत्यर्थ ॥ २६ ॥

यद्वासिभिः सुन्दरसूरिसिंहो-
पाध्यायविज्ञर्षिभिरर्चनीयैः ।
श्रीवर्द्धमानप्रभुशासनं स-
द्दिव दिवेशैरिव दिद्युतेऽदः ॥ २७ ॥

यद्गच्छवासिभि सुन्दरसूरिसिंहोपाध्यायविज्ञर्षिभि रुचि-

रानूचानपश्चाननवाचकपण्डितमुनिभि , किं०, अर्चनीयैर्महनी-
यैः, जगतामिति शेष । अद इत्येतत्, श्रीवर्द्धमानप्रभो शासनं
पारम्पर्य, दिवेशैर्गसरेश्वरै सूर्यैरिति यावत्, दिवं आकाशमिव,
दिद्युते शोभते स्म, इति दृष्टान्त ॥ २७ ॥

गच्छेऽत्र सूरिप्रभवः प्रभूत-
प्रभुत्वपूर्णाः क्रमतः क्रमज्ञाः ।
संविग्नविज्ञर्षिमनोज्ञसंज्ञाः
श्रीहेममुख्या विमला बभूवुः ॥ २८ ॥

अत्र तपाख्ये, गच्छे श्रीजगच्चन्द्रसूरीन्द्रात् चतुश्चत्वारि-शत्तमपट्टधरात् क्रमतोऽनुक्रमेण, श्रीदेवेन्द्रसूरि–श्रीधर्मघोष-सूरि–श्रीसोमप्रभसूरि–श्रीसोमतिलकसूरि–श्रीदेवसुन्दरसूरि–श्रीसोमसुन्दरसूरि–श्रीमुनिसुन्दरसूरि–श्रीरत्नशेखरसूरि–श्रील-क्ष्मीसागरसूरि–श्रीसुमतिसाधुसूरिषु जातेषु सूरिप्रभवः सूरी-श्वरा ; पुनः कीदृशा , प्रभूतं भूरि यत् प्रभुत्वमैश्वर्य तेन पूर्णा , पुनः किं०, क्रमं कल्पं साध्वाचारं जानन्तीति क्रमज्ञा ,अथवा क्रमे गुरुसंप्रदाये दक्षाः क्रमज्ञा ; पुन किं०, संविग्नेषु संवेग-वत्सु विज्ञेषु पण्डितेषु ऋषिषु साधुषु मनोज्ञा संज्ञा येषां ते संविग्नविज्ञर्षिमनोज्ञसंज्ञा , श्रीहेममुख्या विमला इति श्रीहेमवि-मलसूरय पञ्चपञ्चाशत्तमे पट्टे बभूवुर्जाता इत्यर्थः ॥ २८ ॥

तेषा प्रभूणां प्रभुताद्भुतश्री-
सौभाग्यभाग्यादिगुणैरुदारैः ।
अद्यापि सद्यो हृदि गच्छ एष
मुदे शरच्चैरिव देवमार्गः ॥ २९ ॥

तेषा प्रभूणां श्रीहेमविमलसूरीणा, प्रभुता गच्छैश्वर्यरूपा,

अद्भुता श्रीश्च शोभा, सौभाग्यं नृपादिप्रियत्वं, भाग्यं च श्रुतवयोवृद्धे गुरुभ्रातृसूरिद्वन्द्वे सत्यपि स्वगुरुपट्टसंपत्प्राग्भारसमागमातिशयलक्षणं; इत्यादिभिरुदारैर्गुणैराकर्णिते सद्भिः, अद्य यावद्गच्छ एष मुदे भवति । दृष्टान्तोऽत्र यथा–शरद्भै शरत्कालीनैर्नक्षत्रै, देवमार्ग इवाकाश इव; यत शरदि वार्दलाद्यनावृतत्वेन विशेषतो नक्षत्राणां नैर्मल्यं मुदे भवतीत्याशयः ॥२९॥

तत्पट्टकुम्भिप्रभुकुम्भभूमौ
सिन्दूरपूरायितमत्र गच्छे ।
आनन्दमुख्यैर्विमलैर्यतीन्द्रै-
श्चारित्रमार्गामरमार्गमित्रैः ॥ ३० ॥

तस्य श्रीहेमविमलसूरेः पट्टरूपो यः कुम्भिप्रभुर्गजेन्द्रस्तस्य कुम्भभूमौ कुम्भप्रदेशे, आनन्दमुख्यैर्विमलैर्यतीन्द्रैः श्रीआनन्दविमलसूरिभि, कीदृशैश्चारित्रमार्ग संयमपथ स एवामरमार्ग आकाशस्तत्र मित्रै सूर्यैः; सिन्दूरपूरैरिवाचरितं सिन्दूरपूरायितम्, अत्रेति श्रीतपागच्छे ॥ ३० ॥

अथ पञ्चदशभिर्वृत्तैस्तानेव सूरीन् वर्णयति–

वर्षे भुजेभेषुहिमांशुसङ्ख्ये
शुभेऽहनि श्रीवटपल्लिपुर्याम् ।
समन्वितैः श्रीविनयादिभावा-
भिधेन शिष्येण बुधोत्तमेन ॥ ३१ ॥

वर्षे संवत्सरे, कीदृशे, भुजौ द्वौ, इभा हस्तिनोऽष्टौ दिग्गजानामष्टसङ्ख्यत्वात्, इषवो बाणाः पञ्च, हिमरश्मिश्चन्द्रश्चैकः; अथ वामगतिजुषामेषां मीलितानां पञ्चदशशतोत्तरद्व्यशी-

तिरूपा (१५८२) सङ्ख्या यत्र तत्र वर्षे भुजेभषुहिमांशुसङ्ख्ये; पुनः कस्मिन्, अहनि वासरे, कि०, शुभे भव्ये; पुनः कस्यां, श्रीवटपल्लिपुर्या पत्तननगराभ्यर्णवर्त्तिन्या, यैः पूज्यपादैः श्रीआनन्दविमलसूरिभि, एतत्पदं त्वग्रेतनवृत्तगतमप्यत्राधिकाराद्व्याख्यातमिति। यैः कीदृशैः, समन्वितैः संयुक्तैः, केनेत्याह—श्रीविनयादिभावाभिधेन शिष्येण; कि०, बुधोत्तमेन श्रीविनयभावपण्डितोत्तमेन निजविनेयेन परिवृतैरिति ॥ ३१ ॥

तैः किमकारि ?, तदग्रेतनवृत्ते युग्मत्वादाख्याति—

किञ्चित् प्रमादाचरणं निरीक्ष्य
गच्छे स्वकीये कलिकालजन्यम् ।
यैः पूज्यपादैर्जगतां हिताये-
द्दध्रे क्रिया रत्नमिवाध्वपांशोः ॥३२॥

किञ्चित्प्रमादाचरणं सुविहितसामाचारीशैथिल्यलक्षणं, किं०, कलिकाल पञ्चमारकस्तज्जन्यं तद्वशाज्जातं, निरीक्ष्य जगता हिताय क्रिया विशुद्धसाधुपद्धतिप्रवृत्तिरूपावस्कन्धबाह्यवस्त्रपात्रपुस्तकव्यतिरिक्ताशेषशेषपरिग्रहनिवृत्तिस्वरूपा, उद्दध्रे उद्धृता, यथाऽध्वन पथः पांशो रेणो, रत्नमिव मणिरिव, यथोद्ध्रियते तथेति दृष्टान्तः ॥ ३२ ॥ इति युग्मव्याख्या ॥

दुरुक्तियुक्त्युत्कटकर्दमाढ्ये
मिथ्यात्वकूपे प्रपतन् जनो यैः ।
अत्यर्थदार्ढ्यान्वितया स्ववाचो-
द्दध्रे सुरज्ज्वेव सदर्थशक्त्या ॥ ३३ ॥

दुरुक्तियुक्तिर्दुर्वाक्ययोगः स एवोत्कट कर्दमस्तेनाढ्ये, मिथ्यात्वकूपे प्रपतन् ब्रुडन्, जन यैः पूज्यैः, स्ववाचा निजवा-

ण्या, कि०, अत्यर्थदार्ढ्यान्वितया अत्यर्थं गाढं दार्ढ्यं भगवदाज्ञाया स्थैर्यं तेनान्वितया युक्तया; पुन कि०, सदर्थशक्त्या सती अर्थस्याभिधेयस्य शक्तिर्यत्र तया । कयेवेत्याह--सुरज्ज्वेव सुष्ठु शोभना या रज्जूस्तया सुरज्ज्वा, कि०, अत्यर्थदार्ढ्यान्वितया गाढदृढतासंयुतया; पुन सुरज्ज्वा कि०, सती अर्थशक्तिः प्रयोजननिष्पादनविषयिणी शक्तिर्यत्र तया सदर्थशक्त्या; उद्दध्रे उद्धृत इति ॥ ३३ ॥

विश्वं स्वकीयेन गवां गणेन
व्यधायि यैः सूरिसमाजचन्द्रैः ।
कुपाक्षिकोक्तिप्रसरत्तमोभिः
शुद्धाध्वनिध्यानविदग्धमन्धम् ॥ ३४ ॥

यै सूरिसमाजचन्द्रैराचार्यसभाशशाङ्कैः, कुपाक्षिकाणां कुतीर्थिनां उक्तयो वाक्यानि तान्येव प्रसरन्ति विस्तारवन्ति यानि तमासि ध्वान्तानि तै, अन्धं शुद्धमार्गानवलोककमिति, विश्वं जगत्, स्वकीयेन गवां गणेन वाचां निचयेन, पक्षे किरणकदम्बकेन; शुद्धाध्वनो विशुद्धमार्गस्य यद् निध्यानं निभालनं तत्र विदग्धं निपुणं, व्यधायि विनिर्ममे ॥ ३४ ॥

मिथ्यात्वधीध्वान्तभृते समस्ते
विश्वौकसि च्छन्नपदार्थसार्थे ।
विजृम्भितं यद्वचनैः प्रदीपै-
रिवोत्तमस्नेहदशामहाढ्यैः ॥ ३५ ॥

मिथ्यात्वस्य शुद्धदेवगुरुधर्माश्रद्धानरूपस्य या धीर्बुद्धिस्तद्रूपं यद् ध्वान्तं तेन भृते, समस्ते विश्वौकसि जगद्गृहे, अतएव पुनः कि०, छन्नः पदार्थानां सार्थो यत्र तत्र च्छन्नपदार्थ-

मार्थे, यद्वचनैर्यस्य श्रीआनन्दविमलसूरेर्वचनैः, प्रदीपैरिव विजृम्भितं विलसितं दीपैरिवाचरितमिति यावत् । अथ यद्वचनदीपकरूपद्वयमपि श्लिष्टविशेषणेन विशिनष्टि--एकत्रोत्तमेषु देवगुरुधर्मादिषु स्नेहो रागः, पुनरुत्तमा दशाऽवस्था, पुनरुत्तमो यो मह उत्सवस्तैराढ्यैः ; अन्यत्र स्नेहो घृतादिकः, दशा वर्त्तिः, महस्तेजश्च, तैरुत्तमस्नेहदशामहाढ्यैरिति ॥ ३५ ॥

उलूकपाका इव भूरिमिथ्या-
धीध्वान्तपात्रे कलिकालरात्रौ ।
कुपाक्षिकाः पापभटा अटन्तो
यैश्चक्रिरेऽर्कैरिव मीलिताक्षाः ॥ ३६ ॥

उलूकपाका इव घूकार्भका इव, यथाऽर्के सूर्ये, तथा यैर्गुरुभि, कुपाक्षिका कुमतयः, मीलिताक्षा मुद्रितनेत्रा, चक्रिरे कृता इति । कीदृशाः, पापस्य भटाः सुभटा इव पापभटास्तत्साहाय्यकृत्त्वात् ; पुनः किं कुर्वन्त, अटन्तो भ्रमन्तः, क्व, कलिकालरात्रौ दुःषमाकालदोषाया, किं०, भूरिमिथ्याधीध्वान्तपात्रे घनतरमृषामतितमोभाजने । अत्र क्वचित् पाठत क्वचिच्चार्थतः सूत्रार्थादिपुनरुक्तताऽस्तीति; तथापि गुर्वादिस्तुत्यधिकारात् स दोषो नाव गार्यः श्रीमदार्यै । यदुक्तं पूर्वाचार्यै --"सज्झायज्झाणतवोसहेसु उवएसथुइपयाणेसु । संतगुणाकित्तणेसु अ न हुति पुणरुत्तदोसाओ" ॥ १ ॥ एवमग्रतोऽपि भावनीयमिति ॥ ३६ ॥

लोकः समस्तोऽपि दुरन्तमिथ्या-
वाग्ग्रीष्मभीष्मातपतप्तगात्रः ।
यैः प्रीतविश्वैर्विदधेऽस्ततापः
पानीयवाहैरिव सान्द्रशब्दैः ॥ ३७ ॥

समस्त सर्वोऽपि लोकः, कीदृशः, दुरन्ताऽपारा या मिथ्यावाग् कुमतिवासिता मृषोक्तिस्तद्रूपो यो ग्रीष्म उष्णर्तुस्तस्य यो भीष्मातपो घोरतापस्तेन तप्तं गात्रमङ्गं यस्य स दुरन्तमिथ्यावाग्ग्रीष्मभीष्मातपतप्तगात्रः, यैर्गुरुभिः, पानीयवाहैर्जलदैरिव, कीदृशै, प्रीतं प्रीणित विश्वं जगद् यैस्तै, अन्यत्र प्रीता विश्वा विश्वम्भरा यैस्तै प्रीतविश्वैः, पुनः किं०, सान्द्रशब्दैर्गभीरनादैः, लोकः कीदृशः, अस्ततापो ध्वस्तसन्तापः, विदधेऽव्यधायीति ॥ ३० ॥

सद्दर्शन ज्ञानमथो चरित्रं
रत्नत्रयीय मनुजैरवापि ।
यतः पयोधेरिव देववृन्दै-
श्चन्द्रश्च लक्ष्मीश्च सुधा च सद्यः ॥ ३८ ॥

सच्छोभनं दर्शनं सम्यक्त्वं ज्ञानं चरित्रं चेति रत्नत्रयी, यतः सूरीन्द्राद्, मनुजैरवापि प्राप्ता। दृष्टान्तमत्राह—यथा पयोधे समुद्राद्, देववृन्दैस्त्रयस्त्रिंशत्कोटिप्रमितामरनिकरै, चन्द्र, पुनर्लक्ष्मीश्च, पुन सुधाऽपि चेति। अत्र देवैर्बहूना रत्नानामुपादानेऽप्यत्र तु चन्द्रलक्ष्मीसुधारूपा रत्नत्रयी त्रित्वसंख्यानुरोधादेवोपात्तेति रहस्यम् ॥३८॥

मरुस्थलीमालवमेदपाट-
मुख्येषु देशेषु जनानशेषान् ।
बोधिप्रदानात् सुखयाबभूवु-
र्ये तोयवर्षादिव तोयवाहाः ॥ ३९ ॥

ये गुरव, मरुस्थलीमालवमेदपाटप्रमुखेषु देशेषु अशेषान् जनान् बोधिप्रदानात् सम्यक्त्वसमर्पणात्, सुखयांबभूवुः

सुखिना व्यधुः, यथा तोयवाहा मेघा, तोयवर्षाद् वारिवर्षणादिति दृष्टान्तः ॥ ३९ ॥

सत्य च धर्मश्च तपश्च नष्टा
अमी गुणा यत्कलिकालदोषात् ।
एतन्मयैर्यैर्यतिपैः स जह्रे-
त्रयीमयेणात्र तमोऽशुनेव ॥ ४० ॥

सत्यं समीचीनवचनं, धर्मश्च क्षान्त्यादिर्दशविधो यतिधर्मः, तपश्च द्वादशधा, अमी त्रयो गुणा कलिकालस्य दु षमाकालस्य दोषान्नष्टा बभूवुः, स दोषः एतन्मयैः सत्यधर्मतपोमयै, यैर्यतिपैर्मुनीन्द्रै, जह्रेऽहारि; अत्र प्राचुर्यार्थे मयट्प्रत्ययः। दृष्टान्तमाह- यथा "त्रयीतेजोमयो भानु" इति वचनात् त्रयीमयेण अंशुना सूर्येण, तमो ध्वान्तमिवेति ॥ ४० ॥

प्रकाममेषा ममतारसेन
सन्तोषिताऽशेषधरातलेन ।
चारित्रधर्मत्रिदशद्रुमो द्राक्
सिक्तः पुन. पल्लवभाग् बभूव ॥ ४१ ॥

एषां गुरूणा परमगुरूणां, समतारसेन साम्यसलिलेन, किलक्षणेन, सन्तोषितं सम्यक् तोषितं अशेषं धरातलं भूतलं येन तेन सन्तोषिताशेषधरातलेन, सिक्तः सेचनविषयीकृत, चारित्रधर्मत्रिदशद्रुमः सुविहितसाधुधर्मकल्पवृक्षः, पुनः पल्लवभाग् बभूव, अन्तरा म्लानोऽपि पुनः पल्लवित इति ॥ ४१ ॥

तेपे तपो दुस्तपमस्तपाप
षष्ठाष्टमाद्यं बहुधा बुधार्च्यैः ।

ईर्यादियत्नैर्यतिवृन्दवर्यैः

स्वस्मिन् शरीरेऽपि गतस्पृहैर्यैः ॥ ४२ ॥

यैः पूज्यैः, कि०, बुधाचार्यैश्रिद्रुतपूज्यैः; पुनः कि०, ईर्यादिषु प्रवचनजननीषु यत्नं मनोवचस्तनुसावधानत्वप्रयत्नं येषां तैः ईर्यादियत्नैः; पुनः कि०, यतिवृन्दे सुविहितसार्थे वर्यैर्वरेण्यैः सम्यक्प्रवृत्तिनिष्ठत्वान्नायकत्वाच्चेति, पुन कि०, स्वस्मिन् निजे शरीरेऽपि नि स्पृहैरिति; अत एव वहुधा बहुभि प्रकारै, अनशनन्यूनोदरतादिभि, तप कि०, दुस्तप हीनसत्त्वै, पुन कि०, अस्तपापं ध्वस्तपातकं; पुन कि०, षष्ठाष्टमाद्य तेपे तप्तमिति; अत्राद्यशब्दादालोचनातपोविंशतिस्थानकतपोवीरस्वामिनिर्मितद्विशतैकोनात्रिंशत्षष्ठतपोऽष्टकर्मनाशकतप प्रमुखबहुतपोग्रह, यतस्तै सप्ताना कर्मणा तपस्तु यथोक्तचतुर्थषष्ठाष्टमादिभि पूर्ण निर्ममे, नामकर्मणस्तु प्रकृतिप्राचुर्यादायुषोऽवसानाच्च न चक्रे इति श्रुति ॥ ४२ ॥

पीयूषपादैरिव पूज्यपादै-

स्तपागणव्योम्नि समुद्गतैर्यैः ।

श्रीमन्महावीरपरम्पराब्धि-

वेला समुल्लासमियाय भूयः ॥ ४३ ॥

यैः पूज्यपादैः पीयूषपादैश्चन्द्रैरिव, तपागणव्योम्नि तपागच्छगगने, समुद्गतैरुदयं प्राप्तैः सद्भिः, श्रीमतो महावीरस्य परम्परारूपाऽब्धिवेला भूयो बहु, समुल्लासं इयाय प्राप्तेत्यर्थः ॥४३॥

कल्पाह्रिपाङ्कुरमिवात्यतुच्छ-

च्छायं महानन्दफलं ददानम् ।

संस्थाप्य पट्टे विजयादिदाना-

नाम दत्तम् । मम प्रियया अनपत्यया धर्मपुत्रीति कृत्वा वर्द्धिता । सैषा सत्यवती मम कृत्रिमपुत्री, न पुनरात्मजा । यतः ईदृशानामपत्यानां मादृशः पिता कुतः स्यात , यथा कल्पवल्ल्याः स्थानं सुमेरुः, न पुनर्मरुः स्यात् । मयाऽपि पितुरुपरि तव भक्तिर्दृष्टा; तदिदानीं मम धर्मसुतां सत्यवतीं रथे आरोप्य स्वस्थानं याहि; राज्ञा शान्तनुना समं अस्याः पाणिग्रहणं कार्य; अतः परमस्याः सुखदुःखयोः त्वमेव विश्राम इत्युक्त्वा नौपतिः सत्यवतीं शान्तनवाय समर्पयामास । गाङ्गेयोऽपि स्वगृहमागत्य सुमुहूर्त्ते द्वयोः पाणिग्रहणमकारयत । ततः शान्तनुः पुत्रं गाङ्गेयमुत्सङ्गे निवेश्य वारं वारं प्रशंसन्नेवमुवाच धन्योऽसि त्वं येन व्रतमङ्गीकृत्य पितुरीप्सितं कृतम् । एवं सुखमनुभवतो राज्ञीराज्ञोर्दिनानि यान्ति । ततो नवप्रेमाणं पत्नीं सत्यवतीं प्राप्य भूपाल कामं कामप्रियोऽभवत् । तया पत्न्या सह सुखमनुभवतो राज्ञः क्रमेण चित्राङ्गदाभिधः पुत्रो जातः; कथंभूतः ।

"तेजस्वितिलकः पादैराक्रामन् भूभृतां शिरः ।
योऽभवज्जातमात्रोऽपि बालाऽर्क इव दुःसहः" ॥ १ ॥

कतिपयवर्षान्ते तस्य राज्ञः सत्यवत्याः कुक्ष्युद्भवो विचित्रवीर्यनामा द्वितीयः पुत्रो बभूव । उभावपि राज्ञो बाहू इव; परं गङ्गासूनोस्तदा तयोः समग्रेषु हितकर्मसु भ्रातृस्नेहो भृशं प्रादुर्बभूव । स गाङ्गेयस्तौ बालकौ स्वाङ्कखेलनैर्भूरिश खेलयामास । तौ लालितौ क्रमेण सप्ताष्टवर्षीयौ जातौ, तस्मिन् समये स्वायुःपर्यन्ते राजा शान्तनुः शुभध्यानेन मानवीं तनुं तत्याज, सुकृतेन स्वर्गं जगाम च ।

यतः—

"तित्थयरा गणहारी सुरवइणो चक्किकेसवा रामा ।

१ तीर्थकरा गणधारिणः सुरपतयश्चक्रिकेशवा रामाः ।

[1]अवहरिआ हयविहिणा अवरजीवाण का वत्ता ॥१॥
[2]छायामिसेण कालो सयलजिआणं छलं गवेसन्तो ।
पासं कहवि न मुंचइ ता धम्मे उज्जमं कुणह" ॥२॥

एवं ज्ञात्वा गाङ्गेयः शान्तनोरौर्ध्वदेहिकं कृत्वा, चित्राङ्गदं शिशुं राज्ये संस्थाप्य, स्वयं धर्मध्यानतत्परो बभूव। यतो महात्मनां प्रतिपन्नं युगान्तेऽपि नहि विस्मृतिमभ्येति। स चित्राङ्गदो राजा क्रमेण वृद्धिं प्राप्तो बह्वीः राजकन्यकाः परिणीय ताभिः सह वैषयिकं सुखमनुभवन्नास्ते। ततश्चित्राङ्गदोऽत्युत्कटः पृथ्वीं साधयन् विरोधिभिः सार्द्धं एकाक्येव युद्धं चक्रे। गाङ्गेयेन वारितोऽपि राज्ञा नीलाङ्गदेन सह युद्धं कुर्वन् नीलाङ्गदेन चित्राङ्गदो महासंग्रामे हतः। हतं चित्राङ्गदं दृष्ट्वा भीष्मो रुष्टो भ्रातृवैरिणं नीलाङ्गदमेकेनैव बाणेनावधीत्। पुनरेव गाङ्गेयः स्वगृहमागत्य बन्धुवत्सलो लघुबान्धवं विचित्रवीर्यं राज्ये न्यवीविशत्। ततो लघुबान्धवमूचे; भो भ्रातः! त्वया केनापि सह विरोधो न विधेयः, युद्धार्थे न गन्तव्यम्, अहं तव चिन्तां कारिष्ये इत्युक्त्वा स्वयं राज्यचिन्तां कुर्वन् विचित्रवीर्यराज्ञः कृते अनुरूपदाराणां गवेषणाय प्रतिदिशं निजान् नरान् प्रैषीत्। एकस्मिन् दिने प्रेषितनरेभ्यः कश्चिन्नरो धूलिधूसरः शीघ्रमागत्य गाङ्गेयमिति कथयामासिवान्। हे स्वामिन्! काश्यपीतले काशीदेशे वाराणस्यां नगर्यां श्रीकाशिराजोऽस्ति। यस्य राज्ञः अम्बिका १ अम्बालिका २ अम्बा चेति तिस्रः सुताः सन्ति। यासां पुरस्त्रिदिवस्त्रियस्तृणवद्विभान्ति। तासामर्थे काशिराज्ञा स्वयंवरः प्रारब्धोऽस्ति। तस्मिन् स्वयंवरेऽनेके राजानोऽनेके राजपुत्राश्च संप्रत्युपस्थिताः, तथा केचिदापतन्ति,

१ अपहृता हतविधिना अपरजीवाना का वार्ता ॥ १ ॥
२ छायामिषेण काल सकलजीवाना छल गवेषयन् ।
पार्श्वे कथमपि न मुञ्चति तस्माद् धर्मे उद्यम कुरुत ॥ २ ॥

केचन आपतिष्यन्ति, अतस्ताः काशिभूपतेः कन्यकाः रूपेण वयसा कलाकलापेन च विचित्रवीर्यस्य योग्या वर्त्तन्ते। तच्छ्रुत्वा गाङ्गेयेन चिन्तितं, अहो काशिराज्ञा किं कृतं, सर्वे राजानः कुमाराश्च निमन्त्रिताः; परं ममानुजः कलावान् गुणवान् न निमन्त्रितः। अतोऽहं एकोऽपि तत्र गत्वा सर्वान् जित्वा स्वसमीहितं करिष्ये। एव विमृश्य सुजवनैर्वाजिभिर्व्यापृतेन रथेन द्रुतं तत्र स्वयंवरे प्राप्तवान्। तत्रोच्चेषु मञ्चेषूपविष्टो गाङ्गेयवर्णो गाङ्गेयो देवेषु देवराज इव विराजमानः तास्तिस्रोऽपि बालिका विचित्रवीर्यार्थे हर्तुं मनः अकरोत्। अथ धात्र्या कीर्त्त्यमानेषु राजसु मञ्चादुत्तीर्य तार्क्ष्य इवोत्फालो गाङ्गेयस्तं स्वयंवरसमागतं राजचक्रं पयोधिमिव लीलया विलोडयामास। तेभ्यः कन्यारत्नानि आच्छिद्य रथमारोप्य भीष्मपराक्रमो भीष्मः पथि चचाल। मार्गे रथस्थाः ता विक्लवाः दृष्ट्वा भीष्म एवमुवाच; हे वत्साः! अहं शान्तनोः सूनुरभीष्मो भीष्मोऽस्मि। भवतीनां नानिष्टं करिष्ये, किन्तु अभीष्टं करिष्ये। यतो हस्तिनापुरस्वामी शान्तनुपुत्रो विचित्रवीर्यो राजाऽस्ति, तस्याग्रजोऽहं गाङ्गेयो ब्रह्मचारी, परं विचित्रवीर्यार्थमहं युष्मान् हरामि। यूयमद्भुतं हस्तिनापुरसाम्राज्यं चिरं निर्विशत इति ताभ्यः कथयित्वा कुण्डलीकृतकोदण्डो गाङ्गेयस्तान् सर्वान् राजन्यान् बाढस्वरेणैवमुवाच; भो भूपाः! गर्वपर्वताः सर्वे मद्वाक्यं शृणुत, अहं भीष्मो युष्माकं पश्यतां कन्या हरामि। यदि युष्माकं दोर्दण्डचण्डिमा कोऽपि जागर्त्ति, तर्हि कोऽप्यायुधं धत्तां। तच्छ्रुत्वा कुपिता भूपालाः आयुधानि गृहीत्वा संग्रामकार्ये गाङ्गेयेन समं ढुढौकिरे। गाङ्गेयोऽपि तैः सह संग्रामं चक्रे। तान् जित्वा जयपताकां गृहीत्वा गाङ्गेयः स्वयं जितकाशिनं मेने। ततो गाङ्गेयः काशिभूपतिं सुधोपमैर्वाग्भिः सन्तोष्य विचित्रवीर्यार्थं कन्या ययाचे। दत्तास्तेन कन्याः। ताभिः स्फारने-

त्राभिर्बालाभिरन्वितो गाङ्गेयो हस्तिनापुरमगात् । तत्र तास्तिस्रः काशिनन्दनीर्महा[illegible]न विचित्रवीर्येण समं प्रमोदादुदवाहयत् । तास्तिस्रो विचित्रवीर्यं राजानं प्राप्य स्वर्गसमं सुखमनुबभूवु. ।

यतः–

"द्विरष्टवर्षिका योषित् पञ्चविंशतिकः पुमान् ।
अनयोर्निबिडा प्रीतिः स्वर्ग इत्यऽभिधीयते" ॥ १ ॥

ताः स्त्रियः कल्पपादपं लता इव तं सिषेविरे, न तु मायया । कैतवसुखमसुखमेव ।

यतः–

"सीअल भोअण धूअधण रङ्ग विहूणु घरवास ।
माणस नई मायाविउं ए चिहुं केहां आस" ॥ १ ॥

एवं तस्य राज्ञो राज्ञीभिः समं सुखान्यनुभवतः कामः कामं धर्मार्थौ जग्रसे, राहुः सूर्याचन्द्रमसाविव । तस्य राज्ञ एवं कामासक्तस्य बलक्षयः प्रावर्तत । ततः सरङ्गोऽप्यऽनङ्गः केवलं विरङ्ग एव स्यात् ।

यतः–

"कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयः ।
राजयक्ष्माऽऽदिरोगाश्च भवेयुर्मैथुनोत्थिताः" ॥ १ ॥

गाङ्गेयेन ततस्तादृशं वपुर्दृष्ट्वा प्रोक्तं भो बान्धव ! यदि त्वमनङ्गेनापि स्वपुष्पबाणैर्जितः, तर्हि त्वमायसान् शत्रुबाणान् कथं सहिष्यसे ? । अतः कुरङ्गाक्षीष्वऽत्यासक्तिं मा कृथाः ।

यतः–

"अत्यासङ्गाद्विनाशाय दूरस्था न फलप्रदाः ।
सेव्या मध्यमभावेन राजवह्निगुरुस्त्रियः" ॥ १ ॥

एवंविधां बान्धवशिक्षां श्रुत्वा यावत् मनसि हर्षितोऽभूत्, तावत् माता सत्यवत्यपि तत्रागात्, तयापि तथैवोक्तम् । पश्चाद्-

ज्जिनो विचित्रवीर्यो धर्माऽर्थकामेषु समवृत्तिरजायत । अथ कतिपयवर्षान्ते विचित्रवीर्यपत्नी अम्बिका गर्भं बभार । क्रमेण वृद्धिं गतो गर्भः सम्पूर्णदोहदाऽम्बिका पूर्णे मासि सुलग्ने उद्दीप्रप्रभापूर्णं जन्मान्धं सुतं असूत । ततः सुदिवसे भीष्मेण सत्यवत्या च महोत्सवपुरस्सरं तस्य पुत्रस्य धृतराष्ट्र इति श्लाघ्यं नाम विनिर्ममे । विचित्रवीर्यस्य द्वितीया पत्नी अम्बालिकापि तस्याऽनुजं द्वितीयमनुजमजीजनत्, तस्याजन्म पाण्डुरोगित्वात् पाण्डुरिति नाम पप्रथे । विचित्रवीर्यराज्ञस्तृतीया पत्नी अम्बापि तृतीयं पुत्रं गुणाम्बुराशिमजीजनत्, तं गुरवो विदुराभिधं विदधिरे । अथ तेषु कुमारेषु कुरोर्वंशमलङ्करिष्णुषु शुभैर्भावैरुज्जृम्भितं पुनरशुभैर्भावैः प्रनष्टम् । यथा-तेषां जन्मनि चौरपारदारिकचरटादिशब्दा अभिधेयशून्या जाताः । तथा नय एकच्छत्रं लेभे । तथा तेषां जन्मन्याधिव्याधिश्च न वाधते । तथा बलिष्ठेन दुर्बलो नाभ्यभूयत । तथा ऽतिवृष्ट्यनावृष्टिस्वचक्रपरचक्रादिभयं च जनं नाभिभवति । तथा कालेऽवश्यं महीरुहः पुष्यन्ति स्म फलन्ति स्म । तेषां कुमाराणामनुभावान्महानुदयोऽभूत् । एवं काले याति सति विचित्रवीर्यो राजा भूयोऽपि तेनैव व्यसनेनालिङ्गितो बभूव । पुनस्तथैव कासश्वासदाघज्वरादिभिः पीडितः परलोकं जगाम । अहो ! कामस्य दुरन्तता । तं पुत्रं मृतं दृष्ट्वा सत्यवती माता भृशं विलापानकरोत् । हा परिच्छदवत्सल ! हा कौरवकुलोत्तंस ! हा इक्ष्वाकुवंशतिलक ! इत्यादिविलापान् कुर्वती सत्यवती मूर्च्छामगमत् । पुनः शीतलोपचारादिभिर्लब्धचैतन्या पुत्रगुणान् स्मृत्वा भूयो भूयो मुक्तकण्ठं रुरोद । तथैव गलद्बाष्पा अम्बिकाप्रमुखाः स्नुषाः रुदन्ति स्म । तथैव सर्वोऽपि परिजनो बाढं पूत्करोति स्म । परं दैवायत्तं केन लङ्घ्यते । तैः सर्वैर्गाङ्गेयादिभिः परिजनैर्विचित्रवीर्यराज्ञोऽङ्गसंस्कारो विदधे । कतिपयदिनान्ते गाङ्गेयसत्यवतीभ्यां तेषां कुमा-

राणां बाल्यचापल्यललितैः कथञ्चन स शोकः स्तोकतां निन्ये। पुनस्तेषा कुमार।णा परस्परं बन्धुस्नेहस्तथाऽजनि यथैकतमं विना एकोऽपि क्षणमपि नाऽस्थात्। अथान्यदा भीष्मो धृतराष्ट्रमुवाच; भो वत्स! इदानी भवन्तं राज्यश्रीरुपास्थिता अत इदं राज्यं गृहाण। धृतराष्ट्र उवाच ; हे पितृव्य! नाहं राज्ययोग्योऽस्मि, किन्तु राज्यश्रीयोग्यः पाण्डुरस्ति, तस्माद्राज्यश्रीः पाण्डवे दीयताम्।

यतः—

"अङ्गं समाश्रित्य भुवस्तलेऽस्मि-
न्नवातरत्कि पुनरप्यनङ्गः।
इत्यद्भुतं यस्य निरीक्ष्य रूपं
भ्रान्ति विधत्ते सकलोऽपि लोकः" ॥ १ ॥

ततो गाङ्गेयप्रभृतिबन्धुभिः पाण्डू राज्ये स्थापितः। सोऽपि प्रचण्डदोर्दण्डमाहात्म्यतः सर्वान् महीपालान् वशीचक्रे। एकस्मिन् दिने गन्धारदेशाधिपः शकुनिनामा भीष्ममभ्येत्य बद्धाञ्जलिरभाषत। हे गाङ्गेय! एता अष्टावपि मद्भगिन्यः गन्धारीप्रमुखाः कुलदेव्योपदिष्टा धृतराष्ट्राय स्वयंवरास्तिष्ठन्ति, तर्हि एतासां मद्भगिनीनां अन्यूनगुणधारिणा अम्बिकासूनुना धृतराष्ट्रेण सह पाणिग्रहणं कारय। एवं पुनः पुनः प्रार्थितो गाङ्गेय एतासां अष्टानां धृतराष्ट्रं पति अतिष्ठिपत्। उद्दामतेजसः पाण्डो का कलत्रं भवित्री इति भीष्मचेतसि चिन्ताऽभूत्। एकस्मिन् दिने पाण्डुयुतो भीष्मो राजमार्गे चित्रपटव्यग्रकरं काञ्चिन्नरमैक्षत। तत्र पटे नारीरूपं दृष्ट्वा पाण्डुरचिन्तयत्।

यथा—

"नह्येषा रूपरेखा स्यान्मानुषीषु पुरन्ध्रिषु।
तदियं किं रतिः किं वा कमला किमु रोहिणी" ॥ १ ॥

तद्रूपं दृष्ट्वा मोहितः पाण्डुः । पश्चात्तमध्वगं सौधमानीय गाङ्गेयः पृच्छति स्म। भोः पान्थ! एषा पटे लिखिता किं सुरी वा किन्नरी वा विद्याधरी वा राजकन्या वा; यस्याः पटे प्रतिच्छन्दो लिखितोऽस्ति । तच्छ्रुत्वा पान्थ प्रोचे । मथुरा नाम पुरी अस्ति या कालिन्दी वीचिबाहुभिरालिङ्गतीव । तस्या यदुनामा नरेश्वर आसीत् । यतो यादवभूभुजां वंशोऽभूत् । तत्पुत्रः शूरनामा। तस्य द्वौ पुत्रौ शौरिसुवीरनामानौ अभूताम्। नयोर्यथाक्रमं राज्यं युव-राज्यं च दत्त्वा तपस्यामङ्गीकृत्य शूरनराधिपो दिवं ययौ । शौरिः सुवीराय मथुराराज्यं दत्त्वा स्वयं यदृच्छया कुशावर्त्तदेशे विजहार । तत्र देशे नवीनं शौर्यपुरं नगरं व्यधात् । तस्य शौरेः राज्यं कुर्वतो अन्धकवृष्णिप्रमुखा बहवस्तनयाः संजज्ञिरे । सुवीरस्यापि मथुराराज्यं कुर्वतो भोजकवृष्ण्यादयो बहवः पुत्राः संजज्ञिरे । शौरिरन्धकवृष्णिसुताय शौर्यपुरराज्यं दत्त्वा स्वयं दीक्षां लात्वा शिवश्रियमशिश्रियत् । सुवीरो भोजकवृष्णये मथुरां दत्त्वा सिन्धुदेशे गतः । तत्र सौवीराख्यं पुरं कृत्वा सुखेन राज्यं कुर्वाणस्तत्र तास्थिवान् । मथुराराज्यं भुञ्जतो भोजवृष्णेर्महौजसः उग्रसेननामा तनयोऽभवत् । शौर्यपुराधीशस्य अन्धकवृष्णेश्च सुभद्रानाम्न्यां पट्टराज्या दिक्पाला इव सुता दशाऽभूवन् । तेषां नामान्यमूनि ।

यथा–

"[1]समुद्रविजयः पूर्व[2]मक्षोभ्यस्तदनन्तरम् ।
[3]स्तिमितः [4]सागरश्चैव [5]हिमवा[6]नचलस्ततः ॥१॥
[7]धरणः [8]पूरणस्तस्मा[9]दभिचन्द्राभिधोऽपि च ।
[10]वसुदेवश्च दाशार्हो दशाप्येते प्रकीर्त्तिता." ॥२॥ (युग्मम्)

तेषां पुत्राणामुपरि द्वे पुत्र्यौ जाते । एकस्या अभिधानं कुन्ती, द्वितीयं नाम पृथा; द्वितीयस्या अभिधानं माद्रीति पिता

निर्ममे। प्रथमा पुत्री कुन्ती क्रमेण यौवनं प्राप्ता। पित्रोर्वरस्यार्थे चिन्ता जाता। ततोऽन्धकवृष्णिर्ज्येष्ठं पुत्रं समुद्रविजयमेवमुवाच। हे पुत्र! एतस्या मम पुत्र्याः अनुरूपः को वरो भावी इति मे मनसि महती चिन्ता वर्त्तते। ततः समुद्रविजय उवाच। हे तात! भगिन्याः कुन्त्या रूपं पटे आलिख्य समग्रेषु देशेषु कश्चित् पुरुषो वर-परीक्षाविचक्षणः प्रेष्यताम्। यथा स योग्यं वरं रूपशालिनं शुद्ध-वंशसमुद्भवमन्वेषते, परं स्वयम्वरे क्रियमाणे राजान ईर्ष्या-लवः कन्यार्थे कलहायन्ते इति ज्येष्ठपुत्रगिरा कुन्त्या रूपं पटे आलिख्य कोरकनामानं निजं सेवकं इत्यादिशत्। भोः कोरक! इदं चित्रपटं गृहीत्वा दूरदेशेषु गत्वा महीं भ्रान्त्वा कुन्त्यऽनु-रूपो यो योग्यवरो भवेत्, तं शीघ्रमागत्य त्वं कथयेः, इत्युक्त्वा राज्ञा प्रेषितोऽहं महीं क्रामन्नत्रागा, हे भीष्म! राजेन्द्र! एषा शौर्यपुरेशस्याऽन्धकवृष्णिराज्ञ सुतायाः कुन्त्या रूपं ज्ञेयम्। यथा-ऽसौ कुमारः पाण्डुराट् रूपेण कन्दर्पदर्पहा, तथा सापि कुन्ती रतिरूपानुकारा वर्त्तते। अनयोर्योगः सतां प्रशस्यो भवतु मालतीद्विरेफयोरिव। अन्यदपि किञ्चित् शृणु। कुन्त्याः सहोदरा माद्रीति नाम्ना द्वितीया लघुभगिनी, सा चेदिनृपाय दमघोषाय दत्ता। सोऽपि तां परिणेष्यति। परं कुन्त्याः प्रथमं पाणिग्रहणं भवति तथा कार्यम्। इत्थं तेनार्थितो गाङ्गेयः तत्सर्वं प्रतिपद्य पाण्डुरूपं पटे आलिख्य कोरकहस्ते पटं दत्त्वा कार्यस्थैर्याय कञ्चित् स्वपुरुषं कोरकेण सह शौर्यपुरे प्रेषयामास। कोरको-ऽपि गत्वा स्वं राजानं नमस्कृत्य तत्पूर्वोक्तस्वरूपं कथयित्वा पटमदर्शयत्। तत्पटस्थं पाण्डुरूपं दृष्ट्वाऽन्धकवृष्णिः शौर्यपुरा-धीशश्चिन्तयति धन्यैषा वसुन्धरा यस्यां ईदृशः पुमान् दृश्यते।

यतः—

"पात्रं कलाकलापस्य विश्वस्य नयनोत्सवः।

असौ योग्यो वरः कुन्त्या रोहिण्या इव चन्द्रमाः"॥१॥

तत पुन. कोरक उवाच। हे राजेन्द्र! तेन गाङ्गेयेनैष स्वपुरुषः प्रेषितः। अथ यत् किञ्चित् कर्त्तव्यं भवति तत् सर्व मेतस्य स्वयं समादिशतु। राज्ञोक्तं प्रातः कथयिष्यामि! विसृष्टः कोरकः स्वगृहं गतः। सोऽपि कोरकगृहं गतः। एतद्वृत्तान्तो नृपोत्सङ्गस्थितया कुन्त्या श्रुतः। श्रुत्वा सापि कन्यान्तःपुरमाययौ। तत्र पाण्डोरवनिनाथस्य शुभ्रान् गुणान् धात्र्याः पुरतः कुन्ती निवेदयाञ्चक्रे। भो मातः! विनयेन,पराक्रमेण, रूपेण, नयेन पाण्डुसमः कोऽपि मे न प्रतिभाति। परं न ज्ञायते मम भाग्यानि कीदृशानि भविष्यन्ति, प्रतिकूले विधातरि कार्याणि विघटन्ते।

यतः—

"समीहितं यन्न लभामहे वयं
प्रभोर्न दोषः स च कर्मणो मम।
दिवाऽप्युलूको यदि नावलोकते
तदाऽपराधः कथमंशुमालिनः?" ॥ १ ॥

अथ प्रात.समये कोरकमाकार्य राज्ञा प्रोक्तम्। भोः कोरक! त्वमेनं गाङ्गेयसेवकमिदमाख्याहि। अहं निजां सुतां कुन्तीं पाण्डुरोगित्वात् पाण्डवे न दातास्मि। तद्राज्ञो वचनं कोरकेण गाङ्गेयसेवकाय निवेदितम्। सेवकेनापि हास्तिनापुरमागत्यैकान्ते गाङ्गेयं नीत्वाऽन्धकवृष्णिराज्ञोक्तं सर्व निवेदितम्। तच्छ्रुत्वा गाङ्गेयस्तूष्णीको बभूव। अथ पाण्डुराट् तं सेवकं पृच्छति। भो भद्र! सा मयि किं रागिणी वर्त्तते न वा। तेनोक्तं कोरको यदा त्वा क्षितिपाग्रे वर्णयामास, तदा सा कुन्ती पितुरुत्सङ्गे स्थिता रोमाञ्चितशरीरा, स्फारितनेत्रा, त्वद्गुणाकर्णनतत्परा मया दृष्टा। अन्यत् सर्व देवो वेत्ति। एवमुक्त्वा तूष्णीको बभूव। पाण्डुस्तं सेवकं

स्वर्णादिदानेन सन्तोष्य स्वगृहं विससर्ज। अथ पाण्डुराट् भृशं कामातुरः क्वापि रतिं न विवेद।

यथाः–

"क्षणं तस्थौ नृपः सौधे धारायन्त्रगृहे क्षणम्।
क्षणं पल्लवपल्यङ्के कौसुमस्रस्तरे क्षणम्" ॥ १ ॥

एवं क्वापि रतिमविन्दन् कुन्तीविरहदाघार्त्तिप्रतीकार-चिकीर्षया वाटिकायां विहरन्नेकं खदिरद्रुममद्राक्षीत्। तस्य नितम्बे लोहकीलकैः कीलितः कश्चित् पुमान् पाण्डुना दृष्टः। तस्याकारं निरीक्ष्य तद्रूपमोहितः पाण्डुराट् तस्य लोहकीलकानाचकर्ष। ततश्चन्दनादिभिश्चेतनामुत्पादयामास। ततस्तं पुमांसं स्वमुद्रिकान्यस्तमणिस्नपनवारिभिस्तद्व्रणश्रेणीं सेचं सेचं स्वयं प्रगुणीकृतवान्। राजा ऊचे भो भद्र! त्वं कोऽसि, कस्मात् त्वया ईदृशी दशा प्राप्ता, तत् सर्वं ममाग्रे सत्यमाख्याहि। स विद्याधरो जगाद। भो राजेन्द्र! श्रूयतां मच्चरित्रं वैताढ्यगिरिमण्डनं हेमपुरं नाम नगरमस्ति, तस्याहं स्वामी विशालाक्षनामा विद्याधरोऽस्मि। अहं स्वेच्छया भ्रमन्नत्र वने समागमम्, यावता वनश्रियं पश्यन्नितस्ततो भ्रमामि, तावच्छलं लब्ध्वा वैरिभिर्बद्धोऽस्मि करिणीव्यग्रः करीव करिबन्धकैः। पुनर्विद्याधर ऊचे। भोः पाण्डो! अवनीपते! अहं तवोपकारेण तुष्टोऽस्मि यद् रोचते तद्याचस्व। किञ्च त्वमपि सशल्यो लक्ष्यसे, अतः मम पुरो मनीषितं ब्रूहि। यतः सुहृदां आवेदिता हि मनोरथाः फलन्त्येव। ततः पाण्डुना सत्ये स्वाभिप्राये प्रोक्ते विद्याधरेण वाञ्छितार्थप्रदायिनी मुद्रिका दत्त्वा एवमुक्तं, एषा मुद्रिका स्मृतमात्रा सर्वं समीहितं दास्यति देवतादत्ता एषा सकलकार्यकरणे समर्था।

यथा–

"अदृश्यीकरणं वश्यीकरणं व्रणरोहणम्।

विषनिग्रहणं चास्याः प्रथमः कुसुमोद्गमः" ॥ १ ॥

इत्याद्यनेकमहिमानमाख्याय मुद्रिका दत्त्वा विद्याधरेन्द्रः स्वस्थानं गतः । पाण्डुराडपि तां मुद्रिका निजाङ्गुलौ पर्यधत्त । ततः स्वगृहमागत्य निशायां मुद्रिका प्रत्युक्तम् । हे मुद्रिके ! त्वं कामितकल्पलता वर्त्तसे, अतः प्रार्थ्यते मा कुन्त्याः समीपं नय । मुद्रिकया दिव्यानुभावात् पाण्डुः कुन्त्याः समीपं नीतः । यतः अचिन्त्यो हि मणिमन्त्रोषधीनां प्रभावः । अथ कुन्त्याः स्वरूपं कथ्यते । यथा--कुन्ती स्वगृहमागत्य धात्र्या सम विचारं करोति, हे मातः ! यदि तातो मां पाण्डवे न दास्यति तदाहमभाग्या किं करिष्ये इत्यादिविकल्पैर्दिवसो यातः, परं यामिन्यामलभमाना निद्रासुखं चिन्तातुरा धात्र्या समं निजगृहोपवनिकायां इतस्ततो भ्रमन्ती अशोकवृक्षं दृष्ट्वा चिन्तयति; नूनमत्र अशोके आत्मानमुद्बध्य जन्मान्तरं लब्ध्वा दुःखस्य जलाञ्जलिं ददामि इति चिन्तयित्वा पुष्पानयनाय धात्रीं प्रेष्य स्वय पाशबन्धं कृत्वा देवान् गुरून् स्मृत्वा पुनः प्राचे ।

यथा—

"इह सन्निहिताः सर्वाः शृण्वन्तु वनदेवताः ।
जन्मान्तरेऽपि भूपालः पाण्डुरेवास्तु मे पतिः ॥ १ ॥
अभिधायेति शाखायाः कण्ठे पाशं न्यधात् पृथा ।
असौ प्रायः प्रतीकारः स्त्रीणा हि व्यसनोदये" ॥ २ ॥

एवं पाशबन्धं कृत्वा यावदशोकवृक्षादात्मानं मुञ्चति, तावत् मुद्रिकानुभावतः पाण्डुस्तत्रागत्य तस्याः कण्ठात् पाशमच्छिदत् । मूर्च्छावशां तां निजोत्सङ्गशायिनी कृत्वा निजोत्तरीयपल्लवैस्तामवीजयत् । सा कुन्ती स्वस्थीभूता चिन्तयति, कोऽयं पुमान् यो मामुत्सङ्गे निवेश्य निजोत्तरीयेण वीजयित्वा स्वस्थीकरोति । धिग् विधे ! यो मां पाण्डोरन्यस्योत्सङ्गशायिनी करोति एवं याव-

त्कुन्ती दैवोपालम्भान् ददे तावत्पाण्डुरवोचत्। भो भद्रे ! चिन्तां मा त्रिधेहि। सोऽहं हस्तिनापुरनायकः पाण्डुः, यः कोरकेणोक्तः स एवाऽहं, एवं यावद्वक्ति तावत् तत्र धात्री समागता सापि तैस्तैश्चिह्नैः पाण्डुं निश्चित्य पुत्रीमवोचत्। हे पुत्रि ! स एष पाण्डुर्य. पटे दृष्टः, तच्छ्रुत्वा हर्षिता कुन्ती। पाण्डुसम्भोगार्थिनी कुन्ती ज्ञात्वा तस्यां निशायां तत्रैव वने धात्र्या तयोर्गान्धर्व-विवाहो विदधे। ततस्तां पाण्डुः केलिगृहे क्रीडयामास। ताभ्यां स्वैरं क्रीडारसनिमग्नाभ्यां सा निशा गतापि न लक्षिता। प्रातः सूर्योदयादर्वाक् जागरितः पाण्डुराट् सधात्रीकां कुन्तीमापृच्छ्य अङ्गुलीयकमाहात्म्यात् स्वस्थानमागतः, तावद्गाढस्वरेण राजानं कालनिवेदको विज्ञपयामास।

यथा—

"अभूत् पिङ्गा प्राची रसपतिरिव प्राप्य कनकं
न दीपा राजन्ते द्रविणरहितानामिव गुणाः।
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि
क्षणात् क्षीणास्तारा नृपतय इवानुद्यमपराः" ॥१॥

एतद्वचनश्रवणानन्तरं पाण्डुः प्रातःकृत्यं विधाय राज्य-कार्यकरणसावधानो बभूव। सापि कुन्ती प्रौढकन्या तस्मिन्नेव दिने दैवनियोगात् कृततुस्नानाऽभूत् पाण्डुसंयोगात्। तस्या गर्भो बभूव। गूढगर्भा तां तथाभूतां विज्ञाय धात्री किमपि कैतवं कृत्वा कुन्तीं छन्नामधारयत्। तस्मिन् गर्भे इन्द्रदोहदसूचिते सा कुन्ती प्रकटितशौर्यात इन्द्रस्यापि बलं तृणाय मन्यते स्म। तथा तस्या औदार्यं चापि बभूव यथा सर्वस्वदानेऽपि किं दत्त-मिति खिद्यते। तस्मिन् गर्भे मातुः स्वर्णमणिकुण्डले दीप्ति-मण्डले बभूवतुः। तस्मिन् गर्भस्थे तस्याः सर्वाणि शस्त्राणि प्रियाण्यासन्। एवंविधान् भावान् भावयन्ती सा नवमासान्ते

जानासि, इत्युक्त्वा यशोदा निष्ठुरवचनैस्तर्जयित्वा कृष्णं करे धृत्वा स्नानाय कालिन्द्या बलभद्रः समाययौ । तस्या नद्या आसन्ने वानीरवृक्षतले स्थित्वा बलभद्रः कृष्णमभाषत । भो वत्स ! त्वमिदानीं विच्छायवदनः किं दृश्यसे ? । हरिः प्रत्याह, भो बान्धव ! त्वया मम मातुस्तिरस्कारः कथं कृतः ?, तथा त्वया मम मातुर्दासीत्युक्त्वा कथं तिरस्कृता ?, मातुस्तिरस्कार-करणं मे दुःखकारणम् । रोहिणीनन्दनः कृष्णं बाहुभ्यां धृत्वो-त्सङ्गे निवेश्यैवमवोचत् । यशोदा तव माता नास्ति, नन्दस्तव पिता नास्ति, किन्तु आवयो पिता सौभाग्यनिधिर्वसुदेवः; ते माता देवकाङ्गभवा देवकी राजपुत्री, मम माता रुधिरात्मजा रोहिणी राजपुत्री, तथा कुशावर्त्तदेशाधीशाः समुद्रविजयादयस्ते पितृव्याः, सर्वे यादवास्तव ज्ञातयः, त्वमस्माकं ज्ञानिभिर्भर-तार्द्धपतिः प्रोक्तः; त्वादृशां पुरुषाणामीदृशे गोपालकुले किं जन्म भवेत् ? यथा मरुस्थले किं कल्पद्रुसम्भवो भवेत् ?; किं-तु देवकीवसुदेवाभ्यां कंसभयादिह गोकुलाकुले गोकुले त्वं गोपितोऽसि । कृष्णेनोक्तम्, भो बान्धव ! ईदृशं कुतो भयम्, येना-स्मिन् गोपसङ्कुले गोकुले पित्रा क्षिप्तोऽस्मि । ततो बलभद्रो भ्रातृ-वधादिकं सर्वं वृत्तान्तं हरेर्व्याजहार । यतस्तद्वचः कर्षकेण काले उप्तं सद्बीजमिव फलेत् । अथ बन्धुवधाद्रुष्टो गोविन्दोऽभ्यधात् । भो भोः सिद्धगन्धर्वाः ! भो देवदानवाः ! क्षणमात्रं ममैकं वचनं शृणुत ।

यथा—

"सर्वेषां पश्यतां राज्ञां पापं कंसं न हन्मि चेत् ।
ध्रुवं तदाहं गृह्येय तदीयभ्रूणहत्यया" ॥ १ ॥

इत्यादिवचनाकर्णनात् तुष्टो बलभद्रः कृष्णं प्रत्यूचे । भो बान्धव ! त्वयाऽऽत्मीयकुले तिलकवदाचारितम्, यत्त्वया ईदृशी

प्रतिज्ञा कृता, तदेहि सांप्रत यमुनाऽम्भसि स्नात्वा मथुरां प्रति व्रजावः। इत्युक्त्वा बलभद्रः कृष्ण यमुनाजले निनाय। तत्र जले दृष्टिविषः कालियनामपन्नगोऽस्ति, स यमुनातीरवासी स्वयं क्रीडन् कृष्णं दष्टुमधावत्। धावन्तं दन्दशूकं दृष्ट्वा सर्वलोको हाहारवपरोऽभवत्। सोऽपि श्यामघनवर्णः स्फारस्फटाटोपभीषणो विषोल्काभिर्यावत् केशवं दशति, तावदसौ तं कमलनालवत् गलकन्दलेऽग्रहीत्। तं नागं कमलनालेन नस्तयित्वा केशवो जात्यवाजिवत् समारुह्य वाहयामास। तं दुर्दमं पन्नगं दम्यमानं वीक्ष्य विमानवासिनो नभश्चरा विमानानि धृत्वा विस्मितास्तस्थुः। कृष्णेन यमुनाजले इतस्ततो भ्रमयित्वा तथा कृतो यथा निर्विषो जातः। ततः कृष्णस्त मृतप्रायमालोक्य दूरादुत्सृज्य नद्यम्भसि स्नात्वा तीरमुपागमत्। ततोऽयं यमुनातीरवास्तव्यैस्तपस्विभिर्वीतविघ्नैर्यथार्थाभिराशीर्भिर्भूरिशः अभ्यनन्द्यत। अथ गोकुलादागतैर्गोपालबालकैः परिवृतौ रामकेशवौ नागरिकजनैर्विस्मयोत्फुल्लनयनैर्वीक्ष्यमाणौ मथुरागोपुरं यावता प्रापतुः, तावता मदोद्धुरौ महोत्कटौ महोन्नतौ गन्धेभौ अन्यगजमसहमानौ तत्र बद्धौ कंसादिष्टमहामात्रप्रेरितौ पद्मोत्तरचम्पकनामानौ रामकेशवौ हन्तुमधावताम्। तत्र पद्मोत्तरो हरिं हन्तुं दधावे, चम्पको हलायुधं हन्तुं दधावे। केशवो गजशिक्षाविचक्षणो गजं खेलयामास। ततस्त दुष्टं गजं ज्ञात्वा निष्ठुरैर्दुष्टमुष्टिभिस्तं कीनाशदासतां निन्ये। रौहिणेयोऽपि चम्पकनामानं द्वितीयं गजेन्द्रं दृष्ट्वा कण्ठीरव इवोत्प्लुत्य कुम्भस्थलं भित्त्वा तं हन्ति स्म। ततस्तौ रामकेशवौ मथुरान्तर्गच्छन्तौ उत्पताकं वालुकाकीर्णं पुष्पप्रकरदन्तुरं सश्रीकं मल्लमण्डपं जग्मतुः। रामसहिते गोविन्दे रङ्गमण्डपं विशति लोकस्य दृशो विस्मयविकस्वरा निपेतुः। ते सर्वे लोकाः कृष्णं दृष्ट्वा परस्परमेवमवोचन्।

यथा—

"स एष केशिकीनाशः स एष वृषमर्दकः ।
नन्दस्य नन्दनः सोऽयं सोऽयं सर्पस्य दर्पहा ॥१॥
गोपालतिलकः सोऽयं सोऽय सिन्धुरघातक ।
श्लाघ्यमानो जनैरेवमदर्श्यत परस्परम्" ॥२॥ (युग्मम्)

जनार्दनस्तत्र मण्डपे गत्वाऽपरं जनमुत्सार्य एकं दुरारोहमुच्चं मञ्चमारुरोह । अथ रामः कृष्णमभ्यधात् । हे वत्स ! हे सोदरवत्सल ' इतो दृष्टिर्व्यापार्यता. किरीटकेयूरकुण्डलहारमण्डित उच्चसिंहासने निविष्टस्तव भ्रातृघातक एष कंसस्त्वया ज्ञेयः। इतोऽपि स्वबन्धुवर्ग सान्द्रया दृष्ट्या विलोकय। एष समुद्रविजयस्तव ज्येष्ठः पितृव्यः, अयं च विश्वविख्यातयशा विद्याधरीराजकुमारीप्राणप्रियो वसुदेवस्तव पिता, एते अक्रूराद्याः शौर्यसिन्धवस्ते बन्धवः । हे बान्धव ! इतः पश्य समुद्रविजयाद्याः दशार्हास्त्वां सौम्यया दृशा विलोकयन्ति, इति बलभद्रे प्रवदति कृष्णः क्रोधविह्वलया दृशा कंसं विलोक्य तूष्णीको बभूव । कंसो बृहस्पतिमन्त्रिणं प्रोचे। भो मन्त्रिन्! ऋषेर्वचो वृथाऽभवत्, यतोऽस्मिन् मल्लयुद्धमण्डपे नागतस्तर्हि नास्त्येव मद्रिपुः। मन्त्रिणोक्तम्, स्वामिन्! आगतो भविष्यति परं ज्ञातो नास्ति । अथ चाणूरमौष्टिकमल्लयोर्युद्धे प्रकटो भविष्यति । ततः कंसेन संज्ञितयोश्चाणूरमौष्टिकयोः परस्परं युद्धं कुर्वतोः सर्वेषां राजन्यानां पश्यतां सव्येतरभुजमूर्ध्वीकृत्य एकश्चाणूरः कृष्णं कटाक्षयन् वाचमुवाच। भो भो राजन्याः! भो भोः क्षत्रियाः! एतेषां सर्वेषां मध्ये यः कोऽपि शूरो वीरो विक्रान्तो मानी पुमान् भवेत्, स मया सह मल्लयुद्धेन युध्यताम् । यदि सर्वा स्त्रियो भवन्ति, तर्हि तूष्णीका भवन्तु, इत्याक्षिप्तो हरिर्बलभद्रयुतो गोपवेषसहितो मञ्चादुत्तीर्य चाणूरस्याग्रे भूत्वा प्रगल्भया गिरा इदमभ्यधात्। रे शूरमानिन्!

कातर! एषोऽहं तवाखर्वगर्वापहः क्षत्रियोत्तंसो विपक्षक्षयकारकस्तवाग्रे स्थितोऽस्मि। एहि मया सह युध्यस्व यथा शूरत्वं दूरीकरोमि; इति परुषया गिरा तर्जितश्चाणूरः सिन्दूरारुणलोचनः कृष्णं प्रत्यूचे। रे बालगोपाल! तव मुखादद्यापि स्तन्यगन्धो न निवर्त्तते, तथाऽस्मिन् तव गात्रे पतन्त्यो मम मुष्टयो लज्जन्ते, अतो याहि स्वस्थानं किमर्थमलीक प्रगल्भसे ?; मम मुष्ट्या हतो घटकर्परवत् चूर्णीभविष्यसि। तच्छ्रुत्वा हरिरवोचत्। भो मल्लश्रेष्ठ! प्रौढशरीरेण किम्, लघुनाऽपि किम्?। लघुरपि सिंहो गजेन्द्रं न भिनत्ति।

यतः—

"हस्ती स्थूलवपुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो
वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरिः।
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तम-
स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः?"॥१॥

अतः स्थूलत्वलघुत्वयोर्विचारो न विधेयः। एहि मया सह युध्यस्व। पुनश्चाणूर उवाच, अरे रे स्तनन्धय! त्वं मम कक्षाकोटरे क्षिप्तः क्षणमात्रेण विनङ्क्ष्यसि, अतस्त्वं दूरेऽपसर, इतो याहि, मम दृष्ट्या अपसर, मा म्रियस्व। तच्छ्रुत्वा केशवो भुजास्फोटं वितन्वानो मल्लमण्डपं परिभ्रमति। मल्लराजश्चाणूरोऽपि पर्जन्यवद्गर्जन् भुजास्फोटं कुर्वन् मण्डपं बभ्राम। तं दृष्ट्वा हाहाकारपरो लोकः परस्परमेवमभाषत।

यथा—

"तरुणः क नु चाणूरः क वाऽसौ गोकुलार्भकः।
न युक्तमनयोर्युद्धं वृषतर्णकयोरिव"॥ १॥

एवं लोकोक्तिं श्रुत्वा तान् सर्वान् लोकान् कंसोऽवोचत्।

भो भो लोकाः! एतौ गोपालबालकौ केनाहूतौ इह समायातौ ?, दुग्धमत्तौ स्वयं द्वेतौ युध्येते। एतौ को निषेधति, कोऽनुमन्यते ?। एवं कंसोक्त श्रुत्वा सर्वे राजानो लोकाश्च मौनमाशिश्रियन्। कृष्ण-चाणूरयोः परस्परं नानाप्रकारं मल्लयुद्धं दृष्ट्वा सर्वे राजानश्चित्रा-र्पिता इव एकताना जाताः। तयोर्युद्ध दृष्ट्वा समुद्रविजयादीनां तनू रोमाञ्चिताऽभवत्, नवीनमेघोद्गमे नवाङ्कुरा धरित्रीव। ततः कृष्णः स्वपाददर्दुरैर्मेदिनीं कम्पयामास कंसमनसा सार्द्धम्। ततः कंसेन मौष्टिकोऽप्यादिष्ट, यावता स श्रीपति हन्तुं धावति, तावद्रामो जगाद। रे दुराचार! मौष्टिक! त्वं मया सह संग्रामे सज्जो भव, तव दोष्कण्डूति एषोऽहं व्यपनयामि, एहि मया सह युध्यस्व। ततो द्वावपि मल्लौ द्वावपि विष्णुबलभद्रौ प्रतिमल्लौ युयुधाते। तस्मिन्म-हति संग्रामे जायमाने चाणूरेण च्छलं लब्ध्वा विष्णुर्हृदये मुष्टिना हत्वा भूमौ पातितः, मूर्च्छां गमितश्च। हरिं मूर्च्छां गतमालोक्य जनो हाहारवं चक्रे। ततश्चासनादुच्छ्वसन् कंसः पुनः किलाकिला-रवं चक्रे, तावद्बलः कल्पान्तकालानलो मुष्टिप्रहारेण मौष्टिकमल्लं हत्वा कृष्णाभ्यर्णमागात्। ततो बलः कृष्णं स्वोत्तरीयवातव्यज-नैः, शीतलोपचारैश्चोन्मीलितचैतन्यं विदधे। यादवमनोरथैः सहो-त्थितः कृष्णश्चाणूरं प्रति बभाषे। एहि भोश्चाणूर! यथाऽहं यमातिथिं कुर्वे। तच्छ्रुत्वा कुपितश्चाणूरो मुष्टिमुद्यम्य कृष्णं प्रति यावद्धावति, तावत् कृष्णो वज्रसन्निभया मुष्ट्या चाणूरं वक्षसि ताडयामास। सोऽपि ताडितो मृत्वा भूमौ पतितः। अथ कंसश्चा-णूरं यमस्यातिथीयितं दृष्ट्वा चिन्तयति, सोऽयं ममारातिर्यः पुरा मुनिभिरुक्तः; तर्हि एनं हन्मीति चिन्तयित्वा स्वान्नरानादिशत्। "रे रे गृह्णीत गृह्णीत एनं गोपालबालकम्"। तच्छ्रुत्वा हरिर्हरिवदुत्-प्लुत्य मञ्चमारुह्य कंसमवोचत्—

"अरे! स्मरसि निस्त्रिंश! जातमात्रान् ममाग्रजान्।

निःशूकहृदयस्फारशिलास्वास्फालयिष्यसि" ॥ १ ॥

भोः कंस ! तवाखर्वगर्वशौण्डीर्यं यद्यस्ति, तर्हि मम आयुधं दीयताम्। इत्युक्त्वांह्रिप्रहारेणोद्भटं मुकुटं भङ्क्त्वा, केशिजित् कंसं केशे धृत्वा, मञ्चात् क्षितौ चिक्षेप। पुनरपि कृष्णस्तं कंसं तस्मिन् मण्डपे उच्चैर्विडम्ब्य, पादप्रहारेण हृदयं विदार्य, कंसं कीनाशग्रासतां निन्ये। अत्रान्तरे मथुराधिपतेः सुभटा एनं गोपं हिंस्त हिंस्तेतिवादिनो रामेण बलवता ते दूरे निरस्ताः। ततः समुद्रविजयादिभिर्यादवैर्ममधेशितुः सैन्यं विनाशं निन्ये। तस्मिन् समये द्वयमेतदभूत्। एकं जीवयशसा सह कंससैन्यैः पलायितम्, द्वितीयं कृष्णबलभद्रयादवसैन्यैर्मुदितम्। अहो ! संसार एकस्य गृहे हर्षोऽन्यस्य गृहे शोकः।

यतः—

"कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ह्री ! विचित्रो विपाकः ॥१॥

अथ हृष्टोऽनाधृष्णिर्बलेन सहितं केशवं रथे आरोप्यादरात् शौरिमन्दिरं प्रापयामास। ततस्समुद्रविजयाद्या यादवा हरिं पुनः पुनर्नेत्राभ्यां विलोकयन्तो मुदमापुः। गोविन्दोऽपि प्रत्येकं प्रत्येकं पितुः पितृव्यानां च पादारविन्दानि ववन्दे। अथ वसुदेवः केशवं स्वाङ्के निवेश्य दृष्टिदोषापनोदाय मूर्ध्नि चुचुम्ब। देवक्यपि कृष्णमुत्सङ्गे निवेश्य पुत्रालिङ्गनपरा चिरेण पुत्रगात्रस्पर्शसौख्यमाशिश्रियत्। तथा समुद्रविजय उग्रसेनं मथुराराज्ये न्यवेशयत्। उग्रसेनोऽपि स्वां पुत्रीं सत्यभामां धन्वारोपणपणीकृतां जनार्दनायार्पयत्। जनार्दनस्तां परिणिन्ये। अथ कंसस्य परिजनो मृतं भूमौ पतितं धूलिधूसरं कंसं दृष्ट्वा

जीवयशसं विनाऽन्यास्त्रियो मेदिनीगता उरस्ताडनपूर्वकं रुरुदुः। अथ कंसस्य संस्कारे जातेऽपि मगधाधीशतनया जीवयशाः कंसाय जलाञ्जलिं न ददौ। एवमवोचत्।

यथा—

"उच्चैरवोचदेतच्च सरामैः सजनार्दनैः।
यादवैः सह दास्यामि प्राणेशाय जलाञ्जलिम्" ॥१॥

इत्युक्त्वा निवापाञ्जलिमकृत्वा ग्रामनगराण्युल्लङ्घ्य पितुरालय राजगृहं समाययौ। यादवेश्वरो जीवयशसं मगधेश्वरान्तिके गता ज्ञात्वा सर्वान् यादवानाह्वास्त। तथा क्रोष्टुकिनैमित्तिकमप्याहूय सर्वेषु यादवेषु पश्यत्सु समुद्रविजयो नैमित्तिकं पप्रच्छ। भोः त्रिकालज्ञ! अस्माकं जरासन्धेन सह महान् विरोधो जातः। अथ किं करिष्ये?, वयमितश्चलिताः कुत्र यामः?, कुत्रास्माकमुदयो भावी?; एतत् सर्वं स्वज्ञानेन ज्ञात्वाऽस्माकं सत्यमाख्याहि। नैमित्तिकः प्राह, भो राजन्! भवतः का चिन्ता?, यस्य कुले अर्हद्बलकेशवानां जन्म जातम्, तथा यस्य देवाः सान्निध्यमध्यासते तस्य का चिन्ता?; तथापि शरीरिणां भागधेयानि द्रव्यं क्षेत्रं कालं भावं च समाश्रित्य निःसंशयं विविधानि भवन्ति। अतो युष्माभिः सपरिवारैरिदं क्षेत्रं मुक्त्वा पश्चिमसमुद्रतटे गम्यताम्। तथा यत्रैषा सत्यभामा कृष्णपत्नी सुतौ सूते, तत्र स्थाने भवता महानगरी स्थाप्या। तस्यां नगर्यां भवतामुदयो भावी। इति नैमित्तिकोक्तं श्रुत्वा सर्वे यादवाः समुद्रविजयादयो नैमित्तिकं द्रव्यादिभिः सत्कृत्य तं विसृज्य च चलनोपक्रमं व्यधुः। समुद्रविजयस्य राज्ञः कुशावर्त्तमथुरालोकैः सह प्रस्थाने क्रियमाणे प्रथममेते शकुनाः प्रेरयन्ति।

यथा—

"कन्या गोपूर्णकुम्भो दधि मधु कुसुमं पावको दीप्यमानो
यानं वा गोप्रयुक्तं वररथतुरगं छत्रभद्रातिभद्रम्।

उत्खाता चैव भूमी जलचरमिथुनं सिद्धमन्नं मुनिर्वा
वेश्या स्त्री मद्यमांसं हितमपि वचन मङ्गलं प्रस्थितानाम्"॥१॥

एवं शुभशकुनैः प्रेर्यमाणा यादवेश्वराः सरिद्भूधरकान्तारादिकमुल्लङ्घ्य क्रमाद्विन्ध्याटवीं प्रापुः। तत्र कानिचिद्दिनानि स्थित्वा यावता पुरतश्चलनोपक्रमं व्यधुः, तावज्जीवयशःपूत्कृतिप्रेरितेन जरासन्धेन प्रेषितः कालककुमारः सबलसैन्यपरिवृतो यादवसैन्यप्रत्यासन्नोऽभवत्। ततोऽच्युतसाहाय्यकारिण्या कुलदेवतया तयोः सैन्ययोरन्तराले पर्वतं विकृत्य, तस्य समीपे चितासमूहं च विकृत्य, चितापार्श्ववर्त्ति रुदत्स्थविरारूपं निर्विकल्पं विधाय मोहितः कालककुमारः; तस्यां चितायां पतित्वा मृतः, अनायकं सैन्यं प्रत्यावृत्य स्वस्थानमगमत्। जरासन्धेन मन्त्रिणः पृष्टाः, भो मन्त्रिणः! किं जातम्?। यत्रज्जातं तत्तत्सत्यं निवेदयत। मन्त्रिणः प्राहुः, राजेन्द्र! तव सुताभिया सर्वे यादवा वह्निं प्रविष्टाः, तदनु कालकुमारोऽपि कृतप्रतिज्ञो वह्निं प्रविष्टः। वयमत्र समागताः। ततो जरासन्धः पुत्रशोकाकुलः कतिपयदिनान्ते विगतशोको बभूव। इतश्च ते रामकेशवास्तथाऽन्येऽपि यादवास्ततश्चलिताः क्रमेण ग्रामाकरनगरखेटकर्बटादि समुल्लङ्घ्य क्षेमेण पश्चिमाम्भोनिधेरोधसि क्रोष्टुकिना समादिष्टे स्थाने सैन्यं निवेशयामासुः। तत्र स्थाने सत्यभामाऽपि भानुक-भामरनामानौ जात्यजाम्बूनदद्युती सुतावसूत। ततो नैमित्तिकादेशात् कृष्णो लवणाधिपं सुस्थितं संमुखीकर्तुमष्टम तपोऽकार्षीत्। तेन तपसाऽऽहूतः सुस्थितो रत्नसंभृतं प्राभृतमादाय उल्लसत्प्रीतिरागत्य कृष्णमेवमब्रवीत्। भो अच्युत! त्वं ब्रूहि किं करोमि?। अच्युतेनोक्तम्, पूर्वं केशवपुरीनिवेशस्थानं देहि। सुस्थितो जलमुत्सार्य नगरीभूमिं सज्जीकृत्य ददौ। ततो मुरारये पाञ्चजन्यशङ्खं कौस्तुभरत्नं च, रामाय च सुघोषं शङ्खं दत्त्वा

एतत्स्वरूपमिन्द्राय ज्ञापयित्वा च स्वाश्रयं ययौ । इन्द्रोऽप्यव-धिज्ञानेन अच्युताभिप्रायं ज्ञात्वा धनदायादिशत् । धनदोऽपि तत्रागत्य तस्यामेवावनौ द्वादशयोजनायामां नवयोजनविस्तीर्णां द्वारकानाम्नीं नगरीं स्वःपुरीसन्निभामहोरात्रेण चक्रे । अत्र द्वारकावर्णनम् ।

यथा—

"वप्रो वज्रमयस्तस्यां नभःस्पृक्कपिशीर्षकः ।
अभ्रंलिहानि वेश्मानि नानामणिमयानि च ॥१॥
विचित्रमणिमाणिक्यैश्चत्वरेषु त्रिकेष्वपि ।
जिनचैत्यानि दिव्यानि तत्राभूवन् सहस्रशः ॥२॥
[1]दिनानर्द्धचतुर्थांश्च यक्षा वैश्रवणाज्ञया ।
रत्नैरनर्घ्यैर्ववृषुर्जलैर्वर्षाघना इव ॥ ३ ॥
तत्राभिरामानारामान् नन्दनोद्यानबान्धवान् ।
किङ्करैः कारयामास कुबेरो वासवाज्ञया" ॥ ४ ॥

पुनः सा कीदृशी, पृथ्वीतिलकायमाना, सर्वसौन्दर्यनि-धानं, लक्ष्मीजन्मावासः, सरस्वतीनिवासः, उज्ज्वलदेवकुलैर्म-ण्डिता, परचक्रैरखण्डिता, अतुलधवलगृहैर्विभूषिता, कुकविभिर-दूषिता, सुवर्णहट्टमालामालिता, सर्वदैव सुमन्त्रिभिः पालिता, सुवर्णपृथुप्राकारपरिखावलया, सर्वैश्वर्यनिलया, वापीकूपमण्डित-परिसरा, चतुर्दिक्षु विराजमानसरोवरा, उद्यानवाटिकाभिरामा, दृश्यमानविविधारामा, पुरुषरत्नोत्पत्तिरत्नाचला, कुलवधूकल्पल-ताकनकाचला। पुनः सा कीदृशी; यस्यां नगर्यां जडता सरस्सु न मनुजमनस्सु, खलस्तैलिकापणेषु न मनुष्येषु, गुप्तिः शुकसारिका-पञ्जरेषु, उपसर्गानिपाता व्याकरणेषु, कण्टका पद्मनालेषु,

१ निर्णयसागरीयपद्यपाण्डवचरित्रे ( पृ० ८३ पा०-३ ) अस्मिन्नेव श्लोके "अत्र पुस्त्वं चिन्त्यम्" इति संशोधककृताक्षेपाश्चन्तनीय ,-" दनदिनशतमाना " इति हैमलिङ्गानुशासने पुनपुंसकप्रकरणे दिनशब्दस्योभयलिङ्गत्वेन पाठात् ।

बन्धः काव्येषु, दण्डः छत्रेषु, कुटिलता कामिनीनामलकेषु, निम्न-ता वनितानाभिषु, चपलता लीलावतीलोचनेषु, चिन्ता शास्त्रेषु, व्यसनं दानेषु, मौखर्यं वादेषु, परं न तन्नगरनिवासिजनेषु । या नगरी धनकनकैः समृद्धा, पृथ्वीतलप्रसिद्धा, अत्यन्तरमणीया, सुरजनस्पृहणीया । एवंविधायां द्वारवत्यां नगर्यां धनपतिमति-निर्मितायां सर्वे राजानो धनदेन यथास्थाने निवेशिताः । ततः कुबेरो विष्णवे पीतवाससी, नक्षत्रमालां, मुकुटं महारत्नं कौस्तुभ-मदात्। पुनः शार्ङ्गं धनुः, अक्षय्यशरौ तूणौ, नन्दकं खड्गं, कौमो-दकीं गदां, गरुडध्वजं च रथमदात् । तथा रामाय वनमालाम्, नीलवाससी, तालध्वजरथं, तूणावक्षय्येषू, धनु', हलमुशले शस्त्रे अदात्। अरिष्टनेमये ग्रीवाभरणम्, बाहुरक्षके त्रैलोक्यविजयं हा-रम्, चन्द्रसूर्याख्ये कुण्डले, गङ्गातरङ्गविशदे वाससी, सर्वतेजोहरं रत्नं धनदो मुदा अदात्। एवं समुद्रविजयादीनामपि यादवानां शस्त्रवस्त्राभरणानि दत्त्वा सार्द्धदिनत्रयं स्वर्णरत्नवृष्टिं विधाय धन-दाद्यैः सुरैः, समुद्रविजयादिभिर्यादवैश्च बलभद्रेण संयुतः कृष्णो राज्येऽभिषिषिचे । तस्यां द्वारवत्यां समुद्रविजयाज्ञया सरामः कृष्णो राज्यं चकार। एवं द्वावपि रामकेशवौ यादवसहितौ तस्या द्वारवत्यां सदानन्दौ स्वैरं नन्दतः ।

यथा—

"लीलावनेषु वापीषु क्रीडाद्रिषु यदृच्छया ।
समं नेमिकुमारेण रेमाते रामकेशवौ" ॥ १ ॥

एवं ते यादवाः सुखे निमग्ना गतमपि काल न जानन्तीति। पुनः कोरकः कुन्ती प्राह । हे देवि ! प्रथमं हस्तिनापुरादागतै-स्तव पुरुषैर्यादवेश्वरः समुद्रविजयः जन्ममहेन वर्द्धितः। ततः समुद्रविजयेन तव भ्रात्रा पुत्रोत्पत्याकर्णनादधिकं हर्षमुद्वहता प्राभृतेन सह अहं प्रेषितोऽस्मि । ततः सा कुन्ती तदर्पितं

प्राभृतं गृहीत्वा तथा स्वयं बन्धुना वृद्धिं श्रुत्वा रोमाञ्चकञ्चुकिता कोरकं प्रत्यवोचत् । हे कोरक! त्वं साधुर्यत् साधुकथाः अचीकथः । यस्मात् पुत्रमहोत्सवे क्रियमाणे भ्रातृमहोत्सवो जातः । एवं कथयित्वा हस्तिनापुरे कुन्त्या महानुत्सवो विहितः । ततः कुन्त्या कतिपयदिनान्ते कोरकं स्वर्णादिभिः सत्कृत्योक्तम् ।

यथा—

"बान्धवा मम जीयासुः जीयासुर्बन्धुसूनवः ।
ममाशिषमिमा तेषां प्रियंवद ! निवेदयेः" ॥ १ ॥

इत्थं पुनः पुनः कोरको बहु संभाष्य सत्कृत्य द्वारकां प्रति व्यसृज्यत । युधिष्ठिरः कुमारोऽपि मातृवात्सल्यपीयूषैः पोषितो ववृधे, स्वर्णाचलभूमौ कल्पपादप इव । तं कदाचिद्रिङ्खन्तम्, कदाचिद्धावन्तम्, कदाचिदुद्वलन्तम्, कदाचित् प्रमदाजनैः स्तूयमानम्, कदाचिदङ्कादङ्कं सञ्चरन्तम्, कदाचिदव्यक्तवर्णमुच्चरन्तम्, कदाचित् हास्यं कुर्वन्तम्, प्रतिक्षणं कामरूपं कुमारं दृष्ट्वा गाङ्गेयाद्याः सर्वे सपरिवारा भृशं मुमुदिरे ।

इति श्रीमत्तपागच्छाधिराजभट्टारकश्री५–श्रीहीरविजयसूरिपट्टालङ्कारभट्टारकश्रीविजयसेनसूरिराज्ये पण्डितश्रीदेवविजयगणिविरचिते गद्यबन्धबन्धुरे पाण्डवचरिते कृष्णनेमिजन्मद्वारकास्थापनायुधिष्ठिरजन्मवर्णनो नाम द्वितीय सर्ग ॥ २ ॥

---

अर्हम्

# अथ तृतीयः सर्गः ।

---

अथ धर्मकल्पद्रुमस्य फलार्थिनी कुन्ती नासिक्ये नगरे श्रीचन्द्रप्रभमन्दिरमकारयत् । यत्र प्रासादे मणिप्रभाध्वस्ततम-

स्तोमे प्रदीपाः केवलं मङ्गलायैव भवेयुः। तत्राऽर्हच्चैत्ये सुसाधुप्रतिष्ठिते कुन्ती प्रतिवर्षं गत्वा जिनधर्मप्रभावनां चक्रे। एवं धर्मकर्मैकव्यसनव्यवसायिनी पाण्डुराजसधर्मिणी कुन्ती पुनरेवापन्नसत्त्वाऽभूत्। धर्मः फलत्येव।

यतः–

"सर्पो हारलता भवत्यसिलता सत्पुष्पमालायते।
संपद्येत रसायनं विषमपि प्रीतिं विधत्ते रिपुः।
देवा यान्ति वशं प्रसन्नमनसः किं वा बहु ब्रूमहे?।
धर्मो यस्य मतोऽपि तस्य सततं रत्नैः परं वर्षति"॥१॥

तस्मिन् पुत्रे गर्भागते पाण्डुपत्नी कुन्ती स्वप्ने नन्दनोद्यानाद्वायुनाऽऽनीय कल्पमहीरुहं स्वोत्सङ्गे क्षिप्तमपश्यत्। स्वप्नं दृष्ट्वा जागरिता कुन्ती शीघ्रं गत्वा पत्ये शशंस। पाण्डुराडपि तत्स्वप्नं श्रुत्वा तदर्थं हृदये विचार्यैवमवोचत्। हे देवि! श्रूयतां तव पुत्रो भावी, कथंभूत, बलवतां श्रेष्ठ, वीराणां ज्येष्ठः, धर्मवतां धुर्यः, अकलितवीर्यः; इत्याद्याकर्ण्य कुन्ती हर्षरोमाञ्चकञ्चुका अभवत्। कुन्त्यास्तद्गर्भानुभावत एवंविधा स्फूर्त्तिः प्रादुरभूत्। यदहं शैलेन्द्रमुत्पाटयामि, अथवा शैलेन्द्र निर्दलयामि। पुनः सा कदाचित् वज्रमङ्गुलीमुखैः कर्पूरकणवदचूरयत्। सा गर्भवती कुन्ती मदोद्धता अमन्दसाहसादिना न्यवाहयत्। इतश्च क्रूरगर्भत्वाद् गान्धारी त्रिशताऽपि हि मासैः प्रसवं न प्राप। नवरं सा गान्धारी अलिञ्जरसहोदरमुदरं बिभ्रती क्लेशावेशपरवशा इदमचिन्तयत्। अहो! मे पापस्य परमोऽवधिः, यतोऽहं नारकदुःखमिहैवाऽनुभवामि। तथाऽन्यदपि दुःखं यदेषा कुन्ती मम पुरस्तादेकसुतमजीजनत्। तथा पुनः सा कुन्ती आधिव्याधिरहिता द्वितीयवारमपि प्रसवाभिमुखी बभूव। इति चिन्तापरा गान्धारी दुःखविक्लवा

शीघ्रप्रसवार्थिनी अत्यर्थमुदरं ताडयामास । तया गान्धार्या पुनः पुनस्ताडित उदरेऽपरिपूर्णोऽपि गर्भो वहिः पतितः । तं मांसपिण्डोपमं पुत्रं दृष्ट्वा गान्धारी साश्रुलोचना तं बालं पश्यन्ती विषादमाप । तथा दैवोपालम्भान् ददे ।

यथा—

"त्वं मे मनोरथानित्थं किं निकृन्तसि ? निष्कृप ! ।
इति दैवमुपालभ्य लब्धार्त्तिः स्म मुहुर्मुहुः" ॥ १ ॥

रे दैव ! अनेनातिवीभत्सेन मांसपिण्डेन कि करोमि ?, इत्युक्त्वा यावताऽवकरके सा गान्धारी त्यक्तुं समारेभे, तावता वृद्धाभिः स्त्रीभिः सा भृशं मा मेत्युक्त्वा प्रत्यषिध्यत । ततो वृद्धाभिः प्रोक्तम् , हे हल्ले गान्धारि ! एतत्त्वया किं कृतम् ?, यदनिष्पन्नगर्भः पातितः । गान्धार्या प्रोक्तम्, हे मातः ! कि करोमि ?, यदहं पुरा महीपतेः पत्नी नाभवं तर्ह्येतत्प्रभावादह महीपालमाता भवामि, इति चिन्तयन्त्यां मयि, कुन्ती एकं युधिष्ठिरं तनयं जनयति स्म । पुनरपि ता आमन्नप्रसवा श्रुत्वा विषादादह निजकुक्षिमकुट्टयम् । ततो मदुदरादेष गर्भोऽपतत् । वृद्धाभिः प्रोक्तम्, हे गान्धारि ! कुन्त्युपरि मात्सर्यं मा कृथाः । यतः पुराकृतकर्माणि देवैरप्युल्लङ्घयितुं न शक्यन्ते, तर्हि किं पुनर्मानवै. ? ।

यतः—

"यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
एवं पूर्वकृतं कर्म कर्त्तारमनुधावति" ॥ १ ॥

अतस्त्वमपि धर्मं कुरुष्व । ततः सा गान्धारी धर्मपरायणाऽनया रीत्या पुत्रं पालयामास । यथैकां तूलिका घृतसंचयसंभृतां कृत्वा तया तं बालं प्रावृत्य स्वर्णकुण्ड्यां निधाय एकान्ते व्यवस्थाप्य गान्धारी निधानमिव दध्रे । अथ स गर्भो गान्धार्या

मातुः स्तन्यपानेन संपूर्णसर्वाङ्गः षण्मासैः परमां वृद्धिं दधौ. क इव घनाम्भसा बालविटपीव । इतश्च यस्मिन दिने गान्धारी तं तनुजमसूत, तस्मिन्नेव हि दिने त्रिभिर्यामैः पश्चात् कुन्त्यपि सुतमजीजनत् । परमेकदिनजातयोरपि तयोर्भाग्ययोर्महदन्तरम्, यदाद्यो दुर्लग्नेऽजनि, पुनर्द्वितीयः सुलग्ने । अथ पाण्डुपुत्रमुद्दिश्याकाशे एवंविधा भारत्यभूत्—अयं वज्रकायः, तथोद्दामवीर्यो भविष्यति ।

यथा—

"भक्तः सहोदरे ज्येष्ठे जगद्विधुरबान्धवः ।
भावी मोहच्छिदाछेकः क्रमात् सिद्धिवधूवरः" ॥ १ ॥

कुन्ती प्रीतिपरायणोत्सवं विदधे, दिवि देवैरुत्सवो विदधे; पाण्डुस्तु द्वयोः सुतयोरुत्सवं चकार । क्रमान्निवृत्ते अशुचिजातकर्मणि संप्राप्ते द्वादशे दिने पिता धृतराष्ट्रः पुत्रस्य दुर्योधन इति नाम विदधे । तथा पाण्डुरपि पुत्रस्य भीम इति नाम विदधे । तथा मरुद्देवेन दत्तत्वात् मरुत्तनय इत्यपि द्वितीयं नाम पप्रथे । तौ दुर्योधनभीमौ पञ्चभिः पञ्चभिर्धात्रीभिर्लालितौ क्रमाद् वृद्धिं जग्मतुः, सिंहबालकाविव । रिङ्खन् दुर्योधनो भीमेन रिङ्खता पश्चादेत्य पादे धृत्वाऽऽकृष्यत । कदाचिद् दुर्योधनाय दत्तं भक्ष्यं भीमेन हठादाच्छिद्य स्वयं बुभुजे । कदाचित्तौ केलिपरौ जातौ, कदाचित् कलिकरौ जातौ । एवं दिनानि यान्ति स्म । अथाऽन्यदा वसन्तः समागात् । कीदृग् वसन्तः—

"वसन्तेनोपनीतानि प्राप्य चूताङ्कुरच्छलात् ।
नवान्यस्त्राणि पुष्पास्त्रस्तृणं जगदजीगणत् ॥१॥
जगज्जिगीषोः पञ्चेषोः प्रयाणे जयशंसिनः ।
ध्वनयोऽदुन्दुभीयन्त मधुराः पिकयोषिताम् ॥२॥

गलद्वहलकिंजल्कपङ्किलीभूतभूतलम् ।
पुष्पडम्बरितं पाण्डुः क्रीडावनमथागमत्" ॥२॥

एवंविधे वसन्ते कुन्ती भीम पुत्रं षण्मासवर्त्तिनं गृहीत्वा पत्या सह वसन्तश्रियमीक्षितु वने ययौ । तस्मिन् मनोरमोद्याने कुन्ती पत्या सह सुखं चिक्रीड । क्वचित्प्रियया सार्द्धं दोलान्दोलन-कौतुकमनुभूय कदाचित् प्रियया सार्द्धं क्रीडन् महीपालः केलिपर्वतमारुरोह । तत्र पर्वते स्वैरं क्रीड़न्ती पाण्डुना सार्द्धं कुन्ती कङ्केल्लिपादपस्याधो विश्रामं विधत्ते स्म । तत सा कुन्ती भीममङ्के निवेश्यैवमुल्लापयामास । हे कुरुवंशमण्डन ! हे जगन्नेत्रसुधाकर ! ; इत्यालापयन्ती कुन्ती गिरेः शिरसि पुष्पप्रस्तरे सुखं सुष्वाप । कुन्त्या इतस्ततो भ्रमणात्, पाण्डुना सार्द्धं संक्रीडनात्, प्रेमवशाच्च निद्रा समागता। पाण्डुराडपि कुन्तीं सुखं सुप्तां दृष्ट्वा स्वयं केलिपर्वते विहरन् चम्पकपुष्पाणां स्रजं विधाय प्रिया जागरयित्वा तस्याः कण्ठे व्यलोठयत् । तां कण्ठे स्थिता माला विलोक्य प्रेमपरायणा सती पाण्डुं लोचनैर्विलोकयन्ती कुन्ती झगित्येवोत्तस्थौ । तदा सुप्तो भीमः सहसोत्सङ्गात् पपात, शृङ्गाद्गण्डशैलवत् । बालं पतन्तं दृष्ट्वा कुन्ती हाहाकारपरायणा पुत्रशोकाकुला पुत्रं विलोकयामास । बालोऽपि वज्रकायत्वात् सर्वेषा पश्यतां तटात्तटे लोठं लोठं मार्ग-पाषाणान् भञ्जन् गिरेरधस्तादुपागमत् । बालानुपदं प्लवङ्गमा इवोत्प्लवमाना नृपपत्नयोऽपि धावन्ति स्म । तदनु पाण्डुसहिता कुन्त्यपि वत्स वत्सेति वादिनी रुदती पक्षिणोऽपि रोदयन्ती शनैः शैलादवातरत् । अग्रे गच्छन्ती राज्ञी उवाच, हे प्राणेश ! एताः शिलाः केन चूर्णिताः ? । पाण्डुनोक्तम्—

"अमूर्भीमद्रुहः कोऽपि दारुणा दारयिष्यति ।
शङ्के स्वेनैव पापेन शीर्णास्तु कणशः स्वयम्" ॥ १ ॥

एवं परस्परं वार्त्ता कुर्वाणा राजा, राज्ञी, दास्यश्च यावता

शैलादवतेरु:, तावत् क्षितीश्वरो दूरादागच्छतः स्वान् पत्तीन् ददर्श। समागताः पत्तयः। तैरुक्तम्, राजेन्द्र ! वर्द्धाप्यसे पुत्रकुशलोदन्तेन, तवाङ्गजस्य कुशलं वर्त्तते । ततश्चलितो राजा राज्ञीसहितस्त्वरितं तत्रागमत्, यत्र भूमौ भीमोऽलुठत् । तत्र शिलाचूर्णमये तल्पेऽक्षताङ्गं शतपत्राक्षं सुतं निरीक्ष्य मातापितरौ हर्षपरायणौ बभूवतुः । ऊर्द्ध्व-बाहुं मातृमिलनोत्सुकं पुत्रं कुन्त्यपि बाहुभ्यां समादाय, वक्षसा चालिङ्गय प्रस्नुतस्तनी पुनः पुनः पुत्रं चुचुम्ब । पाण्डुराडपि सानन्दस्तं पुत्रं पत्न्याऽमुच्यमानं बलादाच्छिद्य स्वयं चालिलिङ्ग । तां चूर्णितशिलाभुवं दृष्ट्वा राज्ञी राजानं पप्रच्छ । स्वामिन् ! एषा शिला केन चूर्णिता ? । राज्ञोक्तम्, प्रिये ! एष तव पुत्रो वज्रकायो देवतया प्रोक्तः, तेन गिरिशिखरात् शिलोपरि पतता एताः शिला-श्चूर्णिताः ।तत् श्रुत्वा विस्मिता कुन्ती भीममादाय वारं वारं चालि-लिङ्ग । पाण्डुराडपि तां भीमस्य प्रपातभूमिं विलोक्य शिलाचूर इति तृतीयं नाम निर्ममे । अथ राज्ञीपुत्राभ्यां युतः पाण्डुरुत्त-म्भितध्वजांशुतोरणालङ्कृतां स्वां राजधानीं समाययौ । ततः स भीमो गिरिकन्दरमध्यस्थितचम्पकपादप इव वत्रृधे । इतश्चान्यदा कुन्ती पाण्डुपत्नी निशाशेषे ऐरावणारूढमिन्द्रं स्वप्नेऽद्राक्षीत् । ततः सा प्रमोहिनी प्रातः पत्युः कथयामास । राजाऽपि कुन्त्यै शक्रसम-प्रभं भाविनं सुतं समाचख्यौ । तत सा परां प्रीतिं प्राप्ता श्लाघ्यं गर्भं बभार । तद्गर्भानुभावतस्तस्या एते भावाः प्रादुर्बभूवुः। यदहं स्वयं मण्डलीकृतकोदण्डा सागरपर्यन्तां मेदिनीं निरुपद्रवां करो-मि । तथा समयेऽपि प्रजा संहरतो यमस्यापि निग्रहं करोमि । एवं सकलां महीं वशं नयामीति । इत्थं गर्भानुभावतो धीरोदात्त-मनोरथा कुन्ती मनोहरे मुहूर्त्ते तनयं जनयामास ।

"तदैव दिवि वाग् दैवी सर्वतः शुश्रुवेतराम् ।
असावाराधितज्येष्ठो जगदेकधनुर्धरः ॥ १ ॥

दुर्द्धर्षोऽत्यन्तसौम्यास्यः सामर्षो नयवत्सलः ।
भविष्यति क्रमात्कर्मनिर्मुक्तो मुक्तिवल्लभः" ॥२॥ (युग्मम्)

तत्पुत्रजन्मन्याकाशे रम्भोर्वशीप्रभृतयोऽप्सरसः सङ्गीतं, नृत्यं च चक्रुः। तथा किन्नरेश्वराः मनोहारि मूर्च्छनासंयुक्तं गानं जगुः । तस्मिन् पुत्रमहे प्रदत्तत्रिदशानन्दे पाण्डुर्महामहं चक्रे । तथैव संप्राप्ते द्वादशे दिवसेऽर्जुनवर्णत्वात् अर्जुन इति प्रथमं नाम राजा निर्ममे । स्वप्ने इन्द्रस्य दर्शनाज्जातोऽत इन्द्रसूरित्यपि द्वितीयं नाम विदधे । एते त्रयोपि कुन्त्यास्तनया ज्ञेयाः । अथ मद्रराजसुता माद्र्यपि पाण्डुपत्नी सुस्वप्नसूचितौ श्रिया निचितौ यमलौ तनयौ जनयांचक्रे ।

"तावप्याकाशभारत्या कथितौ यद्भविष्यतः ।
सत्त्वशौर्ययुतौ सिद्धिगामिनौ गुरुवत्सलौ" ॥ १ ॥

क्रमेण वृद्धिं गतौ द्वादशदिनमानौ पाण्डुना दत्तनामानौ नकुल-सहदेव इति ख्यातिमीयतुः। अमी पञ्चापि कुमाराः कल्पपादपा इव प्रसिद्धिं प्रापुः । अथ धृतराष्ट्रस्य गान्धारीप्रमुखा अष्टौ प्रिया अजायन्त । तासां दुर्योधनानुजा नवनवतिः पुत्राणां समभवत् । तेषां नामान्यमूनि । तद्यथा—दुःशासनः, दुःसहः, दुःशलः, रणश्रान्तः, शमाढ्यः, विन्दः, सर्वसहः, अनुविन्दः, सुभीमः, सुबाहुः, दुष्प्रधर्षणः, दुर्मर्षणः, सुगात्रः, दुष्कर्णः, दुःश्रवाः, वरवंशः, विकीर्णः, दीर्घदर्शी, सुलोचनः, उपचित्रः, विचित्रः, चारुचित्रः, शरासनः, दुर्मदः, दुष्प्रगाहः, युयुत्सुः, विकटः, ऊर्णनाभः, सुनाभः, नन्दः, उपनन्दकः, चित्रबाणः, चित्रवर्मा, सुवर्मा, दुर्विमोचनः, अयोबाहुः, महाबाहुः, श्रुतवान्, पद्मलोचनः, भीमबाहुः, भीमबलः, सुषेणः, पण्डितः, श्रुतायुधः, सुवीर्यः, दण्डधारः, महोदरः, चित्रायुधः, निषङ्गी, पाशः, वृन्दारकः, शत्रुञ्जयः, शक्रसहः, सत्यसन्धः, सुदुःसहः, सुदर्शनः, चित्र-

सेनः, सेनानीः, दुष्पराजयः, पराजितः, कुण्डशायी, विशालाक्षः, जयः, दृढहस्तः, सुहस्तः, वातवेगः, सुवर्चाः, आदित्यकेतुः, बह्वाशी, निर्बन्धः, प्रयायी, कवची, रणशौण्डः, कुण्डधारः, धनुर्धरः, उग्ररथः, भीमरथः, शूरबाहुः, अलोलुपः, अभयः, रौद्रकर्मा, दृढरथः, अनाधृष्यः, कुण्डभेदी, विराजी, दीर्घलोचनः, प्रमथः, प्रमाथी, दीर्घालापः, वीर्यवान्, दीर्घबाहुः, महावक्षाः, दृढवक्षाः, सुलक्षणः, कनक , काञ्चन', सुध्वजः, सुभजः, विराजश्चेति । अमी सर्वे रणकर्मविशारदाः, सर्वे रणशौण्डीराः, सर्वेऽप्येते दोर्दण्डगर्विताः, सर्वेऽप्यहंकृतिपर्वताः, सर्वे सर्वास्त्रकोविदाः । एव पञ्चोत्तरं शतं भ्रातृणां गङ्गोपकण्ठे स्वैरं क्रीडां करोति स्म। एकस्मिन् दिने धृतराष्ट्रो भीष्मादीनासने उपवेश्य मौहूर्त्तिकान् समाहूय स्वच्छमानसः पप्रच्छ। भो भो नैमित्तिकाः! युधिष्ठिर आकाशभारत्या भुवनश्लाघ्यो राजा कथितः, अत्र कोऽपि संशयो नास्ति । ततोऽन्यदपि पृच्छयते, दुर्योधनो मम पुत्रो राजा भविष्यति, किं वा नो भविष्यति ?; एवं स्वज्ञानेनालोच्यास्माक कथयत। एवं यावता धृतराष्ट्रेण पृष्टम्, तावत किं जातम्; दिगन्तेषु रजोभिः परिजृम्भितम्, वसुन्धरया कम्पितम्, धरायां निर्घातैरुच्छ्रितम्, अशिवकारिण्या शिवया विरसं रटितम्, तथा मार्त्तण्डमण्डलं परिवेषभीषणं चाभूत्। एतानि दुर्निमित्तानि प्रेक्ष्य पुत्रलक्षणानि च दृष्ट्वा ज्ञानवन्तो नैमित्तिकाः सर्वविदुरं विदुर प्रति शनैः शनैरचीकथन्। भो विदुर! अयं दुर्योधनः सकलराजचक्रजित्वरो महाराजो भविष्यति, परं सकलजनस्य, स्वकुलस्य च क्षयकरो भविष्यति; इति नैमित्तिकादिष्टमनिष्टं श्रुत्वा विदुरो धृतराष्ट्रस्य पृच्छतस्तथैव नैमित्तिकाऽऽदिष्टं सर्व सभासमक्षमाचख्यौ । कर्णविषोपमं तद्वचनमाकर्ण्य धृतराष्ट्रः स्वकुलकुशल वाञ्छन् पुनर्बभाषे, भो

नैमित्तिकाः! अस्मत्कुलकुशलं कथं भविष्यति ? । तावद्विदुरः प्रोवाच, भो बान्धव! यदि कुले कुशलं वाञ्छसि, तदेनं दुष्पुत्रं त्यक्तुमर्हसि ।

यतः—

"तनयेनापि किं तेन कुलमलयकारिणा ?।
तेन हेम्नाऽपि किं कार्यमार्य ! कर्णौ छिनत्ति यत्?"॥१॥

एकोनशतेनापि सुपुत्रैरस्तु, किमस्ति कुलक्षयकारिणा दुष्पुत्रेण ? ।

यतः—

"त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्?" ॥ १ ॥

अत एव कुलस्यार्थे त्यज्यताम् । एतत् श्रुत्वा धृतराष्ट्रो यावत् किंचिन्न प्रत्यभाषत, तावद विदुरं प्रति पाण्डुरुद्दामरप्रीतिरभ्यधात्। भो बान्धव विदुर ! ईदृशानि पुत्रभाण्डानि पुण्यं विना कुत्र लभ्यन्ते?, एष दुर्योधनो मयोपयाचितैरेव लब्धः, तर्ह्येष पुत्रः कथं त्यज्यते?। तथा यदि पुत्रात् कुलक्षयः स्यात्, तर्हि कुलवृद्धिः कुतो भवेत् ?, यद्याकाशे भानोर्ध्वान्तं स्यात्, तर्हि प्रकाशः कुतो भवेत् ?। अतोऽसौ युधिष्ठिरस्य पश्चात् राजा भवतु । यतोऽसौ पुत्रत्वाद् गोत्रवर्द्धनः, यथा युधिष्ठिर , तथा दुर्योधनोऽपि । अनयोर्मध्ये मम किमप्यन्तरं नास्ति । तत् श्रुत्वा सर्वेऽपि विदुरादयस्तूष्णीका बभूवुः । पाण्डुभूपतिना विसृष्टाः सर्वे विदुरादयः स्वस्थानं गताः । नैमित्तिका अपि दानमानैस्तोषिताः स्वस्थानं गताः। इतश्च दुर्योधनस्य दुःशल्या नाम भगिनी बभूव। सा क्रमेण वृद्धिं प्राप्ता यौवनोन्मुखी सिन्धुनाथेन जयद्रथेन परिणीता राज्ञा समं वैषयिकं सुखं भेजे । अथ ते धृतराष्ट्रसुताः शतं

क्रमेण वर्द्धन्ते स्म । ते दोष्मन्तस्त्रिभुवनतोलने समर्थाः । तथैव पाण्डुपुत्रा अपि पञ्चैव । संमिलिताः सर्वेऽपि पञ्चोत्तरं शतं हस्तिनापुरसमीपे स्वैरं रेमिरे । ते सर्वेऽपि प्रतिप्रभातमभ्येत्य भीष्म, धृतराष्ट्रं, पाण्डुं, विदुरं च भक्तितो नमस्यन्ति स्म। तथा सत्यवतीं, अम्बिकां, अम्बालिकां, अम्बां, गान्धारिकां, कुन्ती च प्रणमन्ति स्म। ते गुरवोऽपि भीष्माद्याः, सत्यवत्याद्या मातरस्तेषा सर्वेषां पुत्राणामुपरि वात्सल्यवत्तया निर्विशेषं मनश्चाक्रिरे । यतो गुरवः सर्वेषु समाशया भवन्ति । अथ तेषां सर्वेषां कुमाराणां मध्ये पञ्चापि पाण्डवाः शैशवादपि परमार्हता अजायन्त । निश्चितं यस्य यादृक् परलोकस्तस्य तादृशी चेष्टा भवति । तथा दिवा रात्रौ तेषां मनांसि पञ्चापि परमेष्ठिनो न मुञ्चन्ति । एवं धर्मपरायणाः पञ्चापि पाण्डवाः सुखेन कालं निर्गमयन्ति स्म। अथ ते कुमाराः पञ्चोत्तरं शतं वेगपरीक्षार्थं गङ्गासैकते परस्परं दत्तहस्तताला दधाविरे; तथा गङ्गापुलिने सिकताकणकोमले शश्वत् सर्वे कुमाराः पांशुकेलिभिश्चिक्रीडु' । ते कदाचिज्जलकेलिपरायणाः तुङ्गां तटीं समारुह्य यमुनाया झम्पापातं वितेनिरे । रहःकेलिषु रजःकेलिषु जलकेलिषु क्रीडां कुर्वन् बलोदारो वृकोदरस्तु सर्वान् बन्धूनधरीचक्रे। तथा धर्मात्मा धर्मनन्दनः शान्तात्मा सर्वेषु बन्धुषु स्नेहं बबन्ध, विशेषतस्तु सुयोधने । भीमस्तु निसर्गेण चञ्चलो दुर्योधनबान्धवान् दुःशासनप्रमुखान् क्रीडया लोलयन्, सुखासिकादीनुद्दालयन्, कदाचित् कक्षायां क्षिपन्, कदाचित् भुजाभ्यां पीडयन्, श्वासावरोधदौस्थ्येन मृतप्रायानिव चक्रे । पुनर्भीमस्तेषा कदाचिदन्योन्यं शिरसा शिरःस्फालनं विदधे, नालिकेरद्वयास्फालनवत्। कदाचित् पादाग्रे धृत्वा क्रोशमात्रभुवमनयत्। कदाचित्तान् बाहुपाशे बद्ध्वा जले चिरं मज्जयित्वा कलि-

एतदप्यसारम् । इत्थमपि कल्पनाया तदवस्तुत्वप्रसङ्गात् । तथाहि- यदि पार्थिवद्रव्यसत्त्वमेवावादिद्रव्यासत्त्वं, एवं तर्हि यथा तत्पार्थिवद्रव्यत्वेन सत् एवमबादिद्रव्यत्वेनापि स्यात्, तत्सत्त्वाव्यतिरिक्तत्वात् तदितरासत्त्वस्य; यथा वाऽबादिद्रव्यत्वेनासत् तथा पार्थिवद्रव्यत्वेनापि स्यात्, तदसत्त्वाव्यतिरिक्तत्वात् तत्सत्त्वस्य; एवं क्षेत्रादिष्वपि वाच्यम्, ततश्च तदितररूपापत्त्यादिना अवस्तुत्वप्रसङ्गः । आह- कथं पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वेऽप्यवाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वादेरबाद्यात्मकत्वम्? । उच्यते- तस्य सत्त्वाव्यतिरिक्ततया तद्रूपतापत्तेः । न ह्यबाद्यसत्त्वमबादिसत्त्वरूपतापत्तिमन्तरेणासत्तां जहाति तत्तत्त्वानिवृत्तेः, तत्त्वतस्तदव्यतिरिक्तत्वाभावात् । तत्सत्त्वरूपतापत्तिरेव तत्तत्त्वनिवृत्तिरिति चेद्, न । युक्त्यनुपपत्तेः; पार्थिवद्रव्यसत्त्वादेरपि तदितरासत्त्वस्वभावत्वात् तथा प्रतीतेः । न च तदितरासत्त्वनिवृत्तौ तदभावेनास्येत्थंस्वभावत्वं युक्तम् । न ह्यसति चेतनात्वेऽणुश्चेतनास्वभावो नाम । एतेन पार्थिवद्रव्यसत्त्वादेः सत्त्वविशेषत्वात् तदतिरिक्तत्वेऽप्यवाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वादित्वमेव, इत्येतदपि प्रत्युक्तमिति सूक्ष्मधिया भावनीयम् ॥

स्यादेतत् अथैव मन्यसे—स्वद्रव्यादिसत्त्वमेव, आदिशब्दात् स्वक्षेत्रकालभावपरिग्रह, परद्रव्याद्यसत्त्वम्, अत्राप्यादिशब्देन परक्षेत्रकालभावपरिग्रह, न स्वद्रव्यादिसत्त्वादर्थान्तरभूतमेतादित्यर्थ । एतदेव भावयन्नाह- **तथा चेत्यादि** तथा च घटवस्तुन अविकृतस्य, पार्थिवद्रव्यसत्त्वमेव अबादिद्रव्यासत्त्वमित्यादि यावत् श्यामत्वसत्त्वमेव रक्तत्वाद्यसत्त्वमिति यथोक्तदोषानुपपत्तिरेव यथोक्तदोषोऽधिकृतवस्त्वभावप्रसङ्गलक्षणस्तस्यानुपपत्तिरेव, अधिकृतसत्त्वस्यैवेतरासत्त्वेन तद्भावनिवृत्तिरित्यभिप्राय । एतदाशङ्क्याह- **एतदप्यसारम्** । कुत इत्याह- **इत्थमपीत्यादि** एवमपि कल्पनाया क्रियमाणायाम्, तदवस्तुत्वप्रसङ्गात्

क्रमेण वर्द्धन्ते स्म । ते दोष्मन्तास्त्रिभुवनतोलने समर्थाः । तथैव पाण्डुपुत्रा अपि पञ्चैव । संमिलिताः सर्वेऽपि पञ्चोत्तरं शतं हस्तिनापुरसमीपे स्वैरं रेमिरे । ते सर्वेऽपि प्रतिप्रभातमभ्येत्य भीष्म, धृतराष्ट्रं, पाण्डुं, विदुरं च भक्तितो नमस्यन्ति स्म। तथा सत्यवतीं, अम्बिकां, अम्बालिकां, अम्बां, गान्धारिकां, कुन्ती च प्रणमन्ति स्म। ते गुरवोऽपि भीष्माद्याः, सत्यवत्याद्या मातरस्तेषां सर्वेषां पुत्राणामुपरि वात्सल्यवत्तया निर्विशेषं मनश्चाक्रिरे। यतो गुरवः सर्वेषु समाशया भवन्ति । अथ तेषां सर्वेषां कुमाराणां मध्ये पञ्चापि पाण्डवाः शैशवादपि परमार्हता अजायन्त । निश्चितं यस्य यादृक् परलोकस्तस्य तादृशी चेष्टा भवति। तथा दिवा रात्रौ तेषा मनांसि पञ्चापि परमेष्ठिनो न मुञ्चन्ति। एवं धर्मपरायणाः पञ्चापि पाण्डवाः सुखेन कालं निर्गमयन्ति स्म। अथ ते कुमाराः पञ्चोत्तरं शतं वेगपरीक्षार्थं गङ्गासैकते परस्परं दत्तहस्तताला दधाविरे; तथा गङ्गापुलिने सिकताकणकोमले शश्वत् सर्वे कुमाराः पांशुकेलिभिश्चिक्रीडुः । ते कदाचिज्जलकेलिपरायणाः तुङ्गां तटीं समारुह्य यमुनायां झम्पापातं वितेनिरे । रंहःकेलिषु रजःकेलिषु जलकेलिषु क्रीडां कुर्वन् बलोदारो वृकोदरस्तु सर्वान् बन्धूनधरीचक्रे। तथा धर्मात्मा धर्मनन्दन. शान्तात्मा सर्वेषु बन्धुषु स्नेहं बबन्ध, विशेषतस्तु सुयोधने। भीमस्तु निसर्गेण चञ्चलो दुर्योधनबान्धवान् दुःशासनप्रमुखान् क्रीडया लोलयन्, सुखासिकादीनुद्दालयन्, कदाचित् कक्षायां क्षिपन्, कदाचित् भुजाभ्यां पीडयन्, श्वासावरोधदौस्थ्येन मृतप्रायानिव चक्रे । पुनर्भीमस्तेषां कदाचिदन्योन्यं शिरसा शिरःस्फालनं विदधे, नालिकेरद्वयास्फालनवत्। कदाचित् पादाग्रे धृत्वा क्रोशमात्रभुवमनयत्। कदाचित्तान् बाहुपाशे बद्ध्वा जले चिरं मज्जयित्वा कलि-

**एतदप्यसारम् । इत्थमपि कल्पनायां तदवस्तुत्वप्रसङ्गात् । तथाहि– यदि पार्थिवद्रव्यसत्त्वमेवाबादिद्रव्यासत्त्वं, एवं तर्हि यथा तत्पार्थिवद्रव्यत्वेन सत् एवमबादिद्रव्यत्वेनापि स्यात्, तत्सत्त्वाव्यतिरिक्तत्वात् तदितरासत्त्वस्य; यथा वाऽबादिद्रव्यत्वेनासत् तथा पार्थिवद्रव्यत्वेनापि स्यात्, तदसत्त्वाव्यतिरिक्तत्वात् तत्सत्त्वस्य; एवं क्षेत्रादिष्वपि वाच्यम्, ततश्च तदितररूपापत्त्यादिना अवस्तुत्वप्रसङ्गः । आह– कथं पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वेऽप्यबाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वादेरबाद्यात्मकत्वम् ? । उच्यते-तस्य सत्त्वाव्यतिरिक्ततया तद्रूपतापत्तेः। न ह्यबाद्यसत्त्वमबादिसत्त्वरूपतापत्तिमन्तरेणासत्तां जहाति तत्त्वानिवृत्तेः, तत्त्वतस्तदव्यतिरिक्तत्वाभावात् । तत्सत्त्वरूपतापत्तिरेव तत्त्वनिवृत्तिरिति चेद्, न । युक्त्यनुपपत्तेः; पार्थिवद्रव्यसत्त्वादेरपि तदितरासत्त्वस्वभावत्वात् तथा प्रतीतेः । न च तदितरासत्त्वनिवृत्तौ तदभावेनास्येत्थंस्वभावत्वं युक्तम् । न ह्यसति चेतनात्वेऽणुश्चेतनास्वभावो नाम । एतेन पार्थिवद्रव्यसत्त्वादेः सत्त्वविशेषत्वात् तदतिरिक्तत्वेऽप्यबाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वादित्वमेव, इत्येतदपि प्रत्युक्तमिति सूक्ष्मधिया भावनीयम् ॥**

स्यादेतत् अथैव मन्यसे–स्वद्रव्यादिसत्त्वमेव, आदिशब्दात् स्वक्षेत्रकालभावपरिग्रह , परद्रव्याद्यसत्त्वम्, अत्राप्यादिशब्देन परक्षेत्रकालभावपरिग्रह , न स्वद्रव्यादिसत्त्वादर्थान्तरभूतमेतादित्यर्थ । एतदेव भावयन्नाह– **तथा चेत्यादि** तथा च घटवस्तुन अधिकृतस्य, पार्थिवद्रव्यसत्त्वमेव अबादिद्रव्यासत्त्वमित्यादि यावत् श्यामत्वसत्त्वमेव रक्तत्वाद्यसत्त्वमिति यथोक्तदोषानुपपात्तिरेव यथोक्तदोषोऽधिकृतवस्त्वभावप्रसङ्गलक्षणस्तस्यानुपपत्तिरेव, अधिकृतसत्त्वस्यैवेतरासत्त्वेन तद्भावनिवृत्तिरित्यभिप्राय । एतदाशङ्क्याह– **एतदप्यसारम्** । कुत इत्याह– **इत्थमपीत्यादि** एवमपि कल्पनाया क्रियमाणायाम, तदवस्तुत्वप्रसङ्गात्

तस्याधिकृतस्य वस्तुनो घटादिरूपस्यावस्तुत्वप्रसङ्गात् । एतदेवाह- **तथाहीत्यादिना** । तथाहि- यदि पार्थिवद्रव्यसत्त्वमेवाबादिद्रव्यासत्त्व सत्त्वमेवासत्त्वमित्युभयमप्याश्रित्यान्यथैवमभिधान न युज्यत इत्यभिप्रेता परविवक्षामनादृत्य तावदेवमाह- **एवं तर्हि यथा तत्पार्थिवद्रव्यत्वेन सत्** घटादिरूप वस्तु, एवमबादिद्रव्यत्वेनापि स्यात् सदेव । कुत इत्याह- **तत्सत्त्वाव्यतिरिक्तत्वात्** पार्थिवद्रव्यसत्त्वाव्यतिरिक्तत्वात्, इतरासत्त्वस्य अबादिद्रव्यासत्त्वस्य, यथा वाऽबादिद्रव्यत्वेनासत् तथा पार्थिवद्रव्यत्वेनापि स्यादसदेव । कुत इत्याह- **तदसत्त्वाव्यतिरिक्तत्वात्** अबादिद्रव्यासत्त्वाव्यतिरिक्तत्वात्, तत्सत्त्वस्य पार्थिवद्रव्यसत्त्वस्य, एव क्षेत्रादिष्वपि वाच्यम्, इहत्यत्वपाटलिपुत्रकादित्वाद्यपेक्षया, यदि इहत्यत्वसत्त्वमेव पाटलिपुत्रकादित्वासत्त्वम्, एव सति यथा तदिहत्यत्वेन सदेवं पाटलिपुत्रकादित्वेनापि स्यात्, तत्सत्त्वाव्यतिरिक्तत्वादितरासत्त्वस्य, यथा वा पाटलिपुत्रकादित्वेनासत् तथा इहत्यत्वेनापि स्यात्, तदसत्त्वाव्यतिरिक्तत्वात्तत्सत्त्वस्य, एव घटकालमृत्पिण्डादिकालत्व च, तथा श्यामत्वसत्त्व रक्तत्वाद्यसत्त्व चाङ्गीकृत्य भावना कार्या । **ततश्चेत्यादि** । ततश्चैव च सति, तदितररूपापत्त्यादिना तस्य पार्थिवद्रव्यादिसत्त्वस्य इतररूपापत्त्यादिना अबादिद्रव्यत्वादिरूपापत्त्यादिना, आदिशब्दात्तदभावपरिग्रह । किमित्याह- **अवस्तुत्वप्रसङ्गोऽभावापत्तिरिति** निगमनम् । **आहेत्यादि** । आह- कथ पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वेऽपि कस्येत्याह- **अबाद्यसत्त्वस्य** । पार्थिवद्रव्यसत्त्वादे अवधिभूतस्य, अबाद्यात्मकत्व सुष्ठ्वप्यबाद्यसत्त्वात्मकत्व भवतु तदसत्त्वाव्यतिरिक्ततयेति भाव । एव पूर्वपक्षमाशङ्क्याह- **उच्यते, तस्येत्यादि** । तस्याबाद्यसत्त्वस्य, सत्त्वाव्यतिरिक्ततया पार्थिवद्रव्यसत्त्वाव्यतिरिक्तत्वेन, तद्रूपतापत्ते अबादिरूपतापत्ते । एतदेव भावयति- **न हीत्यादिना** । न यस्मादबाद्यसत्त्वमबादिसत्त्वरूपतापत्तिमन्तरेण विना, असत्ता जहाति परित्यजति । कुत इत्याह- **तत्त्वानिवृत्तेः** असत्तायास्तत्त्वमसत्त्वमेव तदनिवृत्ते , तत्त्वत·

परमार्थत', तदव्यतिरिक्तत्वाभावात् पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वाभावात्तदसत्त्वापरित्यागेनेति भावनीयम्। तत्सत्त्वेत्यादि। तत्सत्त्वरूपतापत्तिरेव पार्थिवद्रव्यत्वादिसत्त्वरूपतापत्तिरेव, तत्तत्त्वनिवृत्तिरबाध्यसत्त्वतत्त्वनिवृत्ति, तदव्यतिरिक्त हि तदेव तद्भवति इत्येव चेन्मन्यसे। एतदाशङ्क्याह–नेत्यादि। न नैतदेवम्, युक्त्यनुपपत्ते। एनामेवाह–पार्थिवद्रव्यसत्त्वादेरपि आदिशब्दादिहत्यत्वक्षेत्रसत्त्वादिपरिग्रह, तदितरासत्त्वस्वभावत्वात् अबाध्यसत्त्वस्वभावत्वादित्यर्थ। कुत एतदेवमित्याह– तथा प्रतीतेः। तथा तेन प्रकारेण अबाध्यसत्त्वस्वभावत्वेन, प्रतीते पार्थिवद्रव्यसत्त्वादेरिति प्रक्रम। इत्थ चैतदङ्गीकर्त्तव्यमित्याह– न चेत्यादि। न च तदितरासत्त्वनिवृत्तौ सत्या, तदभावेनेत्यबाध्यसत्त्वाभावेन हेतुना, अस्य पार्थिवद्रव्यसत्त्वादे, इत्थस्वभावत्वमबाध्यसत्त्वस्वभावत्व युक्तम्। एतदेव भावयति– नहीत्यादिना। न हि नैव, असत्यविद्यमाने, चेतनात्वे चेतनाभावे, अणु परमाणु, चेतनास्वभावश्चेतनाधर्मा नामेति, अनेन नैकान्ताविद्यमान विशेषण भवितुमर्हतीत्येतदेवाह, ततश्चाबाध्यसत्त्वेन तत्र भवितव्यमिति भाव। एतेनेत्यादि। एतेनानन्तरोदितेन वस्तुना, पार्थिवद्रव्यसत्त्वादे प्रस्तुतस्य, सत्त्वविशेषत्वात्कारणात्, तदव्यतिरिक्तत्वेऽपि पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वेऽपि, अबाध्यसत्त्वस्य। किमित्याह– पार्थिवद्रव्यसत्त्वादित्वमेव, सत्त्वविशेषाव्यतिरेकेण तद्भावापत्तेरित्यभिप्राय, इत्येतदपि कुक्काचार्यादिचोदितम्, प्रत्युक्त निराकृतम्, इति सूक्ष्मधिया भावनीयम्। सत्त्वविशेषाव्यतिरेकोऽपि नाधिकृतासत्त्वस्य स्वरूपापरित्यागेन। न चाबाध्यसत्त्वमबादिसत्त्वरूपतापत्तिमन्तरेणासत्ता जहातीतिदर्शितमेतत्। अतोऽबाधेव तदव्यतिरिक्तमित्यबाधात्मक तत, अबादिनिवृत्तौ तु तदसत्त्व तदव्यतिरिक्तमिति पूर्वोक्तो दोष इत्यल प्रसङ्गेन, अक्षरगमनिकामात्रत्वात् प्रारम्भस्य॥

अथोच्येत- न हि नः किञ्चिदबाध्यसत्त्वं निरुपाख्यं नामास्ति, यदपेक्षयाऽव्यतिरिक्तविकल्पोपन्यासेनावस्तुत्वापत्त्याऽऽत्मनो न्या

याभिज्ञता ख्याप्यते; अपि तु पार्थिवद्रव्यसत्त्वमेव विशिष्टमेक-स्वभावमबाह्यसत्त्वमुच्यते, ततश्च यथोक्तदोषाभावाद् व्यर्थो विकल्पोपन्यासपरिश्रमः। एवं शेषेष्वपि भावनीयमिति। अहो! दारुणो मोहः, स्ववाचाऽपि प्रतिपादयन्ननेकान्तं न प्रतिपद्यते, तथा च पार्थिवद्रव्यसत्त्वमेव विशिष्टमबाह्यसत्त्वमिति वक्ति, न च सदसद्रूपं वस्तु प्रतिपद्यत इत्यपूर्वो विभ्रमः। न हि स्वपरसत्ता-भावाभावोभयरूपतां विहाय वस्तुनो विशिष्टतैव सम्भवति ॥

**अथेत्यादि** । अथोच्येत परेण न हि न अस्माकम्, किंचिद्बाह्यसत्त्व निरुपाख्य तुच्छम्, नामास्ति, यदपेक्षया यदाश्रयेणेन, अव्यतिरिक्तविकल्पोपन्यासेनावस्तुत्वापत्त्या अवस्तुत्वप्रसङ्गेनाधिकृतस्य वस्तुन, आत्मनो न्यायाभिज्ञता सूक्ष्मोक्तिकत्व, ख्याप्यते भवता, अपि तु किं तर्हि, पार्थिवद्रव्यसत्त्वमेव प्रस्तुतम्, विशिष्ट त्रैलोक्यव्यावृत्तम्, एकस्वभाव सदेकरूपतया, अबाह्यसत्त्वमुच्यते, न तु तदन्यत्त्-दिति। ततश्चैव च सति, यथोक्तदोषाभावात् अधिकृतस्य वस्तुनोऽवस्तुत्वप्रसङ्गो नाम यथोक्तो दोषस्तदभावाद्धेतो, व्यर्थो विकल्पोपन्यास-परिश्रम अनन्तरकृत । एव शेषेष्वपि इहत्यत्वसत्त्वपाटलिपुत्रकादि-त्वासत्त्वादिषु, भावनीयम्। इत्येव पूर्वपक्षमाशङ्क्याह-**अहो! दारुणो मोह इत्यादि** । अहो विस्मये, दारुणो मोह आदिमध्यावसान-रौद्र । येन स्ववाचाऽपि प्रतिपादयन्ननेकान्त पार्थिवद्रव्यसत्त्वमेव विशिष्टमित्यभिधानेन, न प्रतिपद्यते नावगच्छति। एतदेव भावयति- **तथा चेत्यादिना** । तथा च पार्थिवद्रव्यसत्त्वमेव विशिष्टमबाह्यसत्त्वस्वभाववतया, अबाह्यसत्त्वमित्येव वक्ति, न च सदसद्रूप वस्तु प्रतिपद्यत इत्यपूर्वो विभ्रमो भ्रान्तिविशेष, उभयनिमित्तभावेऽपि उभयाप्रतिपत्तेरित्यर्थ । कथमेतदेवमित्याह- **न हीत्यादि** । न यस्मात् स्वपरसत्ताभावा-भावोभयरूपता विहाय वस्तुन सर्वस्यैव, विशिष्टतैव सभवति, विशेषणमन्तरेण वैशिष्ट्याऽयोगादिति भाव ॥

न च तथैनैव स्वभावेन पार्थिवद्रव्यत्वेन सद् वर्तते, तेनैवा- बादिद्रव्यत्वेनासत्; अभिन्ननिमित्तत्वे सत्येकत्र सदसत्त्वयो- र्विरोधात् । तथाहि- तेनैव स्वभावेन सच्चासच्चेति विरुद्धमेतत् । किञ्च सर्वथैकस्वभावत्वे तदेवाबाध्यसत्त्वमुच्यत इत्येतदप्ययुक्तम्, भिन्नप्रवृत्तिनिमित्तानुपपत्तेः; एकान्तैकस्वभावतायां हि तत्र स्वसत्त्वासत्त्ववदबाध्यसत्त्वान्तराभावात् । न च भिन्नप्रवृत्तिनि- मित्तमन्तरेण शब्दान्तरप्रवृत्तिर्न्याय्या, अतिप्रसङ्गात्; इन्द्रशक्र- पुरन्दरादिशब्दानामपीन्दनशकनपूर्दारणादिभिन्नप्रवृत्तिनिमित्त- त्वात् । द्रव्येऽपर्यायिशब्दवद् भिन्नप्रवृत्तिनिमित्तव्यतिरेकेणापि शब्दान्तरप्रवृत्तेरदोष इति चेद्, न । भिन्नप्रवृत्तिनिमित्तव्यतिरेका- सिद्धेः । द्रव्यस्यानेकशक्तिसमन्वितत्वात्, शक्तिशक्तिमतोश्च भेदा- भेदसंवित्तेः, अभ्यन्तरीकृतपर्याय एव शाब्दन्यायात् प्राधान्यतो द्रव्ये द्रव्यशब्दप्रवृत्तेः । तथाहि- द्रवति गच्छति तांस्तान् पर्यायान् क्षरति वेति द्रव्यम्, तद्वन्न पर्येति द्रव्यात्मनेत्यपर्यायस्तादिति भिन्नं प्रवृत्तिनिमित्तम् । अबाध्यसत्त्वस्वभावमेव पार्थिवद्रव्यसत्त्व- मिति चेत्, इष्टस्तर्हि तदनुवेधः पार्थिवद्रव्यसत्त्वमबाध्यसत्त्वस्व- भावमबाध्यसत्त्वधर्मकम्, न तु स्वसत्त्वमात्रमिति; समाश्रितस्तर्हि मदीयोऽभ्युपगमः ॥

न चेत्यादि । न च तदधिकृत वस्तु, येनैव स्वभावेनात्मसत्तारूपेण, पार्थिवद्रव्यत्वेन सत् तेनैवाबादिद्रव्यत्वेनासत्, येनैव सत् तेनैवास- न्न भवतीत्यर्थ । कुत इत्याह- **अभिन्ननिमित्तत्वे सत्येकत्र सदसत्त्वयो- र्विरोधात्** । नहि यदेव सत्त्वस्य निमित्त तदेवासत्त्वस्य भवितुमर्हति । एत- देवाह **तथाहीत्यादिना** तथाहि- तेनैव स्वभावेन सच्चासच्चेति विरुद्धमेतत् न सर्वथैक द्वयरूपमिति भावनीयम् । **किचेत्यादि** किचायमपरो दोष स- र्वथैकस्वभावत्वे वस्तुन, तदेव पार्थिवद्रव्यसत्त्वमेव, अबाध्यसत्त्वमुच्यते, इत्येतदप्येव भणनम्, अयुक्तम् । कुत इत्याह- **भिन्नप्रवृत्तिनिमित्तानु-**

पपत्तेः। न हि सदसच्छब्दयो प्रवर्त्तमानयोरेकत्र भिन्न प्रवृत्तिनिमित्त-मस्तीत्यर्थ। न चैतदसिद्धमित्याह—**एकान्तेत्यादि**। एकान्तैकस्वभावताया हि स्वसत्त्वरूपाया सत्याम्, तत्र वस्तुनि, स्वसत्त्वासत्त्ववदिति दृष्टान्त, अबाह्यसत्त्वान्तराभावात्, यथा तत्र स्वसत्त्वासत्त्व न, एवमबाह्यसत्त्वान्तरमपीति कुतस्तच्छब्दप्रवृत्तिरिति चिन्तनीयम्। **न चेत्यादि**। न च भिन्न कथंचिदर्थान्तरभूतम्, प्रवृत्तिनिमित्तमन्तरेण विना, शब्दान्तरप्रवृत्तिरबाह्यसत्त्वमित्येवरूपा न्याय्या। कुत इत्याह-**अतिप्रसङ्गात्**। स्वसत्त्वासत्त्वलक्षणशब्दान्तरप्रवृत्त्यापत्ते, आपत्तिश्च निमित्ताभावाविशेषादिति। इहैवेन्द्रादिशब्दापेक्षया लौकिकमार्गनिषेधायाह-**इन्द्रशक्रेत्यादि**। इन्द्रशक्रपुरन्दरादिशब्दानामपि लोके पर्यायशब्दतया रूढाना, इन्दनशकनपूर्दारणादिभिन्नप्रवृत्तिनिमित्तत्वात्। तथाहि— इन्दनादिन्द्र, शकनाच्छक्र, पूर्दारणात्पुरन्दर, आदिशब्दाद्वज्रपाण्यादिपरिग्रह, वज्र पाणावस्येति कृत्वा, एव भिन्नप्रवृत्तिनिमित्ता एवैते शब्दा इति। अत्राह— **द्रव्य इत्यादि**। द्रव्ये मृदादौ, अपर्यायशब्दवत् अपर्यायो द्रव्यम्, द्रव्यमपर्याय इत्येवम्, भिन्नप्रवृत्तिनिमित्तव्यतिरेकेणापि द्रव्यस्यैवापर्यायत्वेन शब्दान्तरप्रवृत्ते, द्रव्ये ऽपर्यायशब्दप्रवृत्ते, अदोष तदेवाबाह्यसत्त्वमुच्यत इत्यत्र य उक्तो भिन्नप्रवृत्तिनिमित्तानुपपत्त्याख्यो दोष सोऽयमदोष, इत्येवम्, चेन्मन्यसे। एतदाशङ्क्याह— **नेत्यादि** न नैतदेवम्। कुत इत्याह— **भिन्नप्रवृत्तिनिमित्तव्यतिरेकासिद्धेः** व्यतिरेको ह्यभाव। एतमेवाह— **द्रव्यस्यानेकशक्तिसमन्वितत्वात्** भिन्न प्रवृत्तिनिमित्तमिति योग। भेदेऽप्यनेकशक्तिसमन्वितत्वमिष्यत एव कैश्चिदित्याह— **शक्तिशक्तिमतोश्च** द्वयोरपि, परस्पर भेदाभेदसवित्ते भेदाभेदसवेदनात्, एव सति अभ्यन्तरीकृतपर्याय एव एकानेकरूपतया शबले नैकान्तैकरूपे द्रव्ये द्रव्यशब्दप्रवृत्तिरिति योग। कथ तत्त्वत शबले तथा अशबलशब्दप्रवृत्तिरित्याह— **शाब्दन्यायात् प्राधान्यतः**। इह प्रधानगुणभावेनैवानेकैकरूपे वस्तुनि यत् साक्षाच्छब्देनाभिधीयते तत्प्रधानम्, इतरद्

गुणभूतमिति शाब्दो न्याय अस्माच्छाब्दन्यायात्, प्राधान्यत्त प्राधान्येन, द्रव्ये शब्दान्तरप्रवृत्तिनिमित्तगर्भ एव, न केवले द्रव्यशब्दप्रवृत्ति शब्दान्तरनिमित्तान्तराक्षेपेणेत्यर्थ । एतद्भावनयैवाह- **तथाहीत्यादि** । तथाहीत्युपप्रदर्शने, द्रवति गच्छति तास्तान् पर्यायान् तद्भावपरिणामेन, क्षरति मुञ्चति वेति द्रव्यमिदमस्यान्वर्थत प्रवृत्तिनिमित्त अन्वय इत्यर्थ । तत किमित्याह- **तद्वत्** एवमेव यथा गच्छति क्षरति च तथा न पर्येति न समन्तान्निवर्त्तते, द्रव्यात्मना, इत्यपर्यायस्तद् द्रव्यमेतदस्याप्यन्वर्थत प्रवृत्तिनिमित्त पर्यायाभाव इति भाव । न चान्वयमात्रमेव पर्यायाभावः, पर्यायाभावमात्र वाऽन्वय , पर्यायभावेऽन्वयाभावप्रसङ्गात्, अन्वयभावाव्यतिरिक्ततया पर्यायाभावस्येत्युक्तवद्भावनीयम् , इत्येवम्, भिन्न प्रवृत्तिनिमित्तम्, द्रव्येऽपर्यायशब्दस्येति प्रक्रम । पुनरपि प्रस्तुतमेवाधिकृत्याह– **अबाधीत्यादि** अबाद्यसत्त्वस्वभावमेव पार्थिवद्रव्यसत्त्वमिति चेत्, एव किलैकरूपतेति पराभिप्राय । एनमनादृत्यैवमेव वस्तुतत्त्वमिति चेतस्याधाय सिद्धान्तवाद्याह–**इष्ट इत्यादि** इष्टस्तर्हि अभ्युपगत एवैवम्, तदनुवेध प्रक्रमात् पार्थिवद्रव्यसत्त्वस्य अबाद्यसत्त्वानुवेध । एतद्भावनयाऽऽह- **पार्थिवेत्यादि** पार्थिवद्रव्यसत्त्वमबाद्यसत्त्वस्वभावमिति कोऽर्थ इत्याह- **अबाद्यसत्त्वधर्मकं न तु स्वसत्त्वमात्रमिति** एवम्, समाश्रितस्तर्हि मदीयोऽभ्युपगम अबाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वधर्मत्वेन तदनेकस्वभावत्वादिति ॥

**स्वो भावः स्वभाव इति पार्थिवद्रव्यस्यैवात्मीया सत्ता अबाद्यसत्त्वं न धर्मान्तरमित्येकस्वभावतैवेति चेद्, न। ततः सदसत्प्रत्ययासिद्धेर्द्वयनिमित्ताभावात्; अस्य चानुभवसिद्धत्वात् । तदेव तादितरविविक्तताविशिष्टं सत् सदसत्प्रत्ययनिमित्तमिति चेद्, न। विचाराक्षमत्वात्, तदितरविविक्ततायास्तद्व्यतिरेकेण वस्तुतस्तन्मात्रत्वात्। ततश्च सर्वथा भिन्ननिमित्तत्वे सदसत्प्रत्ययानुपपत्तिः, अन्यथा हेतुभेदेन फलभेदाभ्युपगमाविरोधः। तत्तदुभयजननैकस्वभावमिति चेद्, न। उभयोरुभयरूपतापत्तेः। असङ्की-**

र्णोभयजननैकस्वभावमिति चेद्, न। युक्त्यनुपपत्तेः असङ्कीर्णोभयभावे बलात् तत्स्वभावभेदप्रसङ्गात्।

तथाहि—

"यतः स्वभावतो जातमेकं नान्यत् ततो भवेत्।
कृत्स्नं प्रतीत्य तं भूतिभावत्वात् तत्स्वरूपवत्॥ १॥
अन्यच्चैवंविधं चेति यदि स्यात्किं विरुध्यते?।
तत्स्वभावस्य कार्त्स्न्येन हेतुत्वं प्रथमं प्रति॥ २॥
कार्त्स्न्येन तस्य हेतुत्वे तत्र वीर्योपयोगतः।
कुतोऽन्यभावो, भावे वा सर्वतद्वीर्यतोऽभवः॥ ३॥
सर्वतद्वीर्यतद्भावे सेतिकाजन्यतृप्तिवत्।
तत एव न साऽन्यस्य तद्देशादन्यथा तु सा॥ ४॥
कार्त्स्न्येनैवास्य तत्कर्तृ वीर्यं तस्यैव किन्तु न।
युक्तस्ततोऽन्यभावोऽपि सेतिकाज्ञानतो न हि॥ ५॥
नावधारणसामर्थ्याद् वस्तु तादात्म्यमुज्झति।
उक्तावधारणेऽप्येकतृप्तये ह्युक्तसेतिका॥ ६॥
नाकारणं यतः कार्यं नान्यकारणकारणम्।
अन्यथा न व्यवस्था स्यात् कार्यकारणयोः क्वचित्॥ ७॥
ततश्च कार्यनानात्वं सर्वथा कारणैकताम्।
बाधतेऽनेकतायां च स्थितानेकस्वभावता॥ ८॥
एतेनैकस्वभावोऽपि तत्स्वभावत्वतः परैः।
य इष्टोऽनेकफलकृद्भावः सोऽपि निराकृतः॥ ९॥
एको ह्यनेकजननस्वभावस्तद्विचित्रताम्।
ऋते न युज्यते यस्मादुक्तदोषप्रसङ्गतः॥ १०॥
तथादर्शनतोऽप्यस्य तत्स्वभावत्वकल्पना।
अत एव स्थिरत्वादिसिद्धिसङ्गादसङ्गता॥ ११॥

प्रियो भीमो मृतप्रायान् कृत्वाऽमुञ्चत् । धार्त्तराष्ट्राः सर्वे कदाचित् क्रीडां कर्तुमेकं महान्तं कपित्थतरुमारुरुहुः, तावत्समागतो भीमस्तान् वृक्षारूढान् दृष्ट्वा पादप्रहारेण वृक्षं चाहत्य सर्वान् कौरवान् फलैः सार्द्धं भुवस्तलेऽपातयत् । ते कौरवा भीमेन खेदिता अपि भीमाय न किञ्चन चुक्रुधुः । यतस्ते जानन्त्येषोऽस्माकं क्रीडां कारयति, न पुनर्द्रोहेण पीडा करोति; परं दुष्टबुद्धित्वाद् दुर्योधनः सर्व क्रीडादिकं मात्सर्यमेव व्यलोकयत् । एकस्मिन् दिने दुर्योधनः स्वान् बन्धून् कदर्थ्यमानान् दृष्ट्वा भीमं प्रत्यवोचत्, हे बन्धो ! अमी स्तनन्धया मम बान्धवा निर्नाथप्रजा इव कथं कदर्थ्यन्ते?, यदि तव दोर्दण्डचण्डिमाऽभिमानोऽस्ति, तर्हि मामुपैहि; यतस्तव दोर्दण्डकण्डूतिहरोऽस्मि । भीमोऽभ्यधात्, हे बन्धो दुर्योधन ! अहं तव बन्धुषु दुर्मना नास्मि । किन्त्वेतत् मम स्नेहचापल्यं वर्त्तते । दुर्योधनेनोक्तम्, हे भीम ! वनेषु दन्तिनो दन्तक्रीडाऽपि तरुभञ्जनी स्यात्, अतो मया सह युध्यस्व । भीमेनोक्तम्, यथैरण्डो वृक्षो गजस्य कटकण्डूयनं न क्षमते, तथा त्वमपि मम दोःकण्डूयन न क्षमसे; इत्याक्षिप्तो दुर्योधनो भीमेन सह द्वन्द्वयुद्धेन युयुधे, तदाऽपरे कुमाराः कौतुकपरास्तौ विलोकयन्तः परितः तस्थुः । तावपि कदाचिज्जयपराजयपरायणौ वनेभाविव विराजेते स्म । एवं तयोर्युद्ध्यमानयोर्वृकोदरो वज्राङ्गो दुर्योधनं जर्जराङ्गं विधाय दूरं तत्याज । ततः सावधानो भूत्वा दुर्योधनः श्यामाननः शनैः शनैः स्वबन्धुमध्ये समाययौ । धूलिधूसरो भीमोऽपि युधिष्ठिरसमीपे समागात् । धर्मात्मजोऽपि धूलिधूसरं भीमं निरीक्ष्य प्रेम्णा स्ववाससा प्रामार्जयत् । अर्जुनोऽपि भीमं नियुद्धखिन्नं दृष्ट्वा मृदुपाणिभ्या वारं वारं सवाहयामास । नकुलसहदेवौ समीपे स्थितौ स्वाञ्चलव्यजनैश्चिरं वीजयाचक्रतुः । सुयोधनोऽपि रहःस्थाने स्थित्वा जडोचितानेवंविधान् विकल्पान् चक्रे ।

यथा—

"अर्धराज्यहरो योऽपि सोऽपि वध्यो महौजसाम् ।
किं पुनर्ब्रूमहे तस्य सर्वराज्यहरो हि यः ?" ॥ १ ॥

अतो युधिष्ठिरो मम विरोधी महाशत्रुरुदीयमानो व्याधिवच्छेद्यः, किन्तु भीमादिभिः परिवृतो दुश्छेद्यः; विक्रमेण नयेन च सम्पन्नो भूपाल इव । ततः पूर्वं भीमार्जुनौ कथाशेषतां नयामि,पश्चाद्युधिष्ठिरं व्यापादयिष्यामि; इति चिन्तयित्वा स कूटनाटकनटः पापमण्डपेऽनृत्यत् । प्रथमं दुष्टात्मा दुर्योधनो भीमस्य च्छिद्राण्यवलोकयामास । एकस्मिन् दिने सर्वे पञ्चोत्तरशतं कुमारा गङ्गाकूले क्रीडां कुर्वन्ति स्म । तदा पाण्डुराट् सर्वान् कुमारान् गङ्गाकूले क्रीडां कुर्वतो विदित्वा सुतवत्सलः कमनीयान् मोदकान् कारयित्वा पुत्रार्थं प्रेषयामास । ते सर्वेऽपि तत्रैवोपविश्य भोजनं विदधुः, किन्तु भोजनादिभिः सर्वदाऽप्यधिको भीमोऽभूत् । एकदा गङ्गायाः कूले केलिश्रान्तो वृकोदरः सिकतातल्पे सुखं सुष्वाप यतः स्निग्धं मधुरं सद्व्यञ्जनयुक्तमाहारं भुक्तवतस्तस्य दीर्घनिद्राविजित्वरी सुखनिद्रा बभूव । इदं छिद्रमासाद्य दुष्टबुद्धिः सुयोधनो भीमं लतापाशैः बद्ध्वा स्थलात् जले प्रचिक्षेप । ततो जागरितो भीमः स्वं जलेऽपश्यत् । तत्रैव जले बिसकिशलयवल्लतापाशांश्छित्त्वा गङ्गायां स्नानं कृत्वा च करीन्द्र इव निर्ययौ । पुनरन्येद्युर्भीमं निद्रायमाणं प्रेक्ष्य शरीरकोमलाङ्गेषु दुर्योधनो दन्दशूकैरदंशयत् । परं ते सर्पा भीषणफटाटोपास्तीक्ष्णोग्रगरलया दंष्ट्रया भीमत्वचं न बिभिदुः । क्रमाज्जागरितो भीमस्तान्नागान् शिशुनागानिव दूरेणाऽत्याक्षीत् । तथैवाऽन्यस्मिन् दिने सुयोधनो दुर्बुद्धिर्भीमस्य भोजने विषमं विषमाक्षिपत् । परं तेन विषेण तस्य किमपि न सञ्जातम्, पुण्यवत्त्वात् ।

यतः—

"सर्पो हारलता भवत्यसिलता सत्पुष्पमालायते
सम्पद्येत रसायनं विषमपि प्रीतिं विधत्ते रिपुः ।
देवा यान्ति वशं प्रसन्नमनसः किंवा बहु ब्रूमहे
धर्मो यस्य मतोऽपि तस्य सततं रत्नैः पर वर्षति" ॥१॥

एवं भीमेन सह विरोधं कुर्वतो दुर्योधनस्य दिनानि यान्ति स्म, परं भीमस्तेषु सर्वेषु धृतराष्ट्रपुत्रेषु कोपमलिन मनो मनागपि न विदधे, किन्तु दुर्योधनादिकृतं सर्वं क्रीडामात्रममन्यत । एवं तेषां सर्वेषां कुमाराणां क्रीडापराणां सुखेन कालो याति स्म, तथापि धृतराष्ट्रपुत्रा दुर्योधनाद्या निष्फलारम्भयत्ना पाण्डुपुत्राणां तेजोभिः केवल दन्दह्यन्ते स्म । अथ विदुरस्तेषां कुमाराणामुच्छृङ्खलं कलिं विदित्वा भीष्मादीनां स्वजनानां पुरस्तादिदमभ्यधात्, अमी सर्वे कुमाराः कवचहराः प्रज्ञाप्रकर्षात् कला नोपेक्षणीयाः, किन्तु कलाचार्यसमीपे पाठनीयाः; तर्ह्येतेषां पाठकः क उपाध्यायो भविष्यति ? । एवं तेषां कौरवाणां विचारपराणां मध्ये विदुरः प्रोवाच, अत्रैव नगरे कृपो नाम कलाचार्यः सर्वविद्याब्धिपारगो वर्त्तते । यत्र कृपे शान्तनोः पुत्रवासनाऽऽसीत् । स कृपो भवत्प्रार्थनया एतान् त्वत्कुमारानध्यापयिष्यति । तद्विदुरवचनं श्रुत्वा गाङ्गेयादिभि कृपाचार्यः समाहूय बहुमानपुरस्सरं विज्ञप्तः, भोः कृप ! एतानस्मत्कुमारानध्यापय । ततः कृपः स्वर्णरत्नादिभिः पूजितस्तान् पञ्चोत्तरं शतं कुरुपुत्रान् गृहीत्वा स्वगृहे समागतः । कृपाचार्यः सुमुहूर्त्ते गुरुपुष्यश्वेतपञ्चम्या तान् सर्वान् पङ्क्त्यां निवेश्य पूर्वं सरस्वतीमन्त्रं शिक्षयित्वा ततः शब्दशास्त्रमध्यापयितु प्रारेभे । त एवं साहित्यच्छन्दोऽलङ्कारादिक

सकलशास्त्रमध्यगीषत। ततस्ते कुमाराः सकलशास्त्रपारीणा अनिर्वेदा धनुर्वेदमध्येतु प्रारेभिरे। इतश्च तत्र वास्तव्यो विश्वकर्मणः सधर्मा अतिरथिर्नाम सूत्रधारोऽस्ति। तस्य पत्नी राधा नाम्न्यऽभूत्। तयोः पुत्रः सत्त्वैकभूमिः कलानां निधिः कर्ण इति नामाऽभूत्। यत्र कर्ण औदार्यं पुनःशौर्यमेतद्द्वयं निःसीमतां गतम्। तथा तस्मिन् पङ्कोपमे कुले परां वृद्धिं प्राप्तस्य नलिनस्येव तस्य कर्णस्योत्तमैरेव सङ्गतिरासीत्। स कुमारः कर्णः सकर्णो गुरुसंनिधौ शस्त्रशास्त्राणां शिक्षां वाञ्छन् कृपाचार्यं प्रणिपत्य विनयपूर्वं कुमारैः समं निरन्तरं शस्त्रशास्त्रश्रमं समारेभे। अथ तेषां कुमाराणां मध्ये कृपाचार्योपदेशे सर्वतः स्वातिवर्ष इव वर्षति कर्णकिरीटिभ्यां मुक्ताशुक्तिपुटायितम्। कृपाचार्याद् विद्यासर्वस्वे गृहीतेऽपि किरीटिकर्णयोः प्रज्ञा मनागपि न तृप्यति स्म। अन्यदा पुरीपरिसरे क्रीडाजुषां कुमाराणां तदीयाघातभीत्येव कन्दुकः कूपान्त पपात। ते सर्वे कुमाराः कन्दुकाकर्षणं प्रति विविधोपायान् विदधुः, परं ते कुमारा वृथारम्भाः परां क्लान्तिं लेभिरे। तेषु कुमारेष्वेवं कन्दुकार्थं क्लिश्यमानेषु कश्चिद् वृद्धविप्र एकेन यूना विप्रेण समं तत्र कूपोपकण्ठे समागमत्। तेन वृद्धविप्रेण ते कुमारा एवं जगदिरे, हे पुत्रकाः! एतस्य कन्दुकस्यार्थे कथं ताम्येत?। यत इयं भवतां मनोहरा मूर्त्तिः, तथेयं भवतां चापचातुरी किणावलीसूचिता, तर्ह्येतस्मिन्नऽल्पीयसि कार्ये ईदृश आरम्भः किमस्ति?। यतः करप्राप्ये फले भूरुहं कः समारोहति?। पुनर्वृद्धविप्रेणोक्तम्, एषोऽहं साम्प्रत युष्माकं समीहितं करिष्ये, इत्युक्त्वा करस्था मन्त्रपूता ईषिका अदर्शयत्। मया मन्त्रिता ह्येता ईषिकाः कूपस्थं कन्दुकं समानेष्यन्ति; इत्याख्याय स विप्रः कन्दुकं प्रति एकामीषिकामक्षिपत्। सा ईषिका नाराचलीलया कन्दुकं बिभिदे। तदुपरि मुक्ता ईषिकास्तच्छिरांसि तथैव बिभिदुः। ता ईषिकाः स्वहस्तमुक्ता

बाणवदाचरिताः, ताभिरीषिकाभिः परम्परयाऽऽकर्षिताभिः कर्षितः कन्दुकः । तेन भुवनाद्भुतकर्मणा विस्मिताः कुमारास्तं वृद्धविप्रं प्रणम्य बद्धाञ्जलय एवं व्यजिज्ञपन्, हे आर्य ! अस्माभिश्चापाचार्याः सहस्रशो दृष्टाः, परमस्मिन् नृलोके कस्यापीदृशी प्रौढिरस्माभिर्नालोकि, अतस्त्वमस्माकं गुरुः ।

यतः—

"गुरुर्वा त्वं पिता वा त्वमस्माकमासि सम्प्रति ।
एते स्मः किङ्कराः सर्वे ब्रूहि किं करवाम ते ?" ॥ १ ॥

इति कुमारेण पुनः पुनः प्रतिपादितो वृद्धविप्र एवं जगाद, हे कुमाराः ! हे कुरुवंशविभूषकाः ! हे सन्मार्गाध्वनीनाः ! युष्मद्विनयेन रञ्जितस्य मे मनोऽत्यर्थमध्वश्रमाविलमपि प्रसन्नतां गतम्, कनकेन वारिवत् । भोः कुमारकाः ! ममात्मन उपाध्यायमिदानीं दर्शयध्वम्, युष्माकमातिथ्यमिदमेव मे भवतु । कुमारकैः प्रोक्तम्, अस्माकमुपाध्यायः कृपाख्यो यस्यान्तिके एताः कलाः अध्यगीष्महि । सम्प्रति युष्मान् दृष्ट्वा हृष्टाः स्मः, इत्युक्तियुक्तिभिस्तोषितो विप्रः । तैर्मण्डलीभूतैः परिवृतः पार्थदत्तभुजालम्बो विप्रः पुरे प्रविवेश । गृहाभिमुखमायान्तं गुणालयं विप्रं विलोक्य रोमाञ्चसंवर्मितवपुः कृपः प्रत्युज्जगाम । पुनस्तं द्रोणाचार्यं विलोक्य बाष्पवीचिविलोचनः कृपः पञ्चाङ्गप्रणामपूर्वं नमस्यति । द्रोणाचार्योऽपि कृपं विलोक्य प्रसारितभुजद्वयस्तथाऽऽलिलिङ्ग, यथा द्रोणकृपौ वपुषा एकीभूताविव जातौ । ततः कृपो द्रोणाचार्यमुच्चैः सिंहासने भक्त्या निवेश्य तमभाषत, धन्योऽहम्, कृतपुण्योऽहम्, फलितं मे प्राचीनं कर्म, भवच्चरणरेणुभिः पवित्रितं मम मन्दिरम्, फलिता मे मनोरथाः, यत्त्वं मम गृहे सम्प्राप्तोऽतिथिः ।

यत —

"सम्वत्सरे समग्रेऽपि वासरोऽयं सुवासरः ।
अवतारः सरस्वत्यास्त्व यत्रातिथिरागतः" ॥ १ ॥

द्रोणपुत्रोऽश्वत्थामा कृपाचार्यमादरेणानमस्यत् । कृपोऽप्याशीर्भिस्तमश्वत्थामानमभ्यनन्दत् । एवमन्योन्यं प्रीतिपरायणौ तौ दृष्ट्वा कुमाराः कृपाचार्यमवोचन्, कोऽय महात्मा सपुत्रः ?, यस्येत्थ यूयं पर्युपासनां कुरुध्वे; इति राजसुतैः पृष्टः कृपोऽवोचत् । हे वत्साः ! सोऽयं द्रोणाचार्यो यः कलानां कुलमन्दिरम्, अयमश्वत्थामा नाम द्रोणपुत्रो धनुर्विद्यारहस्यज्ञः, उभावपि महाप्राज्ञौ, उभावपि महारथौ, उभावपि वेदवेदाङ्गपारज्ञौ, उभावपि कलाकौशलशालिनौ, उभावपि जगन्मान्यौ, अतो वय सेवामहे । तच्छ्रुत्वा हृष्टाः सर्वेऽपि कुमाराः । विसृष्टाश्च स्वगृह गताः । ततः कृपेण द्रोणः सपुत्रो विविधातिथ्येन पिप्रिये । अन्यदा द्रोणं प्रसन्नं विधाय कृपः प्रोवाच । हे द्रोण ! प्रेमतः किञ्चित् प्रार्थ्यसे, तत्त्वमन्यथाकर्तुं नार्हसि । द्रोणेनोक्तम्, ब्रूहि किं प्रार्थयसे ? । कृपेणोक्तम्, शृणु, यथाऽस्मिन् संसारे त्वत्समः कोऽपि कलाचार्यो नास्ति; तथाऽमीभ्यः कुमारेभ्यः प्रज्ञावान्नान्योऽस्ति । अत एतेभ्यः कुमारेभ्यो निजं चापोपनिषदं व्याकुरुष्व । विद्यायाः स्थानन्यासेन त्रैलोक्यप्रथितो भव ।

यथा—

"शालिबीजं च विद्यां च वप्तुकामैर्मनीषिभिः ।
सुक्षेत्रं च सुपात्रं च विना पुण्यैर्न लभ्यते" ॥ १ ॥

एतावन्ति दिनानि मया एते कुमारास्त्वदुपदेशानां योग्यतामुपानीयन्त, चित्रकर्मणां संमार्जितभित्तिवत् । तत्कृपवचनं द्रोणाचार्येण प्रतिपन्नम् । ततः कृपो भीष्मान्तिके गतः । तत्र

गत्वाऽऽदितो द्रोणवृत्तान्तं सर्व निवेदयामास । गाङ्गेयोऽपि द्रोणाचार्य समाकार्य कनकोत्करैः सत्कृत्य स्वान् पौत्रान् कला ग्राहयितुमर्पयामास । तदा तेषु कुमारेषु सुजातिषु गुरोः संस्कारः सुतरा दिदीपे, माणिक्येषु वैकटिकस्येव । तेषां प्रीतिशालिनां स्नेहपराणां सकलसंयोगसंयुतानां गुरुशिष्याणां संयोगो दिदीपे ।

यतः-

"आचार्यपुस्तकनिवाससहायवल्भा
बाह्यास्तु पञ्च पठनं परिवर्धयन्ति ।
आरोग्यबुद्धिविनयोद्यमशास्त्ररागा-
श्चाभ्यन्तराः पठनसिद्धिकरा भवन्ति" ॥ १ ॥

आचार्यो द्रोणस्तेषां सर्वेषा कुमाराणां मेघवृष्टिरिव समतया शिक्षां ददौ । परं तेषां कुमाराणां प्रज्ञाप्रकर्षतारतम्यवशात् पृथक् पृथक् परिणामं दध्रे । परं तेषु फाल्गुनो गुरूपदिष्ट सर्व धनुर्वेदं वेत्ति स्म, यतो विनयवान् । विनयो हि मुख्यं कारणम् ।

यदुक्तम्-

"विनयेन विद्या ग्राह्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थं नास्ति कारणम्" ॥ १ ॥

एवमर्जुनेन गुरोर्विनयं कुर्वता द्रोणाचार्यमन आवर्जितम्, तथैव कर्णोऽपि गुरोर्विनय कुर्वन् द्रोणाचार्यान्तिके सकलाः कला अशिक्षत, परं स गुणवानप्यर्जुनेन मत्सरं वहन् विहरति स्म । अर्जुनविनयावर्जितो द्रोणोऽर्जुन बभाषे, भो अर्जुन ! अहं त्वां जगत्येकधनुर्धरं कर्त्तास्मि । तच्छ्रुत्वा हृष्टोऽर्जुनो गुरोर्विनयं विशेषतो वितन्वानो विहरति स्म । अर्जुनस्यैका बाणचातुरी, अपरो गुरोः प्रसादः; एतद् द्वयं सुयोधनं बाढं

बाधते स्म । स सुयोधनः सद्गुणैः पाण्डवैः सार्द्धं मत्सरं वहते । तथा कर्णदुर्योधनौ परस्परं मैत्रीमन्वभूताम् । एकस्मिन्न-ऽनध्यायादिने गोधाधारी धनुर्धरोऽर्जुनः पुष्पकरण्डाख्ये वने क्रीडितुं ययौ । तत्रार्जुन एकं सारमेयं बाणैः पूर्णास्यमपश्यत् । तं सारमेयं विलोक्य मनस्येवमचिन्तयत् । अत्र क्वापि प्रदेशे कश्चिद् धनुष्मता धुर्योऽस्ति, इति विचिन्त्य यावताऽग्रे याति; तावल्लक्ष्यभेदैककोविदमेकं पुमांसमद्राक्षीत् । तस्येषुकलाला-घव संप्रेक्ष्य विस्मितोऽर्जुनस्तमपृच्छत्, त्वं कोऽसि, कश्च ते गुरुः ?। तेनोक्तम्, भो महात्मन् ! सावधानो भूत्वा मद्वृत्तान्तं शृणु । अस्मिन् प्रदेश इतो नातिदूरे रुद्रपल्ली नाम पल्ल्यस्ति । तस्यां हिरण्यधनुर्नामा पल्लीनायकोऽस्ति । तस्य पुत्रोऽहं एकलव्याभि-धानोऽस्मि । त्वं मां पुलिन्दकुलसंभवं जानीहि । मम गुरुर्द्रोणः, यस्य शिष्यो धनञ्जयः श्रूयते । ततः पार्थो विच्छायवदनः प्रत्यावृत्तो मार्गे आगच्छन्नतुलोच्छलन्मन्युर्मनस्येवमचिन्तयत् । एष भिल्लो यदि कुन्देन्दुधवलैः स्वैर्गुणैर्मां पराजयते, तर्हि नूनमस्य गुरुणा विद्याप्रदानेन मत्तोऽधिकः प्रसादश्चक्रे; इति चिन्ताप्रपन्नोऽर्जुनो मषीलेपश्यामप्रमुख इव साश्रुलोचनो व्यर्थ श्रमं मन्यमानो द्रुतं द्रोणान्तिके समाययौ । गुरुं नत्वा यावताऽग्रे उपविष्टः, तावत् श्यामाननं चिन्ताम्लानमुखं पार्थं विलोक्य गुरुरब्रवीत्, हे वत्स ! दिनेन्दुबिम्बवत् म्लानमाननं कथं वहासि ?, तवाज्ञा खण्डिता वा केनचित्, तिरस्कारो वा विहितः, अथवा केनचित्तव विरूपमा-चरितम् ?। अहो ! येन तव तिरस्कारः कृतः, तस्य कृतान्तः कुपितः, अथ तस्य मूर्ध्नि अशनिः संनिहितः, अथ तस्य तक्षकनागो मिलितः, येन तवोपरि किञ्चिदपि विरूपमाचरितं भविष्यति; इति श्रुत्वा गुरुं द्रोणं प्रत्यऽर्जुनोऽवदत्, हे द्रोण ! हे प्रभो ! मां त्वदन्यः कस्तिरस्करोति ? । यत. केसरिकिशोरः पितरं विना केन परि-

भूयते ? । गुरुणोक्तम्, तर्हि त्वं श्यामाननः कथं दृश्यसे ? ।
पार्थेनोक्तम्, हे प्रभो ! त्वयाऽहं पुरा प्रोक्तः, अहं तथा करिष्ये
यथाऽस्मिन् जगति त्वत्समः कोऽपि धानुष्को न भविष्यति;
तत्ते वचो मिथ्याऽभवत । तद् मे मानसं मथ्नाति । द्रोणेनोक्तम्,
तत्कथम् ? । अर्जुनेनोक्तम्, अद्याहं मचापतूणभृद्वने गतः, तत्र
मयैको वनेचरो दृष्टः सकलकलापारीणः, यस्याग्रेऽहं षोडशीं
कलां नाप्नोमि । द्रोणो जगाद, हे वत्स ! त्वत्तुल्यः कोऽपि मम
शिष्यो नास्ति, तर्हि त्वदधिकः कथं भवेत् ? । अर्जुनेनोक्तम्,
हे स्वामिन् ! एहि मया सार्धं, यथाऽहं तं तव शिष्यं दर्शयामि;
इत्युक्त्वा द्रोणं तदन्तिके निन्ये । पादपान्तरितो भूत्वा द्रोणा-
चार्यस्तत्तादृक् तस्य बाणलाघवमालोक्य पुरो जगाम । एक-
लव्योऽपि द्रोणमायान्तं विलोक्य दूरादागत्य भूमिलुठनै-
स्तस्य पादयोर्न्यपतत् । द्रोणस्तं ज्याकठोरप्रकोष्ठाङ्कं शान्तं
ब्रह्मचारिणं गुरुसेवातत्परं सान्द्रया दृशा चिरं संभावयामास ।
तद्दर्शितबाणकलारञ्जितो गुरुर्द्रोणोऽब्रवीच्च । हे वत्स ! एकलव्य !
त्वयैष बाणशिक्षाक्रमः कुतो लब्धः ? । जगद्गुरोर्द्रोणाचार्यात् । हे
वत्स ! असौ विद्योपदेशो मत्तो न लब्धः, तर्हि त्वं किमर्थं मिथ्या
भाषसे ? । एवं गुरुणोक्तो विनीतात्मा पल्लीपतिपुत्रो द्रोणपार्थयो
रात्मीयकलाचार्यं पद्मासनसंनिविष्टं चम्पककुसुमैरचित पृथुल-
वेदिनिवेशितं मृन्मयं द्रोणं दर्शयामास । एवंविधं गुरोः प्रतिमारूपं
एकलव्येन वारं वारं वन्द्यमानं दृष्ट्वा पार्थः एकलव्यं पप्रच्छ ।
भो एकलव्य ! त्वया द्रोणः कदा दृष्टः ? । भिल्लपुत्रेणोक्तम्, एक-
स्मिन् दिने मया द्रोणो दृष्टो विद्याभ्यासार्थं पृष्टश्च । गुरुणा निराकृ-
तोऽहं हीनजातित्वात्, तदा मयैषा द्रोणमूर्त्तिः कृता । तदनु पुष्पादि-
भिरर्चित्वा पुरतः कृताञ्जलिः मुक्त्वा गुरुं नत्वा बाणाभ्यासं
करोमि । यदा बाणाभ्यासात् स्खलनां लेभे, तदाऽहं स्वहस्तेनैव

कशायष्टिं स्वाङ्गे मुञ्चामि। अनया रीत्यैषा विद्या समागता। अत एष मृन्मयो द्रोणो मम गुरुः, विद्यादानात्।

"नमोऽस्तु गुरवे तस्मै प्रसादाद्यस्य पश्यतः।
मादृशो मलिनात्माऽपि विधत्ते चापचापलम्" ॥ १ ॥

इत्युक्त्वा भिल्लकुमारस्तां मूर्त्तिं वारं वारं नमस्करोति। तदा द्रोण आह, हे पल्लीन्द्रपुत्र! यदि त्वयाऽहं गुरुतयाऽङ्गीकृतः, तर्हि मह्यं गुरवे दक्षिणां देहि। विकसितवदनाम्बुजो भिल्लो बभाषे, हे स्वामिन्! त्वं ब्रूहि, किं ददामि विभवं शिरो वा; यद्रोचते तद्याचस्व। तच्छ्रुत्वा निस्त्रिंशोचितां वाचं गुरुरप्यूचे, तव वामेतरकराङ्गुष्ठो निर्लूय मम दीयताम्। गुरोस्तद्वाचं निशम्य प्रसन्नास्यो भिल्लः स्वं कृतार्थं मन्यमानोऽसिधेनुकया वामेतरकराङ्गुष्ठं छित्त्वाऽऽर्पयत्। तां गुरुभक्तिं दृष्ट्वा तुष्टाः सुरास्तदुपरि पुष्पवृष्टिं वितेनिरे। अद्वितीयभक्त्या सत्त्वेन च देवाः कथं न रज्यन्ते?। द्रोणोऽपि साश्चर्यस्त्रपानतः प्रीतचेतसा तमाश्लिष्यैवमभ्यधात्, हे वत्स! त्वं दुष्करं कृतवानसि, अतोऽद्यप्रभृति तव कराङ्गुलीभिराकृष्टं कोदण्ड लक्ष्यवेधि भविष्यति; इति प्रीत्या तमाश्वास्य व्यावृत्तो द्रोणो धनञ्जयेन सार्द्धं स्वस्थानमागात्। एकस्मिन् दिने द्रोणं प्रति फाल्गुनेनोक्तम्, हे प्रभो! ईदृग् गुणवान् पुलिन्दस्त्वया कलाश्रमं कथं न ग्राहितः?। गुरुणोक्तम्, शृणु, पार्थतुल्यः कोऽपि मा भवतु; इति त्वयि स्नेहात् मयैष बाणकलां न शिक्षितः; इति यथार्थं गुरुणोदितं श्रुत्वाऽर्जुनो गुरोः प्रत्युपकाराय स्वान् प्राणान् पणीचक्रे। ततश्चार्जुनो विशेषतो विद्याभ्यासे यत्नं करोति स्म।

यतः—

"यद्यपि भवति विरूपो वस्त्रालङ्कारवेषपरिहीनः।
सज्जनसभां प्रविष्टो विभाति विद्याधिकः पुरुषः ॥ १ ॥

आहारनिद्राभयमैथुनानि तुल्यानि सार्द्ध पशुभिर्नराणाम् ।
ज्ञान विशेषः खलु मानवानां ज्ञानेन हीनाः पशवो मनुष्याः" ॥२॥

तथा ते सर्वेऽपि कुमाराः गुर्वन्तिके विद्याभ्यासं विदधिरे । द्रोणोऽपि कुमाराणां विद्याभ्यासमकारयत् । भीमदुर्योधनौ च गदा युद्धे विचक्षणौ जातौ । एवं क्रमादखिलैः कुमारैः सकलकलापारङ्गमैर्जातम् । तथैकस्मिन् दिने द्रोणो राधावेधशिक्षाकृते सर्वेषां कुमाराणां परीक्षां करोति स्म । यथैकस्मिन् तालमूर्द्ध्नि शिखिपिच्छं बद्ध्वा द्रोणोऽवोचत्, भोः कुमारकाः! तालमूर्द्ध्नि किमपि पश्यथ? । तेऽप्यभाषन्त, त्वां महीरुहं बान्धवांश्च वयं पश्यामः । अथ पार्थं व्यवस्थाप्य गुरुस्तथैवादिशत् । भोः पार्थ ! अस्मिन् तालमूर्द्ध्नि किमपि पश्यसि ? । तेनोक्तम्, शिखिपिच्छमध्यस्थं चन्द्रक प्रेक्षे । तामर्जुनगिरं श्रुत्वा मुदितो गुरुश्चिन्तयति, एषोऽर्जुनो राधावेधोपदेशस्य योग्यो वर्त्तते, इति निश्चित्य द्रोणः पार्थं बहु मेने । अन्यदा द्रोणः स्नानकरणाय गङ्गां गतः, तत्र जले कश्चिद् ग्राहो द्रोणं जङ्घाकाण्डे जग्राह, तदा स स्वयं मोचयितुं समर्थोऽपि तान् कुमारानादिदेश । अथ ते तं हन्तुमक्षमा अगाधजलदुर्गस्थ गुरुं ज्ञात्वोदासीनाः सर्वे कुमारास्तूष्णीका बभूवुः । तेषामकिञ्चित्करतां ज्ञात्वा द्रोणो गुरुः किरीटिनो मुखमालोकयामास । ततः पार्थो धनुर्धरो बाणधोरणीभिर्ग्राहं निजग्राह । ततस्तुष्टो गुरुर्द्रोणः पार्थाय पारितोषिक राधावेधोपदेशं ददौ । गुरूपदेशेन साधितराधावेधो धनञ्जयः शुशुभे । अथ सर्वविद्याविशारदान् राजकुमारान् सर्वान् ज्ञात्वा तैः परिवृतो द्रोणाचार्यो भीष्माद्यैरुपेतां पाण्डुसभामभ्यगात्, सदसि गत्वाऽऽशीर्वादं दत्तवान् ।

यथा—

"स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु
गोहस्तिवाजिधनधान्यसमृद्धिरस्तु ।

ऐश्वर्य्यमस्तु विजयोऽस्तु रिपुक्षयोऽस्तु
कल्याणमस्तु भवता जिनभक्तिरस्तु" ॥ १ ॥

इत्यादिस्तुतिभी रञ्जितो राजा पाण्डुर्द्रोणं सत्कृत्यासने निवेशयामास। ततो द्रोणो दन्तज्योत्स्नावारिभिः सभां स्नपयन्निव बभाषे, हे महाराज ! तव कुमाराः शस्त्रशास्त्रविचक्षणाः सांप्रतं परीक्ष्यन्ताम्। ततः परमां प्रीतिमापन्नो गुरु द्रोणमभिनन्द्य विदुरः गाङ्गेयादिगुर्वाज्ञया सोऽमरसभासमप्रभं मणिमयस्तम्भविभूषितं स्थाने स्थाने पाञ्चालीवीजितचामरं पाञ्चालीकरकृतकरकैर्दत्ताचमनं स्वर्गादवतीर्णदेवविमानमिव पुरीपरिसरे रङ्गमण्डपमकारयत्। सर्वे नागरिकास्तं रङ्गमण्डपमद्राक्षुः। तत्र मण्डपे विदुरः क्षितीशार्थं प्रेक्षागारमकारयत्। तथाऽवरोधवधूहेतोः गरीयसीर्वेदिका अकरोत्। तथाऽन्येषां राजन्यानामुर्वीशवर्गयोग्यांश्चोच्चमञ्चानचीकरत्। एव रङ्गमण्डपे सज्जीकृते द्रोणगुरुणा समादिष्टे शुभदिने शुभमुहूर्त्ते दूताहूता महीभुजः समागत्योच्चान् मञ्चानलचक्रुः। धृतराष्ट्रेण सहितो गाङ्गेयेनान्वितो राजा पाण्डुः प्रेक्षागेहमागात्। पुत्रशिक्षावलोकनार्थं कुन्ती गान्धार्यपि सत्यवत्यादिभिः सहिता तत्रागत्य योग्यं स्थानं चारुरोह। एवं सर्वेऽपि राजानो युवराजादयश्च कुमारपरीक्षाविलोकनपरास्तान् मञ्चानध्यारुरुहुः। द्रोणाचार्यकृपाचार्यौ विविधायुधधारिणौ कुमारकैः सार्द्धं तदा रङ्गे प्राविशताम्। युधिष्ठिर भीमं कर्ण दुर्योधन अर्जुनं च मुक्त्वाऽन्येषा कुमाराणां श्रमदर्शने द्रोणो गुरुरनुज्ञां प्रादात्। केचित् कुमारा गजशिक्षाविचक्षणा गजशिक्षां दर्शयन्ति। एवमश्वशिक्षाम्, रथशिक्षाम्, बाणकौशलम्, गदाश्रमम्, खड्गश्रमम्; एवं षट्त्रिंशदायुधाभ्यासं सर्वे कुमाराः पृथक् पृथक् प्रदर्शयाञ्चक्रिरे। एव सर्वे राजपुत्राः लक्ष्यवेधे साधु साधु इति लोकस्य प्रशंसां लेभिरे। केचिद् गुरु प्रशसन्ति, केचिन्मातापितरौ प्रशसन्ति।

एवं पुत्रादिप्रशंसां शृण्वानौ मातापितरौ भृशं मुमुदाते । इति सर्वेषा कुमाराणां शस्त्राभ्यासं निरीक्ष्य विस्मिताः सर्वे सभालोका द्रोणं प्रशशंसु । ततो द्रोणो युधिष्ठिरं समुत्थाप्यैवमवोचत्, भो युधिष्ठिर ! त्वमपि सर्वेषां राजन्यानां तथा स्वां कलां प्रदर्शय, यथैते लोकास्त्वां प्रशंसन्ति । युधिष्ठिरोऽपि रङ्गमण्डपे समुपतस्थे । तस्मिन् सर्वेषां जनानां दृष्टयो निपेतुः । तथा चासौ अचिन्त्यमाहात्म्यः, असौ जगति विख्यातः, असौ सर्वशौण्डीरः, असौ न्यायपथप्रवर्त्तकः, असौ सत्यवाक्, धन्य एष पाण्डुपुत्रः; इत्थं लोककृतां श्लाघां श्रुत्वा प्रीतचेतसः पाण्डोः पुण्डरीकोपमा दृशो युधिष्ठिरे पेतुः । अथ रथारूढो युधिष्ठिरः शस्त्रकौशलं निःशेषं दर्शयामास । अथ दुर्योधनवृकोदरौ संनद्धौ बद्धपरिकरौ भूत्वा गदायुद्धाय रङ्गोत्सङ्गेऽवतेरतुः । तस्मिन् रङ्गमण्डपे चन्द्रसूर्याविव प्रदक्षिणया भ्रेमतुः, केचित् दुर्योधनप्रशंसां कुर्वन्ति, केचित् वृकोदरप्रशंसां कुर्वन्ति । तस्मिन्नवसरे एकाऽपि परिषत् द्वैधीभावमुपाययौ । अहो ! भीमस्य धैर्यम्, अहो ! दुर्योधनस्य शौर्यम्; इति लोकप्रशंसां श्रुत्वा हृष्टौ दुर्योधनभीमौ । तयोर्मध्ये दुर्योधनो दुष्टात्मा, स च स्वप्राणनाशक भीमं विभाव्य बद्धमत्सरः स्वीयलोचनयोः क्रोधज्वालामिव पिशङ्गतां प्रकटीचकार । तथा भीमोऽपि स्वेदबिन्दुव्रजव्याजात् मत्सरमुद्वमतो दुर्योधनस्य भाव ज्ञात्वा क्रोधवह्निज्वालाधूमसमूहमिव स्वीयमूर्द्ध्नि ऊर्द्ध्वं केशोच्चय कुर्वन् कोपाटोपादधरपल्लवं दशन् संमुखमागात् । ततो द्रोणः परस्परं बद्धामर्षौ सहारपवनप्रेरितौ विन्ध्यहिमालयाविव तौ दृष्ट्वा स्वीयपुत्रेणाश्वत्थाम्ना निवारयामास । अथ द्रोणस्तूर्यनिर्घोष निवार्य लोकानां कोलाहलं च निवार्यैवंविधां गिरमवोचत्, भो भो लोकाः ! शृण्वन्तु ।

यथा—

"यो मे पुत्रादपि प्रेयान् प्राणेभ्योऽपि प्रियङ्करः ।
सर्वास्त्राम्भोधिपारीणस्तं पार्थं पश्यताधुना" ॥ १ ॥

ततो गुर्वाज्ञया रङ्गमण्डपे समागात् । स च कीदृशः—

"आनद्धोभयतूणीरः करे विधृतकार्मुकः ।
बद्धगोधाङ्गुलित्राणः कवचच्छन्नविग्रहः" ॥ १ ॥

एवंविधमर्जुनं विलोक्य धृतराष्ट्रस्य पाण्डोश्च पुलकच्छद्मतः स्नेहाङ्कुरोद्गमा बभूवुः । तथा सुयोधनशमीतरौ कोपसप्तार्चिर्दिदीपे । अथार्जुनः कोदण्डकलितः साक्षाद् धनुर्वेद इवाङ्गवान् सर्वैर्ददृशे । स फाल्गुनः सर्वेषां राजन्यानां पश्यतामात्मीयमस्त्रकौशलं दर्शयामास । स्थिरे लक्ष्ये, चले लक्ष्ये, स्थूले लक्ष्ये, लघीयसि लक्ष्ये च सव्यसाचिनो बाणा निपेतुः । तान् पश्यन्तः के विस्मयं नापुः ? । तेन जिष्णुनाऽर्जुनेन वेध्यानि वेधितानि दृष्ट्वा वैरिसमूहस्य चेतांस्यप्यभिद्यन्त । ततश्चार्जुनो गुर्वाज्ञया राधावेधं विना सर्वं दुष्करं तदा साधयति स्म, यत् समालोक्य सुरैरपि विसिष्मिये । तस्मिन् समयेऽर्जुनः पार्षदैरेवं ददृशे ।

यथा—

"क्षणात् प्रांशुः क्षणाद् ह्रस्वः क्षणाद्भूमौ क्षणाद्दिवि ।
क्षणात् क्रीडन्नथ क्रोडे तत्र जिष्णुरदृश्यत" ॥ १ ॥

ततश्चार्जुन आग्नेयवारुणादीनि दिव्यास्त्राणि कुरुराजस्य पाण्डोरदर्शयत् । ततः सर्वे सभासदो विस्मयापन्ना अर्जुनं प्रशंसयामासुः । तामर्जुनप्रशंसामसहमानः कर्णो भुजास्फोटध्वनिभिः संवर्तपुष्करावर्तपर्जन्यवद् गर्जन्नुत्तस्थौ । सर्वेषां जनानां दुर्धृष्यो बभूव । तदानीं कर्णभुजास्फोटशब्दं श्रुत्वा अहो ! एभिः शब्दैः किं पर्वताः शीर्यन्ते, अथवा किं मेदिनी दीर्यते ?,

अथवा किमब्धयः क्षुभ्यन्ति?, अथवा किमाकाशाद्विद्युतः पतन्ति; इति वितर्कयन्तः सर्वे जनाः सावधानमानसा बभूवुः । ततश्च पञ्चभिः पाण्डवैर्द्रोणः आवव्रे, महाभूतैः परमात्मेव । अश्वत्थामान्विताः शतं बान्धवाः सुयोधनं परिवव्रुः, शीतांशुं तारका इव । भुजास्फोटादनन्तरं कर्णो मन्दरमन्थक्षुभ्यदम्भोधिभैरवं कातरीकृतविश्वं सिंहनादं विदधे । ततः सिंहनादानुसारेण विस्मयापन्नमानसैः सर्वैर्लोकैर्विलोक्यमानो भीमाकृतिः काञ्चनकवचहरः प्रांशुबाहुः रक्तास्यो गुञ्जारुणदृक् शौर्यमहार्णवः स कर्णो रङ्गमण्डपमध्यास्त । ततः कर्णः कृपाचार्यं तथा द्रोणं नत्वा नीतिज्ञः सर्वेषां जनानां स्वां विद्यामदर्शयत् । यथा पूर्वं पार्थेन विद्या दर्शिता, तथैव राधावेधं विना कर्णेनापि सातिशयं दर्शिता । तां कलां दृष्ट्वा दुर्योधनः कर्णं निबिडमालिङ्ग्य प्रेमभरादित्यवोचत्, हे कर्ण ! इहास्मिन् संसारे विश्वविभूषकस्त्वमेव वीरोऽसि, त्वमेव धनुर्विद्यापारगोऽसि, त्वमेव रिपूत्कटदर्पसंहर्त्ताऽसि, त्वमेव सर्वधनुर्भृतां धुर्योऽसि, अतः प्रोच्यते हे कर्ण ! त्वं ममैकं वचनं शृणु ।

यथा—

"इदं राज्यमिमे प्राणा इमाः कुरुकुलश्रियः ।
सर्वं त्वदीयमेवैतद् ब्रूहि येन प्रयोजनम् ?" ॥ १ ॥

कर्णोऽप्युवाच, हे सुयोधन ! त्वयि सुहृदि समस्तमस्त्येव, तथापि केवलं स्थिरं सौहार्दं प्रार्थये । दुर्योधनेनोक्तम्, मम त्वयि स्थिरं सौहार्दमस्त्येव, अत्रार्थे कश्चिद्विकल्पो न विधेयः । ततस्तौ क्षीरनीरवत् संमिलितौ विरेजतुः । अथ कर्णो दुर्योधनमभ्यधात्, हे दुर्योधन ! पार्थस्य दोर्दण्डकण्डूतिज्वरितात्मनो द्वन्द्वयुद्धेन मम भुजौ भिषजितुं इच्छतः, इति कर्णस्य गिरमाकर्ण्य हुतो वह्निरिवार्जुनः क्रोधानलैर्ज्वलित इदमभ्यधात्, रे कर्ण! निर्नाम!

मदीयशरसागरे किमर्थं निमज्जसि ? । तच्छ्रुत्वा कोपारुणनयनः कर्णोऽर्णवध्वनिः पार्थं बभाषे । भो धनञ्जय ! शरत्कालपर्जन्यवत् किं मुधा गर्जितेन ? । यदि शस्त्रकौशलं तवास्ति, तर्हि शस्त्रं गृहाण, यथाधुनैषोऽहं तव सर्वं गर्वं हरामि । ततो द्रोणानुज्ञयाऽर्जुनः सशरं धनुः प्रगृह्य युद्धसज्जो भूत्वा कर्णायोदतिष्ठत् । तयोः कर्णार्जुनयोः संग्रामसंरम्भविलोकनागतत्रिदिवौकसां विमानैर्द्यौः कुसुमितेवासीत् । तथा तदीयसमरारम्भविलोकनकुतूहली सूर्योऽपि रथं स्थिरीकृत्य क्षणं तस्थौ । तौ प्रजाभिर्विन्ध्याद्रिवने मत्तौ दन्तावलाविवादृश्येताम् । केचिद्विद्याधराः कर्णं प्रशंसन्ति, केचित् फाल्गुनं प्रशंसन्ति । कुन्ती तु तयो संग्रामकातरा कस्य जयः कस्य वा पराजयो भविष्यतीति भिया मूर्च्छामगमत् । विदुरेणाश्वासिता च कुन्ती जजागार । तत स्वस्थचित्ता तयोश्चरित्रं विलोकयन्ती तस्थौ । इतश्च कृपाचार्यः कर्णं बभाषे, भोः कर्ण ! फाल्गुनेन सार्द्धं का ते प्रातिमल्लता ? । यः कुरुवंशविभूषणं कुन्तीपाण्डुपुत्रो जगति विख्यातः, तेन सार्द्धं कस्ते संग्रामः ? । त्वमप्यात्मनः कुलादिकं ब्रूहि । यथैते लोकाः शृण्वन्ति तवापि कुलादिकम् । तां कृपाणतुल्यां कृपाचार्यभारतीं श्रुत्वा झगित्युत्थाय सुयोधनोऽभाषत, भोः कृपाचार्याः ! कुलेन किं करिष्यथ ?, विद्या हि प्रधानम् ।

यतः—

"किं कुलेन विशालेन विद्याहीनेन देहिनाम् ? ।
अकुलीनोऽपि विद्यावान् सर्वत्रापि हि पूज्यते" ॥ १ ॥

अत. सर्वत्रापि रणशौण्डीरिमा विलोकनीयः, न कुलम् । कुलेन किं क्रियते ?, यदि शौण्डीरिमा नास्ति । सोऽपि किं शौण्डीरः कथ्यते ?, योऽन्यपराभवं सहते गर्ताशूकरवत् ।

अथ यदि कर्णोऽराजा, कर्णेन सहार्जुनो युद्धं न करोति, तदेष कर्णोऽधुना मयाऽङ्गानां राज्येऽभिषिक्तः; इति धृतराष्ट्रसूः कृपाचार्यप्रभृतीनुक्त्वा कर्णराज्याभिषेकायोपचक्रमे । पुनः पुरोहितं समाहूय कर्णं स्वर्णासने निवेश्य स्वर्णकुम्भाहृतैस्तीर्थवारिभिर्दुर्योधनोऽङ्गराज्येऽभ्यषिञ्चत् । राज्यं दत्त्वा च दुर्योधनः कर्णशिरसि निष्कलङ्कमृगाङ्कमण्डलाभं छत्रमधारयत्, निजदोर्दण्डैरर्जितं स्वयशःपिण्डमिव। वारबधूभिश्चामराणि कर्णस्य वीज्यन्ते। एवं चिरं जय चिरं नन्देत्याशीर्भिः स्तूयमानः संप्राप्तचम्पाराज्यः कर्णो दुर्योधनं ययाचे । ब्रूहि राजेन्द्र ! दुर्योधन ! तव प्रत्युपकाराय किं करोमि ?। तेनोक्तम्—यावज्जीवं सौहार्दं याचे । कर्णेनोक्तम्—भोः स्वामिन् ! कियन्मात्रं सौहार्दं मम प्राणा अपि तवैव, इत्युक्तवन्तं राधेयं सुयोधनो हर्षेणालिलिङ्ग । ततः प्राप्ताङ्गराज्यः कर्णः कार्मुकं करे कृत्वा रणारम्भाय फाल्गुनं दूरादाह्वास्त । इतश्चाङ्गदेशानां साम्राज्यं श्रुत्वा कर्णस्य जनकोऽतिरथिसारथिस्तत्रागात् । ततः कर्णः पितरमायान्तं समालोक्य कार्मुकं दूरादुत्सृज्य तस्य पादयोः पपात । सोऽप्यतिरथिसारथिः आनन्दाश्रुवारिभिस्तनूजशिरो राज्याभिषेकायेव पुनः सिषेच । पादयोः पतितं सुतमुत्थाप्य सारथिः सर्वाङ्गमालिङ्गति स्म । उत्फुल्लनयनः सारथिः पुत्रं कर्णं दृग्दोषापनोदाय मूर्ध्नि भूयो भूयश्चुचुम्ब। अथ विज्ञतिलको भीमः कर्णं सारथेः सुतं विज्ञाय तस्य समीपमागत्येत्थं वदति स्म; हे रथिकतनय ! त्वं पार्थेन समं कथं युद्धं कर्तुं समीहसे ?, त्वं स्वकुलोचितं समाचर, रथाग्रे चोपविश्य कशायष्टिं करे कुरु, अथवा सूत्रधारोपकरणं करे कुरु, कार्मुकं त्यज, मम सेवां भज, स्वकुलोचितं कृत्वाऽऽत्मानं रक्ष, अकाले मा म्रियस्व, त्वं किं जीवितादुद्विग्नोऽसि ?, यदर्जुनेन समं युद्धाय सज्जो भवसि । सुरैर-

प्यजय्योऽर्जुनः, अतस्त्वयार्जुनेन समं युद्धं कर्तुं न युक्तम्। भोः कर्ण! तव किं राज्यं, त्वं किं चम्पाराज्ययोग्योऽसि?, यतो मृगारातिपदे किं गोमायुः सद्भिः प्रशस्यते?। एवं भीमे स्वैरं व्याहरति भ्रातृमध्याद् दुर्योधनः शीघ्रं तत्रागत्य भीमगिरा भीममवोचत्। हे भीम! त्वं पुरुषलक्षणानभिज्ञोऽसि। यतः कर्णसदृशः पुमानीदृशे कुले कथमुत्पद्यते?, परमत्र किञ्चित् कारणं दृश्यते। अथ तदासन्नस्थोऽतिरथिः सारथिः प्रोवाच। साधु साधु भो राजेन्द्र! नत्वेष ममाङ्गजः, किन्त्वेष मम धर्मपुत्रः। दुर्योधनेनोक्तम्—कथं तव धर्मपुत्रः? सत्यमाख्याहि। तेनोक्तम्—हे राजेन्द्र! सावधानो भूत्वा शृणु। यथा एकस्मिन् दिनेऽहं प्रभातसमये स्नानार्थं गङ्गोपकण्ठे गतः, तत्राऽहं गङ्गाप्रवाहे वहन्तीमेकां रत्नमञ्जूषामपश्यम्, निजां पुण्यलक्ष्मीमिव। तां मञ्जूषां गृहे नीत्वा पत्न्याः पुरो मुक्त्वा द्वारमुद्घाट्य यावद्विलोकयामि, तावद् वचनागोचरश्रियं स्फुरत्कान्तिं सकुण्डलं राजपुत्रसदृक्षं कान्त्या द्योतितदिग्मुखं कर्णस्याधःकृतकरमहमेकं बालमपश्यम्। तं बालं दृष्ट्वा राधां प्रियां प्रत्यभ्यधाम्—हे प्रिये! अनपत्यायास्तवैष पुत्रो भवतु, अनेन पुत्रेण त्वं पुत्रवती भव। राधाऽप्यतिप्रीत्या मां प्राह; हे प्राणेश! अद्य प्रभाते मया स्वप्नो दृष्टः। यथा—

"जानामि भानुमानेत्य सप्रसादं जगाद माम्।
वत्से! सम्पत्स्यते तेऽद्य शौण्डीरतिलकः सुतः॥ १॥
तं दृष्ट्वा दधती हर्षमुज्जागरमजागरम्।
तदैव च त्वयाऽनेन दिष्ट्या पुत्रेण वर्द्धिता" ॥ २॥

इति शुभे स्वप्ने आख्याते हर्षतोऽहं द्रुतं मञ्जूषातः समाकृष्य तं बालमङ्केऽक्षिपम्। कर्णस्याधःकृतकरं बालं समालोक्य मया

कर्ण इति नाम दत्तम् । सोऽयं कर्णः सूर्येण दत्तत्वात् सूर्यपुत्र इति द्वितीय नाम प्राप्तः । अस्मिन् पुत्रे बाल्यादपि अस्मत्कुलातिगा गुणा भवन्ति स्म । यथा पङ्केरुहस्य वृद्धिः पङ्के भवेत्, परं सौरभं तु स्वतो भवेत् । अतोऽसौ क्वापि राजकुले लब्धजन्मा, अस्य दर्शनेन मयाऽनुमितम् । केनापि हेतुना एष बालः पितृभ्या गङ्गाप्रवाहे प्रवाहितः, ततो मया लब्धः, सोऽयं कर्णो मम धर्मपुत्रो नैष ममाङ्गजः ; इति अतिरथेर्मुखात् कर्णस्य कथामाकर्ण्य सर्वेऽपि सभासदो विस्मयस्तिमित मनो दधुः । कर्ण दृष्ट्वा कुन्ती अपि चिन्तयति, नूनं स एवायं मम पुत्रः, सैवेय मणिमण्डिता कुण्डलद्वयी । अहो ! मम भाग्यम् ; यच्चिरकालेन मयैष जीवन् दृष्टः, अस्मिन् संसारे अहमेकैव धन्याऽस्मि, यस्या अमू सुतौ कर्णार्जुनौ । यतः पार्थेन समं सहोदरं विनाऽन्यः कः स्पर्द्धेत ? । यथा चन्द्रोऽमृतेन सह स्पर्द्धते सहोदरत्वात्, तथा कर्णार्जुनावपि परस्परं स्पर्द्धेते । पुनः कुन्ती चिन्तयति, कर्णसम्बन्धं सर्वेषां भ्रातृणां धर्मजादीनां समये ज्ञापयिष्यामि । एवं विचिन्त्य कुन्ती तूष्णीका बभूव । तदा सर्वेषां सभासदां पश्यता भुजमुत्क्षिप्य दुर्योधनो बभाषे; अयं कर्णो यादृशस्तादृशो वा भवतु, एष मयाऽङ्गदेशाधिपत्वेनाभिषिक्तः यस्य न रोचते स कार्मुक गृहीत्वा सज्जो भवतु, एतद् दुर्योधनवचनं श्रुत्वा ज्वलितात्मसु पाण्डुपुत्रेषु भयभीतलोकस्य महान् कोलाहलो जज्ञे । तदसमञ्जसं दृष्ट्वा राजा पाण्डुर्द्रोणमभाषिष्ट ; भो द्रोण ! पुत्रभाण्डानां कोऽयमकाले कलहः समुपस्थितः ? । एतेऽस्माभिः पुत्रपरीक्षार्थं सर्वे सामाजिकाः सम्मेलिताः, न तु सग्रामार्थम् । अतोऽयं कुमाराणां विरोधो निवार्यताम्, यतस्त्व कलाचार्यः सर्वेषां कुमाराणां वर्त्तसे ; इति पाण्डुगिरं श्रुत्वा द्रोणाचार्यः स्व दाक्षिणभुजमुत्क्षिप्य पाण्डवान् कौरयाश्च

सिंहपोतानिव युध्यमानान् न्यवारयत् । तस्मिन् समये बन्धूनां मिथो विरोधं द्रष्टुमक्षम इव सूर्योऽस्तमियाय । तदा कुमाराणा कलाः कलहं च दृष्ट्वा पाण्डोरवनिपतेः आनन्दो विषादश्चाभूत् । धृतराष्ट्रकृपद्रोणगाङ्गेयादिभिरन्वित. पाण्डुराट् साय निजमन्दिरमासदत् । काश्चित् कर्ण स्तुवन् कश्चित् पार्थ स्तुवन् काश्चित् दुर्योधनं काश्चिद्भीमं कश्चित् द्रोणगुरुं प्रशंसन् सर्वोऽपि जनः स्वं स्वं गृहमुपाययौ । एवं ते पाण्डवकौरवा. परस्परं छिद्रान्वेषणतत्परा विनयाच्छादितमत्सरा मिलिता एव क्रीडा कुर्वन्तो विहरन्ति स्म ॥

इति श्रीमत्तपागच्छभट्टारक-श्री ५श्रीहीरविजयसूरिपट्टालङ्कारभट्टारक श्रीविजयसेनसूरिराज्ये पण्डितश्रीदेवविजयगणिविरचिते गद्यबन्धबन्धुरे श्रीपाण्डवचरित्रे भीमदुर्योधनादिजन्मकुमारकलारोपणकलादर्शनकर्णराज्याभिषेकवर्णनो नाम तृतीय सर्ग. ॥ ३ ॥



अर्हम्

## अथ चतुर्थः सर्ग ।



अथान्यदा श्रीमान् राजा पाण्डुः सभामलंचकार । तस्यां सदसि स्वर्णमयमुच्चं सिंहासनमध्यारुरोह, उदयाद्रिशिरो भानुमानिव । पाण्डुवर्णनं यथा- केयूरमण्डितभुजो मुक्ताहारविराजितवक्षस्थलः शिरसि मुकुटमण्डितः कुण्डलाभ्यां विराजितकपोलः कुङ्कुमघनसारकस्तूर्यादिभिस्सुगन्धियक्षकर्दमैर्विलिप्तसर्वाङ्गो देवदूष्यवस्त्रैराच्छादितशरीरो वारवधूधृतातपत्रो वारवधूभ्यां वीजितचामरो राजा पाण्डू रुचिरसिंहासनस्थः सकलराजमण्डलीसंसेव्यमानचरणो देवराज इव राजते । तस्मिन् समये गाङ्गेयधृतराष्ट्रादिगुरुवर्गोऽप्यानन्दमेदुरस्तदास्थानमलचक्रे । तदा

कवीन्द्रेषु राज्ञः स्तुतिं कुर्वत्सु, गायनेषु मधुरस्वराकिन्नरवद् गीतगान कुर्वत्सु, नृत्यत्सु नृत्यकारेषु, पठत्सु बन्दिवर्गेषु, अघमर्षिणीर्भरतादिकथाः प्रथयत्सु भट्टेषु च कश्चित् प्रतीहारो भूमिन्यस्तैकजानुर्मस्तकं उन्न्यस्य मूर्ध्नि बद्धाञ्जलिरेवं राजानं व्यजिज्ञपत्, हे देव ! द्रुपदस्य महीपतेर्दूतस्तव द्वारे समागतोऽस्ति । तद्दूतागमनवचन श्रुत्वा गाङ्गेयादीनां चित्ताभिप्रायं ज्ञात्वा राजा पाण्डुर्भ्रूसञ्ज्ञया त दूत सदसि प्रावेशयत् । सोऽपि दूत प्रतीहारेणाहूतस्तमेव प्रतीहारमग्रे कृत्वा नृपास्थानमुपतस्थे । तत्रागत्य विधिवद्राजान प्रणम्य मौलिबद्धाञ्जलिर्विज्ञ एवं विज्ञापयामास—हे देव ! द्रुपदेन राज्ञा द्रौपद्या निजपुत्र्या स्वयंवरे प्रारब्धे सर्वे राजान. समाहूताः, त्वदन्तिके च अनणुप्रेमप्रणयी द्रुपदो मां प्राहिणोत् । स द्रुपदः सर्वेषां राज्ञां पश्यतामेव कथयति—भो भो लोकाः ! शृण्वन्तु मम वच, इमां मत्तनयां यस्मै कस्मैचिद्दातुं मे मनो नोत्सहते, किन्तु यः कोऽपि राधावेधं विधास्यति, तस्मै इयं सुताऽस्माभिः पारितोषिकं दास्यते; इति प्रतिज्ञां कृतवता मत्प्रभुणा भवतामिद विज्ञापितमस्ति—यथा भवतो विश्वानन्दननन्दनाः पञ्चोत्तर शत श्रूयन्ते, सर्वे धनुर्विद्याविचक्षणाः सर्वे सकलशास्त्रपारीणाः सर्वे सर्वत्रापि लब्धजयाः, अतस्तेषां तव पुत्राणां मध्येऽन्यतमो राधावेधं विधाय मम मनोरथ पूरयिष्यति । अतो हे स्वामिन् ! जगत्येकधनुर्द्धरैः स्वपुत्रैः सह समागत्य मम स्वयंवरमण्डपमलङ्कर्तुमर्हसि ; इति दूतमुखात् द्रुपदभारती श्रुत्वा गाङ्गेयपाण्ड्वाद्याः कुरुवंशीयाः सर्वे राजानो रत्नकेयूरकुण्डलकङ्कणादिभिस्त दूतं सत्कृत्य ओमित्युक्त्वा विससृजुः । ततः पाण्डुगाङ्गेयादिभिः कुलवृद्धैः युधिष्ठिरदुर्योधनादिभिः पुत्रैः सुबुद्धिप्रभृतिभिर्मन्त्रिमुख्यैरन्यैश्च सैनिकैः परिवृतो नृप काम्पिल्यं प्रति प्रतस्थे । युधिष्ठिरादयः

पञ्च, दुर्योधनादयः शतम् , एव ते सर्वे कुमारा विविधयानारूढाः संग्रामशूराः पाण्डु परिवव्रुः । तैः परिवृतः पाण्डुर्निस्वाननिस्वनैर्गिरिकन्दरान् दारयन् तन्नादैर्विश्वमापूरयन् मार्गे चचाल। अग्रे गच्छतस्तस्य राज्ञः ।

"अनुकूलानिलोद्धूताः स्वयंवरदिदृक्षया ।
पुरोगन्तुमिवेच्छन्त्यो वैजयन्त्यो विरेजिरे" ॥१॥

स पाण्डुस्सामन्तैरनुयातैर्देवैः परिवृतो देवराज इव लोकैर्ददृशे । तथाऽसौ यानाऽधिरूढया कुन्त्या माद्र्या च सहितो बभौ, गङ्गापार्वत्यन्वितश्चन्द्रमौलिरिव । एव धृतराष्ट्रोऽपि स्ववल्लभाभिस्सहितश्चचाल । मार्गे ग्रामीणा गोघृतं समादाय पुरो मुक्त्वा प्रणेमुः, तथैव सामन्तमेदिनीपाला अपि गवाऽश्वादि ढौकायित्वा प्रणेमुः । पाण्डुराडपि तान् समागतान् सर्वान् लोकान् मेदिनीपालांश्च दानमानपुरस्सरं बहु मेने । एवं सा कौरवी सेना ग्रामाद् ग्रामं संचरन्ती कुरुदेशं दूरमतिचक्राम । पुनः सा सेना स्तोकैरेव दिनैः काम्पिल्यपुरसीमानमासदत् । ततः स्वसेवकैर्वर्धितः पाण्डोरागमनोदन्तैरावर्जितहृदयो द्रुपदः संमुखमागात् । तदोभयोः सैन्ययोर्निस्वाननिनादैर्व्याप्तं दिगन्तः । तथा द्वयोः सैन्ययोस्तुरङ्गमखुरोत्खातरजोभिराच्छादिते नभस्तले द्वयोः सैन्ययोर्मिथस्तथा प्रतिशब्दायितं यथाऽन्योन्ययोः शब्दयोरैक्य जातं क्षीरनीरयोरिव । पाण्डुराज्ञि दृष्टे द्रुपदो जयकुञ्जरादुत्तीर्य पादचारेण संमुखः समागात् । पाण्डुरपि द्रुपदं पादातिकं दृष्ट्वा करटिप्रकाण्डमुज्झांचकार । ततस्तौ भुजौ वितत्य प्रेमपरायणौ परस्परमालिलिङ्गतुः । तस्मिन् प्रस्तावे काम्पिल्यकाश्यपीनाथसारथिः काम्बोजवाजिसंयुक्तं रथं द्रुपदराजान्तिके निनाय । तस्मिन् रथे द्रुपदद्त्तहस्तावलम्बः पाण्डुरारुरोह। स च स्वयं कुरुनाथस्य पाण्डोः सारथ्यं चकार । ततो

द्वावपि रथाधिरूढौ स्वस्वसैन्यपरिवृतौ मूर्द्ध्नि धृतातपत्रौ चामराभ्यां वीज्यमानौ पठद्भिर्बन्दिभिः स्तूयमानौ भट्टेभ्यो दानं वितरन्तौ पुरीपरिसरोद्याने समागतौ । तत्र काम्पिल्यपुरपरिसरे पाण्डुना जाह्नवी ददृशे, तस्यां गङ्गायां क्रीडा विधाय ततश्चोपवनेषु द्रुपदगिरा राजा पाण्डुरावासान् जग्राह । अथ राजा द्रुपदः पाण्डुनाऽनुज्ञातः काम्पिल्यपुरमाविशत् । नगरोन्तर्गत्वा पाण्डोः चमूचरांस्तथोपचचार, यथा ते सैनिकाः निजस्यापि पुरस्य सौख्यं न स्मरन्ति स्म । ततो द्रुपदः सुमुहूर्ते विश्वकर्मणस्सधर्मभिः शिल्पिभिः सुरसभासधर्माणं स्वयंवरमण्डपं कारयामास । यत्र मण्डपतले मेदिनी नीलमणिमयी बभौ, यस्मिन् मण्डपे स्वर्णमयस्तम्भसहस्रं शुशुभे, यस्मिन् हिरण्मयस्तम्भेषु शिल्पिभिः कृताः पाञ्चाल्यः सुराङ्गना इव लोकैर्ददृशिरे, यस्मिन् मण्डपे स्थाने२ अवलम्बिषु मुक्तावचूलेषु पुष्पस्तवकशङ्किनो मधुव्रतव्राता निपेतुः, यस्मिन् मणिस्तूपके स्वयंवरमण्डपे निर्माणनैपुण्यमवलोकयन् विश्वकर्माऽपि जडमतिरभूत्; तस्मिन् मण्डपे द्रुपदः सर्वासु दिक्षु उच्चमञ्चानकारयत् । तं विचित्रमणितोरणालङ्कृतं देवविमानानुकारिस्वयंवरमण्डपं दृष्ट्वा लोकाः सलिलनिधिं सलिलावशेषं मेनिरे । तथा स्वयंवरमण्डपमध्ये मेरुनिश्चलमेकं हैमस्तम्भं निवेशयामास, तस्य हेमस्तम्भस्य मध्यप्रदेशे चत्वारि चक्राणि वामं भ्रमन्ति तथैव चत्वारि चक्राणि दाक्षिणं भ्रमन्ति रेजुः । तस्य हेमस्तम्भस्योपरि एका रत्नपाञ्चाली अधोमुखी स्वयंवरकौतुकविलोकनेनेव निश्चलाऽभवत्, तथा तस्य स्तम्भस्याधो राजा देवताऽधिष्ठितं वज्रनिर्मितं क्रमायात वज्रावर्त नाम धनुरमुञ्चत् । अथ मौहूर्त्तिकादिष्टे शुभदिवसे शुभलग्ने द्रुपदराट् प्रति पार्थिव प्रातराहूतये सायं दूतान् प्राहिणोत्, तदा रविर्द्रुपदनन्दिनीमलङ्कर्तुं रत्नाकराद्रत्नसारमुपादातुमिव शीघ्रं रत्ना-

करेऽविशत्, तदा द्रुपदकन्याङ्गसङ्गमोत्सवमिच्छूनां भूपा-
नां भूपकुमाराणां च सा यामिनी शतयामेव बभूव। पाण्डुस्तु
आत्मजन्मना कलाकौशल्यं अन्तर्विचिन्त्य अपास्तचिन्तासंतापः
सुखी निर्भरं सुष्वाप। तदा द्रुपदराट् तेषां कुरुकुमाराणां ललितं
विलोक्य स्वकृतं पणं मुहुर्मुहुर्निनिन्द—अहो! मया अविचार्य्य
पणः कृतः, एते कुमाराः स्वयवरे समागता मत्पुत्री कथं परिणे-
ष्यन्ति? इति चिन्तां प्रपन्ने राज्ञि निद्रा नायाति, एवं द्रुपदस्याऽ-
न्येषां च भूभुजां नानाविकल्पवतां अल्पनिद्रायमाणाना सा विभा-
वरी विरराम। प्रातः कालेऽशुमान् राजकलाकौशलविलोकनार्थे-
व द्रुपदतनयापाणिग्रहणोत्सवानिरीक्षणायेव वा उदयाद्रिशिखरम-
लंचकार। मनोज्ञैर्मङ्गलातोद्यैस्तथा बन्दिकोलाहलैस्ते राजानो
विकसन्नेत्रा बभूवुः। ते सर्वे राजानो विधिवत्सर्वं प्रातःकृत्यं
विधाय सामन्तामात्यमण्डलं मेलयित्वा स्वान् २ कुमारानल-
ङ्कारादिभिः कामरूपान् विधाय स्वयवरमण्डपं समाययुः।
पाण्डुरपि स्वान् पुत्रान् पुरस्कृत्य स्वयवरमण्डपं समाययौ। स
तत्र मण्डपे काम्पिल्यपतिदर्शितं उच्चसिंहासनमध्यारुरोह। एवं
सर्वेऽपि राजानो यथायोग्यासनानि द्रुपददर्शितान्यारुरुहुः। तेषां
सर्वेषां राज्ञां कुमाराणां च मध्ये साक्षाद्धनुर्वेदमिव दुर्धर्ष्यं, वीररस-
मिव दुष्प्रेक्ष्यं कामरूपिण धनञ्जयं दृष्ट्वा मोहिताः सर्वे भूमी-
भुजः स्वात्मानमपि विस्मरन्ति स्म। अथ द्रौपदी स्वयंवरागारमा-
नेतुं प्रसाधिकाः प्रीतिप्रह्वा प्रसाधयामासुः। तद्यथा-तस्याः पादयो-
र्निहितोऽलक्तकरसो बभौ, अहं शङ्के जितैः पङ्केरुहैः स्वकान्ति-
रुपदीकृता। तस्या वपुश्चन्दनैः कर्बुरितं रेजे। तस्या बिम्बोष्ठयो-
रलक्तकरसच्छलात् कामो रागसर्वस्वनिधानमिवादधे। तस्याः
कपोलयोः कस्तूरीपत्रवल्लरी आबभौ। तस्या दृशोर्मञ्जुलं कज्जलं
शुशुभे। पुष्पधन्वनः केलिदीर्घिकालावण्यजलजम्बाल इव तस्या

भाले मृगनाभिललाटिका भासते स्म। तस्याः प्रसाधिकाभिः कृतो मल्लिकादामाङ्कितो धम्मिल्लो मूर्ध्नि शोभते स्म । तस्याः कौशेयसंवृतं वपुराबभौ । तस्या माणिक्यमण्डितकिरीटकिरणोत्करश्चकाशे। तस्या गण्डयोः कुण्डले शोभामीयतुः । तस्या वक्षःस्थलाश्रमे एकावली भाति स्म, जगज्जिगीषोः कामस्य तपस्यतोऽक्षमालेव । तस्या बाह्वोर्मरीचिपटलावृते रत्नकेयूरे शोभेते स्म । तस्याः करयोर्मुक्तामये कङ्कणे विरेजतुः। तस्या जघने रसनानिक्कणश्चकाशे, कामसैन्यस्य निवासान् गृह्णतः तुमुल इव। तस्या. पादयोर्झङ्कारमुखरौ मणिनूपुरौ विभ्राजेते स्म; इति प्रसाधिता सा नृपात्मजा द्रौपदी नरवाह्यं यानरत्नमारुह्य स्वयंवरं समाययौ; विमानारूढा स्वर्गादवतीर्णा अमरकुमारीव। तां कन्यां द्रौपदीं दृष्ट्वा काश्चिद्विलासी करकमले कमलं धृत्वा तस्या मुखकमलतुल्यतां निरूपयति ; काश्चित् दशनांकुरैर्नागवल्लीखण्डनमिषात् कुपितस्मरस्याग्रे मुखाङ्गुलीः क्षिपतीव ; कश्चित् कामी तां दुष्प्रापां ज्ञात्वा मनस्युन्मनाः पादाङ्गुष्ठेन स्वं मनोनष्टं विलोकयितुमिव महीपीठं लिलेख; इत्याद्याविर्भूतभावेषु तेषु सर्वेषु राजसु क्षोणिभृत्कन्यका द्रौपदी पाण्डुपुत्रेषु पञ्चसु स्वयं दृशश्चिक्षेप। तान् पश्चापि पाण्डोः पुत्रान्मधुराकृतीन् विभाव्य धृति बबन्ध; पुनस्तच्चक्षु' पणमुद्वीक्ष्याधृतिं दधौ। द्रौपदी तस्माद्यानविमानाद्भुवस्तले अवततार, देवविमानाद्रम्भेव ; अथवा राधास्तम्भस्य समीपे मण्डपाधिष्ठायिका देवीव। तस्मिन् देवविमानोपमे स्वयंवरमण्डपे ऊर्ध्वाऽधस्तिर्यक्संक्रान्तप्रतिबिम्बा द्रुपदनन्दिनी अत्यर्थमेकाऽपि बहुरूपतां बभार । तदा द्रुपदात्मजो धृष्टद्युम्न ऊर्ध्वीकृतभुजो लोकतुमुलं प्रतिषिध्यैवं वाचमुवाच—भो भो जगतीभृतः ! भोः कुमारकाः ! सर्वे सावधाना मद्वचः शृण्वन्तु ।

यथा—

"इदमस्मत्कुलोत्तंसं देवताशतसेवितम् ।
चापमारोप्य यः कोऽपि राधावेधं विधास्यति ॥ १ ॥
भुवनाद्भुतसौभाग्यभागिनी भगिनी मम ।
शौण्डीर्यवेतनं तस्मै कृष्णेय कल्पयिष्यते" ॥ २ ॥

तद् धृष्टद्युम्नकुमारवचनं श्रुत्वा चापारोपणार्थं समुद्यतान् भूपान् प्रतिहारी द्रौपद्यै इति दर्शयामास । हे देवि ! इतः पश्य, अय हस्तिशीर्षाधिपो दमदन्तश्चापारोपार्थमुत्तस्थौ । स संमुखीनक्षुतेनागच्छन् विनिवारितः सन् समाप्ततेजोहानिः पुनरुपाविशत् । तथा धरो नाम राजा मथुराधीशस्तच्चापारोपणाय तथैवोत्तस्थौ, त राजानं समापतन्तं दृष्ट्वा सर्वे सभासदोऽवज्ञया हास्य कुर्वन्ति, तद्धास्यं समालोक्य मथुराधिपोऽवनावुत्तीर्य पुनरपि मञ्चमारुरोह । पुनः प्रतिहार्य्या प्रोक्तम्, हे स्वामिनि ! इतः पश्य, तव सङ्गाऽभिलाषुको विराटाधिपः कियतीं भूमिमागत्य धनुर्दृष्ट्वा स्तम्भित इवाबभासे । हे सुमध्यमेऽसौ नन्दिपुरेश्वरः शल्यो नाम राजा धनुर्दृष्ट्वा दूरमुज्जिहीते । हे देवि ! अय सहदेवस्त्रिखण्डभरताधिपजरासन्धराज्ञः पुत्रो देवसमाकृतिर्धनुःसमीप गत्वा त्वरितं प्रत्यावृत्तः । हे कृशाङ्गि ! अय शिशुपालश्चेदीनामधिपो बान्धवै रुद्धोऽपि राधावेधाय धावति । हे देवि ! अय कर्णो दुर्योधनमित्र तेनैव प्रेरितो दुर्योधनसमीपादुत्थाय शनैः शनैर्धनुःसमीपेऽभ्येति, तच्छ्रुत्वा श्यामीभवन्मुखाम्बुजा पाञ्चाली इदमचिन्तयत् । असौ कर्णः सूतपुत्रो जगत्येकधनुर्द्धरो राधावेध विधाय किमेष मां परिणेष्यति तर्हि किमिदं वेधसाऽस्यार्थे निष्पादिताऽस्मि ? इति वारं २ स्वं निन्दन्ती कुलदेवतानां सस्मार । भो भोः कुलदेवताः ! पाण्डुपुत्रादन्यो मम भर्त्ता मा भवतु इति चिन्तां वितन्वतीं द्रौपदीं दृष्ट्वा पुनः श्रोत्रामृतं वचः प्रतीहारी व्याजहार । हे हले ! राधातनयो राधा-

वेधी नास्ति, यतो वज्रावर्त्त धनुर्ज्वालाव्याप्त दृष्ट्वा भत्यावृत्तः । हे देवि ! तव कुलदेव्या प्रभावतोऽस्मिन् स्वयवरे कस्यापि प्रभाविष्णुता नास्ति, एतदर्थे त्व चिन्तां मा विधेहि । हे सखि ! इतः पश्य, एष बलप्रद्युम्नशाम्बाद्यै प्रवरैः परिवारैः परिवृत कृष्णः केनापि हेतुनाऽद्यापि आसीन एवास्ते । हे सखि ! इतः पश्य, एष सुयोधन उच्चसिंहासनात् धृतराष्ट्राङ्गजो लक्ष्ययोधी लक्षरक्षको महारथो मातुर्गान्धार्या रोमाञ्चेन सहोत्थितः सन् धनुर्नमस्कृत्यैव स्थितस्तथाऽन्येऽपि धृतराष्ट्रसुता दुःशासनादय एकोनशत दोर्वीर्यगर्वपर्वता राधावेधसाधने विषादिनो निषीदन्ति । हे सखि ! एते भगदत्ताश्वत्थामभूरिश्रवःशल्यजयद्रथमहासेनचारुदत्तादयस्तव पाणिग्रहणेच्छया त्वां तथा स्तम्भोपरि निषण्णां राधां च विलोकयन्तास्तिष्ठन्ति । एवं द्रुपदपुत्र्याः प्रतीहारी राजवंशीयवर्णनं कृत्वा पाण्डववर्णन करोति, हे सखि ! अय कुरुवशालङ्कारभूतो वीरशान्तरसमयो युधि स्थिरो युधिष्ठिरो नामेहास्ते । तथा हे सखि ! अयं भीमो युधिष्ठिरानुजो हरिविक्रमो युधि कन्दुकैरिव कुञ्जरै सह नित्य क्रीडति, तथाऽयमर्जुनो भीमानुजो भीमपराक्रम', येन मुक्ता बाणाः कस्य हृदि न विविशुः, यस्य बाणा रणे शत्रुप्राणाऽपहारिणो वैरिवारं मथ्नन्ति, येनार्जुनेन धनुष्मता गुरुद्रोणस्तथा तोषितो यथा गुरुणा राधावेधाधिकारी कृतः । अथाय सज्जो भूत्वा राधावेधार्थमुत्थितो नून राधावेध विधास्यति, इत्यादि श्रुत्वा द्रुपदात्मजा यावता भृश मोदते, तावताऽर्जुनो बद्धपरिकरस्त्वरित चापसमीपमागात्, तदा तेषां सभासदामेवविधा दृष्टयस्तस्मिन् पेतु· ।

यथा—

"कस्यापि विस्मयस्मेरा कस्याप्युत्प्रासपांशुरा ।
क्रोधताम्राश्च कस्यापि दृश पेतु किरीटिनि ॥ १ ॥

क्षणात् प्रदक्षिणीकृत्य प्रणिपत्य च कार्मुकम् ।
ज्येष्ठबन्धोरथादेशादुच्चिक्षेप कपिध्वजः" ॥ २ ॥

ततः साहङ्कारो भीम एवं जगाद- भो भो लोकाः! अर्जुने राधावेधकर्म कुर्वाणे यस्य कस्यापि दोर्भृतः शिरसि शूलमुदेष्यति, तस्यैषा मामकीना गदा तद्गदमपाकरिष्याति, इत्युक्त्वा गदां करे कृत्वाऽर्जुनस्य परितश्चतुर्दिक्षु रक्षार्थं भीमो भीमरूपो बभ्राम । कुन्त्यर्जुनं दृष्ट्वोल्लसितहृदयाऽनिमेषेक्षणा पुत्र सौम्यदृशा सुचिरं निरीक्षमाणाऽतिष्ठत् । गान्धार्यपि धनञ्जयनिरीक्षणात् स्वैरमप्रीतिपरायणाऽभूत् । तदा युधिष्ठिरादीनां भ्रातॄणां दृशः प्रमोदविशदा अभूवन् । दुर्योधनादीना गान्धारीपुत्राणां दृशो द्वेषकषायिता अभूवन् ।

यत —

"कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूक प्रीतिमांश्चक्रवाक ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिललितानां ही! विचित्रो विपाक" ॥१॥

तदा धनञ्जय नेत्रानन्दकर निरीक्ष्य हर्षाकुलितचेतसा तद्रूपमोहिता द्रौपदी कुलदेवी स्मरन्त्येवमुवाच–हे कुलदेव्य ! यूय धनञ्जयस्य प्रसन्ना भवन्तु, यथैष धनञ्जयो राधावेध विधाय मामुद्वहति । तस्मिन् समये पाण्डु धृतराष्ट्र भीष्मं प्रति धनञ्जयगुरुर्द्रोणो जगाद । भो भोः कुरुराजन्याः ! धनञ्जयस्य भुजोर्जितत्व इतो यूय पश्यत पश्यत । तच्छ्रुत्वा कौतुकोत्तालभूपाला आसनात् समुत्थाय धनञ्जयं पश्यन्ति स्म । कौतूहलान्मिलन्तीनां सिद्धगन्धर्वयोषितां लक्षैराकाश कुसुमिनामिव शुशुभे । राधावेधस्तम्भस्याऽधस्तैलकुण्डे प्रतिबिम्बितस्य राधारूपस्य

सर्वस्यां दिशि नलगवेषणं कृतं, परं क्वापि नलस्य शुद्धिरपि न लब्धा। तत् श्रुत्वा दमयन्ती चिन्तयति स्म - तर्हि नलेन रूपान्तरं कृतं सभाव्यते।

यथा—

"ब्राह्मणं क्षत्रियं वैश्यं शूद्रं वा वर्णमाश्रितः।
त्यक्त्वा वा रूपमात्मीयं प्राप्तो रूपान्तरं नवम्"॥१॥

एवं काले याति, एकस्मिन् दिने सुसुमारपुरात् स्नेहकृते दधिपर्णेन राज्ञा भीमराज्ञो दूतः प्रेषितः; स दूतो वार्ताप्रस्तावे भीमभूभुजं एवं वक्ति स्म, यथा--अस्मत्स्वामिनः पार्श्वे एको न-लमूपकृदस्ति, स गजशिक्षाविचक्षणः, स सर्वकलाकुशलः, स सूर्यपाकरसवतीज्ञः, परं कुब्जाकृतिः; स वक्ति-- ममोपाध्यायो नल एव; नलेन संतुष्टेनैताः सकलाः कलाः शिक्षिताः; दधि-पर्णेन राज्ञोक्तम्--त्वं कूबरं नलभ्रातरं कथ न निषेवसे?; तेनोक्तम्- कूबरोऽतिदुष्टः स्वामिद्रोहकः, येन नीतिनिपुणो राजा नलो राज्यान्निष्काशितस्तं कथं सेवामि?; अतोऽहमपि नला-नुपदिको देशादेशं भ्राम्यन्नत्रागतस्तव सेवा करिष्ये, इत्युक्त्वा स कुब्जो मत्स्वामिसेवां करोति। दधिपर्णोऽपि तं नलसूपमा-त्मना सह भोजयति, एवं जलपान, सुखभक्षिकाभक्षणं, गजा-रोहणं, नाटकावलोकनं सहैव करोति। किं बहु कथ्यते?, द्वा-वप्येकीभूताविव विहरतः। एतद् वचनं दूतमुखात् श्रुत्वा भैमी भीमभूपतेर्व्यजिज्ञपत्--हे तात! अस्मिन् भरते मत्पतिं विना-ऽन्यः कोऽपि सूर्यपाका रसवती न वेत्ति, इति पूर्वं मुनिनोक्तं वर्तते; मुनिनोक्तं च सत्यमेव नान्यथेति। तर्हि तद्विलोकनाय कश्चिन्नरः प्रेष्यते; स कुब्जः कीदृशः?, किंकलः?, किंरूपः?; अवश्यं गोपितात्माऽसौ मम वल्लभः, नान्यः कोऽपि तादृशो भवेत्, अतो हे तात! तर्हि कश्चित्तत्र प्रेष्यते। भीमराज्ञा स एव ह-रिमित्रविप्रो नलनिरीक्षणाय प्रेषितः। नलाक्षेपमयौ श्लोकौ

शिक्षयित्वा विसृष्टो हरिमित्रः क्रमेण तत्र गतो यत्रास्ति नलकुब्जकः; तं दृष्ट्वा हरिमित्रश्चिन्तयति स्म।

यथा-

"नलः क्व दिविषद्देश्यः कुब्जश्चायं क्व सूपकृत्?।
क्व सर्षपः क्व मेरुश्च क्व खद्योतः क्व चार्यमा?" ॥ १ ॥

तथापि नलपरीक्षाकृते पूर्वोक्तश्लोकौ पपाठ। तान् श्रुत्वा किञ्चित् साश्रुलोचनं कुब्जं निरीक्ष्य पुनः श्लोकद्वयं नलनिन्दामयं पपाठ।

यथा—

"निर्घृणानामलज्जानां निःसत्त्वानां दुरात्मनाम्।
नलस्यैव धुरीणत्वं, सुप्तां तत्याज यः प्रियाम् ॥ १ ॥
सुप्तामेकाकिनी स्निग्धां विश्वस्तां दयितां सतीम्।
वने निराश्रयां मुञ्चन् गतः किं न स भस्मसात्?" ॥२॥

इतिश्लोकद्वयं श्रुत्वा साश्रुलोचनः कुब्जो हरिमित्रं प्रत्युवाच--अहो! विप्र! त्वया श्लोकद्वयी मनोहरकण्ठेन पठिता, अतस्त्वं कोऽसि?, कुत्र वास्तव्योऽसि?, सर्वं मम सत्य समाख्याहि। सोऽप्याख्यत्--अहं हरिमित्रनामा विप्रोऽस्मि; कुण्डिनपुरवास्तव्योऽस्मि, कुण्डिनपुरादागतोस्मि, नलनिरीक्षणकृते भीमेन राज्ञा प्रेषितोऽस्मि, परं नलस्य क्वापि काऽपि शुद्धिर्न लब्धा, पुनरप्यथाहं स्वदेशे यास्यामि। कुब्जकेनोक्तम्—भो विप्र! भैम्याः किञ्चित्स्वरूपं वेत्सि?। तेनोक्तम्—किञ्चिद्वेद्मि। कुब्जकेनोक्तम्--तर्हि मह्यं समाख्याहि। ततो हरिमित्रेण सुप्ताया भैम्या मोचनादारभ्य भीमभूपतिगृहे समागमनं यावत् सकलोऽपि वृत्तान्तः कथितः; तं वृत्तान्त श्रुत्वा कुब्जो बहुमानपुरःसरं संबन्धिनं विप्रं ज्ञात्वा पात्रं च विज्ञाय भोजनाय स्वगृहे निन्ये। ततः सूर्यपाकया रसवत्या भोजितः।

यथा—

"इत्युदीर्य द्विजन्मानमानीय स्वगृहे निजे ।
रसवत्या तया सूर्यपाकया तमभोजयत्" ॥ १ ॥

तं भोजयित्वा दधिपर्णाल्लब्धं सौवर्णलक्षमङ्गलग्नमाभरणादिकं च सर्वं तस्मै विप्राय दक्षिणाया दत्त्वा विसृष्टो विप्रः कुण्डिनपुरमागात् । स विप्रः कुण्डिनपुरमागत्य सर्वं भीमभूमीभुजे भैम्यै चापि निवेदयामास--यतोऽहं कुब्जेन सूर्यपाकया रसवत्या भोजितः; सुवर्णलक्षमङ्गलग्नमाभरणादिकं च मम दक्षिणायै दत्तम् । अथ भैमी भीमभूपतिमभ्यधात्--स एव नलः सकलकलावान् गजशिक्षाविचक्षणः सूर्यपाकरसवतीकारकः, एवंविधस्तव जामातरं विनाऽन्यः कोऽपीहास्मिन् भरते नास्तीति मुनिनोक्तम्, स एष मे प्राणप्रियः; इति वारं वारं पित्रोरग्रे दमयन्त्या प्रोक्तम् । अथ पुष्पदन्ती ता रुदती वदन्ती बाष्पाविलविलोचनां जननी मिष्टवाक्यैराश्वासयितुमारेभे--हे वत्से ! तव वात्सल्यात् मया तव पित्रा सह एष मन्त्रः क्रियते-असौ सूर्यपाकरसवतीज्ञः कुब्जो नलो यदि भविष्यति तदेतच्छ्रवणात्समेष्यत्येव । एतत् किं ?, प्रातः स्वयंवरो भैम्याः पुनर्भविष्यति ।

यथा—

" विमुक्तनलशोकाया दमयन्त्याः पितुर्गिरा ।
प्रातः स्वयंवरः सम्यक् भूयोऽपि हि भविष्यति ॥१॥
इति श्रुत्वा स कुब्जोऽपि धाविष्यति नलो यदि ।
निपतन्ति प्रियार्थे हि व्योम्नः पारापता इव" ॥ २ ॥
ततोऽश्वहृदयं ज्ञात्वा दूरदेशान्तरादिह ।
यद्यायास्यति वेगेन तन्नूनं नल एव सः" ॥ ३ ॥

भैमी मातुर्मुखादेतद् मन्त्रमाकर्ण्य तुष्टहृदया गलितहृदय-

दुःखा बभूव। अथ भीमराट् सुसुमारपुरे दधिपर्णस्य राज्ञो निमन्त्रणकृते लेखं लिलेख-यत् चैत्रस्य शुद्धपञ्चम्याः प्रातः पुनर्भैम्याः स्वयंवरो भावी, यदि तव पाणिग्रहणेहा भवेत् तर्हि त्वरितमेवागन्तव्यं, इति पत्रे लिखित्वा दधिपर्णाय दूतं प्राहिणोत्। दूतोऽपि तत्र गत्वा लेख दत्त्वा श्रीभीमोक्त सर्वं दधिपर्णायाचख्यौ। तत् सर्वं समीपस्थेन कुब्जेन श्रुतम्। दूतोक्तं श्रुत्वा कुब्जश्चिन्तयति स्म-अहो! किमेतत् श्रूयते महदाश्चर्यं? यद्दमयन्ती पुनः पाणिग्रहणं करोति तर्हि मन्मथो बलीयान् दुर्जेयो यो जनानेवं विडम्बयति।

यतः—

"भ्रूकेशालोऽतिशुष्कः सुविपुलतपसा, भस्मना मण्डिताङ्गः
कौपीनी प्रोषितश्रीर्वलिपलितभरः पार्ष्णिलस्तज्जटावान्।
वृद्धत्वान्नम्रवंशोऽभजत भृगुऋषी रेणुकां बालबालां
कामः पापी दुरात्मा विनटयति नटस्तादृशानप्यहो! धिक्"॥१॥

धिक्कामं; यद्येवंविधान् वृद्धान्नटयति तर्हि अन्येषां कि कथ्यते?, तथापि मयि जीवति मम प्रिया भैमी भूयः स्वयंवरे कथं याति? एवं यावन्नलश्चिन्तयति स्म तावद् दधिपर्णेन राज्ञा कुब्जं प्रत्यभाणि-भोः कुब्जक! कथं करिष्यते?। कुब्जेनोक्तम्-तत् किं स्वामिन्!?। दधिपर्णेनोक्तम्-शृणु, भीमेन राज्ञा नले मृते भैम्याः पुनः स्वयंवरमहः प्रारब्धः; स महश्चैत्रस्य शुद्धपञ्चम्यां भावी; सा पञ्चमी प्रातर्भविष्यति, तदन्तरे षट् प्रहराः सन्ति; यदि षट्प्रहरान्ते योजनानां सार्द्ध शतद्वयं कथमपि गम्यते तदा भैमी लभ्यतेऽन्यथा भैमी दुर्लभेति मम मनसि महाचिन्ता वर्त्तते। भो राजेन्द्र! मयि सेवके सकलकार्यकरणक्षमे एनां चिन्तां मा विधेहि; ममैकं रथं समर्पय, तथा द्वौ जात्याश्वौ समर्पय; यथाऽहं प्रातः कुण्डिनपुरमण्डितां भुवं दर्शयामि। राज्ञोक्तम्-भो हुण्डिक! एते रथसहस्राः, एतेषां मध्ये यस्तव

रोचते तं रथं गृहाण, तथैतेषां वरतुरगशतसहस्राणां मध्याद्यौ सर्वलक्षणलक्षितौ वराश्वौ वर्त्तेते, तौ गृहाण, गृहीत्वा मम मनोरथं पूरय; ततस्तेन हुण्डिकसूपकृता एको वरो रथो गृहीतः, तथा द्वौ मनोऽभीष्टौ जात्याश्वौ गृहीतौ। ततस्तयोः कर्णे हुण्डिकेन देवतादत्तोऽश्वकर्णमन्त्रोऽभाणि, यो मन्त्रोऽस्मिन् भरते कस्याप्यन्यस्य नास्ति। ततस्तेन मन्त्रितौ तौ दिव्याऽश्वौ जातौ। तस्मिन् रथे एते षड् नरा आरूढाः।

यथा—

"राजा स्थगीधरश्छत्रधरश्चामरधारिणौ।
कुब्जश्चेति षडारोहन्नरास्तस्मिन् वरे रथे" ॥ १ ॥

ततः स कुब्जः तौ बिल्वकरण्डौ निषधनाकिना दत्तौ कटौ बद्ध्वा कशाघातैस्तुरङ्गमान् प्रेरयामास; तान् वाहान् वायुवेगान् कुब्जेन प्रेरितान् दृष्ट्वा विस्मयमापन्नो दधिपर्णो राट् चिन्तयति स्म—अहो! अनेन वाहान् प्रेरयताऽसौ मही करतलमिवाभाति तर्हि कियत् कुण्डिनम्; कुण्डिनं तु यामेन समेष्यति; यस्मिन् हुण्डिकेन रथे प्रेरिते सति दधिपर्णो राट् विस्मयतः पुनश्चिन्तयति स्म।

यथा—

"न स्थलं न जलं किञ्चित् न किञ्चिद्विषमं समम्।
वातस्थ इव पर्जन्यः स ययौ त्वरित रथ ॥ १ ॥
भ्रमतीव महीचक्रमायान्तीव पुरो दिशः।
व्योम विस्तरतीव द्राक् संक्षिप्यन्त इवाद्रयः ॥ २ ॥
न पोतः स्थलसंचारी न बाणा यान्ति दूरतः।
न निर्दिष्टगतिर्वायुर्न सूर्यो नापि यन्मनः" ॥ ३ ॥

अहो! अस्य स्यन्दनस्यापूर्वं कोऽपि जवो न दृष्टो नापि श्रुतः, सारथी अप्येवंविधः कोऽपि नास्त्येवाऽस्मिन् संसारे;

एवं चिन्तयतो राज्ञस्तीव्रवेगापकर्षितो रथो यावता मार्गे याति तावत्तस्य राज्ञो दधिपर्णस्योत्तरीयं सहसा भूमौ पपात। राजोचे-भोः कुब्जक! क्षण रथं रक्षय। यतो मे उत्तरीयं पतितं गृह्यते। कुब्जो बभाषे-भो राजन्द्र! भवदुत्तरीय पञ्चविंशतियोजनैः पश्चात्पतितम्। राज्ञा यावतोक्तं तावता पञ्चविंशतियोजनै रथः समागतः; यत एतौ मध्यमौ वाहौ वर्त्तेते; यदि मम मनोऽभीष्टौ स्तस्तदा द्विगुण व्रजतः; अतस्त्वं तदुत्तरीयाक्षेपं मुञ्च, मार्गे संचर। तत् श्रुत्वा विस्मितो राजा दधिपर्णः कुब्ज बभाषे-भोः कुब्जक! पश्चाद्वलितोऽहं किञ्चिद्गणितकौतुकं दर्शयिष्यामि, अहं लीलया सर्वपदार्थानां संख्या जानामि, साम्रत तत्कौतुकस्यावसरो नास्ति, यतो मार्गे पुनः कालक्षेपो भवेत्। विद्यार्थी नलस्तस्य वचनं श्रुत्वा कालक्षेपभयं मुक्त्वा तत्परीक्षा कर्तुं सत्वरोऽभूत्। कुब्जकेनोक्तम्-भो राजेन्द्र! गणितकौतुकं दर्शय, कालक्षेपभयं त्वं मा कार्षीर्यतोऽहं प्रातस्तव रथं तत्र नेष्यामि। एवं तयोर्वार्त्ता कुर्वतोर्मार्गे बिभीतकवृक्षस्य फलानि दृष्ट्वा कुब्जेनोक्तम्--भो राजेन्द्र! कथयाऽस्मिन् वृक्षे कतिसंख्यानि फलानि सन्ति?। राज्ञा विचार्योक्तम्-अस्मिन् बिभीतकेऽष्टादश सहस्राणि फलानि भवन्ति, न न्यूनाधिकानि। ततः कुब्जो रथादुत्तीर्य पादघातेन पादपं ताडयन् तानि सकलान्यपि फलानि पातयामास। अथ कुब्जरूपो नलस्तानि बिभीतकफलानि स्वहस्तपातितानि दधिपर्णेनोक्तानि गणयन् राज्ञोदिताः संख्याः सद्यः प्राप; विस्मितो नलो दधिपर्णात्तां गणितविद्यामयाचत। दधिपर्णोऽपि नलादश्वहृदयमन्त्रमयाचत। नलेन राज्ञा दधिपर्णायाऽश्वहृदयमन्त्रो दत्तः, दधिपर्णात् गणितमन्त्रो गृहीतः। एवं तौ राजानौ एकरथस्थौ क्रमेण प्रभातसमये कुण्डिनपुरपरिसरं प्रापतुः; परं तस्मिन्नगरपरिसरे नान्यः कोऽपि राजा वा युवराजो वा; स्वयंवर-

स्यापि किमपि लक्षणं नादृश्यत । विस्मितो राजा दधिपर्णः । पुनर्भैमीपाणिग्रहणं न करोतीति निश्चिन्तो राजा नलो जातः । अहो ! नगरपरिसरे पार्थिवाना निवेशो नास्ति ? नगरमपि मृदङ्गध्वानधीरं नास्ति, अस्मिन्नगरे किञ्चिन्नवीनं नास्ति, सर्व सहजस्थं दृश्यते, नूनं केनापि कितवेनावा हसितौ । अथ नगरान्तःप्रविष्टावावां भीमराज्ञः किमुत्तरं दास्यावः ?, एवं चिन्तयन्तौ तौ नलदधिपर्णौ नगरसमीपोद्यान प्रापतुः । स-कुब्ज दधिपर्ण समागतं श्रुत्वा भीमोऽपि महामहेन प्रवेश-मकारयत्, वासगृहं च ददौ । सकुब्जं दधिपर्ण षट्प्रहरैरागतं ज्ञात्वा भैमी हृष्टा भीमनरेशं पुष्पदन्तीं च प्रत्युवाच—हे मा-तापितरौ ! वीरसेनतनयं नलं विनाऽस्मिन् भरते तुरङ्गहृदय-मन्त्रज्ञानमन्यः कोऽपि न वेत्ति ? । तातेनोक्तम्--हे वत्से ! मे जा-माता एष एव लक्षणैर्ज्ञायते, तथापि निर्णयं विना शुद्धं न ज्ञायते । पुनर्भैमी भीम बभाषे--हे तात ! अद्य मया निशाशेषे स्वप्नो दृष्टः, यथा—मम निर्वृतिदेवतया कोशलावनमिहानीय दर्शितम्, तस्या अनुज्ञयाऽहं एकं सहकारद्रुममारोहिनवती; तया देव्या मम करे एकं शतपत्र समर्पितं, तथा तस्मात् चूतात् पुराऽऽरूढः कश्चिद्विहगो झटित्येव भूतले पपात । भीमराजोचे--हे पुत्रि ! कोशलोद्यानतुल्या ते राज्यप्राप्तिः, सहकारपादपतुल्यस्ते प्रिय-संगमः, चूतात्कश्चित् पूर्वारूढः पक्षी पपात स कूबरः क्रूरकर्मा राज्यात् पतिष्यति, निशाशेषे स्वप्नदर्शनान्नलसगमोऽद्य भा-वी । राज्ञा भीमेन भैम्या च नलपरीक्षायै दधिपर्णायोचे--भो दधिपर्ण ! तवाऽसौ सूपकृत् सूर्यपाका रसवती वेत्तीति श्रूयते; तवाज्ञयाऽसौ सूर्यपाका रसवती दर्शयतु, मम कुतूहलं वर्तते । राज्ञा दधिपर्णेनोक्तम्—भो हुण्डिक ! सूर्यपाकरसवत्या भीम-भूपालं सानुजीविन भैमी च भोजय । दधिपर्णानुज्ञया कुब्जकः शालिदालितेमनादि सर्वमातपे धृत्वा सूर्यमन्त्रं जपित्वा

सूर्यपाकां रसवतीं निष्पाद्य भीमदधिपर्णप्रभृतीन् सपरिकरान् भोजयामास। भैम्यपि सुवर्णस्थाले तां रसवतीं बुभुजे। भुक्त्वा रसवतीं प्रीता भैमी भीममेकान्ते नीत्वैवमभाषिष्ट-- असावेव ते जामाता नलनामा वीरसेनपुत्रः, येनाहं परिणीता; केनापि कारणेनैष कुब्जो जातः। ज्ञानिनाऽप्युक्तम्-'सूर्यपाकां रसवतीं नलो जानाति नापरः'। देवेनाप्युक्तम्-तव भर्ता द्वादशवर्षान्ते मिलिष्यति; तदद्य द्वादशाऽब्दस्याऽन्तिमादिनम्। तृतीयं परीक्षान्तरमप्यस्ति-यदस्य संस्पर्शमात्रतो रोमाञ्चकञ्चुक मम वपुर्भवेत्, तदा भैम्या नलकुब्जो भोजनार्थं समाहूयाऽगुङ्ल्या स्पृष्टः; तत्क्षणादेव रोमाञ्चितशरीरा जाता। तत्क्षणादेव भीमसमक्षं भैम्या नलोऽञ्चले गृहीतः; त्वं नलोऽसि, मयाऽङ्गुल्या स्पर्शमात्रेण ज्ञातः। कुब्जेनोक्तम्-क्व नलः कामसदृशः? क्वाहं दृग्विपाञ्जनं? इत्युक्तवन्तमपि नलं भैमी भीमादिषु पश्यत्सु गृहान्तरेऽनयत्। तैस्तैर्भैम्या प्रेमाञ्चितैर्वाक्यैराद्रीभवन्मना नलः स्नानं कृत्वा तस्माद्विल्वात् करण्डाच्च दुकूलाभरणानि कृष्ट्वा पर्यधात्। ततः स्वं रूपं प्रकटितम्। उपलक्षितो नलो दमयन्त्या। नलेनाऽऽलिङ्गिता दमयन्ती। एवं द्वादशवर्षान्ते तौ मिलितौ; पुनः परस्परं प्रीतिर्जाता। दमयन्तीं मिलित्वा पुनर्नलो द्वारि समायातः। भीमराड् नलं परिरभ्य नमस्कारं कृत्वा निजे सिंहासने निवेश्य कृताञ्जलिरेवमवोचत्।

यथा--

"एताः श्रिय इमे प्राणास्त्वदीया एव भूपते!।
तत्कृत्यमादिशेत्युक्त्वा भीमो वेत्रित्वमातनोत्॥ १॥
दधिपर्णोऽपि संभ्रान्तः प्रणम्य नलमभ्यधात्।
देव! प्राचीनमज्ञानादपराधं क्षमस्व मे॥ २॥
त्यक्तकुब्जत्ववैरूप्यो नलः स्वं रूपमास्थितः।
निर्मुक्त इव भोगीन्द्रस्तदानीं दिद्युतेतराम्"॥ ३॥

इतश्च धनदेवसार्थवाहः; येन भैमी सुखासने समारोप्याऽचलपुरद्वारे मुक्ता, स सार्थवाहो भीमभूपालं द्रष्टुकामः समागात् । वैदर्भी तस्य धनदेवस्य बन्धुवत् प्रतिपत्ति चक्रे। ततो वैदर्भी दूतेन ऋतुपर्ण नृपं चन्द्रयशश्चन्द्रवतीयुतं वसन्तश्रीशेखरमपि दूतेनाजूहवत् । एते सर्वेऽपि भीमभूमीभुजा नवनवैरुपचारैः कृतप्रीतयो मासं मुहूर्तवद् निन्यिरे। अन्येद्युः कश्चिद्देवो नलभैम्योः पुरः समागात् । वैदर्भी नत्वाऽवोचत्—सोऽहं तापसेश्वरो यस्त्वया प्रतिबोध्य दीक्षा ग्राहितः; सोऽहं संयमं प्रपाल्योग्रं तपस्तप्त्वा सौधर्मे कल्पे श्रीकेसरनामा सुरोऽभवं केसरिनाम्नि विमाने । त्वं ममोपकारिणी; त्वयाऽहं मिथ्यात्ववशतो घोरान्धनरककूपे पतन्निवारितः सम्यक्त्वदानात्; अतोऽहं किं तवेप्सितं करोमि ?। भैम्योक्तम्—यदि मम हृदये सम्यक्त्वं निश्चलं वर्तते तर्हि सर्व वर्तते, पुनस्त्वं धर्मे निश्चलो भवेः, इत्युक्त्वा दमयन्ती तूष्णीका बभूव । अथ देवः श्रीकेसरनामा भैम्या गृहे सुवर्णस्य सप्त कोटीर्विकीर्य कृतज्ञचूडामणिः स्वस्थानमगमत् । अथ नलं प्रकटितं ज्ञात्वा सर्वे राजानः सेवां कर्तु समाजग्मुः; ततः सर्वैः राजसमूहैर्भीमादिभिः संभूय नलो राज्येऽभिषिक्तः । नलेन राज्ञा दूतमुखेनाहूताः सर्वे राजानः स्वसैन्यपरिवृताः समाजग्मुः । अथ नलराट् दैवज्ञदत्ते शुभमुहूर्ते तैर्नृपैः परिवृतः सैन्यसमूहैः काश्यपीं कम्पयन्, स्वां लक्ष्मीं ग्रहीतुकामः कोशला प्रति प्रतस्थे । मार्गे दुःसाध्यान् भूपान् साधयन्, साधितान् नृपान् सार्द्धं नयन्, निःस्वाननिनादैर्दिशो बधिरयन्, अयोध्याया रतिवल्लभं नाम काननमध्यातिष्ठत् । तमायान्तं श्रुत्वा कूबरस्य मनागपि मनःक्षोभो नासीत्; यतो नलो नीतिज्ञो मत्तो बलाद्राज्यं न लास्यति। द्यूते जितं राज्यं द्यूतेनैव ग्रहीष्यति; अतः का चिन्ता ?। एवं विचिन्त्य कूबरः स्वस्थमनास्तिष्ठति स्म। नीतिज्ञेन

नलेन भ्रातरं कूबरं प्रति वाग्मी दूतः प्रेषितः, स दूतः कूबरान्तिके गत्वा एवमकथयत्-

यथा—

"दिष्ट्या त्वं वर्द्धयसे राजन्! जयेन विजयेन च।
दशदिग्विजयं कृत्वा तव भ्राता समागतः॥ १॥
सर्वे शिरसि सानन्दं वहन्ति नलशासनम्।
अग्रजत्वेन ते पूज्यः स तु राजा विशेषतः॥ २॥
तस्मिन्निह समायाते जिगीषौ ज्येष्ठबान्धवे।
स्वागताचारवन्ध्यस्त्वं किं मूढ इव तिष्ठसि?"॥ ३॥

त्वं भ्रातुः संमुखो याहि, पूर्वोपात्तं राज्यादि सर्वं समर्पय। तत्प्रसादेन तवापि किंचिन्न्यून न भविष्यति। कूबर! त्वं जानीहि तस्य साम्राज्यं तवैवास्ति, यतो युवयोः काचिद्विभिन्नता नास्ति। कूबरो बभाषे-भो विद्वन्! त्वया साधूदितं, नलो मम ज्येष्ठबन्धुः कुलविभूषणस्तस्य भक्तिं कुर्वतो मम शोभैव स्यात्, परमुभयोर्विरोधे परस्परं मिलनं भयावहं भवेत्, अविश्वासकरं स्यादत एकं मम वाक्यं शृणु।

यथा-

"न राज्यं पितृदत्तं मे न च वीर्यार्जितं मया।
प्राप्तं द्यूतप्रसादेन दैवस्यैव प्रभावतः॥ १॥
द्यूतेन स निजं राज्यं पुनर्गृह्णातु मत्करात्।
यथा दत्तं तथा ग्राह्यं नीतिरेषा महात्मनाम्"॥ २॥

एवं न्यायवादिनं मां हत्वा यदि राजा नलो राज्यं गृह्णाति तदा मया किं न लब्धम्?। भो दूत! त्वमपि शीघ्रं गत्वा मम वाक्यानुसारेण भ्रातुरग्रे सर्वं ब्रूहि। ततः स्वयमेव राजा यथोचितं करोतु; इत्युक्त्वा तं बहु संमान्य स्वर्णादिभिः संपूज्य महामतिः कूबरो नलदूतं विससर्ज। दूतोऽपि नलान्ति-

के गत्वा कूबरवाचिकं सर्वं शशंस । तद्वचनमङ्गीकृत्य राजा नलोऽपि कूबरेण समं पुनर्द्यूतक्रीडां रेमे । नलवत् कूबरो राज्यादि सर्वं हारयामास । यथा पूर्वं कूबरेण नलो जितः, तथा नलेनापि कूबरो जितः ।

यतः—

"केन हि स्वीकृतं द्रव्यं कस्य दूतो वशंवदः ? ।
कस्मिन् पण्याङ्गना रक्ता कं लक्ष्मीर्न विमुञ्चति ? ॥१॥
यस्मिन् पुत्रः कलत्रं च नासा कर्णौ च हार्यते ।
न हि द्यूतस्य तस्यास्ति तुलया व्यसनं परम्" ॥२॥

हारितं कूबरेण, जितं नलेन । ततः सत्यप्रतिज्ञो नलो नृपः सर्वैः पार्थिवैः समम्रुत्तुङ्गतोरणस्तम्भां निजां राजधानीमयोध्यां नगरीं प्रविवेश । तद्दिनादारभ्य लज्जितः कूबरो गृहान्न निर्ययौ । ततो नलः कूबरगृहं समागत्य कूबरं बहु संभाष्य बाहुभ्यां धृत्वा समालिङ्गनपूर्वमेवमुवाच—हे बन्धो ! त्वं खेदं मोद्वह । आवा भ्रातरौ वीरसेनसुतौ, त्वं देव्या देवरो ममानुजश्च; अतोऽहं तुभ्यं भ्रातृत्वाद्राज्यार्द्धं ददामि, इत्युक्त्वा पितृसत्कं राज्यार्द्धं दत्त्वा कूबरं भ्रातरमेवं तोषयित्वा नलनृपः स्वगृहे समागात्। ततः सकलोऽपि लोकोऽत्यर्थ श्लाघाऽऽस्पदं नलं प्रशशंस। क्रूरकर्माणं कूबरं पुनर्वार वारं निनिन्द । एवं नले राज्यं कुर्वति सति भरतार्द्धमहीभुजां मणिमाणिक्यगजवाजिरथादिमङ्गलोपायनान्येयुः। अथ नलो राट्, दमयन्ती राज्ञी, तयोः पुत्रः पुष्कलो युवराट्; एते त्रयो राज्यश्रीभिरलङ्कृता उत्सवपूर्वकं कोशलाचैत्यमण्डलीर्ववन्दिरे । एवं महाराजो नलो भरतार्द्धमहीपालसेवितचरणारविन्दः सकलसौख्यवान् संजज्ञे । दमयन्त्या समं भूयास्यब्दसहस्राणि सांसारिकसुखमनुभवतस्तस्य संजातानि, तथापि तयोर्मान्मथो विकारो मनागपि न शशाम; अतस्तयोर्मदनोत्सवो नित्यं नवनवो वर्त्तते स्म । देवदेव्योरिव

तयोः सुखमनुभवतोर्दिनानि यान्ति स्म । अन्यदा सभाऽऽसीनं नलनरेशं प्रति समागतः प्रतीहार एवं व्यजिज्ञपत्--स्वामिन् ! कश्चित् कुशीलवाचार्यः प्रेक्षणककारकः समागत एवं वक्ति--यदहं देवपुरो नृत्यं करोमि । नलेनोक्तम्--मध्येसभं समाह्वय । समाहूतो नृत्यकरो राजानं वक्ति स्म--भो राजन् ! त्वया बह्व्यो नर्तकाः पृथिव्यां दृष्टाः, ममाप्येक नृत्यं पश्य इत्युक्त्वा तेनैकः शूकरो जवनिकाऽन्तरे समानीतः ।

तस्य वर्णनं यथा---

" धीरमञ्जीरझात्कारं हारकेयूरमालिनम् ।
सुटङ्कमुकुटाटोपं चलत्कनककुण्डलम् ॥ १ ॥
विचित्रकरणोपेतैरङ्गहारैर्मनोहरैः ।
नृत्यन्तं वीक्ष्य तं भेजे विस्मयं सकला सभा " ॥२॥

स शूकरस्तस्यां नलसभायां नृत्यं कुर्वन् सर्वैर्ददृशे । विस्मिता सभा, विस्मितो नलः, विस्मिता दमयन्ती; शूकरशिक्षाकारकं रङ्गाचार्यं प्रशंसन्नलो हेमलक्षैरपूजयत् । तत्प्रेक्षणके निवृत्ते सर्वे लोकाः स्वस्थानं जग्मुः । रङ्गाचार्यः स्वगृहं गतः । स शूकरश्चन्दनागुरुलिप्तोऽपि रङ्गाचार्येण मुक्तो राज्ञः पश्यत एव स्नानप्रणालकुल्यायां विश्रं पङ्कमगाहत । तं दृष्ट्वा राजा नलश्चिन्तयति स्म--अहो ! कष्टमहो ! कष्टम्; एवंविधः कलावानपीदृशे पङ्के रमते । पुनस्त शूकर स्नानविलेपनादिभिः पूतमकारयत् । पुनस्तथैव मुक्तस्तत्क्षणं गत्वा भूयस्तत्रैव कर्दमे लुलोठ । एवं द्वित्रिवारं कुर्वन्तं शूकरं दृष्ट्वा राजा नलो मुखविकूणिका कुर्वन् तं ग्रामशूकरं निनिन्द । तदानीं तदुपाध्यायः साक्षेपं राजानं प्रत्यवोचत्--राजन् ! जनस्वभावोऽयं यत् परदोषदर्शनम् । त्वमपि कामपङ्के मग्नो गुरूपदेशैर्वारं वारं वारितोऽपि मदनकर्दमे निमज्जसि; इत्युक्त्वा नाटकेन समं

नृत्यकारोऽदृश्यतामगमत् । तत आकाशवाणी बभूव–भो नल ! अहं तव जनको वीरसेनस्त्वां बोधयितुमागतः; त्यज वत्स ! महामोहम्, भज निर्वाणपद्धतिम् । तत् श्रुत्वा नलो राजा सहसा चमत्कृतः सुप्तोत्थितजागरित इव जातः स्वं प्रमादिनं निनिन्द ।

यतः—

"संध्यादिवारात्रिघटीसमेतं जनायुरम्भःपरिशोषणाय ।
आदित्यचन्द्रौ वृषभौ बलिष्ठौ कालारघट्टं परिवर्तयेते ॥१॥
यौवनं जलतरङ्गचञ्चलं जीवितं जलदजालसंनिभम् ।
संगमाः कपटनाटकोपमा हन्त ! दुस्तरतरो भवोदधिः" ॥२॥

इत्यादि चिन्तयन्नलो यावता वैराग्यमापन्नः तावदुद्यानपालेन विज्ञप्तम्--राजन् ! नन्दनोद्याने जिनसेनो नामाचार्यः समागतः । तत् श्रुत्वा तुष्टो राजा वनपालाय सपादलक्षं सुवर्णं दत्त्वा सपरिकरो मार्गे दानं ददानो भैम्या समं गुरुवन्दनाय वने समागात् । दमयन्त्या समं नलो गुरुं त्रिः प्रदक्षिणीकृत्य वन्दित्वा पुरो निषण्ण इमां देशनां शृणोति स्म ।

यथा—

"राजन् ! विश्वैकवीराणां पथि प्रस्थितवानसि ।
यद्विनिर्जित्य बाह्यारीनन्तरङ्गान् जिगीषसि" ॥ १ ॥

इत्यादिदेशनां श्रुत्वा नलो राज्यं त्यक्तुकामः पुष्कलस्य भैमीपुत्रस्य राज्याभिषेकसंस्कारं निषधेश्वरो विदधे । यथा पाणिग्रहारम्भो विहितस्तथा संयमग्रहणोत्सवोऽपि विदधे । यथा--अर्हच्चैत्येऽष्टाह्निकोत्सवश्चक्रे; सर्वेभ्योऽर्थिभ्यः संमानपूर्वं दानानि दत्तानि । महामाङ्गल्यपूर्वं भैम्या समं शिबिकां समारूढः तूर्यनिनादैः पूर्यमाणदिगन्तो नन्दनोद्याने जिनसेनाचार्यसमीपे समाययौ । श्रुतशीलो मन्त्री, बाहुकसेनानीः, महाबलो मन्त्री, केशिनी सखी, ऋतुपर्णो राट्, अन्येऽपि राजानो राज्यश्च; एवंपरिवृतो नलो भैम्या सम जिनसेनाचार्य-

समीपे दीक्षां कक्षीचक्रे। अथ नलो राजर्षिश्चतुर्थषष्ठाष्टमदशमद्वादशमासार्द्धमासक्षपणैरात्मानं शुशोष। यस्योग्रं तपो दृष्ट्वा किं बहूच्यते?, स्वराज्यहरणाऽऽशङ्की हृदि शक्रोऽपि चुक्षुभे। एवंविधं तपः कुर्वाणस्यापि नलस्य कदाचित् मान्मथो विकारो दिदीपे। तदा मुनिभिर्वारितः। तदध्यवसायात् पुनः कथञ्चिद् विरराम।

"नानाऽशनैरनशनैर्म्र्लपिताङ्गयष्टिः
स्वाध्यायसंयमसमाधिषु बद्धकक्षः।
श्रीमान् मुनिः क्षपितकर्ममलो नलोऽपि
भाग्यैरभूदुपरि सर्वमहामुनीनाम् ॥ १ ॥
तस्मिन् गते नृपऋषौ शरदन्तरेण
सम्यक्समाधिपरिणामपरायणे च।
साध्वीशिरोमणिरसङ्ख्यगुणैकभूमि-
र्भीमोद्भवाऽपि समपद्यत कालधर्मम्" ॥ २ ॥

स नलो महामुनिरनशनेन विपद्यैकावतारी उत्तरदिक्पतिर्धनदो बभूव। भैम्यपि तत्प्रिया देवी बभूव। ततश्च्युत्वा एकावतारित्वेनाऽनन्तरभवे मोक्षं यास्यतः॥

॥ इति द्यूतविषये नलचरित्रं समाप्तम् ॥

श्रीविदुरः प्राह--भो बान्धव! धृतराष्ट्र! मयैतन्नलचरित्रं तवाग्रे प्रोक्तं, भवता सम्यग्विचारणीयः द्यूतव्यसनतो नलनृपेण राज्यं निर्गमितं, कूबरात् कष्टं लब्धं, दमयन्ती हारिता, रङ्कवत् रुलितो, भूयोऽपि महता कष्टेन राज्यादिभिर्मिलितः। एतद्दोष्मता त्रपाकारि। अतस्त्वया पुत्रो दुर्योधनो द्यूतान्निवार्यताम्। पुनर्विदुरेणोक्तम्--अहं द्यूततो महानर्थं पश्यामि। जितां हारितां वा पृथ्वीमेते पाण्डवा यदि नार्पयन्ति, तदा को बलवान् एतेभ्यः पाण्डवेभ्यो महीं गृह्णीयात्?। कदाचित् सत्यवाक् धर्मसूनुरर्पयेत् जितामपि पृथिवीं, परं भीमार्जुनौ कथमर्पयेताम्?;

जितोऽपि दुर्योधनो यदि धर्मपुत्राद्राज्यं ग्रहीष्यति तदा दुर्योधनस्य कूबरस्येवाऽपवादो भविष्यति । किञ्च । अहं शङ्के, तस्य राज्यग्रहणेच्छया करस्थमिन्द्रप्रस्थमपि यास्यति, परं नलतुल्यः कोऽपि नास्ति, येन गृहीतं जितं राज्यं क्रूरस्यापि कूबरस्य पुनर्दत्तम्; एते पाण्डवा जितास्तव पुत्रस्य देशत्यागं करिष्यन्ति; जितं राज्यं नलवन्न दास्यन्ति; तस्मादेनं दुर्योधनमस्माद् दुष्टद्यूतकदाग्रहान्निवारय । द्यूतं कस्याप्यायतिसुन्दर न दृश्यते । एवं विदुरवचनभावितेन धृतराष्ट्रेण वारं वारं वारितो दुर्योधनो द्यूतकदाग्रहान्न न्यवर्तत् । ततस्तं दुर्योधनमुपेक्ष्य विदुरः स्वस्थानं गतः । अथ दुर्योधनः सभाऽवलोकनव्याजात्तपःसुतं समाह्वातुमुपचक्रमे । तदा धृतराष्ट्रेणापि निषिद्धो भूताविष्ट इव हुहुकारं कुर्वन् जयद्रथं समाह्वयत् । दुर्योधन उवाच--भो जयद्रथ ! त्वमितो याहि हस्तिनापुरं, गत्वा मद्वाचिकं पाण्डवाय निवेदयेः । यतो दुर्योधनेनैका दिव्यसभा कारिता; सा भवदागमनेन कृतार्था भवति । बान्धवेषु सर्वेषु त्वमेव ज्येष्ठोऽतस्त्वं ता सभां द्रष्टुमर्हसि; यतस्त्वदागमेऽहं कृतार्थो भूयासं; इत्यादिबहुयुक्तिभिर्निमन्त्रयेः । सोऽपि तत्र गत्वा बह्वी मायां विधाय तपःसुत समाह्वयत् । कुटिलाशयेनैवं विज्ञप्तः सरलाशयो युधिष्ठिरः सर्व सत्यं मेने । ततः सत्यं मन्यमानश्चतुर्भिर्भ्रातृभिः सार्द्धं द्रौपद्या च सम सकलसैन्यपरिवृतो राजा युधिष्ठिरो जयद्रथान्वित इन्द्रप्रस्थं प्रति मार्गे चचाल । अग्रत आगतेन जयद्रथेन युधिष्ठिरागमनेन वर्द्धापितः सुयोधनः । युधिष्ठिरागमनं श्रुत्वा दुर्योधनः सपरिकरः संमुखमागात् । मार्गे द्वावपि युधिष्ठिरदुर्योधनौ संमिलितौ । धर्मवान् धर्मपुत्रः सर्व सरलं पश्यति ।

यतः—

“ सरलगतिः सरलमतिः सरलाऽऽत्मा सरलशीलसंपन्नः ।

सर्वं पश्यति सरलं सरलः सरलेन भावेन" ॥ १ ॥

युधिष्ठिरे समागते दुर्योधनेन तन्नगरमिन्द्रप्रस्थं सतोरणं सपताकं सोत्सवं विदधे। भीष्मद्रोणादयो वृद्धाः स्नेहग्रथिला युधिष्ठिरेण सार्द्धं समागताः। तैः सार्द्धं युधिष्ठिर इन्द्रप्रस्थं नगरं प्रविवेश। दुर्योधनो दुष्टात्मा क्रूरमतिर्मुखमिष्टो युधिष्ठिरस्य दानसंमानपूर्वकं भोजनादिसर्वां सत्क्रियां विदधे। गान्धारीतनयो युधिष्ठिरादिभ्रातॄणां समागतानां स्वागतिं विधाय निजां संसदं दर्शयामास। सौवर्णभित्तिभासुरां मणिकलशश्रेणिशोभितां स्तम्भसहस्रैर्मण्डितां कविसहस्रैरखण्डितां स्तम्भं स्तम्भं प्रति पुत्रिकायुतां सौधर्मसभाऽधिकां स्थाने स्थाने सदानैर्विभूषितां कविश्रेणिभिः स्तुतां कुकविभिरदूषितां क्वचिन्नाटकाकीर्णां क्वचित् द्यूतमण्डलीमण्डितां क्वचित् शुकसारिकानादसुन्दरां नीलमणिकुट्टिमां स्फटिकभित्तिरचितां पञ्चवर्णकुसुमैरुपचितां तां सभां निरीक्षमाणौ युधिष्ठिरदुर्योधनौ भ्रातृपरिवृतौ इतस्ततो भ्रान्त्वा तस्यां सभायां सर्वत्र विलोकयन्तौ परस्परं वार्तां कुर्वन्तौ क्रीडतः स्म। दुर्योधनो दुष्टः कुटिलो दुष्टहृदयो मुखमिष्टो युधिष्ठिरं बभाषे। भो बान्धव! आवां द्यूतक्रीडां कुर्वावहे; यथैते लोकाः क्रीडन्ति तथैवावामपि क्षणं क्रीडावः। ओमित्युक्त्वा सरलचेता धर्मात्मजो दुर्योधनेन समं परस्परं क्रीडितुं प्रक्रमते स्म। धार्त्तराष्ट्रः कुटिलः कुटिलैरावृतः।

यतः—

"कुटिलगतिः कुटिलमतिः कुटिलाऽऽत्मा कुटिलशीलसंपन्नः।
सर्वं पश्यति कुटिलं कुटिलः कुटिलेन भावेन" ॥ १ ॥

यथा विषवृक्षः कण्टकिवृक्षैरावृतस्तथैव दुर्योधनो दुष्टो दुष्टैरावृतः पाण्डुसूनुना युधिष्ठिरेण समं द्यूतक्रीडया क्रीडति

स्म । ततस्तयोरक्षद्यूतं परस्परं प्रवृत्ते । पूर्वं क्रीडामात्रं निरर्थक ततः सार्थकम् ।

यथा—

"क्रीडामात्रकमित्यादौ पत्रपूगादिकः पणः ।
ततोऽङ्गुलीयकाद्योऽभूद् द्यूते वृद्धिमुपेयुषि ॥ १ ॥
यदा यस्य जयस्तस्य तदानीं पारिपार्श्वकाः ।
मोदन्ते स्म रविर्यत्र तत्रैव कमलोत्सवः ॥ २ ॥

तयोः परस्परं दीव्यतोः ताम्बूलं वासरो रात्रिर्भुक्तिपानादिकाः क्रियाः; एतत्सर्वं द्यूतविनोदेन विस्मृतिं जगाम। एवं तयोर्द्यूते जयपराजयौ जायेतां; ततो गान्धारीपुत्रेणाभिमन्त्रितपाशकैश्छद्मद्यूतमुपचक्रमे । तयोरेवं क्रीडतोर्धर्मपुत्रो युधिष्ठिरोऽन्धवत्, बद्धदृष्टिवत्, भूतग्रस्तवत् पतितमपि स्वदायं नापश्यत्। गान्धारस्वामिना शकुनिमातुलेन शिक्षिता हस्तलाघवकला; तया धृतराष्ट्रतनयः पुनर्वारं वारं जैत्रमेवाक्षमपातयत्; तेन धर्मात्मजोऽङ्गलग्नान्याभरणानि सर्वाण्यहारयत् । तदा कर्णादीनां बन्धूनां प्रीतिरुच्छ्वसिता। यतः कौशिका हि सहस्रांशुव्यसनं प्रति स्पृहयालवो भवन्ति; तथापि क्रीडारसमग्नो धर्मात्मजः क्रमेण भाण्डागारमहारयत् । पश्चाद् गाङ्गेयो भाण्डागारं हारितं दृष्ट्वा युधिष्ठिरं द्यूतान्निषेधयन्नित्याह—हे धर्मात्मज ! यदि त्वादृशा महात्मानो व्यसनार्णवे निमज्जन्ति तर्ह्यन्येषां हीनसत्त्वानां किं कथ्यते ? यदि सूर्याद् ध्वान्तं भविष्यति तर्हि उद्द्योतं कः करिष्यति? यदि शीतांशुर्ज्वालामालितः स्यात् तर्हि उष्णांशुपीडितान्नरान् को निर्वापयिष्यति ? व्यसनैः सह वास्तव्याः संसारे के गुणिनो गीयन्ते ?। भो युधिष्ठिर ! भवता क्वापि दृष्टं वा श्रुतं वा पीयूषं विषं चैकपात्रस्थं भवति ?; तथा त्वयि धर्मपुत्रत्वे द्यूतकृत्त्वं न युज्यते, इत्यादिवचनैर्गाङ्गेयादिभिर्वृद्धैर्वारितोऽपि धर्मपुत्रस्तदध्यवसायाद् न विरमति स्म । अहो ! क्रुद्धे-

विधौ सतामपि शेमुषी विपर्यस्यति, अन्यथा धर्मतनयस्य किं मनो व्यसनैरापूर्यते ?। धर्मनन्दनं व्यसनसहायिनं ज्ञात्वाऽन्ये सहाया गाङ्गेयाद्या युधिष्ठिरं तिरस्कुर्वन्तो हस्तिनापुरं जिगमिषवो जाताः, यतो राजहंसा हि मेघालिमलिनं नभो ज्ञात्वा दूरे त्यजन्ति । इभाऽश्वरथादौ हारिते म्लानानने धर्मतनये सकर्णो दुर्योधनो जहर्ष, सूर्यास्ते घूकस्तोम इव । अथाकरपुरग्रामनगरादौ हारिते युधिष्ठिरं कर्ण उवाच--भो युधिष्ठिर ! भो दुर्योधन ! उभावपि निजसाम्राज्यं पणीकुर्वातां; कालमानं विधाय दीव्यताम् । ततो द्वावप्यूचे–द्वादशवत्सरी यावद् जिते राज्य जितं हारिते राज्यं हारितम्; एवं कर्णभारत्योभावप्यङ्गीकृत्य सर्वजनसमक्षमेता प्रतिज्ञा विधाय तौ रेमाते । युधिष्ठिरेणाऽक्षकैतवे क्षितिरपि हारिता। द्वादशवार्षिके राज्ये हारिते श्यामाननो धर्मनन्दनश्चतुरोऽपि बान्धवान् पणीचक्रे। विपरीते विधौ तेऽपि हारिताः। तैर्भीमादिभिश्चतुर्भिर्भ्रातृभिर्द्यूतहारितैर्दुर्योधनगृहे दासेरकर्म कर्तव्यम् ।

यतः—

“हारितायां क्षणादक्षकैतवेन क्षितावपि ।
चतुरोऽपि पणीचक्रे बान्धवान् धर्मनन्दनः” ॥१॥

धर्मपुत्रेण हारितेषु बान्धवेषु सर्वैर्लोकैर्हाहाकारश्चक्रे। एतां द्यूतक्रीडां समभिलोक्य केचिल्लोका युधिष्ठिरं निनिन्दुः; केचिद् दुर्योधनं, केचिद् धृतराष्ट्रम्। एवं निन्दापरे सकललोके कौन्तेयश्चिन्तयति स्म। अहो ! मया विरूपमाचरितम्, यन्मया द्यूतव्यसनिना गाङ्गेयादीनां वचो न मानितं,सर्वं राज्यादि निर्गमितं, बान्धवाश्च हारिताः । अथ केनाप्युपायेन पुनरपि गतं वालयामि; इति धियाऽऽत्मानं पणीचक्रे। विधिवैपरीत्यात् पाशकवैपरीत्यपतनाच्च युधिष्ठिरेणात्मदेहोऽपि हारितः। पुनरप्यात्मानं मोचयितु द्रौपदी धर्मात्मजेन पणीकृता। विधिवैपरीत्याद् दुर्यो-

धनकूटरचनाच्च साऽपि हारिता । हारितं युधिष्ठिरं ज्ञात्वा दुर्योधनं जितं मन्यमानोऽथ शकुनिर्बाढस्वरेणैवं बभाषे ।

यथा—

"क्षणेनाथ भुजाऽऽस्फोटनादकन्दलितोदयाः ।
जितं जितमिति स्वैरमुच्चेरुः शकुनेर्गिरः ॥ १ ॥
स्तम्भिता इव मूर्छाला इव चित्रार्पिता इव ।
मृता इव ग्रहग्रस्ता इव सभ्यास्तदाऽभवन्" ॥ २ ॥

पाण्डुपुत्राणा शत्रवो दुर्योधनाद्यास्तस्मिन्नवसरे मुदं दधिरे, अन्यायोपात्तलक्ष्मीभिर्दस्यव इव । म्लानिं प्रापिताः पाण्डवास्तूष्णीका बभूवुः । अथ मदोन्मत्ता दुर्योधनभ्रातरो दुःशासनाद्याः पाण्डवेयानां वासांसि कर्षितुमचेष्टन्त । तावत्ते नीतिज्ञाः पाण्डवाः स्वयमेव चीवराणि त्यक्त्वा किञ्चिदाच्छादिताः पर्षद्यवाङ्मुखास्तस्थुः । सुयोधनो दुःशासनं प्रोचे--भो बान्धव ! साऽपि द्रौपदी पञ्चभर्तृका अस्यां सदस्यानीयताम् । दुःशासनोऽपि पापात्मा स्मेरवक्त्राम्बुजः पाञ्चालीसमीपे गत्वा इत्यवोचत्--हे द्रौपदि ! तेन युधिष्ठिरेण दुष्टबुद्धिना दुरोदरे त्वं हारिताऽसि; सद्बुद्धिना दुर्योधनेन मद्बन्धुना त्वं जिताऽसि । समागतं तव प्राचीनं सत् कर्म । फलितस्ते सुचीर्णो धर्मः । अथ दुर्योधनेन समं प्रीतिपरायणा निश्चिन्ता सुखमनुभव । यतो विधिना पूर्वं विरूपमाचरितम्--यदेका त्वं पञ्चाना पाण्डवाना दत्ता । ततो विचार्य विधिनैवानया रीत्या त्वं दुर्योधनस्य दत्ता । अथ दुर्योधनेन समं रमस्व । यदि त्वं मदुक्तं न करिष्यसि ? तर्ह्यहं त्वा बलादपि कारयिष्ये । पाञ्चाल्याह--भो देवर ! दुःशासन ! स्वकुलोचितं ब्रूहि; कुलविरुद्धं किं भाषसे ? । दुःशासनेनोक्तम्--त्वं तु युधिष्ठिरेण हारिता, दुर्योधनेन जिता; अत एव दुर्योधनं भजस्व । सभाया स्थितो दुर्योधनस्त्वामाह्वयति । एहि मया सह, यदि नायासि तर्हि बलात्कारेणाहं त्वां तत्र नेष्ये ।

तत् श्रुत्वा पाञ्चाली किञ्चित् प्रत्युत्तरं यावद् ददाति, तावत्तेन दुरात्मना दुःशासनेन द्रुपदात्मजा केशे धृत्वाऽऽकृष्टा । तयोक्तम्—आः पाप! कुरुभूपालगोत्रे किंपाकपादपोपम! अस्यां सभायां तव जननीतुल्यां मां किं विडम्बयसि?। यस्या नीरङ्ग्या ममाननं स्थगितं कोऽपि नाऽपश्यत्, हा! सर्वे गुरवस्तां मामनावृताङ्गीमद्य द्रक्ष्यन्ति । एवं पूत्कुर्वत्यपि सा दुःशासनेन केशे धृत्वा समाकृष्टा मृगारिणा मृगीव । एकवसनां साश्रुनयनां त्रपाऽवनतकन्धरां कातराक्षीं द्रौपदीं दुःशासनस्तां सभां निनाय । अथ पाण्डवास्तां तथाभूतां समालोक्य त्रपाकलुषिताशयाः पञ्चापि क्षितिं विविक्षव इव भूमिं विलोकयामासुः । भीष्मादयोऽपि कुलवृद्धा एवंविडम्ब्यमानां द्रौपदीं दृष्ट्वा निजोत्तरीयेण ह्रिया निजाननानि पिदधुः । अथ दुर्योधनस्तां समीपमागतां ज्ञात्वैवमवोचत्- हे कृशोदरि! ममानुरागस्त्वयि चिरमासीत्, एतावन्ति दिनानि पाण्डवैः पाणिपीडनकरणेनावयोरन्तरायोऽभूत्; अथ त्वं द्यूतमिषाद्विधिना मम दत्ता । अतस्त्वं मत्समीपे समागत्य ममेमं वामोरुं समलङ्कुरुष्व, इत्युक्त्वा दुर्योधनेन स्वीयवामोरुर्दर्शितः । एतद्वचनं श्रुत्वा कोपकम्पतराऽधरा द्रौपदी एवमवोचत्— आः पापात्मन्! अनया वाञ्छया त्वं भस्मसात् किं न जातोऽसि?। यत्त्वं मां सतीं स्वोरुं दर्शयसि; ततस्त्वमत्रैव घातेन मृत्युमवाप्स्यसि। अथ कर्णोऽवोचत्— यदि युधिष्ठिरेण राज्यादि सर्वं हारितम्, एषा पाञ्चाल्यपि हारिता; अथैषा दुर्योधनपत्नी भवतु। तां कर्णोक्तगिरं श्रुत्वा क्रोधाध्माता अपि प्रजा दुर्योधनभिया तूष्णीमेवाऽवललम्बिरे । क्रोधाच्च स्फुरदोष्ठपुटो दुर्योधनो निजाऽनुजं दुःशासनं बभाषे - एषा मया जिता एतेषां सभासदां पश्यताम्; तदेतस्याः पट्टकूलं कर्षयित्वा जरद्दण्डीखण्डमम्बरं परिधाप्य दासीषु क्षिप । तत् श्रुत्वा दुःशासनो दुष्टात्मा जेष्ठबान्धवाज्ञया पाण्डुस्नु-

षाया नितम्बादम्बरमाकृषत्; तदा द्रौपद्यास्तस्मिन्समये यत् जातं तदाह ।

यथा–

“मा मेति दीनजल्पाक्याः प्रक्षिपन्त्या मुखेऽङ्गुलीः ।
रुन्धत्यास्तत्करौ कामं पश्यन्त्या पर्षदाननम् ॥ १ ॥
दुष्टात्मनांऽशुके कृष्टे तेनाऽस्या ददृशुर्जनाः ।
दैवतेनानुभावेन तादृगेवाऽन्यदंशुकम् ” ॥ २ ॥

तदा द्रौपद्योक्तम्--भोः शासनाधिष्ठायकदेवदेव्यः ! यद्यहं जैनी तथा शीलवत्यऽभव, तदोद्घाटितं ममाङ्गं मा भवतु; यावदित्युक्त तावद्देवैः शासनाधिष्ठायकैः सानिध्यं विहितम् । यतस्तस्यास्तादृगेवान्यदंशुकं विहितम् । एवमष्टोत्तरशतं वारानाकर्षणे पुनस्तथैवान्यान्यानि दृष्टानि । एवं पुनः पुनः कर्षणे वसनोत्करो बभूव, न पुनस्तस्याङ्गं केनाप्यदर्शि । अथ क्रोधारुणनयनो वृकोदरः स्वां पत्नीं दुःशासनेन विडम्ब्यमानां दृष्ट्वा गदां समुत्पात्य यावता दुर्योधनं हन्तुं दधावे, तावता तद्व्यवसायात् युधिष्ठिरेण निषिद्धः । ततः पुनः कोपाद् भीमसेन एवंविधा प्रतिज्ञामकरोत्--येन दुरात्मना मम पत्नी केशेषु धृत्वा गुरूणां पश्यतां चीराऽऽकर्षणेन विडम्बिता, तस्य बाहुदण्ड यदि मूलान्नोन्मूलयाम्हि, तस्य कवोष्णैः शोणितैर्यदि क्षोणीं नाभिषिञ्चामि, तथा येन मम जायाया ऊरुर्दर्शितः, तदूरुमनया गदया यदि न चूरयामि तर्हि नाहं पाण्डुपुत्रः, किन्त्वन्यपुत्रः, इति भीमे भीमपराक्रमे गर्जति क्रोधारुणितलोचने सा सभा क्षोभमवाप ।

यथा--

“गर्जन्तमूर्जितमिति श्रुत्वा भीमं धराधवाः ।
न्यग्मुखाः केचिदभवन् भयार्त्ताः केऽपि दुःखिताः ॥१॥

रोपोष्मदुःखितां भीष्मो जगादाथ गिरं नृपम् ।
रेऽन्यसूनो ! किमारब्धं त्वया साध्वीविडम्बनम्? ॥२॥
त्यजेमां तत्कुलाङ्गार ! सतीं कृष्णां पतिव्रताम् ।
त्वत्पिता बहिरन्धोऽयं त्वमन्धोऽन्तर्बहिश्च रे ! " ॥ ३ ॥

इत्यादिगाङ्गेयवचनानि श्रुत्वा ततः संसदि मध्यात् समुत्थाय कोविदो विदुरः शोकसंभारपूरिताशयो धृतराष्ट्रं जगाद-भो बान्धव ! एष दुरात्मा दुर्योधनः कुरुकुलविषये कल्पान्तकालोपमः; प्रसूतमात्र एवायं पुराऽपि ते मयाऽऽख्यायि त्यजैनं, त्वया न त्याजितः । अथ पश्यैनं तव पुत्रं दुष्टं दुर्योधनं; अनेन तत् कर्म कृतं यत् चाण्डालैरपि न क्रियते ।

यथा—

"किमीदृक् क्रियते कर्म चाण्डालानां कुलेष्वपि ?।
कैतवेन विजीयन्ते भ्रातरोऽपि यदात्मनः ॥ १ ॥
पुरो गुरूणामानीय केशैरादाय तत्प्रियाम् ।
तन्नितम्बस्थलाद्वासो निःशङ्कं यच्च कृष्यते" ॥ २ ॥

स भीमः कान्तापराभवं कथं सहते ? स्वप्रियापराभवं तिर्यञ्चोऽपि न सहन्ते तर्हि मानवस्य किमुच्यते? एष भीम इमां पृथ्वीमदुःशासनाम्, अद्रोणाम्, कर्णरहिताम्, अदुर्योधनाम्, अभीष्मां करिष्यति । दुर्योधननिमित्तादेषा कुरुवाहिनी भीमार्जुनतः क्षयं यास्यतीति मे मतिः पोस्फुरीति । हे बान्धव ! धृतराष्ट्र ! एनं कुलाङ्गारं दुष्टं दुर्योधनं किमुपेक्षसे ? किं तु क्रूरकर्माणमेनमेकं सुयोधन मारय । यद्येवं न करोषि तर्हि अस्मात्पापादमुं दुर्योधनं निवर्त्तय । अमी पाण्डवाः पञ्चाल्या सह तवाज्ञया वनाय गच्छन्तु, पुनरवधेरन्ते समागता निजां जगतीं भुञ्जताम् । यदि कुरूणां कुशलं समीहसे तर्हि सर्वं ममोक्तं त्वमङ्गीकुरुष्व; इति विदुरोक्तं श्रुत्वा धृत-

राष्ट्रः सुयोधनं भृशमाक्रोशन्नेवं बभाषे--आः पाप ! हे कर्म-चाण्डाल ! हे निरपत्रप ! त्वमद्यापि दुष्कर्मभ्यः किं न निवर्तसे ? त्वं बान्धवान् वनवासाय जायया सह विसर्जय; यदि ममोक्तं न करिष्यसि तर्हि ममैष करवालस्ते शिरो न सहिष्यते; इति पितुर्गिरं श्रुत्वा मनसि मलिनो दुर्योधनः सर्वेषु भीष्मादिषु कुलवृद्धेषु पश्यत्सु एवं भाषते स्म--भो भोः पार्षद्याः ! सर्वे ममैकं वाक्यं शृण्वन्तु, एते पाण्डवा बान्धवा अपि मम शत्रवो द्यूते हारितत्वाद्वने द्वादश वत्सराणि स्वेच्छया विचरन्तु । स्वशरीरैश्चापि हारितत्वात् ममाज्ञया त्रयोदश वर्षं पाण्डवैर्गुप्तवृत्त्या वनवासे नेतव्यम्; यदि कथमपि तेषां पाण्डवानां कुत्रापि वनाकर-पुरादिषु गूढस्थितानां स्थितिमहं ज्ञास्ये तर्हि द्वादशवत्सरी वनवासाय पुनर्दास्ये । पाण्डवैर्गुर्वाज्ञया तदपि प्रतिपन्नम् । ततः कौरवाग्रणीर्दुर्योधनो धृतराष्ट्रद्रोणगाङ्गेयनिर्देशात् पाण्डुपुत्राणां प्रहरणवस्त्राभरणानि पूर्वगृहीतानि प्रत्यार्पयत् । सत्यप्रतिज्ञास्ते पाण्डवाः पञ्चापि दुर्योधनकृतमपराधं सर्वं सहन्ते स्म । यतो महान्तः स्वकृतप्रतिज्ञां निर्वहन्त्येव ।

यतः—

"राज्यं यातु श्रियो यान्तु प्राणा यान्तु विनश्वराः ।
या मया स्वयमेवोक्ता वाचा मा यातु शाश्वती ॥१॥

[1]पलएवि महापुरिसा पडिवन्नं अन्नहा न हु कुणन्ति ।
गच्छन्ति न दीणत्तं कुणंति न हु पत्थणाभङ्गं ॥ २ ॥

[2]तत्तिअ मित्तं जंपह जत्तिअ मित्तस्स निव्वहो होइ ।
तं उक्खवेह भारं जं अद्धपहेन छड्डेइ " ॥ ३ ॥

---

१ प्रलयेऽपि महापुरुषा प्रतिपन्नमन्यथा न खलु कुर्वन्ति ।
गच्छन्ति न दीनत्वं कुर्वन्ति न खलु प्रार्थनाभङ्गम् ॥ १ ॥

२ तावन्मित्रं कथयथ यावद् मित्रस्य निवहो भवति ।
तमुत्क्षिपथ भारं योऽर्धपथेन छर्दयति ॥ २ ॥

इति कारणात् समर्था अपि पाण्डवाः प्रतिज्ञावन्तः स्वां प्रतिज्ञां नातिक्रामन्ति स्म । दुर्योधनाऽनुज्ञया नित्ययौवनया सार्द्धं वनवासं प्रपेदिरे । ततस्ते पाण्डुपुत्राः पञ्चापि याज्ञसेनीं पुरस्कृत्य सर्वेऽपि पदातय इन्द्रप्रस्थाद् हस्तिनापुरं प्रति प्रतस्थिरे । गाङ्गेयादयो वृद्धाः पादचारेण तमनुगच्छन्तो युधिष्ठिरेणाऽऽग्रहतः पुनर्यानेष्वारोपिताः सह चेलुः । दुःखाक्रान्ता गाङ्गेयादयः परस्परं कथयन्ति स्म -अहो ! युधिष्ठिरेण धर्मपुत्रेणापि तत् कृतं, येन सर्वमपि हारितम् ; धिग् द्यूतम् ; यतो द्यूते ईदृशा अपि महात्मानो मुह्यन्ति ।

"हारिताखिलनरेन्द्रसम्पदः पाण्डवाः स्फुरदखण्डतेजसः ।
मातरं च पितरं च वीक्षितुं हस्तिनापुरमुपागमन् पुनः" ॥१॥

इति श्रीमत्तपागच्छाधिराजभट्टारक-श्री५ श्रीहीरविजयसूरिपट्टालङ्कारसप्रतिविजयमानभट्टारकश्रीविजयसेनसूरिराज्ये पण्डितश्रीदेवविजयगणिविरचिते श्रीपाण्डवचरित्रे गद्यबन्धबन्धुरे नलापाख्याने द्यूतवर्णनो नाम षष्ठ सर्ग ॥ ६ ॥

—०◯०—

अर्हम्

# अथ सप्तमः सर्गः ।

———०———

अथ धर्मपुत्रो भीमादिभ्रातृसंयुक्तो गन्तुकामः सत्यप्रतिज्ञो हस्तिनापुराद् वनवासाय प्रतस्थे; भीमादयः सह चलनाय स्वस्वशस्त्रादिसमग्राः सामग्रीश्चक्रुः । पाण्डुधृतराष्ट्रभीष्माद्याः कुलवृद्धाः स्नेहमोहिताः सह चेलुः । तथा बाष्पाविललोचनाः शोकार्त्ता ज्येष्ठमातरः सर्वाः सह चेलुः । ततः क्रीडावापीसरोवरादिवनश्रेणि समालोकयन्ती हंसकलहंससारिकाशुकादिपक्षिसमूहान् पञ्जरस्थान् पृच्छन्ती अन्यानपि सर्वान् दासीसख्यादिस-

मूहान् वारं वारं मार्गे संभाषयन्ती बद्धपरिकरा द्रौपदी कुन्तीपृष्ठे स्थिता मार्गेऽचलत्, लोकोऽपि तन्नगरवास्तव्यः सर्वो युधिष्ठिरगुणगृह्योऽन्वगात् । तैः सशोकैर्नागारिकलोकैः सार्द्धं धर्मनन्दनो हस्तिनापुराद् निर्ययौ । युधिष्ठिरस्य पुराद् निर्गमनसमये नागरिकलोकः परस्पर मार्गे एव कथाः कथयन् विचचार । यथा पुरा नलेन राज्यं द्यूते पणीकृत्य हारितं, हा ! हा ! युधिष्ठिरेणापि तथैवानुष्ठितम् ।

तथा—

"धिग् धिग् दुर्योधनं येन महात्मा धर्मनन्दनः ।
कृत्वा द्यूतमयं छद्म त्याजितो राज्यसंपदम्" ॥ १ ॥

तथा दुर्योधनेन प्राप्तमपि राज्यं न स्थास्नु, यावद्विजयिनौ वृकोदरकिरीटिनौ वर्त्तेते । यदनेन दुर्योधनेन पाञ्चाल्याः वस्त्राऽऽकर्षणं कारितं तत्पापमस्य फलिष्यतीति लोकोक्ति शृण्वानो युधिष्ठिरो मार्गे संचचार । अथ मार्गे सचरतस्तस्य युधिष्ठिरस्य सपरिकरस्य नभसोऽभ्येत्य क्रूरः किर्मीरराक्षसोऽकस्माद् द्रौपदी मार्गे संचरन्ती भापयामास । कथंभूतो राक्षसः ?--मषीकृष्णवपुः पिङ्गाक्षः पिङ्गमूर्द्धजो विकीर्णकेशो दीर्घवपू रक्ताननो रक्तनेत्रो भुजङ्ग इव तरलां जिह्वा बिभ्रत् दन्तैर्दन्तान् घर्षन् । एवंविधो राक्षसो द्रौपदीसमीपमागत्य रोदसीभेदकरं ध्वनिमट्टहासं विदधे । तं तथाविधं सकर्त्तरीक दृष्ट्वा भीमो भीमपराक्रमी समीपमागत्य तर्जयन् पर्जन्यवद् गर्जन् बभाषे—रे ! महापाप ! राक्षस ! किमिदं ते पापचापलम् ?; यत्त्वं दीर्घाध्वनि श्रान्ता प्रवासेन विषेदुषी मम प्रिया द्रौपदीं किं भीषयसे ?; यदि भापयसे तर्हि तस्य फल भुङ्क्ष्व; इत्युक्त्वा गदाघातेन त राक्षसं मूर्ध्नि अताडयत् । तेन घातेन ताडितः पलादो भूमौ पपात । भीमस्य यः क्रोधो दुर्योधनेऽभूत् स तस्मिन् राक्षसे पतितः । स दुर्योधनवल्लभः किर्मीरो भीम-

गदाघातेन हतो मृत्वा नरकं गतः। भीमेन हतः क्रूरः किर्मीरराक्षसो महाभारतारम्भे प्रथम ओङ्कार इव। यथा मङ्गलारम्भे प्रथमोङ्कारो भवति तथैवायं राक्षसः प्रथमं भीमेन हतोऽत ओङ्कारोपमोऽजनि । ततश्चलिताः सपरिकराः पाण्डवा लतारम्यं काम्यकं नाम काननमाजग्मुः । तस्मिन् कानने रम्यप्रदेशे रम्यमहीरुहसमाकीर्णे यावत् समायातास्तावद् भीमेन युधिष्ठिरं प्रत्युक्तम्—भो बान्धव ! मातापितृप्रभृतिजनः पादचारेण मार्गे संचरन् भृशं खेदखिन्नो दृश्यते, अतः पञ्चरात्रमत्रैव वने स्थीयताम्। एवं वसुधाधिपो युधिष्ठिरो वारं वारं भीमसेनेन विज्ञप्तः कतिचिद्वासरांस्तत्रैव कानने तस्थौ । पथः श्रान्तो लोकः सुखेन प्रतिपादपं सुष्वाप। सुखसुप्तं लोकं क्षुधाऽऽक्रान्तं दृष्ट्वा युधिष्ठिरोऽर्जुनं बभाषे—एतान् सर्वान् लोकान् मनोज्ञया रसवत्या भोजय। युधिष्ठिरानुज्ञया पार्थो मनोहराहारसमाहरणकोविदां विद्यां सत्वरं सस्मार। तया विद्ययोपनीता मनोहरां रसवती दृष्ट्वा युधिष्ठिरो विस्मितः पार्थाऽनुज्ञया द्रुपदात्मजाऽपि तया रसवत्या तं जनं भोजयामास। एवं प्रतिदिनं विद्यारसवत्या भोजिता जनाः कतिचिद्वासराणि पाण्डवैः सार्द्धं तत्रैव तस्थुः। अपरेद्युः पित्रादेशात् महायोद्धा धृष्टद्युम्नो द्रुपदात्मजः पाण्डवानाकारयितुं तत्र वने समाययौ। पाण्डवैः स्नानभोजनादिभक्ति विधाय पृष्टः--भो धृष्टद्युम्न ! त्वमत्र किमर्थमागतः ?। धृष्टद्युम्नोऽपि धर्मपुत्रादीन् पाण्डवान्नत्वाऽऽगमनकारणं विज्ञपयति स्म ।

यथा—

"हस्तिनापुरचारिभ्यश्चारेभ्यश्छद्मना कृतम् ।
श्रुत्वा प्रवासमेव च तातेन प्रहितोऽस्म्यहम्" ॥ १ ॥

अतोऽहं युष्मानाह्वातुं समागतोऽस्मि, यूयं ममोपरि कृपां विधाय मम गृहं पवित्रयत । पाण्डवैरुक्तम्--वयं द्वादशवत्सरी

वनवासाय यास्यामः, न तु श्वशुरगृहं स्थास्यामः । पुनर्धृष्टद्युम्नो द्रौपदी भगिनी बभाषे–हे सोदरे ! त्वं मया सार्द्धं पितृगृहमेहि । द्रौपद्योक्तम्—

यथा—

"पाण्डवानां पदैर्यानि पावनानि वनान्यपि ।
मह्यं तान्येव रोचन्ते कृतं पितृगृहेण मे ॥ १ ॥
केवलं सरलान् बालान् भागिनेयान्निजानमून् ।
पञ्चाप्यादाय पाञ्चालान् व्रज त्वं विजयी भव" ॥२॥

तथेत्युक्त्वा धर्मपुत्रानुज्ञया धृष्टद्युम्नः पञ्चाऽपि पाञ्चालान् गृहीत्वा सबाष्पः स्वगृहं प्रति चचाल । क्रमेण स्वगृहं समागतो धृष्टद्युम्नो द्रुपदाय दौहित्रानुपदीचक्रे; ततः स सर्वं पाण्डववृत्तान्तं निवेदयामास । तत्रैव कानने स्थितानां पाण्डवानामेकस्मिन् दिने युधिष्ठिरप्रीत्या द्वारकातः सकलसैन्यपरिवृतो मिलनायोत्सुको नारायणः समुपाययौ । तं नारायणं समागतं ज्ञात्वा पञ्चापि पाण्डवाः संमुखमागत्य गाढमालिङ्ग्य प्रणमन्ति स्म । सोऽपि द्रुतमागत्य सोत्साहं कुन्तीपदाम्बुजं ववन्दे । विष्टरे समासीनः कंसध्वंसी पुरो निषण्णं युधिष्ठिरमेवमवोचत्—भो धर्मात्मज ! दुष्टेन दुर्योधनेन शकुनिकर्णोत्तरसाधकाभ्या कपटं कृत्वा कूटपाशकैस्त्वां जित्वा तव राज्यमग्राहि; एतद् मया दूतमुखात् श्रुतम् । मयि सन्निहिते यदि द्यूतं भवेत् तदा ज्ञायते द्यूतकौशलम् । युधिष्ठिरेणोक्तम्–स्वामिन् ! बुधान्तिके रोहिणीरमणं राहुः कथं ग्रसते ?, तवान्तिके एष दुर्योधनो मा कथं जित्वा राज्यं गृह्णाति ?; परं राजन् ! भावी केन लङ्घ्यते ? ।

यतः—

"सा सा संपद्यते बुद्धिः सा मतिः सा च भावना ।
सहायास्तादृशा ज्ञेया यादृशी भवितव्यता ॥ १ ॥

अवश्यंभाविनो भावा भवन्ति महतामपि ।
नग्नत्व नीलकण्ठस्य महाहिशयन हरेः ” ॥ २ ॥

हे हरे ! त्वयि क्रुद्धे शक्रोऽपि विक्रमी न भवति तर्हि केऽमी मनुष्यकृमयः पुनर्दुर्योधनादयः ?। पाञ्चालीचीराऽऽकर्षण समये भीमार्जुनौ ममादेशवशवदौ दुर्योधनवधाद् मया निषिद्धौ; हे हरे ! त्वमप्यस्मादध्यवसायाद् दुर्योधनवधरूपात् साम्प्रत निवर्त्तस्व । इत्थं हरौ शमं नीते नीतिकोविदो धर्मजो बान्धवैः सार्द्धं भीष्माऽभ्यर्णमभ्यगात् । भीष्मं नत्वा धर्मात्मजो बभाषे--हे बृहत्तात ! भवान् गुरुभ्योऽपि गुरुः, अतः पृच्छ्यसे, स्वामिन् ! परदेशयियासूनामस्माकं स्वकुलोचितां शिक्षा देहि। गाङ्गेय उवाच--अहमपि भवतः सहायो भविष्यामि। ततो विनयावनम्रेण धर्मपुत्रेण सहागमनाय निवारितो गाङ्गेय एवंविधां शिक्षां ददाति स्म-- कामक्रोधलोभमानमदहर्षा एते षड्वर्गाः परिहर्त्तव्याः; अज्ञानमनृतं लञ्चाः निखिलं व्यसनम्; एते राज्यहृतौ षोडश दस्यवः स्युः। भो वत्स ! त्वं पश्य, एकेनापि द्यूतव्यसनेन कियाननर्थः कृतः ? अतो व्यसनं त्याज्यम् ।

तथा—

“वत्स ! धर्मेण सत्त्वेन नयेन विनयेन च ।
अमुना भुवनस्यास्य भवितासि निदर्शनम् ” ॥१॥

इति गाङ्गेयगिरं श्रुत्वा हृष्टो धर्मात्मजः। पाण्डुविदुरद्रोणकृपाचार्यादयो वृद्धा एते सर्वेऽपि युधिष्ठिरं समनुज्ञाप्य स्वगृहाभिमुखाः प्रत्यावृत्ताः प्रतस्थिरे । अथ युधिष्ठिरः पुनरपि धृतराष्ट्रं नत्वा प्रोवाच--हे वृद्धतात ! त्वं मम बान्धवं दुर्योधनमेवं कथयेः-- हे कुरुकुलोत्तंस ! एताः प्रजास्तथा पालयेः, यथा पूर्वजोपार्जिता कीर्त्तिरस्मिन् संसारे सर्वत्र भवन्तं श्रिता पोस्फुरीति; इति युधिष्ठिरस्य वैनयिकं वचः श्रुत्वा स्वसुतस्य दुर्नयं दृष्ट्वा लज्जितो

धृतराष्ट्रः तूष्णीकं मत्वाऽऽवृत्य सोऽपि स्वपुरं समाययौ। ज्यायस्यो वृद्धमातरः सत्यवत्याद्याः प्रणमन्तं युधिष्ठिरं आशीर्भिरभिनन्द्याऽतुच्छशोकमूर्छालास्तास्ततः कथमप्ययुः । अथ युधिष्ठिरः सहचरसकलपौरलोकानाकार्य इतो यूयं निवर्तध्वमित्याऽऽदिदेश । एवं सहागता गाङ्गेयाद्याः कुलवृद्धाः सत्यवत्यादयो मातरो बुद्धिसागरप्रभृतयो मन्त्रिमुख्यास्तन्नगरवासी सहचरलोकोऽपि सकलः परिजनः काम्यककाननात् सर्वेऽपि निवर्तिताः स्वस्थानं जग्मुः । अथ युधिष्ठिरो विनयावनतकन्धरो विदुरं बभाषे- हे आर्य ! त्वमेवास्मासु पैतृकी प्रीतिं वितनोऽपि, पाण्डोस्तु राज्ञः केवलं जन्मकर्तृताऽजनि; अतो भवन्त पृच्छामि--मम मातापितरौ विरहकातरौ सहैव नीयेते ? किंवाऽत्रैव राज्ये मुक्त्वा गम्यते ?; अत्र भवतः प्रमाणता; यत्तवाज्ञा भवति सैवास्माभिः क्रियते; यत् सुन्दरं जानीयास्तद् ब्रूहि । विदुरो जगाद--भो वत्स ! सुयोधनस्त्वयि मत्सरी वर्तते । ततः सर्वकुटुम्बेन समं गन्तुं न युज्यते । तस्मात् कारणात् देवेन पाण्डुना तटस्थेनैवात्र स्थेयम् ; देवी कुन्ती तव विरहाऽसहा, सा नैव स्थास्यति; अतः पाण्डुमत्र मुक्त्वा कुन्त्या मात्रा द्रौपद्या च सम यूयं पञ्चापि बान्धवाः सतेजस्का वनवासाय व्रजन्तु । तत् श्रुत्वा युधिष्ठिरः सबाष्पः सबाष्पं पितर विदुरान्ते स्थापयामास । तस्मिन् समये कुन्ती भर्तृवियोगाद् दुःख; पुत्राणां संयोगात् सुखमवाप । तदा कुन्ती युगपद्धर्षविषादयोः कोटिमवाप । पुनर्विदुरो बभाषे—भो युधिष्ठिर ! मार्गे संचरन् त्वं सावधानो भूयाः; कदाऽपि प्रमादो न कार्यः; विशेषतो मार्गे। एवंविधा शिक्षां दत्त्वा साश्रुनयनो विदुरः पाण्डु सह नीत्वा हस्तिनापुर प्रति प्रस्थितः । तस्मिन् समये पाण्डुराड् विद्याधरदत्तां देवताऽधिष्ठितां मणिमुद्रिकां सकलकार्यकरणक्षमां देवनिर्मितां स्वकरस्था समाकृष्य जेष्ठात्मजकराङ्गुलौ निचिक्षेप । ततः पुत्रप-

त्न्योः शिक्षा दत्त्वा स पाण्डुर्विदुरश्च हस्तिनापुरं प्रति गन्तुं प्रचक्रमे। तदा युधिष्ठिरो माद्रीं प्रत्यूचे–हे मातः! दिवानिशं त्वया मत्तातशुश्रूषाविषये न प्रमाद्यम्; विशेषतो यत्नो विधेयो यतोऽहं दूरदेशे यामि; ममानुगा कुन्त्यपि सहाऽऽयाति; अतः शुश्रूषा विशेषतो विधेया। तथेति कृत्वा साऽपि पाण्डुना सह चचाल। एवं सर्वेऽपि स्वजनवर्गाः प्रत्यावृत्ताः। ततश्चलिताः पाण्डवाः कुन्तीद्रौपदीसहिताः कृष्णाग्रहाद् यानारूढाः कृष्णेन समं चलिता नासिक्य नगर यावत् प्राप्ताः। तत्र पूर्वं कुन्त्या निर्मापितं श्रीचन्द्रप्रभचैत्यं प्राप्ताः। अस्मिन् चैत्ये पाण्डवैः कुन्त्या सम पूजा कृता। विधिवद् जिनं पूजयित्वा चित्रैः स्तोत्रैरभिष्टुत्य तौ कुन्तीदेवकीसुतौ निज निजं सौधं समभ्यास्य स्वस्वजनैः समं स्वकुलोचितं सुखं बुभुजाते। एवं तौ हरियुधिष्ठिरौ सुखमग्नौ कियन्त्यपि वासराणि तत्र गमयामासतुः। एकस्मिन् दिने कृष्णाभ्यर्णे समासीनं युधिष्ठिरमागत्य पुरोचनो दुर्योधनपुरोहित एवमुवाच–हे राजेन्द्र! तव बन्धुः सुयोधनः सादरमिदानीं मन्मुखेनेदं विज्ञपयति।

यथा–

“आर्य! धुर्यस्त्वमार्याणामनार्याणामहं पुनः।
त्वमग्रणीर्गुणवतां निर्गुणानामहं पुनः॥ १॥
उत्तंसः स्वजनानां त्वं दुर्जनानामहं पुनः।
धौरेयस्त्वं सुबुद्धीना दुर्बुद्धीनामहं पुनः॥ २॥
शेखरस्त्वं कृतज्ञानां कृतघ्नानामहं पुनः।
त्वमुत्तमानां माणिक्यमधमानामहं पुनः॥ ३॥
आदिमस्त्वं महेच्छानामल्पेच्छानामहं पुनः।
त्वमाद्यः कृतविघ्नानां निर्विघ्नानामहं पुनः” ॥ ४॥

यन्मया विवेकशून्येन तव विरूपमाचरितम्, तत्त्वं ममाऽ-

पराधं क्षमस्व । यतस्त्वं जेष्ठोऽसि । ज्येष्ठस्तु कनिष्ठस्याऽपराधं सहते । मया त्वयि सरलाशयेऽपराधः कृतः यत् कपटेन द्यूतक्रीडितो राज्यं हारितश्च । ततो राज्यान्निष्कासितोऽसि । तमपि ममापराधं सहस्व । अथ मय्यऽनुग्रहं विधाय पुनः स्वं राज्यं समलङ्कुरुष्व । अतः परं तवाज्ञा मम मौलिपल्यङ्कखेलिनी भवतु । ततः प्रसन्नो भूत्वा हस्तिनापुरराज्यं गृहाण । यदि हस्तिनापुरे समागच्छन् सत्यव्रतविपर्ययाद् लज्जसे ?; तर्हि मनः स्थिरं संविधाय वारणावते नगरे ममाग्रहात् सुखेनैव तिष्ठ । आर्यस्याहं तत्रापि तिष्ठत आत्मचेतोऽनुरूपाणां संपदामुपनेताऽस्मि । हे राजेन्द्र ! मन्मुखेन तव बन्धुना दुर्योधनेन तुभ्यमिति विज्ञप्तमस्ति; इति पुरोचनपुरोहितवचनं श्रुत्वा हर्षिताः पाण्डवा युधिष्ठिरादयः कृष्णादयोऽपि च । यतः प्रीतिवचनं श्रुत्वा को न तुष्यति ?; ततश्चलिताः पाण्डवा यानारूढाः कृष्णसखायः पुरोचनपुरोगमार्गे संचरन्तः क्रमेण वारणावतं नगरं प्रापुः । तन्नगरवास्तव्यः समस्तोऽपि नागरिकलोको माङ्गल्योपायनान्यादाय तस्य संमुखीनः समागमत् । ततो गोविन्देन सार्द्धं ते पाण्डवाः सहर्षास्तं नगरं प्राविशन् स्वः पुरे शचीपतय इव । ते पाण्डवास्त नगरं समासाद्य चित्रशालासु, गृहोपत्यकासु, सौधेषु, वापीकूपसरोवरादिषु सुखं क्रीडन्तो विचरन्ति स्म । पुरोचनो दुर्योधनपुरोहितस्तेषा पाण्डवानामुपचर्याशतैश्चातुर्येण चात्मानमतिरोचयांचक्रे । तथा हस्तिनापुराद् दुर्योधनस्तेषां पाण्डवानामतिस्तुतिपदं वस्तु प्रत्यहं सेवकैः सार्द्धं प्राभृतीकरोति स्म । तथा तत्पुराधीशोऽपि पौरलोकैः परिवृतो युधिष्ठिरमुपासामास । एवं सुखासीनाः पाण्डवाः स्वपुरस्था इव कदाचिदपि निजं गृहमपि न सस्मरुः । पाण्डवानां जनयित्री दानैकरसिका दीनोद्धरणकर्मणि करं व्यापारयामास ।

यतः—

"न कयं दीणुद्धरण न कयं साहम्मिआण वच्छल्लं ।
हिअयमि वीअराओ न धारिओ, हारिओ जम्मो"॥१॥

एव ते सर्वेऽपि पाण्डवा मातृपत्नीसहिता दानं ददानास्तस्मिन्नगरे सुखं विहरन्ति स्म। अथ नारायणस्तत् पाण्डवसुखं दृष्ट्वा कुटुम्बसुख चालोक्य सुयोधनगिरमपि पुरोचनपुरोहितमुखात् श्रुत्वा हृष्टो भ्रातृवत्सलैः पाण्डवैर्विसृष्टो द्वारिकां पुरीं जगाम। सुभद्राऽर्जुनपत्नी मातुर्मिलनोत्कण्ठिताऽभिमन्युना पुत्रेण सार्द्धं पाण्डवाज्ञया कृष्णेन समं द्वारकापुरीमाजगाम । अथैकस्मिन् दिने विदुरप्रहितो दूतः प्रियवदो नाम युधिष्ठिरादिबन्धूना समीपे समागत्यैकान्ते विदुरवाचिकमुवाच । यथा—एकस्मिन् दिने धृतराष्ट्रपार्श्ववर्त्तिना रहःस्थितेन मया कर्णदुःशासनादीनां मन्त्रेण विगतत्रपो दुर्योधनः पुरोचनं प्रत्येवं ब्रुवन् स्वयं शुश्रुवे ।

यथा—

"भद्र ! त्वमपि जानासि पाण्डवा मम वैरिणः ।
जीवत्सु तेषु राज्यं मे गन्धर्वनगरायते ॥ १ ॥
वह्नेरुद्दीपनैर्द्रव्यैः शणसर्जरसादिभिः ।
आचितं जातुषं सौध विद्ध्या वारणावते " ॥ २ ॥

एतत्श्लोकद्वयं श्रुत्वा पाण्डुपुत्रेण चिन्तितम्--अहो ! एतेन पुरोचनेनास्माकं मारणाय एषा माया कृता । वयमत्र नगरे राज्यं दत्त्वा स्थापिताः निजस्वामिबुद्ध्या । कपटं कृत्वा मारणायैष उपायो रचितः । तर्हि नूनमेष पुरोचनो दुष्टोऽस्मानस्मिन् लाक्षागृहे धक्ष्यति । अथ भक्तमानी विदुरदूतो

१ न कृत दीनोद्धरण न कृत सार्धर्मिकाना वात्सल्यम् ।
हृदये वीतरागो न धारित , हारित जन्म ॥ १ ॥

वक्ति स्म–राजन् ! असौ श्लोकद्वयगतवृत्तान्तो दुष्टदुर्योधनेन पुरोचनाग्रे निवेदितः। तदा प्रच्छन्नतया विदुरेण स श्रुतो भवतां मन्मुखेन ज्ञापितश्च । अतस्त्वया सम्यग् विचार्य यथायोग्यं विधेयम् । पुरोचनविश्वासो न विधेयः। एष मुखे मिष्टो हृदयेऽत्यर्थं दुष्टो ज्ञेयः। दुर्योधनवचनादेष पुरोचनो भवदलङ्कृतं भवनं कृष्णचतुर्दश्यामग्निसात् करिष्यति । परं सा चतुर्दशी परिज्ञाता नास्ति विदुरेण। अतः प्रति कृष्णचतुर्दश्यां सावधानेन स्थेयम्; न प्रमाद्यम्, इति मया त्वयि विदुरवाचिकमाख्यायि । इति दूतमुखाद् विदुरोक्तं श्रुत्वा क्रोधारुणितलोचनाः पाण्डवास्तद्वासभवनं जतुनिष्पन्नं वा तद्व्यतिरिक्तं वेति परीक्षयामासुः। परीक्षाप्राप्तं लाक्षागृहं ज्ञात्वा मातृभ्रातृकलत्राणां प्रत्येकं तत् कथितम् । ततो भीमोऽभ्यधात्-आर्य! रिपोर्हृदयं विदार्य गम्यते, पुरोचनस्य शिक्षां दत्त्वाऽग्रे गम्यते। अर्जुनोऽपि युधिष्ठिरमेवमभाषिष्ट–त्वदाज्ञयैनं शिक्षयित्वा गम्यते। एषोऽपि जानाति पाण्डवैः सह यादृशं कृतं तादृशं लब्धम्। एतयोर्वचनं श्रुत्वा युधिष्ठिरो बभाषे- हे वत्सौ ! युवयोः शौर्यं यद्यस्ति तर्हि दुर्योधनवधे कार्यम् । पथि गच्छतां एवंविधा दुर्जना बहवो मेलिष्यन्ति येषां तेषां पदे पदे घ्नन्तो वयं लज्जामहे। अहो! एते पाण्डवा महौजसो वशीकृतदिगन्ता एवंविधान् प्राकृतजनान् घ्नन्तीत्यस्माकं जनापवादो भवेत्, तस्मात् न हन्यन्ते प्राकृतजनाः। तथा चाऽद्यदिनादारभ्य त्रयोदशवर्षपर्यन्तमात्मना एषा प्रतिज्ञा भवतु यथा विद्याबलेन स्थानान्तरं गन्तु न युज्यते, किमपि भोजनादि कर्तु न युज्यते, किन्तु बाहुबलेन सर्व कार्यं कार्यम् । एवं कर्मणोऽपि कलना भवेत्, सत्यस्यापि निकषः स्यात्। अतोऽस्मिन्नेव गृहे निशाया कुत्राप्येकस्मिन् स्थाने वसामः । यदा दुर्योधननिर्देशात् एष पुरोचन एतन्मन्दिरं मुदा धक्ष्यति कृष्णचतुर्दशीरात्रौ तदाऽस्माभिरतः सुरङ्गाध्वनाऽस्माद् गेहा-

निर्गन्तव्यम्, इति मन्त्रिते पुना राज्ञोक्तम्—एका गुप्तद्वारा सुरङ्गा खानयितव्या, तस्याः सुरङ्गायाः प्राच्यद्वैतवना-ऽवनि द्वारं निर्माप्यम्। परं तादृक्कश्चित्सुरङ्गाखनको विलोक्यते?। धर्मपुत्रेणेत्युक्ते भूयः प्रियंवदोऽवादीत्—हे स्वामिन्! विदुरेण सुनकाभिधः खनकः प्रहितोऽस्ति। विदुरस्यैष बहिर्मन इवास्ति, विश्वासस्य भूमिरिव, विदुरस्य द्वितीयं वपुरिव। सोऽपि भूपालं नत्वा भूतलन्यस्तमस्तकः शिक्षां ययाचे। युधिष्ठिरोऽपि तं योग्यं ज्ञात्वा एकं निर्विजनं भूप्रदेशमदर्शयत्। सोऽपि सुनकाभिधः सुरङ्गाखनकः पुरबाह्ये कस्यचिद् गृहस्यान्तःस्थित्वा दिवाऽन्यत् कर्म कुर्वाणो निशायां शनैः शनैः सुरङ्गां खनति स्म। भीमतल्पस्याधो बिलद्वारं विधाय युधिष्ठिराय न्यवेदयत्। तत्रस्थाः पाण्डवा अविश्वासा विरोचने विश्वासं दर्शयन्ति स्म, अमुदो मुदं लोकेभ्यो ज्ञापयन्ति स्म, तथा प्रतिप्रत्यूषं समुत्थाय जात्यवाजिनं समारुह्य चतुर्दिशं पथावलोकनं कुर्वन्ति स्म। कदाचित् स भीमः कुन्त्या द्रौपद्याश्च नकुलस्य सहदेवस्य चाभ्यासार्थं सुरङ्गान्तरमदर्शयत्। पञ्चापि पाण्डवा उपरितनभूम्यां निषण्णा नक्षत्रैरेतद् द्वैतवनमार्गं निश्चिक्यिरे। तदा कुन्ती पुत्राणां शुभाय मनोहराऽऽहारदानैर्दीनाऽनाथादीन् प्रीणयामास, श्रीशान्तेः प्रतिमां शान्तकल्मषामर्चयामास, तथा ध्वस्तपापं परमेष्ठिमयं मन्त्रं जजाप। एवं तान् पाण्डवान् मातृस्नुषाभ्यां सार्द्धं स्वेच्छया क्रीडतो दृष्ट्वा पुरोचनश्चिन्तयति स्म—नूनमेते विश्वासवन्तोऽस्यामेव कृष्णचतुर्दश्यां निपातयितव्याः। इतश्च तस्यामेव चतुर्दश्यां काश्चित् वृद्धां पञ्चभिः पुत्रैरेकया स्नुषया सार्द्धमितस्तत पर्यटन्ती दृष्ट्वा कुन्ती तामात्मतुल्यां ज्ञात्वा भगिनीमिव मन्यमाना मधुरस्निग्धभोजनैर्भोजयित्वाऽऽत्मनः समीपसदने स्थापयामास। अथ भीमो दुर्निमित्तैस्तां रात्रिं भयङ्करां ज्ञात्वा स्वकुटुम्बं तस्यां सुरङ्गायामतिष्ठिपत्, स्वयं सुरङ्गाद्वारे स्थितो

यावदवलोकयति तावत्तेन पापेन पुरोचनेन कृष्णचतुर्दशीरात्रौ द्विप्रहरे तन्मन्दिरद्वारदेशतो वह्निरुद्दीपितः। कल्पान्तवाह्निसोदरं तं वह्निं दृष्ट्वा रुष्टो भीमः सुरङ्गाध्वना स्वकुटुम्बं तस्मिन् गृहाद् बहिर्निनाय, पश्चात् स्वयं सुरङ्गाद्वारे स्थित पुरोचनचरित्रं लोचनैर्विलोकयामास । स्वामिकार्यं कृत्वा हृष्टः पुरोचनः सिद्धे कार्ये यावन्नृत्यति तावद्भीमपराक्रमेण भीमेन स करे धृत्वा मृगारिणा मृग इव मुष्टिना हत्वा वह्नौ, निचिक्षिपे । ततः पुरोचनो मृत्वा नरकं गतः । फलितं स्वकृतं कर्म ।

यतः -

"स्पृशन्ति भर्तुः पापेन स्वभावमनुजीविनः ।
लवणोदन्वतस्तीरे भुवोऽपि क्षारकुक्षयः" ॥ १ ॥

पुरोचनेन यादृशः पुमान् सेवितस्तादृशी फलप्राप्तिर्जाता । अथ भीमः पुरोचनं हत्वा सुरङ्गाध्वना कुटुम्बेन म्हह संमिलितो मार्गे चचाल । कतिपयभुवं गतानां तेषां पाण्डवाना विलोकनायेवोदयाचलमूर्ध्नि समारूढः सूर्य उदयमियाय । अथ पौरास्तल्लाक्षामन्दिरं भस्मसाद्भूतं दृष्ट्वा तान् सप्तापि मनुष्यान् मृतान् समालोक्य हाहाकारं कुर्वन्तो दैवोपालम्भान् ददिरे । हे हताश! विधे! त्वयाऽमी पञ्चापि पाण्डवाः कल्पपादपोपमा दीनाऽनाथसमुद्धारपण्डिताः किं विनाशिताः?। एवं वारं वारं गुणग्रामं स्मरन्तो जना भृशं रुरुदुः । अथ पाण्डवा अरुणोदये पादचारेण संचरन्तः श्रान्ता दुःखमाप्नुवन्ति स्म । राज्ञो युधिष्ठिरस्य प्रथमपान्थस्य क्रमौ स्खलनामवापतुः । नकुलसहदेवावपि पथि श्रान्तौ सन्तौ ज्यायसा भ्रातॄणां मा स्म खेदो भूयादिति भिया तूष्णीमगच्छताम् । युधिष्ठिरो मातुः पत्न्याश्च पादचारेण चङ्क्रमणं समालोक्य हृदि इति चिन्तयति स्म ।

यथा -

"कष्टं दृष्टं यया नेवं पितुर्भर्तुश्च वेश्मनि ।

मातेयममितं क्लेशं मयैवमनुभाव्यते ॥ १ ॥
अहो ! पाणिगृहीतीयं पाण्डवानां महौजसाम् ।
दरिद्रगृहिणीचारं चरत्येवं वनाऽवनौ ॥ २ ॥
पश्यतां पाण्डुपुत्राणां कलत्रस्य कुशाङ्कुरैः ।
अम्भोजभेदं भिद्येते हा ! हा ! चरणपल्लवौ ॥ ३ ॥
न जानाति प्रिया दुःखमेकस्मिन्नपि भर्तरि ।
पञ्चस्वपि प्रियेष्वेका क्लिश्यते द्रुपदात्मजा " ॥ ४ ॥

एवं युधिष्ठिरे खेदखिन्ने मार्गे खिन्ने च परिजने कुन्ती-द्रौपद्यौ तृषाक्रान्ते भुवि निपेततुः । ततो युधिष्ठिरो दूराज्जलं समानाय्य तयोः पाययति स्म, पाययित्वा राजा चिन्तयति स्म— अहो ! विधिर्बलवान् येन पूर्वं राज्यभ्रंशो विहितः, ततः शत्रोर्भयमकारि, पश्चाद्रात्रौ पलायनं विदधे; रुष्टेन विधिना सर्वा विडम्बना पाण्डवानामेवाकारि । धिग् विधिम् , य एवंविधान् जनान् विडम्बयति । एवं चिन्तयन् धर्मपुत्रः पथि चचाल । मार्गे पुनश्चिन्तयति स्म । अहो ! ममैष परिवारः पथश्रान्त उष्णेऽपच्छत्रः शीतेऽनंशुकः पथ्यपाथेयः शिरीषसुकुमाराङ्गः पदे पदे निपतन् दुर्गकान्तारपारी कथं भविष्यति ? । युधिष्ठिरं चिन्ताम्लानमुखं ज्ञात्वा भीमपराक्रमो भीमो वाचमुवाच भोः सोदर ! मयि प्रगुणे पदातौ त्वमाकुलो मा स्म भूरित्युक्त्वाऽम्बां दक्षिणे स्कन्धे आरोप्य पुनः प्रियतमां वामे स्कन्धे चारोप्य उभावपि कनीयासौ पृष्ठे बद्ध्वा धर्मपुत्रार्जुनावपि भुजाऽवलम्बौ विधाय निःसीमपराक्रमो भीमो मार्गे महीरुहान् पादप्रहारेण पातयन् शीघ्रं चचाल । शीतो निशीथमारुतो दयालुरिव भीमश्रमं दूरे निनाय । स्वस्थचित्तो भीमः पथि पवनेनाऽऽश्वासितो धर्मपुत्रार्जुनावपि पथश्रान्तौ पृष्ठेऽध्यारोपयत् । तेन भीमेन निशाया तस्मिन्नटवीसमुद्रे स्वबन्धूनामुद्वहता यानपात्रायितम् । एवं संचरतो भीमाद् भीतेव सा निशा क्षणेनैव क्षयं गता । अथ सूर्यो वृको-

दरमुखाम्भोजविलोकनजातकुतूहल इवोदयाचलचूलिकामारुरोह । वृकोदरपराक्रमं दर्शयितु विहङ्गमाः स्वजातिमाह्वातुमिव कूजन्ति स्म । एवं तैः समं परिवृतो भीमः शिरोगते सूर्ये द्विप्रहरसमये कस्यचित्तरोस्तले जलसमीपे विशश्राम । युधिष्ठिरेण पार्थस्योक्तत्वात् पार्थो विद्या न सस्मार, किन्तु विद्यां विनैव सर्व कार्य करोति स्म । सुप्तो भीमो मार्गे खेदापनोदाय । युधिष्ठिराज्ञयाऽर्जुनो वने गत्वा वनोद्भवानि, कन्दमूलफलान्यादाय पाञ्चाल्यै आर्पयत्, नकुलसहदेवौ एधांस्यार्पयताम्, ततः पाञ्चाली वनफलाहारैरग्निसंस्कारसंस्कृतैः श्वश्रूसहितान् पाण्डुपुत्रान् भोजयित्वा देवगुरून् स्मृत्वा ततः स्वयं बुभुजे । पुनस्तथैव भुक्त्यनन्तरं सपरिकराः पाण्डवा मार्गे चेलुः । मार्गे तृषाक्रान्तान् सर्वान् भीमसेनो जलमढौकयत्, बुभुक्षितान् पुनः फलमढौकयत्, श्रान्तान् स्कन्धे कुर्वन्; एवं पथि सचचार । निशायां पुनरशोकस्य तरोस्तले वृकोदरविन्यस्तेषु वृक्षपल्लवस्रस्तरेषु ते सुखं सुषुपुः । तदा तमसां साम्राज्यमजनि, यतः क्रुद्धो विधिर्जनाना पदे पदे आपदं दत्ते । यथा तस्यामेव तमस्विन्या ध्वान्ते यामिनीमुखे कुन्तीद्रौपद्यौ तृषाक्रान्ते बभूवतुः । ताभ्यां जलं याचितम् । युधिष्ठिराज्ञया मध्यमपाण्डवो भीमो जलपात्रं समादाय सुविक्रमी गव्यूतिमात्रमध्वानमतिक्रम्य सारसस्वनैर्निर्णीत सर आससाद । तत्र भीमः कमलिनीपुटे पयः पीत्वा तस्मिन् सरसि करिपोतवत् स्नात्वा जलपात्रं भृत्वा तत्रायातो यत्र ते पाण्डुपुत्राः समातृवधूकाः सन्ति; तत्रागतस्तान् दुःखावस्थास्थितान् स्रस्तरे सुप्तान् विलोकयति स्म । तं स्वकुटुम्बं दुःखेन सुप्तं निद्रायमाणं दृष्ट्वा भीमसेनश्चिन्तयति स्म -अहो ! ममैष बान्धवो युधिष्ठिरः, यः पल्यङ्क सतूलीकं पट्टकूलैराच्छादितं धूपधूमस्तोमैर्वासित पुष्पवासान्वितं सुगन्धद्रव्यैः संस्कृतमध्यास्य सुखनिद्रा कुर्वाणो वारनारीसमूहैश्चामरैर्वीज्यमानः, सोऽधुना

रेणुनिकरस्योपरि पथश्रान्त उलूकभैरवफेरवाऽऽरावान् शृण्वन् वृक्षपल्लवेषु शेते । एवं कथयन् भीमो भृशं रुदन् परितो भ्रमन्निति कथयति स्म--यः पूर्व विमानस्थो व्योम्नि बभ्राम, सोऽर्जुनोऽस्मिन् कान्तारे रङ्कस्वापं स्वपिति । एतौ नकुलसहदेवावपि नः क्रोडक्रीडालालितावपि मे कनीयांसौ दरिद्राविव भूमौ शयाते । इयं पाण्डवानां माता पाण्डुमहीपतेः पत्नी चरणचङ्क्रमणक्लान्ता कुन्ती हा ! हा ! भुवि शेते। इयं द्रुपदनन्दनी, याऽर्जुनराधावेधेन लब्धा, यया पञ्च पाण्डवा वृताःसुखेच्छया, सा एषा द्रौपदी रोरपत्नीव रुलिता। धिग् मम जीवितम् , पौरुषम् ; एवं वारं वारं कथयन् भीमो निःसीमपराक्रमः सर्वेषां परितो भ्रमन् भृशं रुरोद । इत्युच्चैर्विलापं कुर्वन् भीमो भीषणाकारधारिणीमेकां युवतिं संमुखमायान्तीं पिङ्गाक्षीमुदैक्षत । सा युवतिर्यथा यथा भीमस्याभ्यर्णेऽभ्यागात् तथा तथा मनोहारि रूपं प्रकाशयामास । तां समीपमायान्तीं ज्ञात्वा कोमलया गिरा भीम उवाच--हे सुलोचने ! त्वं काऽसि ? त्वया प्रथम भीमं पश्चात् सौम्यं रूपं कथं कृतम् ? । एतत्स्वरूपं त्वं ममाग्रे सत्यं समाख्याहि । तयोक्तम्--भो महापुरुष ! मम चरित्रं सावधानीभूय श्रूयताम् । इदं हिडम्बाख्यं नाम वनम् । अस्मिन् वने हिडम्बो नाम राक्षसो मम भ्राता विद्याधरो वर्तते । तस्याहं हिडम्बानाम्नी भगिनी बन्धुगेहनिवासिनी। मद्बन्धोर्ममापि क्रमायाता राक्षसी नाम विद्याऽस्ति। स मद्बन्धुः सौधस्थो ममेदमभ्यधात्--हे भगिनि ! अधुना मानुषो गन्धो मे क्षुधां बोधयति, तत् त्वं याहि, मानवानन्वेक्ष्य कुतोऽप्यानय, यतोऽहं क्षुधितोऽस्मि । अथाहं बन्धुप्रेषिता रतिरूपाऽपि राक्षसीरूप कृत्वा वह्निज्वालावद्भीषणे लोचने विधाय यावताऽत्र समागतवती तावत् त्वां माररूपं विलोक्य विस्मृत्य भ्रातुरादेशं स्मरवशंवदाऽहं त्वामेव स्मरामि । अद्यप्रभृत्यहं तवानुगा, त्वं मे प्राणप्रियो मय्यनुग्रहं विधाय पा-

णिग्रहणं कुरुष्व । भो महन् ! त्रपां विहाय मां रात्रिचरी सहचरीं कुरु, ममाद्य सकलाः कुलदेव्यः प्रसन्ना जाता यस्त्वं प्राणप्रियो मिलितः । हे प्राणेश ! मयि सहचारिण्या राक्षसा दूरे तिष्ठन्ति । प्रबला वनचारिणोऽपि न प्रभवन्ति । अन्यदपि यत् किञ्चित् विरूपं भविष्यति मयि सहचारिण्यां तत् सर्वं दूरे यास्यति । अथ भीमो बभाषे—भो भद्रे ! यदि महान् पुण्यप्राग्भारो भवेत् तदा त्वादृग् नारी प्रेमपरा, स्वयंवरा लभ्यते । हे सुगात्रि ! परमत्रार्थे कारणं निशम्यताम्—एते शयालवश्चत्वारोऽपि मम बान्धवाः सन्ति, इयं या वृद्धा निर्भरं स्वपिति एनामस्माकं जननीं जानीहि, एषा स्मेरलोचना शिरीषमृद्वङ्गी या सुखं सुप्ता सा सर्वेषां पञ्चानामपि बन्धूनां प्रणयिनी । अनया एकयाऽपि सधर्मिण्या वयं सर्वेऽपि बान्धवाः कृतार्थाः पुरुषार्थेषु सर्वेषु वर्तामहे । अतः श्रेयसीमपि प्रेयसीमन्यां वयं नानुमन्यामहे । एकामपि कल्पलतां प्राप्य करीरवने कः करक्षेपं करोति ?। एवं भीमेन वारं वारं प्रतिषिद्धाऽपि हिडम्बा प्रोचे--हे प्राणेश ! यद्यपि त्व मयि प्रेमोद्रेकं न करोषि तथाऽप्यस्मिन् भवे त्वमेव मम जीवितमस्ति, तद्यदा रोचते स्वामिन् ! तदैव मामात्मसात् कुर्याः । भीमोऽभ्यधात्--हे हिडम्बे ! यदि तव ममोपरि प्रेमप्रकर्षोऽस्ति तर्हि चाक्षुषीं विद्यां देहि, यया तामसीष्वपि रात्रिषूद्द्योतो भविता । तया हिडम्बया भीमाय पठितसिद्धा तामसी विद्या दत्ता । भीमस्तां विद्यां साधयित्वा सिद्धविद्यो जातः । अत्रान्तरे ददत् त्रासं मुक्ताट्टहासेन हिडम्बो नाम राक्षसः समागात् । स्वां भगिनीं भीतां स्वेदरोमाञ्चमण्डितां कामपरवशां भीमे दत्तलोचनां कामुकीं दृष्ट्वा भ्रुकुटीविकटाननो हिडम्बो बभाषे--आः पापे ! हे प्रौढकन्दर्पे ! हे कुलकलङ्किनि ! मा बुभुक्षितमुपेक्ष्यैवं त्वमिह कामुकाऽभूत् ; अतस्त्वा पूर्वं जठराग्नेरिन्धनं विधाय तत एतान् मानवान् मम जठरा-

ग्नेराहुतिभावं लम्भयिष्यामि। एवं कोपेनाक्षिप्य रक्तचक्षू-राक्षसो हिडम्बः सोदरा प्रति चपेटां दातुं दधावे । ततस्तं धावन्त दृष्ट्वा भीमपराक्रमो भीमो राक्षस प्रोचे--हे दुराचार! दुरात्मन्! नक्तश्चर! निजा भगिनी निरपराधां जिघांसन् किं न लज्जसे? तव रक्षोवंशानुरूपं यद्भगिन्यपि हन्यते, परं तदहं स्त्रीहत्या भवत्कृतां नोपेक्षे, इत्युक्त्वा भीमो गदामुद्यम्य धावितः। राक्षसोऽप्येकं वृक्षमुन्मूल्य भीमं प्रति दधावे। एवं परस्परमुभयोरपि संग्रामो बभूव। तस्मिन् संग्रामे भीमेन गदया हतः पीडितो राक्षसः। राक्षसेन वृक्षेणाऽऽहतो भीमो मूर्च्छामवाप्य भूमौ पतितः, क्षणं वृक्षपीडामनुभूय लब्धचैतन्यो भीमः पुनर्गदामुद्यम्य सिंहनादं कुर्वन् राक्षसं डुढौके। तेन सिंहनादेन जागरिताः पाण्डुपुत्राः। कुन्तीद्रौपद्यावपि। कुन्ती पुरतो दिव्यरूपामेकां बालिकां ददर्श। तां बालिकां समालोक्य कुन्त्या पृष्टम्--का त्वं पुत्रि! कथं चात्र समागता?, सत्यं मम कथय। साऽप्यादितः सर्वं स्ववृत्तान्तं कुन्त्यै निवेदयामास। हे मातः! तव तनुजो रक्षसा सह युध्यते, तेन रक्षसा वृक्षास्त्रेण हतो मूर्च्छितस्ततो भूमौ पतितश्च पुनर्लब्धचैतन्येन तव पुत्रेणैप सिंहनादो विहितस्तेन नादेन त्वं जागरिता। तच्छ्रुत्वा मातृप्रेरिता धर्मपुत्राद्या बान्धवा भीमाभ्यर्णमुपाययुः। तदा भीमं पुना-राक्षसेनाऽऽहतं भूमौ पतितं मूर्च्छां गतं समालोक्य जनन्यूचे।

यथा--

"अस्माकं मार्गपङ्गूना वोढा त्वं प्रौढविक्रम!।
दुष्टेन रक्षसा वत्स! गमितः कामिमां दशाम्? ॥१॥
निरालम्बकुटुम्बस्य करालम्बं त्वया विना।
दूरात् पानीयमानीय तृषां नः कोऽपनेष्यति? ॥ २ ॥
कुसुमानि समानीय वन्यान्येतां मनस्विनीम्।
नव्यधम्मिल्लबन्धेन वधूं कोऽलङ्करिष्यति?" ॥ ३ ॥

**यच्चोक्तमित्यादि।** यच्चोक्तं मूलपूर्वपक्षे, न च तत्कार्यद्वारेणाऽपि सदसद्रूपं वस्तु प्रतिपत्तुं शक्यते, यतो नोभयरूपं कार्यमुपलभ्यत इत्यादि । एतदप्यनवकाशम्। कुत इत्याह– **वस्तुस्थित्योभयरूपस्योपलम्भस्य साधितत्वात्** अनन्तरमेव । न च तत्कार्यकरणे प्रवर्तमानं केनचिद् कारेण करोति, केनचिद् न करोति, एकस्य करणाकरणविरोधादित्याद्यपि मूलपूर्वपक्षोक्तमेव, असारम्। कुत इत्याह– **विरोधासिद्धेः।** एतामेव दर्शयति– **तथाहीत्यादिना ।** तथाहि पर्यायात्मना करोति नैमित्तिकेन रूपेण तथापरिणते, द्रव्यात्मना न करोति मृदादिरूपेण तथाऽपरिणते, इति कुत एकस्य करणाकरणविरोध इति नैव, एतत्तावत् कार्यमधिकृत्योक्तम्। अधुना कारणमधिकृत्याह– **अथवा स्वकार्यकर्तृत्वेन करोति, कार्यान्तराकर्तृत्वेन न करोति, अतः केनचिदाकारेण करोति केनचिद् न करोतीति कोऽत्र विरोधः?** न कश्चिदित्यर्थः ॥

**न च स्वकार्यकर्तृत्वमेव कार्यान्तराकर्तृत्वम्। यदि स्याद् यथा स्वकार्यं करोति; एवं कार्यान्तरमपि कुर्यात्, कर्तृत्वानन्यत्वादकर्तृत्वस्य, विपर्ययो वा, ततश्चाऽकारणत्वमिति । स्यादेतत्, किं हि नाम कार्यान्तराकर्तृत्वमन्यत्? यदाश्रित्याऽनन्यत्वयुक्त्यनुसारेणाऽकारणत्वं प्रतिपाद्यते, किन्तु स्वकार्यकर्तृत्वमेवैकस्वभावं कार्यान्तराकर्तृत्वमिति । हन्त ! तर्हि येनैव स्वभावेन करोति, तेनैव न करोतीत्येतदापन्नम्, एवं चाभिन्ननिमित्तत्वे सत्येकत्र कर्तृत्वाकर्तृत्वयोर्विरोध इति, तथाहि– तेनैव स्वभावेन करोति, न करोति चेति व्याहतमेतत् । एकस्वभावस्यैकत्रैवोपयोगात् । कार्यान्तराकर्तृत्वं तत्र परिकल्पितमिति चेत् । एतदप्यमनोहरम्, कुतः?-कार्यान्तराकर्तृत्वस्य तत्र परिकल्पितत्वाद् वस्तुतोऽसत्त्वात् तद्भावापत्त्या कार्यान्तरभावप्रसङ्गात् ॥**

न च स्वकार्यकर्तृत्वमेवैकरूपं कार्यान्तराकर्तृत्वम्। कथमित्याह–

**यदि स्यात्** एतदेकमेव । तत किमित्याह– **यथा स्वकार्यं करोति** तत्, एव कार्यान्तरमपि **कुर्यात्** । कस्मादित्याह– **कर्तृत्वानन्यत्वादकर्तृत्वस्य** नान्यथाऽनन्यत्वमिति भावितमेतत्। विपर्ययो वा–यथा कार्यान्तर न करोति एव स्वकार्यमपि न कुर्यात्, अकर्तृत्वानन्यत्वात् कर्तृत्वस्येति भाव । ततश्चैवमनेन प्रकारेणाऽकारणत्वमिति, कुर्वत कारणत्वयोगात् । स्यादेतत् कि हि नाम कार्यान्तराकर्तृत्वमन्यत् स्वकार्यकर्तृत्वात्, यदाश्रित्याऽनन्यत्वयुक्त्यनुसारेणोक्तलक्षणेन, अकारणत्व प्रतिपाद्यतेऽविकृतकारणस्य, नैव किञ्चिदन्यत् किन्तु स्वकार्यकर्तृत्वमेवैकस्वभाव कार्यान्तराकर्तृत्वमित्येव च तदेकमेवेत्यभिप्राय । एतदाशङ्क्याह– **हन्त ! तर्हि येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नम्**, अर्थत , एव चाभिन्ननिमित्तत्वे सत्येकत्र कर्तृत्वाकर्तृत्वयोर्विरोध इति । एतद्भावनायैवाह– **तथाहि तेनैव स्वभावेन करोति न करोति चेति व्याहतमेतत्** । कुत इत्याह– **एकस्वभावस्यैकत्रैवोपयोगाद्** अन्यथा सर्वथैकत्वायोग । कार्यान्तराकर्तृत्व तत्र कारणे परिकल्पितमिति चेत्, एतदप्यमनोहरम् । कुत– इत्याह– **कार्यान्तराकर्तृत्वस्य तत्र** कारणे, परिकल्पितत्वात् कारणात्, अत एव वस्तुतोऽसत्त्वादविद्यमानत्वात् कार्यान्तराकर्तृत्वस्य तद्भावापत्त्या कार्यान्तरकर्तृत्वभावापत्त्या । किमित्याह– **कार्यान्तरभावप्रसङ्गात्** न हि तद्भावमन्तरेण तदभाव इति भावना ॥

अथाऽऽशङ्का--स्वकार्यकर्तृत्वव्यतिरिक्तं कार्यान्तराकर्तृत्वं परिकल्पितं स्वकार्यकर्तृत्वमेव पुनः कार्यान्तराकर्तृत्वस्वभावमभ्युपगम्यत इति । एषाऽप्ययुक्ता, दत्तोत्तरत्वात्, तथाहि–येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नमित्यादि तदेवावर्तते। अनेनैव सर्वात्मना च करणे तद्भावरूपमेव स्यादित्यादि प्रतिक्षिप्तम्, अभावस्य वस्तुधर्मत्वात्, कथञ्चिदव्यतिरेकात् कार्यान्तराकारणत्वादिति । तस्माद् व्यवस्थितमेतत् सदसद्रूपं वस्तु । तथा चोक्तम्—

"यस्मात् प्रत्यक्षसंवेद्यं कार्यतोऽप्यवगम्यते ।
तस्मादवश्यमेष्टव्यं वस्त्वेकमुभयात्मकम्" ॥१॥ इति ।

अथाशङ्का परस्य, स्वकार्यकर्तृत्वव्यतिरिक्त कार्यान्तराकर्तृत्व परिकल्पित स्वकार्यकर्तृत्वमेव पुन कार्यान्तराकर्तृत्वस्वभावमभ्युपगम्यत इति । एतदाशङ्क्याह–**एषाऽप्ययुक्ता** आशङ्का । कुत इत्याह–**दत्तोत्तरत्वात्** । एतदेव भावयति–**तथाहीत्यादिना** । तथाहि येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नमित्यादि पूर्वोक्तम्, तदेवाऽऽवर्तते । अनेनैवोक्तन्यायेन, सर्वात्मना च करणे तद्भावरूपमेव स्यादित्येतत् प्रतिक्षिप्तम्, अभावस्य वस्तुधर्मत्वान, न ह्यसति चेतनात्वेऽणुश्चेतनास्वभावो नामेत्यनेन प्रकारेण, अत एव कथञ्चिद्व्यतिरेकात् भावादभावस्य, कार्यान्तराकारणत्वादिति यस्मादेव तत्, तस्माद्व्यवस्थितमेतत् सदसद्रूप वस्तु। **तथा चोक्तमिति** ज्ञापकमाह–**यस्मात् प्रत्यक्षसंवेद्य**मुक्तवत्, कार्यतोऽप्यवगम्यत उक्तनीते, तस्मादवश्यमेष्टव्य न्यायविदा, वस्त्वेकमुभयात्मक सदसद्रूपमिति ॥

**अपरस्त्वाह--ननु च वस्तुनः स्वरूपेण सत्त्वं पररूपेण चासत्त्वमित्येतदिष्यत एवेति सिद्धसाध्यता । एतदप्ययुक्तम्, स्वमतविरोधात्। तथाहि- एवमिच्छता वस्तुन एव सत्त्वमसत्त्वं च धर्मावित्येष्टव्यम्, वक्तव्यं च धर्मधर्मिणोरन्यत्वम्, अनन्यत्वम्, अन्यानन्यत्व वेति ?। किञ्चाऽतः?, यद्यन्यत्वम्, अवस्तुत्वादिप्रसङ्गः। कथम्?, इह च वस्तु धर्मव्यतिरिक्तं, तच्च स्वरूपेण सत् पररूपेण चासदित्यभ्युपगमाद् धर्माणा च परत्वात् तद्रूपेणाऽसत्त्वादवस्तुत्वप्रसङ्गः ॥**

अन्यस्त्वाह वैशेषिक, ननु च वस्तुनो घटादे, स्वरूपेण सत्त्व पररूपेण चाऽसत्त्वमित्येतदिष्यत एव, इत्येवम्, सिद्धसाध्यतोभयात्मकमिति । एतदाशङ्क्याह–**एतदप्ययुक्तं, स्वमतविरोधात्** । एनमेवाह–**तथाहीत्यादिना** । तथाहीत्युपप्रदर्शने, एवमिच्छता यथोदित वस्तुन एव सत्त्वमसत्त्व च धर्मावित्येष्टव्य परेण । वक्तव्य च

धर्मधर्मिणोरन्यत्वमनन्यत्वमन्यानन्यत्व चेति विकल्पा, किञ्चात ?, यद्यन्यत्व धर्मधर्मिणो, अवस्तुत्वादिप्रसङ्ग, तयोरेवादिशब्दाद् धर्मधर्मिप्राप्तिपरिग्रह । कथमित्याह–इह च वस्तु धर्मव्यतिरिक्तं, तच्च स्वरूपेण सत् पररूपेण चासदित्यभ्युपगमात् कारणात्, तथा धर्माणा च परत्वात्, तद्रूपेण सदादिना धर्मरूपेण, असत्त्वाद् हेतो, अवस्तुत्वप्रसङ्ग ॥

न च तद् न प्रक्रान्तधर्मव्यतिरिक्तमपि स्वरूपेण सत् पररूपेण चासत्, अत्यन्ताभावप्रसङ्गात्, इत्युक्तदोषापत्तिरेव। नापत्तिः, तस्य यथोदितत्वानुपपत्तेः। अथ कीदृक् तत्, इति कथनीयम्?। अव्यपदेशार्हमिति चेत्। न, स्ववचनविरोधात्, अधिकृतव्यपदेशेन व्यपदेशात्, अन्यथाऽव्यपदेशार्हमिति शब्दाप्रवृत्तेः। सच्छब्दादिव्यपदेशार्हं न भवतीति चेत्। किमत्र क्षूणम्? इति वाच्यम्। यतो न तत्सद् नाऽप्यसदिति चेत्। सदसत् तर्हि नियमतः। एतदपि नैव तत्त्वत इति चेत्। किं तदन्यत्, अतोऽतिरिक्तम्?। तथाविधबुद्धिग्राह्यमिति चेत्। तत्रापि बुद्धिरिति न्यायातीतमेतत्, तथाहि-तन्न सद्, नाऽसद्, न सदसद्, बुद्धिगोचरश्चेत्यद्भुतमेतत्। स्वकार्यसत्त्वाभ्युपगमे च व्यर्थोऽपर्योगकल्पना, नियतरूपादितया च स्वपररूपसत्त्वासत्त्वदोषोऽनिवारितप्रसर एव; इति यत्किञ्चिदेतत् ॥

अत्रैव भावना कुर्वन्नाह–न चेत्यादि। न च तद् वस्तु, न प्रक्रान्तधर्मव्यतिरिक्तमपि मौलधर्मव्यतिरिक्तमपि, स्वरूपेण सत् पररूपेण चासत्। न च न कस्मात्?, अत्यन्ताभावप्रसङ्गात्। यदि नैवरूपम्, खरविषाण तर्हि तत्, इति भावना, इत्येवम्, उक्तदोषापत्तिरेव स्वरूपेणाप्यसत्त्वादवस्तुत्वादित्यभिप्राय । अत्राह–नापत्तिरनन्तरोदिता। कुत इत्याह–तस्य मूलधर्मव्यतिरिक्तस्य वस्तुन, यथोदितत्वानुपपत्ते स्वरूपेण सत् पररूपेण चासदिति यथोदित तदनुपपत्ते, मूलधर्मव्यतिरिक्त वस्तु नैवेष्यत इत्यर्थ । अत्रोत्तरम्--अथ कीदृक् तद् वस्त्वित्येतत् कथनीयम्। अव्य-

पदेशार्हमिति चेन् । अत्रोत्तरम्--न, स्ववचनविरोधात् । एतमेवाह— **अधिकृतव्यपदेशेन** अव्यपदेशार्हमित्यनेन, व्यपदेशात् । इत्थं चैतद-ङ्गीकर्तव्यमित्याह- **अन्यथाऽव्यपदेशार्हमित्येवम्**, शब्दाप्रवृत्ते । स-च्छब्दादिव्यपदेशार्हं न भवतीति चेत् । अत्रोत्तरम्–किमत्र क्षूण यत् सच्छब्दादिव्यपदेशार्हं न भवत्येतद्वाच्यम् । यतो न तद्वस्तु, सन्ना-प्यसदिति चेत् क्षूणम् । एतदाशङ्क्याह- **सदसत्तर्हि नियमतः** यद्वस्तु न च सद् नाऽप्यसत् तदित्थम्भूतमेव, एतदपि नैव तत्त्वत इति चेत् यदुत सदसदिति । एतदाशङ्क्याह–**किं तदन्यत्** वस्तु, यतोऽ-तिरिक्त सदसत , तथाविधबुद्धिग्राह्यमिति चेत् तथाविधा अव्यपदेश्या । एतदाशङ्क्याह–**तत्रापि** त्रिकोटीशून्ये, बुद्धिरिति न्यायातीतमेतत् । एतदेवाह- **तथाहीत्यादिना** । तथाहि तद् वस्तु, न सद् नासन् न सद-सत् त्रिकोटीशून्यम्, बुद्धिगोचरश्चेत्यद्भुतमेतत् कर्मशक्त्यभावे विष-यत्वायोगादित्यर्थ । स्वकार्यसत्त्वापेक्षया सदेव तदिन्याशङ्कानिरासार्थ-माह- **स्वकार्यसत्त्वाभ्युपगमे च वस्तुन** , व्यर्थाऽपरयोगकल्पना सद-न्तरयोगकल्पना, नियतरूपादितया च कारणेन,वस्तुधर्माणा स्वपररूप-सत्त्वासत्त्वदोषोऽनिवारितप्रसर एव, धर्मान्यत्वे वस्तुनस्तद्रूपेणाऽस-त्त्वात् । इत्येवम्, यत्किञ्चिदेतत् परोदितम् ॥

**एवं धर्माणामपि वस्तुव्यतिरिक्तत्वात् स्वरूपेण सत्त्वं पररूपेण चासत्त्वमिति धर्मान्तरप्राप्तिः; तत्राऽप्ययमेव न्याय इत्य-निष्ठा । स्यादेतद्, न धर्माणां धर्मान्तरमिष्यते, अपि तु त एव स्वरूपेण सन्ति पररूपेण च न सन्तीति न तद्विलक्षणे सद-सत्त्वे इति । एतदप्यसमीचीनम्, वस्तुन्यपि समानत्वात् । अङ्गी-करणे च धर्माभावप्रसङ्गेनाऽभ्युपगमविरोधात्, तद्भावेऽपि तस्येति संबन्धानुपपत्तेः । समवायभावात् कथमनुपपत्तिः?, इति चेत् । न, तस्याऽसिद्धत्वात् पदार्थान्तरत्वेन समवायिकल्प-त्वादन्यसमवायव्यतिरेकेण तत्संबन्धानुपपत्तेः, अभ्युपगमे च तत्राऽप्ययमेव वृत्तान्त इत्यनवस्था । स्वसमवायिसंबन्धकस्व-**

**भावद्वयाङ्गीकरणे च ततस्तस्य व्यतिरिक्तेतरविकल्पदोषाशनिरनिवारितप्रसरः । स इहप्रत्ययगम्य इति चेत् । न, तस्येह समवायिषु समवाय इति व्यभिचारोपलब्धेः । प्रतिनियतधर्मिधर्मस्वभावस्तत्संबन्ध इति चेत् । न, तत्स्वभावस्यापि धर्मत्वाद् धर्माद्यात्मभूतत्वानुपपत्तितो वाङ्मात्रत्वात्, आत्मभूतत्वे च भेदाभ्युपगमविरोधः ॥**

एव धर्माणामपि प्रस्तुतानाम्, वस्तुव्यतिरिक्तत्वात् कारणात्, स्वरूपेण सत्त्व पररूपेण चाऽसत्त्वमिति कृत्वा धर्मान्तरप्राप्ति, तत्रापि धर्मान्तरे, अयमेव न्याय इत्यनिष्टा । स्यादेतद् न धर्माणा धर्मान्तरमिष्यते, अपि तु त एव धर्मा, स्वरूपेण सन्ति पररूपेण च न सन्तीत्येवम्, न तद्विलक्षणे सदसत्त्वे, अतो न धर्माणा धर्मान्तरप्राप्तिरित्यभिप्राय इति । एतदप्यसमीचीनमशोभनम् । कुत इत्याह– **वस्तुन्यपि समानत्वात्** तथाहि - तदेव स्वरूपेण सत् पररूपेण चाऽसदित्यपि वक्तु शक्यत एव । अङ्गीकरणे चास्य पक्षस्य, धर्मभावप्रसङ्गेन हेतुना, अभ्युपगमविरोधात् । तद्भावेऽपि व्यतिरिक्तधर्माभावेऽपि तस्येतिसबन्धानुपपत्तेस्तस्य वस्तुन एते धर्मा इति सबन्धासिद्धे, वस्त्वन्तरेण भेदाविशेषादित्यर्थ । समवायभावात् कारणान् कथमनुपपत्तिस्तस्येतिसबन्धस्य, इति चेत । एतदाशङ्क्याह– **न, तस्यासिद्धत्वात्** तस्येति समवायस्य । असिद्धत्व च -पदार्थान्तरत्वेन समवायिकल्पत्वात् प्रस्तुतसमवायस्य । तत किमित्याह– **अन्यसमवायव्यतिरेकेण तत्संबन्धानुपपत्तेः** तस्य मूलसमवायस्य समवायिभि सबन्धानुपपत्ते । अभ्युपगमे चान्यसमवायस्य, तत्राप्ययमेव वृत्तान्त -अन्यसमवायाऽऽपत्तिलक्षण इत्यनवस्था, । स हि स्वसबन्धकस्वभाव, समवायिसबन्धकस्वभावश्चेत्यतो न दोष इति पराभिप्राय चेतसि निधायाह— **स्वसमवायीत्यादि** । स्वश्च समवायात्मा, समवायिनौ च धर्मधर्मिणौ, स्वसमवायिनस्तेषा सबन्धक च तत्स्वभावद्वय चेति विग्रहस्तस्याङ्गीकरणे चाभ्युपगमे च । किमित्याह—तत समवायात्, तस्य

स्वसमवायिसबन्धकस्वभावद्वयस्य व्यतिरिक्तेतराविकल्पदोषाशनिर-निवारितप्रसर, तथाहि-- यदि तत् ततो व्यतिरिक्त तस्येति क स-बन्ध ? । अथाव्यतिरिक्तम्, एकत्वमस्याधिकृतस्वभावद्वयस्य, एकस्मात् समवायादव्यतिरिक्तत्वात्, तत्स्वरूपवत्, अनेकत्व वा समवायस्या-ऽधिकृतस्वभावद्वयादव्यतिरिक्तत्वात्, तत्स्वरूपवदेवेति । स इहप्रत्यय-गम्य इति चेत् स समवाय, इहप्रत्ययगम्यो वर्तते, यथोक्तम्--"अयुतसि-द्धानामाधार्याधारभूताना य सबन्ध इहप्रत्ययहेतु समवाय, भवति चायमिहेत्यविगानेन प्रत्यय --इह तन्तुषु पटं इत्यादौ, न चायमनि-मित्त, सदाभावादिप्रसङ्गात्, न च समवायिनिमित्त अतत्परिच्छे-दकत्वात्, अतो यन्निमित्तोऽय स समवाय" इति । एतदाशङ्क्याह-- **न तस्येत्यादि** । न नैतदेवम्, तस्येहप्रत्ययस्य, इह समवायिषु सम-वाय इत्येव व्यभिचारोपलब्धे, तथा च भवत्यत्राऽपीहप्रत्यय, न च तदपरसमवायनिबन्धन, तस्याऽभावात्, विवक्षितसमवायस्य चात्र स-मवायिकल्पत्वात् समवायिबुद्ध्यैव ग्रहणात्, तस्यैव प्रत्ययान्तरनि-मित्तत्वेऽतिप्रसङ्ग इति भावनीयमेतत् । **प्रतिनियतेत्यादि** । प्रति-नियतधर्मिधर्मस्वभाव स एव धर्मी तद्धर्मी तद्धर्मधर्मिस्वभावस्त-एव च धर्मास्तद्धर्मिधर्मस्वभावा इत्येवभूतस्तत्सबन्ध धर्मधर्मिणो सबन्ध इति चेत्। एतदाशङ्क्याह--**नेत्यादि** । न नैतदेवम्, तत्स्वभा-वस्यापि अनन्तरोदितधर्मधर्मिस्वभावस्यापि । किमित्याह--**धर्मत्वात्** कारणात्, धर्माद्यात्मभूतत्वानुपपत्तित, 'अन्ये धर्मा धर्मिण' इत्य-भ्युपगमेन वाङ्मात्रत्वात्, आदिशब्दाद् धर्मिपरिग्रह, आत्मभूतत्वे चा-धिकृतस्वभावस्य धर्मादेरिति प्रक्रम । किमित्याह-- **भेदाभ्युपगम-विरोधः** धर्मधर्मिणोर्भेद इति योऽभ्युपगमस्तद्विरोध, धर्माणा च धर्मान्तरप्राप्तिरित्यस्योपलक्षणमेतत्, एवमप्यभ्युपगमविरोधादिति ।

**अथाऽनन्यत्वं तयोः, तद्व्यवस्थाऽयोगः अन्योन्यात्मकत्वे-नेतरनिराकरणात्, अनिराकरणेऽपि सदसत्त्वयोरेकत्वेन तद् यथा स्वरूपेण सत्, एवं पररूपेणापि स्यादित्याद्युक्तम्,**

असंभविनौ च निराधारौ धर्माविति यत्किञ्चिदेतत् । अथान्यानन्यत्वम्, अतोऽनेकान्तवादाभ्युपगमादेकान्तवादिनः स्वमतविरोधः, इत्यलं प्रसङ्गेन ॥

॥ इति प्रथमः परिच्छेदः ॥

---

अथेत्यादि । अथानन्यत्वं तयोर्धर्मधर्मिणो । अत्राह- तद्व्यवस्थाऽयोगः धर्मिधर्मव्यवस्थाऽयोग । कथमित्याह— अन्योन्यात्मकत्वेन हेतुना, इतरनिराकरणाद् द्वितीयनिराकरणात्, तथाहि-- यदि धर्मिणोऽव्यतिरिक्ता धर्मास्ततो धर्ममात्र ते, तदव्यतिरिक्तत्वात्, तत्स्वरूपवदिति न सन्त्येव धर्मा इतीतरनिराकरणम् । एव धर्मिणोऽपि वाच्यम्--धर्माव्यतिरेकादिति धर्मधर्मिव्यवस्थाऽयोग । अनिराकरणेऽपीतरस्य । किमित्याह-- सदसत्त्वयोरेकत्वेन एकधर्म्यव्यतिरेकद्वारायातेन हेतुना । किमित्याह- तद् वस्तु, यथा स्वरूपेण सदेव पररूपेणापि स्यात् सदसत्त्वयारेकत्वादित्यर्थ, इत्याद्युक्त प्राक् धर्माव्यतिरेकाद् धर्मिण एवासत्त्व भविष्यतीत्यप्याशङ्क्याह--असंभविनौ च निराधारौ धर्मौ सदसल्लक्षणौ, न स्त एवेति यत् किञ्चिदेतत् । अथाऽन्यानन्यत्व धर्मधर्मिणो, अतोऽनेकान्तवादाभ्युपगमात् कारणात्, एकान्तवादिनः स्वमतविरोध इत्यल प्रसङ्गेन ॥

॥ समाप्त सदसद्रूपवस्तुवक्तव्यताऽधिकार ॥



अर्हम्

# अथ द्वितीयः परिच्छेदः ।

यच्चोक्तम्—एतेन नित्यानित्यमपि प्रत्युक्तमवगन्तव्यं विरोधादेवेत्यादि । तदपि न सम्यक्, प्रमाणतस्तथाऽवगमात्, तथाहि—अध्यक्षेण नित्यानित्यमेव तदवगम्यते, अन्यथा तदवगमाभावप्रसङ्गात् । तथा च—यदि तदप्रच्युतानुत्पन्नस्थिरैकस्वभावं सर्वथा नित्यमभ्युपगम्यते, एवं तर्हि तद् विज्ञानजननस्वभावं वा स्यात्, अजननस्वभावं वा ?। यद्याद्यः पक्षः, एवं सति सर्वत्र सर्वदा सर्वेषां तद्विज्ञानप्रसङ्गः, तस्यैकस्वभावत्वात्, न चैतदेवम्, क्वचित् कदाचित् कस्यचिदेव तद्विज्ञानभावात् । न च सर्वथैकस्वभावस्य देशादिकृतो विशेष इति कल्पना युज्यते, तद्भावेऽनित्यत्वप्रसङ्गात् । सहकारिणमपेक्ष्य जनयतीति चेत् । न, एकान्तनित्यस्यापेक्षाऽयोगात्, तथाहि—सहकारिणा तस्य कश्चिद् विशेषः क्रियते, नवा, इति वाच्यम् ?। यदि क्रियते, स किमर्थान्तरभूतः, अनर्थान्तरभूतो वा ? इति। यद्यर्थान्तरभूतः, तस्य किमायातम् ? । स तस्य विशेषकारक इति चेत् । न, अनवस्थाप्रसङ्गात्, तथाहि--स विशेषस्ततो भिन्नः, अभिन्नो वा? इति तदेवावर्तत इत्यनवस्था। अथानर्थान्तरभूतः; स विद्यमानः, अविद्यमानो वा ? । यदि विद्यमानः; कथं क्रियते ?, करणे वाऽनवस्थाप्रसङ्गः, सकृत्करणेऽपि विद्यमानत्वाविशेषेण भूयोभूयः करणमित्यनवस्था । अथाविद्यमानः; व्याहतमेतत्--सतोऽनर्थान्तरभूतोऽविद्यमानश्चेति । करणे वाऽनित्यत्वापत्तिरिति, तथाहि- तस्मिन् क्रियमाणे पदार्थ एव कृतः स्यात्, तदव्यतिरिक्तत्वात् तस्य ॥

अधिकारान्तरमविकृत्याह— यच्चोक्तमित्यादि । यच्चोक्त पूर्वप-

क्षग्रन्थे, एतेन नित्यानित्यमपि प्रतिक्षिप्तमवगन्तव्य विरोधादेवेत्यादि। तदपि न सम्यक्। कुत इत्याह-- **प्रमाणतस्तथाऽवगमात्** तथेति नित्यानित्यप्रकारेणाऽवगमात्। एतदेव भावयति--**तथाहीत्यादिना**। तथाह्यध्यक्षेण नित्यानित्यमेव तद् वस्तु, अवगम्यते, अन्यथैवमनभ्युपगमे, तदवगमाभावप्रसङ्गात्। एतद्भावनायाह--**तथा चेत्यादि**। तथा च यदि तद् वस्तु, अप्रच्युतानुत्पन्नस्थिरैकस्वभावामिति पूर्ववत्, अनेन प्रकारेण सर्वथा नित्यमभ्युपगम्यते, एव तर्हि तद् वस्तु विज्ञानजननस्वभाव वा स्यात्, अजननस्वभाव वा?। किंचात?, यद्याद्य पक्षो विज्ञानजननस्वभावमित्ययम्, एव सति सर्वत्र क्षेत्रे, सर्वदा काले, सर्वेषा प्रमातृणा, तद्विज्ञानप्रसङ्गोऽधिकृतवस्तुविज्ञानप्राप्ति। कुत-इत्याह--**तस्यैकस्वभावत्वात्** क्षेत्रादिभिर्विशेषाऽनाधानादित्यर्थ। न चैतदेव यथोक्तम्। कुत इत्याह--**क्वचित्** क्षेत्रे, कदाचित् काले, कस्यचिदेव प्रमातु, तद्विज्ञानभावात् तस्मिन् वस्तुनि विज्ञानभावात्। प्रकृतमेव समर्थयते--**न चेत्यादिना**। न च सर्वथैकस्वभावस्य वस्तुन, देशादिकृतो विशेष इत्येवभूता, कल्पना युज्यते। कुत इत्याह--**तद्भावे** देशादिकृतविशेषभावे, अनित्यत्वप्रसङ्गाद् न हि प्राक्स्वस्वभावनिवृत्तिमन्तरेण वस्तुनो विशेष। सहकारिणमपेक्ष्यालोकादिक, जनयतीति चेद् वस्तुविज्ञानमिति। अत्राह--**न, एकान्तनित्यस्य** वस्तुन, अपेक्षाऽयोगादेकरूपतयेति भाव। एतद्भावनायैवाह-- **तथाहीत्यादि**। तथाहि सहकारिणा तस्य वस्तुन, कश्चिद् विशेष क्रियते, नवेति वाच्यम्। उभयथापि दोषमाह-- **यदि क्रियते, स किमर्थान्तरभूतोऽनर्थान्तरभूत इति**। अत्राप्युभयथापि दोषमाह-- **यद्यर्थान्तरभूतस्तस्य किमायातं** वस्तुन, तत् तदवस्थमेवेत्यर्थ। स विशेषोऽर्थान्तरभूत, तस्य वस्तुन, विशेषकारक इति चेत्। एतदाशङ्कयाह-- **न, अनवस्थाप्रसङ्गात्**। एनमेवाह-- **तथाहीत्यादिना**। तथाहि स विशेषो मूलविशेषकृत, ततो वस्तुन, भिन्नोऽभिन्नो वा तदेवावर्तत-इत्येवमनेन प्रकारेण, अनवस्था चक्रकानिवृत्तेरिति। अथानर्थान्तरभूत

सहकारिणा क्रियते विशेषो वस्तुन । अत्रापि विकल्पयुगलमाह— **स विद्यमानोऽविद्यमानो वा** । इहापि दोषमाह— **यदि विद्यमानः कथं क्रियते, करणे वाऽनवस्थाप्रसङ्गः** । कथमित्याह—**सकृत्** एकवार, करणेऽपि विद्यमानत्वाविशेषेण हेतुना, भूयोभूय पुन पुन , करणमित्यनवस्था । अथाविद्यमान क्रियते । अत्राह—**व्याहतमेतत् सतो** विद्यमानस्य वस्तुन , अनर्थान्तरभूतोऽविद्यमानश्च विद्यमानोऽव्यतिरिक्तो हि विद्यमान एवेति कृत्वा । करणे वाऽव्यतिरिक्तस्याविद्यमानस्य, अनित्यत्वापत्ति , वस्तुन इति प्रक्रम । एतदेव भावयति— **तथाहीत्यादिना** । तथाहि तस्मिन्नव्यतिरिक्तेऽविद्यमाने विशेषे, क्रियमाणे पदार्थ एव कृत स्यात् तदव्यतिरिक्तत्वात् तस्य विशेषस्य ॥

**अथ मा भूदयं दोषः; न क्रियत इत्याश्रीयते । न तर्हि स तस्य सहकारी, अकिञ्चित्करत्वात्, अकिञ्चित्करत्वेऽपि सहकारित्वेऽतिप्रसङ्गः, तथाहि—यदि कञ्चन विशेषमकुर्वन्नपि स तस्य सहकार्यभ्युपगम्यते, सर्वभावानामेव तत्सहकारित्वप्रसङ्गः, तद्विशेषाकरणेनाविशेषात्, इति व्यर्था सहकारिकल्पना । अथोच्यते—एवंभूत एव तस्य वस्तुनः स्वभावो येन विशेषाकारकमपि प्रतिनियतमेव सहकारिणमपेक्ष्य कार्यं जनयतीति । एतदपि मनोरथमात्रम्, विकल्पानुपपत्तेः, तद्धि यदाऽभीष्टसहकारिसन्निधौ कार्यं जनयति तदाऽस्यानन्तरोदितसहकार्यपेक्षालक्षणः स्वभावो निवर्तते, नवेति वाच्यम् ? । यदि निवर्तते, अनित्यत्वप्रसङ्गः, स्वभावनिवृत्तौ स्वभाविनोऽपि तदव्यतिरेकेण तद्वदेव निवृत्तेः । अथ न निवर्तते, कार्याजननप्रसङ्गः, तत्स्वभावानिवृत्तेः, पूर्ववत्, तथाहि—य एव तस्य कार्याजननकाले स्वभावः, जननकालेऽपि स एव; इति कथं जनयति ?, कथं वा न पूर्वमपि ?; इति चिन्त्यम् ॥**

अथ मा भूदय दोषोऽनन्तरोदित , न क्रियते इत्याश्रीयते सहकारिणा कश्चिद्विशेष । अत्राह—**न तर्हि स तस्य** वस्तुन , **सहकारी** ।

कुत इत्याह-**अकिञ्चित्करत्वात्** कारणात्। एवमभ्युपगमे दोषमाह-**अकिञ्चित्करत्वेऽपि** सति, सहकारित्वेऽभ्युपगम्यमाने। किमित्याह-**अतिप्रसङ्गः**। एनमुपदर्शयन्नाह-**तथाहीत्यादि**, तथाहि यदि कश्चन विशेषमकुर्वन्नपि स पदार्थ आलोकादि, तस्य वस्तुन, सहकार्यभ्युपगम्यते। तत किमित्याह- **सर्वभावानामेव तत्सहकारित्वप्रसङ्गः**। कुत इत्याह- **तद्विशेषाऽकरणेनाविशेषात्** तस्य वस्तुनो विशेषाकरणेनाऽविशेषात् सर्वभावानाम्, इत्येवम्, व्यर्था सहकारिकल्पना। **अथेत्यादि**। अथोच्यते परेण, एवभूत एव तस्य वस्तुन स्वभावो धर्म, येन विशेषाकारकमपि प्रतिनियतमेव सहकारिणमपेक्ष्याऽऽलोकादि, कार्य जनयति विज्ञानादिकमिति। एतदाशङ्क्याह- **एतदपि मनोरथमात्रम्**। कुत इत्याह-**विकल्पानुपपत्तेः**। एनामेवाह- **तद्धीत्यादिना** तद् वस्तु, यस्माद् यदाऽभीष्टसहकारिसन्निधौ कार्य जनयति विज्ञानादि, तदाऽस्य वस्तुन, अनन्तरोदितसहकार्यपेक्षालक्षणोऽकिञ्चित्करसहकार्यपेक्षालक्षण, स्वभावो धर्म, निवर्तते न वेति वाच्यम्?। उभयथापि दोषमाह- **यदि निवर्तते** अधिकृतस्वभाव। तत किमित्याह-**अनित्यत्वप्रसङ्गः**। कुत इत्याह-**स्वभावनिवृत्तौ** सत्या, स्वभाविनोऽपि धर्मिण, तदव्यतिरेकेण स्वभावाभेदेन हेतुना, तद्वदेव स्वभाववदेव, निवृत्ते कारणात्। अथ न निवर्तते स स्वभाव। अत्राह- **कार्याजननप्रसङ्गः**। कथमित्याह- **तत्स्वभावानिवृत्तेः** अकिञ्चित्करसहकार्यपेक्षालक्षणस्वभावानिवृत्ते, पूर्ववदिति दृष्टान्त। एतदेव भावयति-**तथाहीत्यादिना**। तथाहि य एव तस्य वस्तुन, कार्याजननकाले स्वभाव, जननकालेऽपि स एव सर्वदा स्वस्वभावानिवृत्ते, इत्येवम्, कथ जनयति कार्य तदा, कथ वा न पूर्वमपि जनयति स्वभावाभेदादिति भाव, इत्येवम् चिन्त्यम्॥

**तेन सह जननस्वभावत्वात् तद्भावे जनयति, तदभावाच्च न पूर्वमपीति चेत्। न, अविचारितरमणीयत्वात्, तेन सह तज्जननस्वभावत्वस्यापि नित्यत्वे सति सदा तज्जननप्रसङ्गात्,**

अन्यथाऽधिकृतस्वभावस्य नित्यत्वानुपपत्तेः। तथाहि—यदि सदा तेन सह तज्जननस्वभावम्; किं न जनयति ?, अजनयद् वा कथं सदा तत्स्वभावमिति ?। ततश्च यदा तद् भवति तदा तेन सह तज्जननस्वभावम्, न तु सदा; इत्यवश्यमङ्गीकर्तव्यम्, अन्यथा सदा तस्यापि भावापत्तिः, सदा तेन सह तज्जननस्वभावत्वादिति। एवं च स्वभावभेदे कथमेकान्तनित्यता ?; इति चिन्त्यम् ॥

आह—तेन सहकारिणा, सह जननैस्वभावत्वात् कारणात्, तद्भावे सहकारिभावे, जनयति तदा तदभावाच्च सहकार्यभावाच्च, न पूर्वमपि जनयतीति चेत्। एतदाशङ्क्याह—न, अविचारितरमणीयत्वात्। एतदेव दर्शयति— तेनेत्यादिना तेन सहकारिणा, सह तज्जननस्वभावत्वस्यापि कार्यजननस्वभावत्वस्यापि, नित्यत्वे सति, सदा तज्जननप्रसङ्गात् कार्यजननप्रसङ्गात्। विपक्षे बाधामाह—अन्यथेत्यादिना। अन्यथैवमनभ्युपगमे, अधिकृतस्वभावस्य तेन सह तज्जननस्वभावस्य, नित्यत्वानुपपत्ते। एतदेव भावयति— तथाहीत्यादिना। तथाहि यदि सदा तेन सहकारिणा, सह तज्जननस्वभाव कार्यजननस्वभावम्, वस्त्विति प्रक्रम, किं न जनयति कार्यम्, अजनयद्वा कथ सदा तत्स्वभाव तेन सह तज्जननस्वभावमिति, नैव। ततश्चेत्यादि। ततश्चैव च सति, यदा तद्भवति कार्यम्, तदा तेन सहकारिणा, सह तज्जननस्वभाव कार्यजननस्वभाव वस्तु, न तु सदेत्यवश्यमङ्गीकर्तव्य परेण। अन्यथैवमनभ्युपगमे, सदा तस्यापि भावापत्ते सहकारिण। कुत— इत्याह—सदा तेन सहकारिणा, सह तज्जननस्वभावत्वाद् विवक्षितकार्यजननस्वभावत्वाद् वस्तुन इति। एव च स्वभावभेदे सति वस्तुन, कथमेकान्तनित्यता ? इत्येतच्चिन्त्य नैवेत्यर्थ ॥

स्यादेतत्, न तत्र स्वभावभेदः, आकालमपि तस्य तथैकस्वभावत्वात्, तथाहि— आकालमविचलितस्वभावमेवेदमित्थंविधम्, येन तत एव तत्तत्सहकारिसन्निधावेव तदैव

तदैव तस्यैव तस्यैवाऽवस्थासंवेदनादेर्भावः। तथा च सति तदनिवृत्तावपि न पूर्ववत् तदभावः, तस्य सहकारिणस्तदैव भावात् । न च पूर्वमपि भावः, तस्यैवाभावात् । न च तदुदयेऽपि तन्निवृत्तिः, तथास्वभावत्वात् । न च पुनस्तस्यैव करणम्, तथास्वभावत्वादेव। किमेतदेवम्?, अचिन्त्योऽपर्यनुयोगार्हः स्वभाव इति ॥

**स्यादेतदित्यादि**। स्यादेतदथैव मन्यसे, न तत्र वस्तुनि, स्वभावभेद । कुत इत्याह- **आकालमपि** यावदपि कालस्तावदित्यर्थ, तस्य वस्तुन, तथा चित्रसहकारियोगानेककार्यसाधकत्वेन, एकस्वभावत्वात् । एतदेव भावयति- **तथाहीत्यादिना**। तथाहि आकाल यावदपि काल, अविचलितस्वभावमेवाऽप्रच्युतानुत्पन्नस्थिरैकस्वभावमेव, इद वस्तु, इत्थविधमेवप्रकारम्, येन ततएव वस्तुन, तत्तत्सहकारिसन्निधावेव सति, तदैव तदैव विशिष्टे काले, तस्यैव तस्यैव विशिष्टस्य कार्यस्य, अवस्थासवेदनादे स्वारूपिकस्य निमित्तभावजन्यस्य च, भाव इत्युत्पाद । तथा च सति, किमित्याह-**तदनिवृत्तावपि** अनन्तरोदितस्वभावानिवृत्तावपि, न पूर्ववत् तदभाव कार्याभाव । कुत इत्याह-**तस्य** सहकारिणो विशिष्टस्य, तदैव भावात् कारणात्, न च पूर्वमपि भाव, प्रक्रमात् कार्यस्य, तस्यैव सहकारिण, अभावात् पूर्वमस्य चाऽनवस्थानात् तेन न कादाचित्कत्वविरोध । न च तदुदयेऽप्यधिकृतकार्योत्पादेऽपि, तन्निवृत्तिरनन्तरोदितस्वभावनिवृत्ति । कुत इत्याह- **तथास्वभावत्वात्** तथा तेन प्रकारेण कालभवनलक्षणेन आत्मसत्ताया स्थितेरित्यर्थ । न च पुनस्तस्यैव कृतकार्यस्य, करण तथास्वभावत्वादेव-एवविध एवाऽसाविति। किमेतदनन्तरोदितम्, एव स्वतन्त्रराजक्रीडाप्रख्यम्?। एतदाशङ्क्याह- **अचिन्त्यो**ऽचिन्तनीयो योगिज्ञानवत्, अपर्यनुपयोगार्हो न पर्यनुयोगमर्हत्यग्न्यादेरौष्ण्यादिवत् स्वभाव इति किमत्र कुर्म ? ॥

अहो ! दुरन्तः स्वदर्शनानुरागः, एवमपि मिथो विरुद्धं भाषयति– तदुदयेऽपि तन्निबन्धनस्य सतो न तस्य निवृत्तिः, अविकलतथात्वे च न पुनस्तस्यैव करणमिति व्याहतम् । यद्य-निवृत्तिः कथमकरणम् ?। अकरणं चेत्, कथमनिवृत्तिः ?। यदैव तत्कृतं न च भूयः करिष्यति तदेव तदेव तत्तत्करणस्वभावो जरयेव यौवनं तदकरणस्वभावेनापनीतः, अन्यथा तद्भावेन बलात् तत्फलप्रसङ्गः, न ह्यग्निरनपगते दहनस्वभावे न दहति, स्वभावापगमे च नियतमनित्यता । तथाप्येकदाह्यदहने तद-दहनाद् दाह्यान्तरदहनाच्चाऽदोष इति चेत् । न, सर्वथा स्वभाव-भेदमन्तरेणोक्तानुपपत्तेः । न च येनैव स्वभावेनैकं दाह्यं दहति तेनैव दाह्यान्तरम्, तस्य तथा तदनियतत्वे दाह्यान्तरवत् तदा तददहनप्रसङ्गात् । नियतत्वे च तद्दहनादहनयोरन्यत्र तद-सिद्धेः स्थितः कथञ्चित्स्वभावभेदः, इत्याकालमपि तस्य तथै-कस्वभावत्वमनेककार्यभावादेर्न सन्न्यायसङ्गतमिति सूक्ष्मधिया भावनीयम् । इत्येवं तावदेकान्तनित्यपक्षे विज्ञानादिकार्यायो-गात् तदवगमाभाव इति ॥

एतदाशङ्क्याह–अहो ! दुरन्तः स्वदर्शनानुराग इति पूर्व-वत्, एवमपि यथोक्तम्, मिथ परस्परविरुद्ध भाषयत्यसगतमुल्लाप-यति । कथमेतद् विरुद्धमित्याह– तदुदयेऽपीत्यादि तदुदयेऽपि तस्मा-त् स्वभावादुत्पादेऽपि, विवक्षितकार्यस्येति प्रक्रम, तन्निबन्धनस्य विव-क्षितकार्यनिबन्धनस्य, सतो भवत, न तस्य स्वभावस्य, निवृत्ति । अविकलतथात्वे च तत्स्वभावस्य, न पुनस्तस्यैव विवक्षितकार्यस्य, करणमिति व्याहत तत्तादवस्थ्ये तदकरणविरोधात् । तथा चाह– यद्यनिवृत्तिरित्यादि । यद्यनिवृत्तिर्विवक्षितकार्यकरणस्वभावस्य, कथमकरण विवक्षितकार्यस्य, अकरण चेद् विवक्षितकार्यस्य, कथ-मनिवृत्तिर्विवक्षितकार्यकरणस्वभावस्य । एतद्भावनायैवाह– यदैवे-त्यादि । यदैव तत् कृत विवक्षितकार्यम्, न च भूय पुन करिष्यति

तदेव तदैव। किमित्याह– **तत्तत्करणस्वभाव इति** तस्य वस्तुनस्तत्करणस्वभावा विवक्षितकार्यकरणात्मभाव, जरयेव यौवनमिति दृष्टान्त, तदकरणस्वभावेन विवक्षितकार्याकरणात्मभावलक्षणेन, अपनीतस्तिरस्कृत । इत्थ चैतदङ्गीकर्त्तव्यमित्याह– **अन्यथेत्यादि।** अन्यथैवमनभ्युपगमे, तद्भावेन तत्तत्करणस्वभावभावेन, बलात् सामर्थ्यात्, तत्फलप्रसङ्गो विवक्षितकार्यप्रसङ्ग । अमुमेवार्थ स्थूरोक्त्या निदर्शनान्तरेणाह–**न हीत्यादिना** । न ह्यग्निरनपगते दहनस्वभावे नैश्चयिके, न दहति किन्तु दहत्येव नैश्चयिकस्य दहनस्वभावस्यैवमात्मकत्वात् । स्वभावापगमे च विवक्षितकार्योदये सत्यभ्युपगम्यमाने, नियतमनित्यताऽविकृतवस्तुन, अतादवस्थ्यस्यैवाऽनित्यत्वादिति। निदर्शनमधिकृत्याह– **तथापीत्यादि** । तथाप्येवमपि, एकदाह्यदहने सत्यग्ने, तददहनाद् दग्धत्वेनैव, दाह्यान्तरदहनाच्च तददग्धत्वेन, अदोषो न ह्यग्निरनपगते दहनस्वभावे न दहतीत्यादि, इत्येवम्, चेद् मन्यसे। एतदाशङ्क्याह–**नेत्यादि** । न नैतदेवम् । कुत इत्याह– **सर्वथा** एकान्तेन, स्वभावभेदमन्तरेण, तदेकस्वभावत्व एवेत्यर्थ, उक्तानुपपत्तेरेकदाह्यदहने तददहन दाह्यान्तरदहन चेत्युक्तम्, न चैतद् द्वयमेकस्वभावादुपपद्यते, तददहनवद् दाह्यान्तरदहनायोगाद्, विपर्ययो वा हेत्वभेदादिति सूक्ष्मधिया भावनीयम् । दोषान्तरमाह–**न चेत्यादिना।** न च येनैव स्वभावेनैक दाह्य दहति, अग्निरिति प्रक्रम । तेनैव दाह्यान्तरमन्यत्। कुत इत्याह–**तस्य** स्वभावस्य, तथा तेन दहनादहनप्रकारेण, तदनियतत्वे तयोर्दाह्ययोरनियतत्वे, दहनादहन प्रति। किमित्याह– **दाह्यान्तरवत्** यन्न दहति तद्वत्, तदा तस्मिन् काले, तददहनप्रसङ्गात् यद् दहति तदहनप्रसङ्गात्। प्रसङ्गश्च तदनियतत्वाविशेषेण उभयदहनस्वभावोऽप्यसौ तद् दहनादहन प्रत्यनियत इत्येक न दहति, तदेतदनियतत्व यदपि दहति तत्राप्यविशिष्टमेवेति तददहनप्रसङ्ग स्पष्ट । नियतत्वे च तस्य वस्तुस्वभावस्याभ्युपगम्यमाने। केत्याह–**तदहनादहनयोः** तयोर्दाह्ययोर्ये दह-

कूप स्यादुदपानोऽन्धु प्रहि

कौति प्रतिशब्देन कूप पुस्त्रीलिङ्ग "युसुकु-" ॥ (उणा-२९७)॥ इति प ऊत्व च, कुत्सिता कोर्वा आपोऽत्रेति वा, पृषोदरादित्वात् ॥१॥ उदक पीयतेऽस्मिन् उदपान पुक्लीबलिङ्ग "नाम्न्युत्तरपदस्य च" ॥ ३ । २ । १०७ ॥ इत्युदादेश ॥ २ ॥ अन्वयत्यन्धु "भृमृतृ-" ॥ ( उणा- ७१६ ) ॥ इत्यु ॥ ३ ॥ प्रहरति प्रहि "नीवीप्रहृभ्यो डित्" ॥ ( उणा- ६१६ ) ॥ इति इ , पुलिङ्गावेतौ ॥ ४ ॥

नेमी तु तन्त्रिका ॥ १५७ ॥

नीयते जलमनया नेमि स्त्रीलिङ्ग ॥ १ ॥ तस्य कूपस्यान्ते रज्ज्वादिधारणार्थ त्र्यस्र दारु त्रिका तान्त्रिका ॥ २ ॥ ॥ १५७ ॥

नान्दीमुखो नान्दीपटो वीनाहो मुखबन्धने ।

नान्द्या इव मुखमस्य नान्दीमुख ॥ १ ॥ नान्दीव पटति नान्दीपट ॥ २ ॥ कूपस्योर्ध्वे इष्टकाभिविनह्यते वीनाह पुक्लीबलिङ्ग , यद्वैजयन्ती- 'वीनाहमस्त्रियाम्' । "घञ्युपसर्गस्य-" ॥ ३ । २ । ८६ ॥ इति दीघ ॥ ३ ॥ कूपस्य मुख बध्यतेऽनेन मुखबन्धन, तत्र ॥

आहावस्तु निपान स्यादुपकूपे

आहूयन्ते पशव पानाय अस्मिन्नित्याहाव "आहावो निपानम्"॥ ५ । ३ । ४४॥ इत्यलि निपात्यते ॥ १ ॥ नितरा पिबन्त्यत्र निपान पुक्लीबलिङ्ग । कूपस्य समीपे शिलादिबद्ध पशुपानार्थ कूपोद्धृताम्बुस्थानम्, तत्र ॥ २ ॥

अथ दीर्घिका ॥ १५८ ॥

वापी स्यात्

दीर्घैव दीर्घिका ॥ १ ॥ ॥ १५८ ॥ उप्यतेऽस्या पद्मादि वापि "कमिवमि-" ॥ ( उणा-६१८ ) ॥ इति णिदि , ङ्या वापी ॥ २ ॥

क्षुद्रकूपे तु चुरी चुण्डी च चूतक ।

चोरति चुरि "नाम्युपान्त्य-"॥५ । १ । ५४ ॥ इति क , ङ्या चुरी ॥१॥ चमन्त्याचमन्त्यस्या चुण्डि ' चमेरुन्चात " ( उणा- ६३२ ) ॥ इति डि , ङ्या चुण्डी ॥ २ ॥ श्चोतति चूतक "काचक-" ॥ ( उणा- ३३ )॥ इत्यके निपात्यते ॥ ३ ॥

उद्घाटक घटीयन्त्र

उद्घाटयति प्रकाशयत्यम्भ उद्घाटकम्, उद्घाटनमपि । ऊर्ध्व हन्यतेऽनेनेत्युद्घाट

नमिति कौटिल्य ॥ १ ॥ घटीना यन्त्र घट्यो यन्त्र्यन्तेऽत्रेति वा घटीयन्त्र माला-ख्य येन कूपादेर्जलमूर्ध्वं वाह्यते ॥ २ ॥

पादावर्तोऽरघट्टक ॥ १५९ ॥

पादाभ्यामावर्त्यते भ्रम्यते पादावर्त ॥ १ ॥ अरान् घट्टयति, अरा घट्टयन्तेऽत्रेति वा अरघट्ट , केऽरघट्टक ॥ २ ॥ १५९ ॥

अखात तु देवखात

न खातमखात नागादिकुण्डमकृत्रिमम् ॥ १ ॥ देवैरिव खात देवखातम् ॥२॥

पुष्करिण्या तु खातकम् ।

पुष्करमस्त्यस्या पुष्करिणी तडागिका "पुष्करादेर्देशे" ॥ ७ । २ । ७० ॥ इतीन्, तत्र ॥ १ ॥ खन्यते खत हूख खात खातकम् ॥ २ ॥

पद्माकरस्तडाग स्यात् कासार सरसी सर ॥ १६० ॥

पद्मानामाकर पद्माकर , योग्यत्वात् ॥ १ ॥ ताड्यते जलमस्मिस्तडाग । तडेराग तडाग इत्यपर । तटान्यकति तटाक इत्यपरे । 'कासृड् शब्दकुत्सायाम्' इति दन्त्यान्त , कासन्ते बकादयोऽत्र कासार पुक्लीबलिङ्गौ "अगयङ्गि–" ॥ (उणा– ४०५) ॥ इत्यार कमासरत्यत्रेति वा ॥ २ ॥३॥ सरतिर्जलमत्र "अस्"॥ (उणा–९५२) इत्यसि स्त्रीलिङ्गे गौरादित्वात् ङ्या सरसी, क्लीबे तु सर । वाचस्पतिस्तु–'कासारस्त्वल्पसरासि सरसी तु महासर ' इति विशेषमाह ॥४॥५॥१६०॥

वेशन्त पल्वलोऽल्प

विशान्ति मज्जन्त्यस्मिन् वेशन्त "जॄविशिभ्याम्" ॥ ( उणा– २१९ ) ॥ इत्यन्त ॥ १ ॥ 'पल गतौ' पल्यते पल्वल पुक्लीबलिङ्ग "शमिकमि–" ॥ ( उणा– ४९९ ) ॥ इति वल । तल्लो देश्या सस्कृतेऽपि ॥ २ ॥

परिखा खेयखातिके ।

परिखन्यते परिखा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड ॥ १ ॥ खन्यते खेयम् "खेयमृषोद्ये" ॥ ५ । १ । ३८ ॥ इति साधु ॥ २ ॥ खातैव खातिका दुर्गवेष्टनहेतु ॥ ३ ॥

स्यादालवालमावालमावाप स्थानक च स ॥ १६१ ॥

आलूयते खन्यते आलवाल पुक्लीबलिङ्ग "चात्वाल–" ॥ ( उणा– ४८० ) ॥ इत्याले निपात्यते ॥ १ ॥ आवलते बहिर्निर्गमादम्भोऽत्र आवाल क्लीबलिङ्ग । व्याडिस्तु–"आवालो जलपिण्डिल " इति पुलिङ्गमाह ॥ २ ॥ आ उप्यतेऽम्भोऽस्मिन्नावाप ॥३॥ वृक्षसेकाऽर्थ द्रवतोऽम्भस स्थान स्थानकम्, यदाहु – आलवाल विदुर्धीरा धारण द्रवतोऽम्भस ॥ ४ ॥ १६१ ॥

आधारस्त्वम्भसा बन्ध

आध्रियन्तेऽम्भासि अस्मिन्नाधार क्षेत्रादिसेकार्थं यत्राम्भ सचीयते सोऽम्भसा बन्ध ॥ १ ॥

निर्झरस्तु झर सरि ।

उत्स स्रव प्रस्रवण

निर्झीर्यति झीर्यति च जलमत्र निर्झर , झर ॥१॥२॥ सरति सरि स्त्रीलिङ्ग "स्वरे+य इ" ॥ (उणा–६०६) ॥ ३ ॥ उनत्ति उत्स "ऋजिरिषि-" ॥ (उणा–५६७)॥ इति कित् स , पुस्ययम् । वाचस्पतिस्तु 'सर्भर स्त्री निर्झरो झर उत्सस्त्वस्त्री' इति क्लीबेऽप्याह ॥ ४ ॥ स्रवति स्रव ॥ ५ ॥ प्रस्रवन्त्यनेन गिरय प्रस्रवणम् ॥६॥

जलाधारा जलाशया ॥ १६२ ॥

जलानामाधारा जलाधारा सामान्येन वाप्यादय ॥ १ ॥ जलानामाशयो हृदयमेषा जलाशया , जलमाशेते एषु वा ॥ २ ॥ १६२ ॥

॥ समाप्तोऽयमप्काय ॥

तेज कायमाह—

वह्निर्बृहद्भानु-हिरण्यरेतसौ
धनञ्जयो हव्यहविर्हुताशन ।
कृपीटयोनिर्दमुना विरोचना-
ऽऽशुशुक्षणी छागरथस्तनूनपात् ॥ १६३ ॥
कुशानु वैश्वानर-वीतिहोत्रा
वृषाकपि पावक-चित्रभानू ।
अप्पित्त-धूमध्वज-कृष्णवर्त्मा-
ऽर्चिष्मत्-शमीगर्भ-तमोघ्न-शुक्रा ॥ १६४ ॥
शोचिष्केश शुचि-हुतवहो षर्बुधा सप्तमन्त्र-
ज्वालाजिह्वो ज्वलन-शिखिनौ जागृविर्जातवेदा ।
बर्हि शुष्मा-ऽनिलसख-वसू रोहिताश्वा-ऽऽश्रयाशौ
बर्हिर्ज्योतिर्दहन-बहुलौ हव्यवाहोऽनलोऽग्नि ॥ १६५ ॥
विभावसु सप्तो-दर्चिच

वहति तेजो वह्नि "वीयुसुवह्यगिभ्य –" ॥ ( उणा–६७७ ) ॥ इति नि

॥ १ ॥ बृहन्तो भानवो रश्मयोऽस्य बृहद्भानु ॥ २ ॥ हिरण्य रेतोऽस्य हिरण्य रेता , यत् स्मृति – "अग्नेरपत्य प्रथम सुवर्णम्" इति ॥३॥ धन जयति धनञ्जय ॥ ४ ॥ हव्य हविर्हुत चाऽश्नाति हव्याशन , हविरशन , हुताशन , नन्द्या दित्वादन , यौगिकत्वाद् हव्यभुग् इत्यादय ॥ ५ ॥ ६ ॥ ७ ॥ कृपीटस्याम्भसो योनिर्धूमजत्वाद् मेघाना, कृपीटयोन । 'कृपीट योनिरस्य' इत्येके, यदाहु –"अद्भ्यो ऽग्निर्ब्रह्मण क्षत्रमश्मभ्यो लोहमुत्थितम्" ॥८॥ दाम्यति दमुना , दमेरुनसूनसौ, दमूना अपि ॥ ९ ॥ विरोचते विरोचन ॥ १० ॥ आशोष्टुमिच्छति आशुशुक्षणि " आङ कृहशुषे सन " ॥ ( उणा–६४३ ) ॥ इत्यणौ साधु ॥ ११ ॥ छागो रथोऽस्य च्छागरथ ॥१२॥ तनू न पातयति तनूनपात्, देहधर्तृत्वात् नखादित्वात् साधु ॥ १३ ॥ ॥ १६३ ॥ कृश्यति दाह्याभावे कृशानु " कृशेरानुक् " ॥ ( उणा–७९४ ) ॥ १४ ॥ विश्वानरस्यापत्य वैश्वानर , विदादित्वादञ् ॥ १५ ॥ वीतयाऽश्वा होत्र हव्यमस्य वीतिहोत्र ॥ १६ ॥ वृषेण वर्मेण अकति वृषाकपि , वृषेण तेजसा आकम्पते वा ॥ १७ ॥ पुनाति पावक ॥१८॥ चित्रा नाना भानव कान्तयोऽस्य चित्रभानु ॥ १९ ॥ अपा पित्त सारमपित्तम् ॥ २० ॥ धूमो ध्वजो- ऽस्य धूमध्वज ॥ २१ ॥ कृष्णो धूमो वर्त्माऽस्य कृष्णवर्त्मा ॥ २२ ॥ अर्चीषि विद्यन्तेऽस्यार्चिष्मान् ॥ २३ ॥ शम्या गर्भ शमीगर्भ , यत् कालिदास –"शमी- मिवाभ्यन्तरलीनपावकाम्" इति ॥२४॥ तमो हन्ति तमोघ्न ॥ २५ ॥ शुक्र तेजो- ऽस्त्यस्य शुक्र , अभ्रादित्वाद ॥ २६ ॥ १६४ ॥ शोचीषि ज्वाला केशा अस्य शोचिष्केश ॥ २७ ॥ शुचि , शोधकत्वात् ॥ २८ ॥ हुत वहति हुतवह , लिहा दित्वादच् ॥ २९ ॥ उषसि रात्रौ बुध्यते उषर्बुध "वाऽहर्पत्यादय " ॥ १ । ३ । ५८ ॥ इति साधु ॥ ३० ॥ सप्त मन्त्र ज्वालशब्देभ्य परो जिह्व सप्त- जिह्वा अस्य सप्तजिह्व , यदाहु —

"भवति हिरण्या कनका रक्ताकृष्णा वसुप्रभा कन्या ।
रक्ता बहुरूपेति सप्त सप्तार्चिषा जिह्वा ॥ १ ॥"

मन्त्र एव जिह्वा अस्य मन्त्रजिह्व , ज्वाला जिह्वाऽस्य ज्वालाजिह्व ॥३१॥३२॥ ॥ ३३ ॥ ज्वलति इत्येवशीलो ज्वलन 'भूषाक्रोधार्थ–" ॥ ५ । २ । ४२ ॥ इत्यन ॥ ३४ ॥ शिखा सन्त्यस्य शिखी ॥ ३५ ॥ जागर्त्ति वायुना जागृवि , "जॄशॄस्तॄ–" ॥ ( उणा– ७०५ ) ॥ इति टिद् वि ॥ ३६ ॥ जाते विद्यते जातवेदा "अस" ॥(उणा–९५२)॥ इत्यस् , जाता वेदा अस्मादिति वा पृषोदरादि त्वात् ॥३७॥ बर्हिर्दर्भ शुष्म बलमस्य बर्हि शुष्मा । बर्हते वर्धते बर्हिरिरि व्यस्तम्, यथा 'बर्हिर्मुखा देवा' शुष्यत्यनेन शुष्मा यथा–'शुष्मणि प्रणयनाभिसस्कृते' इति बर्हिरुत्क इत्यमरमाला, यथा 'दशा बर्हिणो बर्हिरुत्क ' इति ॥३८॥ अनिल सखाऽस्य अनिलसखा ॥ ३९ ॥ वसन्ति देवा अस्मिन् वसु ॥ ४० ॥ रोहिताख्यो मृगोऽश्वो

वाहनमस्य रोहिताश्व ॥ ४१ ॥ आश्रयमात्मस्थानमश्नाति आश्रयाश आश्रय-मावारमश्नात्याश्रयाश इत्येके ॥ ४२ ॥ बर्हिषो दर्भा ज्योतिरस्य बर्हिर्ज्योति ॥ ४३ ॥ दहति दहन ॥ ४४ ॥ बहते वर्धते बहुल "स्थावाङ्कि–" ॥ ( उणा– ४८६ ) ॥ इत्युलो नलुक् च ॥ ४५ ॥ हव्य वहात हव्यवाह ॥ ४६ ॥ अनित्यनेन लोक इत्यनल "मृदिकन्दि–" ॥ ( उणा– ४६५ ) ॥ इत्यल ॥ ४७ ॥ अगत्यूर्ध्व याति अग्नि "वीयु–" ॥ ( उणा– ६७७ ) ॥ इति नि ॥ ४८ ॥ ॥ १६५ ॥ विभव वसु वनमस्य विभावसु ॥ ४९ ॥ सप्त ऊर्ध्वाश्च अर्चिषोऽस्य सप्तार्चि, उदर्चि ॥५०॥५१॥ एते पुलिङ्गा । अप्पित्त नपुसकम् ।

शेषश्चात्र–

अग्नो वमिद् दीप्र समन्तभुक् ।
पर्परीक पविघासि पृथुघसुरिराशिर ॥
जुहुराण पृदाकुश्च कृपाकुर्हवना हवि ।
घृतार्चिर्नाचिकेतश्च प्रष्टो वञ्चतिरञ्चति ॥
भुजिभरथपर्योचा स्वनि पवनवाहन ॥

स्वाहाऽग्नायी प्रियाऽस्य च ।

अस्य वह्ने प्रिया, सुष्ठु आहूयन्ते देवा अनया स्वाहा, पृषोदरादित्वात्, सुष्ठु आह ब्रूते देवान् ऋत्विगनयेति वा, स्वाहेत्यव्ययमपि ॥ १ ॥ अग्नेर्भार्याऽग्नाया "पूतक्रतुवृषाकप्यग्नि –" ॥ २ । ४ । ६० ॥ इति ङी, ऐकारश्चान्तस्य ॥ २ ॥

और्व संवर्तकोऽब्ध्यग्निर्वाडवो वडवामुख ॥ १६६ ॥

ऊर्वस्यापत्यमौर्व, विदादित्वादञ्, दधीचिसूनो पिप्पलादस्य उरूद्भवत्वादिति वा । वरुणभयान्मात्रा ऊरौगोपितत्वादित्येके ॥ १ ॥ संवर्तयति संवर्तक ॥ २ ॥ अब्धेरग्निरब्ध्यग्नि ॥ ३ ॥ वडवाया अपत्य वाडव "वाडवेयो वृषे" ॥ ६ । १ । ८५ ॥ इत्यत्र नियमादेयण् न भवति ॥ ४ ॥ वडवाया इव मुखमस्य वडवामुख ॥ ५ ॥ १६६ ॥

दवो दावो वनवह्नि

दुनोति वन्यान् दव, अच्, "वा ज्वलादि" ॥ ५ । १ । ६२ ॥ इति णे दाव ॥ २ ॥ वनस्य वह्निर्वनवह्नि ॥ ३ ॥

मेघवह्निरिरम्मद ।

मेघस्य वह्निर्मेघवह्नि ॥ १ ॥ इरया जलेन माद्यतीरम्मद "इरम्मद" ॥ ५ । १ । १२७ ॥ इति खशि निपात्यते ॥ २ ॥

छागणस्तु करीषाग्नि

छगणस्याय छागण ॥ १ ॥ करीषस्याग्नि करीषाग्नि ॥ २ ॥

कुकूलस्तु तुषानल ॥ १६७ ॥

कूयते कुकूल पुक्लीबलिङ्ग "दुकुलकुकूल" ॥ ( उणा- ४९१ ) ॥ इति साधु ॥ १ ॥ तुषाणामनलस्तुषानल ॥ २ ॥ १६७ ॥

सताप सज्वर

सन्तापयति सन्ताप ॥ १ ॥ सज्वरयति सज्वर ॥ २ ॥

बाष्प ऊष्मा

बाधते बाष्प पुक्लाबलिङ्ग "शादिबाभ्रि" ॥ ( उणा-२९९) ॥ इति प, षत्व च ॥ १ ॥ ऊषति रुजत्यूष्मा पुलिङ्ग "मन्" ॥ ( उणा- ९११ ) ॥ इति मन् ॥ २ ॥

जिह्वा स्युरर्चिष ।

अग्नेरर्चिष , लेढि हव्यमाभिजिह्वा ॥ १ ॥

हेति कीला शिखा ज्वालार्चि

हिनोत्यनया हेति "सातेहेति-" ॥ ५ । ३ । ९४ ॥ इति क्तौ निपात्यते ॥ १ ॥ कीलति कीला पुस्त्रीलिङ्ग ॥ २ ॥ श्यति शीखा ॥ ३ ॥ ज्वलति ज्वाला पुस्त्रीलिङ्ग , ज्वलादित्वात् ण ॥ ४ ॥ अर्च्यतेऽर्चि स्त्रीक्लीबलिङ्ग 'रुच्यर्चि-" ॥ ( उणा- ९८९ ) ॥ इतीस् ॥ ५ ॥

उलक्का महत्यसौ ॥ १६८ ॥

असौ ज्वाला महती उलक्कायति, ज्वलतीति वा "निष्कतुरुष्क" ॥ ( उणा- २६ ) ॥ इति के निपात्यते ॥ १ ॥ ॥ १६८ ॥

स्फुलिङ्गोऽग्निकण

स्फुलति साचिनोति स्फुलिङ्ग , त्रिलिङ्ग "स्फुलिकलि-" ॥ (उणा-१०२) ॥ इतीङ्गक् । जातावपि स्त्रिया न डी, कन्द्रावत् ॥ १ ॥

अलातज्वालोल्का

अलातस्य ज्वाला अलातज्वाला 'उल दाहे' सौत्रस्य, ज्वलतेर्वा "निष्क-तुरुष्क-" ॥ ( उणा- २६ ) ॥ इति के निपातनादुल्का ॥ १ ॥

अलातमुल्मुकम् ।

अलति दीप्त्या मण्डयत्यलात "कृृकलि-" ॥ ( उणा- २०९ ) ॥ इत्यातक् ॥ १ ॥ ज्वलत्युल्मुक "कञ्चुक-" ॥ ( उणा- ५७ ) ॥ इत्युके निपात्यते ॥२॥

धूम स्याद्वायुवाहोऽग्निवाहो दहनकेतनम् ॥ १६९ ॥
अम्भःसूः करमालश्च स्तरीर्जीमूतवाह्यपि ।

धुनाति धूमः "विलिभिलि–" ॥ ( उणा– ३४० ) ॥ इति किद् मः ॥ १ ॥ वायुना उह्यते वाह्यते वायुवाहः ॥२॥ अग्निना उह्यतेऽग्निवाहः ॥३॥ दहनस्य केतनं ध्वजो दहनकेतनम् ॥ ४ ॥ १६९ ॥ अम्भः सूते धूमजत्वाद् मेघानामम्भःसूः ॥ ५ ॥ कार्यते वायुना करमालः "चात्वाल–" ॥ ( उणा– ४८० ) ॥ इत्याले निपात्यते ॥ ६ ॥ स्तृणाति खं स्तरीः स्त्रीलिङ्गः "तृस्तृतन्द्रि–" ॥ ( उणा– ७११ ) ॥ इति ईः ॥ ७ ॥ जीमूतं वहति जीमूतवाही ॥ ८ ॥

तडिदैरवती विद्युच्चला शम्पाऽचिरप्रभा ॥ १७० ॥
आकालिकी शतह्रदा चञ्चला चपलाऽशनिः ।
सौदामनी क्षणिका च ह्रादिनी जलवालिका ॥ १७१ ॥

ताडयति तडित् "हृसृरुहि" ॥ ( उणा–" ८८७ ) ॥ इतीत्, स्त्रीलिङ्गोऽयम् ॥१॥ ऐरावतोऽभ्रगो गजस्तस्य स्त्री ऐरावती, इरावति मेघे समुद्रे वा भवेति वा ॥२॥ विद्योतते विद्युत् स्त्रीलिङ्गः ॥ ३ ॥ चलति चला ॥ ४ ॥ शाम्यति शम्पा "भापा-चणि–" ॥ ( उणा– २९६ ) ॥ इति पः, शं पिबतीति वा । दन्त्यादिरयमिति प्राच्याः स पिबति नायनं तेज इति व्याख्यन् ॥ ५ ॥ न चिरं प्रभाऽस्य अचिरप्रभा, क्षणप्रभाऽपि ॥ ६ ॥ १७० ॥ आकालमुत्पत्तिकालं यावद् भवति आकालिकी क्षणिकत्वं तः " आकालिकमिकश्चाद्यन्ते"। ६ । ४ । १२८ ॥ इति इकण् ॥ ७ ॥ शतह्रदोऽब्धिरस्त्यस्याः शतह्रदा वाडवज्योतिष्ट्वात् अभ्रादित्वाद , शतधा ह्रादते वा पृषोदरादित्वात् ह्रस्वः ॥ ८ ॥ चञ्चला, चपला, अस्थैर्यात् ॥ ९ ॥ ॥ १० ॥ अश्नुतेऽशनिः पुंस्त्रीलिङ्गः "सदिवृनि–" ॥ ( उणा– ६८० ) ॥ इत्यनिः ॥ ११ ॥ सुदाम्ना पर्वतेन एकदिक् सौदामनी "टस्तुल्यदिशि" ॥ ६ । ३ । २१० ॥ इत्यण् ॥ १२ ॥ क्षणाऽस्त्यस्या क्षणिका ॥ १३ ॥ ह्रादतेऽवश्यं ह्रादिनी ॥ १४ ॥ जलेन वलति प्राणिति जलवालिका ॥ १५ ॥ १७१ ॥

॥ समाप्तोऽयं तेजःकायः ॥

वायुकायमाह—

वायुः समीर-समिरौ पवना-ऽऽशुगौ नभः-
श्वासो नभस्वद्-ऽनिल-श्वसनाः समीरणः ।
वातोऽहिकान्तः पवमान-मरुत् प्रकम्पनाः
कम्पाकः नित्यगति-गन्धवह-प्रभञ्जनाः ॥ १७२ ॥
मातरिश्वा जगत्प्राणः पृषदश्वो महाबलः ।

**मारुत स्पर्शनो दैत्यदेव**

वाति वायति वा द्रव्याणि वायु "कृवापाजि-" ॥ ( उणा- १ ) ॥ इत्युण् ॥ १ ॥ समीरयति समीर ॥ २ ॥ समेति समिर "इण्वागम्या वा" ॥ ( उणा-३८९ ) ॥ इति किद् र ॥ ३ ॥ पवते पवन ॥ ४ ॥ आशु गच्छति आशुग ॥ ५ ॥ नभस श्वास इव नभ श्वास ॥ ६ ॥ नभोऽस्त्यस्य नभस्वान् ॥ ७ ॥ अनन्त्यनेन अनिल "कल्यनि" ॥ ( उणा-४८१ ) ॥ इतील , न निलति इति वा ॥ ८ ॥ श्वसन्त्यनेन श्वसन ॥ ९ ॥ समीरयति समीरण ॥ १० ॥ वाति वायति वा वात "दम्यमि-" ॥ ( उणा- २०० ) ॥ इति त ॥११॥ अहिभि काम्यते अहिकान्त ॥ १२ ॥ पवते पवमान ॥१३॥ म्रियन्ते क्षुद्रजन्तवोऽनेन मरुत्, म्र उत् ॥ १४ ॥ प्रकम्पयति प्रकम्पन ॥१५॥ कम्पाकश्चिह्नमस्य कम्पाक ॥१६॥ नित्य गतिरस्य नित्यगति , सदागतिरपि ॥१७॥ गन्धस्य वहो गन्धवहा , गन्धवहोऽपि ॥ १८ ॥ प्रभनक्ति प्रभञ्जन ॥ १९ ॥ १७२ ॥ मातरि खे श्वयति मातरिश्वा "श्वन्मातरिश्वन्-" ( उणा- ९०२ ) इत्यनि निपात्यते ॥ २० ॥ जगता प्राणो जगत्प्राण ॥ २१ ॥ पृषद् मृगविशेषोऽश्वोऽस्य पृषदश्व । पृषन्त्यम्बुकणा अश्वा अस्य इत्यन्ये ॥ २२ ॥ महद् बलमस्य महाबल ॥ २३ ॥ मरुदेव मारुत , प्रज्ञादित्वादण् ॥ २४ ॥ स्पृशति स्पर्शन ॥ २५ ॥ दैत्याना देवो दैत्यदेव ॥ २६ ॥ एते पुलिङ्गा ॥

शेषश्चात्र-

वायौ सुरालय प्राण सभृतो जलभूषण ।
शुचिर्वहो लोलपट पश्चिमोत्तरादिक्पति ॥ १ ॥
अङ्कति क्षिपणुर्मार्क्यो ध्वजप्रहरणश्चल ।
शीतलो जलकान्तारो मेघार समरोऽपि च ॥ २ ॥

**झञ्झा स वृष्टियुक् ॥ १७३ ॥**

स वायु वृष्ट्या युक्त 'झमू अदने' झमतीव झञ्झा, "झमेर्झ" ॥( उणा१३७) ॥ १ ॥ १७३ ॥

**प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचर ।**

प्रकर्षेणानयति प्राण "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड , प्रसरणेन अनित्यनेन वा नासाद्य हृदय नाभि पादाङ्गुष्ठान्तश्च गोचरो यस्य स तथा ॥ १ ॥

**अपान पवनो मन्यापृष्ठपृष्ठान्तपार्ष्णिग ॥ १७४ ॥**

मूत्रपुरीषगर्भादीनपानयत्यपान , अपसरणेन अनित्यनेन वा । मन्ये ग्रीवापश्चाद्भागौ, पृष्ठ तदधोभाग , पृष्ठान्तो गुद , पार्ष्णी पादपश्चाद्भागौ तेषु गच्छति य स तथा ॥ १ ॥ ॥ १७४ ॥

अर्हम्

# अथ तृतीयः परिच्छेदः ।

प्रत्यक्षानन्तर परोक्ष लक्षयन्ति—

अस्पष्टं परोक्षम् ॥ १ ॥

प्राक्सूत्रितस्पष्टत्वाभावभ्राजिष्णु यत् प्रमाण तत् परोक्षं लक्षयितव्यम् ॥ १ ॥

अथैतत् प्रकारत प्रकटयन्ति—

स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत् पञ्चप्रकारम् ॥ २ ॥

स्पष्टम् ॥ २ ॥

अथैतेषु तावत् स्मरण कारणगोचरस्वरूपै प्ररूपयन्ति—

तत्र संस्कारप्रबोधसंभूतमनुभूतार्थविषयं तदित्याकारं वेदनं स्मरणम् ॥ ३ ॥

तत्रेति प्राक्तनेभ्य सस्कारप्रबोधसभूतत्वादिना गुणेन स्मरणं निर्द्धारयन्ति । सस्कारस्यात्मशक्तिविशेषस्य प्रबोधात् फलदानाभिमुख्यलक्षणात् सभूतमुत्पन्नमिति कारणनिरूपणम् । अनुभूत प्रमाणमात्रेण परिच्छिन्नोऽर्थश्चेतनाऽचेतनरूपो विषयो यस्येति विषयव्यावर्णनम् । तदित्याकार तदित्युल्लेखवत् । तदित्युल्लेखवत्ता चास्य योग्यतापेक्षयाऽऽख्यायि । यावता 'स्मरसि चैत्र ' कश्मीरेषु वत्स्यामस्तत्र द्राक्षा भोक्ष्यामहे' इत्यादिस्मरणे तच्छब्दोल्लेखो नोपलक्ष्यत एव, किन्त्विद स्मरण तेषु कश्मीरेषु इति ता द्राक्षा इति तच्छब्दोल्लेखमर्हत्येव । नचैव प्रत्यभिज्ञानेऽपि तत्प्रसङ्ग । तस्य स एवायमित्युल्लेखशेखरत्वात् । इति स्वरूपप्रतिपादनम् ॥ ३ ॥

अत्रोदाहरन्ति–

तत्तीर्थंकरबिम्बमिति यथा ॥ ४ ॥

तदिति यत् प्राक् प्रत्यक्षीकृतम्, स्मृतम्, प्रत्यभिज्ञातम्, वितर्कितम्, अनुमितम्, श्रुत वा भगवतस्तीर्थंकृतो बिम्बं प्रतिकृति तस्य परामर्श, इत्येवप्रकार तच्छब्दपरामृष्ट यद्विज्ञान तत्सर्वं स्मरणमित्यर्थ । ये तु यौगा स्मृतेरप्रामाण्यमध्यगीषत न ते साधु व्यधिषत । यतो यत्तावत् केचिदनर्थजत्वादस्या तदाम्नासिषु । तत्र हेतु, 'अभूत् वृष्टिरुदेष्यति शकटम्' इत्याद्यतीतानागतगोचरानुमानेन सव्यभिचार इत्यनुचित एवोच्चारयितुम्। परे तु मेनिरे–न स्मृति प्रमाणम्, पूर्वानुभवविषयोपदर्शनेनार्थे निश्चिन्वत्या अर्थपरिच्छेदे पूर्वानुभवपारतन्त्र्यात्। अनुमानज्ञान तूत्पत्तौ परापेक्ष, स्वविषये तु स्वतन्त्रमेव। स्मृतेरिव तस्मात्पूर्वानुभवानुसन्धानेनार्थप्रतीत्यभावात् ।

तदुक्तम्–

"पूर्वविज्ञानविषय विज्ञान स्मृतिरिष्यते ।
पूर्वज्ञानाद्विना तस्या प्रामाण्य नावगम्यते ॥ १ ॥
तत्र यत्पूर्वविज्ञान तस्य प्रामाण्यमिष्यते ।
तदुपस्थानमात्रेण स्मृते स्याच्चरितार्थता"॥ २ ॥ इति।

तदपि न पेशलम्। स्मृतेरप्युत्पत्तिमात्रेऽनुभवसव्यपेक्षत्वात् । तदाहितसस्काराच्चदुत्पत्ते । स्वविषयपरिच्छेदे त्वस्या स्वातन्त्र्यमेव । ननु नात्र स्वातन्त्र्यम्, अस्या पूर्वानुभवभावितभावभासनायामेवाभ्युद्यतत्वात्। एव तर्हि व्याप्तिप्रतिपादिप्रमाणप्रतिपन्नपदार्थोपस्थापनमात्रे प्रवृत्तेरनुमानस्यापि कुतस्त्या स्वातन्त्र्यसङ्गति । अथ व्याप्तिग्राहकेणानैयत्येन प्रतिपन्नात्तनूनपातो नैयत्यविशेषेणानुमाने परिस्फुरणसभवात् कुतो न स्वातन्त्र्यमिति चेत्, तर्हि अनुभवे भूयो विशेषशालिन स्मरणे तु कतिपयैरेव विशेषैर्विशिष्टस्य वस्तुनो भानात् कुतो नास्यापि तत् स्यात्। ननु तेऽपि विशेषास्तावदनुभूतौ प्रत्यभुरेव। अन्यथा स्मरणमेव तन्न स्यात् इति चेत्, नियतदेशोऽपि पावको व्याप्तिग्राहिणि प्रत्यभादेव। अन्यथाऽनुमानमेव तन्न स्यात् इति किन्न चेतयसे। अथ तत्र सर्वे सार्वदिका सार्वत्रिकाश्च पावका

पुस्फुरु , अनुमाने तु स एवैकश्चकास्तीत्युक्तमिति चेत् , ननूत्तरमपि तत्रोक्तमेव मा विस्मार्षी । ननु न सर्वत्रैव कतिपयविशेषावसायव्याकुल स्मरणम् , कचिद्यावदनुभूतरूपादिविशेषमपि तस्योत्पत्तेस्ततस्तत्र का गतिरिति चेत् । नैवम् । नहि रूपादय एव विशेषा वस्तुन , किन्तु अनुभूयमानताऽपि । न चासौ स्मरणे कापि चकास्ति । तस्यापि प्राचीनानुभवस्वभावतापत्ते । किन्त्वनुभूततैव भावस्य तत्र भाति । इति सिद्धमनुमानस्येव स्मरणस्यापि प्रामाण्यम् । नच तस्याप्रामाण्येऽनुमानस्यापि प्रामाण्यमुपापादि । सबन्धस्याप्रमाणस्मरणसदर्शितस्यानुमानानङ्गत्वात् , सशयितालिङ्गवत् । नच प्राक्प्रवृत्तसबन्धग्राहिप्रमाणव्यापारोपस्थापनमात्रचरितार्थत्वान्नास्य तत्र प्रामाण्येन प्रयोजनमिति वाच्यम् । अप्रमाणस्य तदुपस्थापनेऽपि सामर्थ्यासभवात् । किच । अर्थोपलब्धिहेतुत्व प्रमाणलक्षण लक्षयाचक्रुद्वे । तच्च धारावाहिप्रत्यक्षस्येवास्याप्यक्षूणमीक्ष्यत एवेति किमन्यैरसत्प्रलापैरिति ॥ ४ ॥

अथ कारणादिभि प्रत्यभिज्ञान ज्ञापयन्ति–

## अनुभवस्मृतिहेतुकं तिर्यगूर्ध्वतासामान्यादिगोचरं सकलनात्मक ज्ञान प्रत्यभिज्ञानम् ॥ ५ ॥

अनुभवश्च प्रमाणार्पिता प्रतीति , स्मृतिश्चानन्तरोक्तैव, ते हेतुर्यस्येति कारणोपदेश । तिर्यक्सामान्य च गवादिषु गोत्वादिस्वरूपसदृशपरिणामात्मकम् । ऊर्ध्वतासामान्य च परापरविवर्त्तव्यापि मृत्स्नादिद्रव्यम् , एतदुभयमादिर्यस्य विसदृशपरिणामादेर्धर्मस्तोमस्य स तिर्यगूर्ध्वतासामान्यादिर्गोचरो यस्येति विषयाऽऽख्यानम् । सकलन विवक्षितधर्मयुक्तत्वेन वस्तुन प्रत्यवमर्शनमात्मा स्वभावो यस्येति स्वरूपानिरूपणम् । ॥ ५ ॥

अत्रोदाहरन्ति–

## यथा तज्जातीय एवायं गोपिण्डः, गोसदृशो गवयः, स एवाय जिनदत्त इत्यादि ॥ ६ ॥

अत्र तज्जातीय एवाय गोपिण्ड इत्यस्मिन् तिर्यक्सामान्योदाहरणे दर्शितेऽपि गोसदृशो गवय इति यत्तत्रैवोदाहरणान्तर तन्नैयायिककदा-

ग्रहनिग्रहार्थम्। तस्य खलु गोसदृशो गवय इति उपमानमित्यभिमान। स चायुक्तविधान। गोविसदृशो महिष इत्यस्य प्रमाणान्तरत्वापत्ते। अथ गवये गोसदृशो गवय इति विज्ञान प्रत्यक्षफलमपि सज्ञासज्ञिसबन्धप्रतिपत्तिरूपे फले प्रमाणान्तराप्रसाध्ये साधकतमत्वात् उपमानता प्रतिपद्यते, तर्हि महिषे गोविसदृशमहिषोपलक्षण प्रत्यक्षफलमपि तत्रैव तथाविध्ये फले साधकतमत्वात् प्रमाणान्तरमस्तु। न चैतदुपमानेऽन्तर्भावयितु शक्यम्। उपमानस्य सादृश्यविषयतया व्यवस्थानात्। प्रस्तुतस्य तु वैसदृश्यव्यवसायकत्वात्। नच वैसदृश्यावसायस्य सज्ञा-संज्ञिसबन्धप्रतिपत्तिसाधकतमत्वमसिद्धम्। यत समहिषमाहेयीमण्डले क्वापि विपिनप्रदेशेऽनच्छाया छायाया रोमन्थायमाने नालिकेरद्वीपवासी कश्चित् केनचित्प्रेषितस्तद्विपिनप्रतिष्ठगोष्ठात् महिषमानयेति, सच तज्ज्ञ तमेव पृष्टवान्, कीदृग् महिष इति, तेन च गोविसदृशो महिष इत्युक्ते तद्विपिनगोष्ठ प्राप्त आप्तातिदेशवाक्यस्मरणसहकारी यमेव गोभ्यो विसदृश पशु पश्यति, तमेव महिषशब्दवाच्यतया प्रतिपद्यत इति क प्रतिविशेषो द्वयोरपि सङ्केतप्रतिपत्तौ।

तदुक्तम्–

"उपमानं प्रसिद्धार्थ-साधर्म्यात्साध्यसाधनम्।
तद्वैधर्म्यात्प्रमाण कि स्यात् सज्ञिप्रतिपादनम्?"॥१॥ इति।

यदा वा यादृग्गौस्तादृग्गवय इति वाक्याहितसस्कार प्रतिपत्ता तुरङ्गं गोविलक्षणमीक्षमाणो गवयसज्ञासबन्धप्रतिषेध विधत्ते, नाय गवयवाग्वाच्य पिण्ड इति, तदा गवयसज्ञासबन्धप्रतिषेधफल किमेतत्प्रमाण स्यात्? तत एवविधसवेदनानां सङ्कलनात्मकतया प्रत्यभिज्ञानतैवोपपद्यते, अन्यथा तु प्रमाणेयत्ता प्रलीयेत। यदैव हि यादृग् गौस्तादृग्गवय इति तेन शुश्रुवे, तदैव सामान्यतश्चेतसि स्फुरति पिण्डे सबन्धप्रतिपत्तिरभूत्, यथा पृथुबुध्नोदराकार वृत्तकण्ठ भाव कुम्भ विभावयेरित्याकर्णनात् कुम्भे, तत कान्ताराविहारिणोऽस्य गवयसाक्षात्कारे प्राक्तनसामान्याकारसबन्धस्मरणे च स एष गवयशब्दवाच्य इति सङ्कलनाज्ञानरूप प्रत्यभिज्ञानमुन्मज्जति, एव गोविसदृशो महिष इत्याद्यपि तथारूप-

त्वात् प्रत्यभिज्ञानमेवेति । मीमासकोऽप्यनेन सदृश स गौरित्यनधिगत गवि सादृश्यमवस्यदुपमान प्रमाणमाचक्षाणोऽनेन महिषेण विसदृश स गौरित्यनधिगतमहिषवैसदृश्यव्यवसायकस्य प्रमाणान्तरताप्रसङ्गेन पराकरणीय । सादृश्याभावो वैसदृश्यमित्यभावप्रमाणपरिच्छेद्य-मेवैतदिति चेत्, वैसदृश्याभाव सादृश्यमितीदमपि तत्परिच्छेद्यमेव कि न स्यात्। यदि वैसदृश्याभाव सादृश्य स्यात्, स गौ सदृशो गवयेनेति विधिमुखेन नोल्लिखेदिति चेत्, तादितरत्रापि तुल्यम् । स एवाय जिनदत्त इति तूर्ध्वतासामान्योदाहरणम्। आदिशब्दात् स एवाय वह्निरनु-मीयते मया, स एवानेनाप्यर्थ कथ्यते इत्यादि स्मरणसचिवानुमानागमा-दिजन्यम्, तस्माद्दीर्घ ह्रस्वमणु महन्नेदीयो दवीयो वेद दूरादय तिग्मस्तनू-नपात्सुरभीद चन्दनमित्यादि च सङ्कलनमात्रोदाहरण मन्तव्यम् । अथ कथ प्रत्यभिज्ञाप्रामाण्यमशक्यन्त शाक्या शक्या शमयितुम्। ते हि प्राहु -दलितकररुहशिरोरुहशिखरादिवत् सर्वत्र भ्रान्तैवेयमिति । अहो ! तर्ककर्कणकार्कश्यममीषाम्, एव हि विहायस्तलावलम्बमानमृगाङ्कमण्डल-युगलावलोकिप्रत्यक्षवत् सकलमपि प्रत्यक्ष भ्रान्तिमत् कि न भवेत्। अथ लक्षणयुक्ते बाधासम्भवे तल्लक्षणमेव दूषित भवति, सकलन हि प्रत्यभि-ज्ञानचिह्न तद्युक्तमपि च कररुहादौ प्रत्यभिज्ञानमबाध्यतेति तल्लक्षणमेव बाधितम्। प्रत्यक्षे तु यत्र बाधा, न तत्र तल्लक्षणमक्षूणम्, क्षणदाप्रियद्वया-वलोकनायामभ्रान्तत्वाभावात्, यत्र तु तदक्षूण न तत्र बाधा, स्तम्भादि-प्रत्यक्षवदिति चेत्, नैवम्। न खलु सकलनमात्रमेव प्रत्यभिज्ञाप्रमाणलक्षण-माचक्ष्महे, किन्तु स्वपरव्यवसायिज्ञानत्वरूपप्रमाणसामान्यलक्षणसद्भावे सति यत्सकलनम्, न च कररुहादिवेदने तदस्ति। विशिष्टस्य विपर्ययशून्य-स्यावसायस्याभावादिति कथ लक्षणयुक्तेऽस्मिन्नपि बाधरोध स्यात्। क्षण-भङ्गुरत्वाद्भावानामैक्यगृहीतिर्भ्रान्तिरेवेति चेत् । अत्र तावत् क्षणभङ्ग-भङ्ग एवाभङ्गुरमुत्तरम्। अस्तु वा क्षणभङ्गस्तथापि नेयतैव नि शेषप्रत्य-भिज्ञानप्रामाण्यमुत्पुसयितु शक्यम्। तथाहि—"पदार्थेषु किमैक्यगृहीति-भ्रान्तिनिमित्तमिष्यते ? अपरापरोत्पादुकक्षणाना सादृश्यमिति चेत्, कि सादृश्यमस्ति किञ्चित् ? तथेति चेत्, कचित्तेन सदृशोऽयमिति प्रत्यभिज्ञा

भगवती भजतामभीलुका, तर्हि प्रामाण्यम्। नास्त्येव सादृश्य, विलक्षणत्वात् स्वलक्षणानामिति चेदिदानीमपि क पलायसे। एव तर्हि तस्माद् विलक्षणोऽयमिति प्रत्यभिज्ञा प्रामाण्यमास्तिघ्नुवीत। वैलक्षण्यमपि नास्ति, परमाणुप्रचयमात्रत्वात् समस्तवस्तूनामिति चेत्, नन्वेवमपि तस्मादय महान्, अल्पो वा प्रचय इत्यादिप्रत्यभिज्ञा भवतु प्रामाण्यशोभाभारभागिनी। प्रचयोऽपि न कश्चित्, नीलपीतादिपरमाणूनामेव तात्त्विकत्वादिति चेत्, अहो! उत्तमर्णाकीर्णदुर्गताधमर्ण इवाय स्वय तत्तदुक्तमपलप्यापलप्य निनङ्क्षुर्भिक्षु। यदि नहि सादृश्यादिक न किञ्चिदस्ति, कथ तर्हि त्वयैव उत्तरीचक्रे। विकल्पोत्प्रेक्षा लक्ष्यमस्ति नतु बाह्य ग्राह्यमिति चेत्; नीलपीतादिविशेषोऽपि तथैवास्तु। बहिस्तदभावे कथ नैयत्येन विकल्पोल्लेख इति चेत्, सादृश्यादौ कथम्?। वासनातश्चेत्, अन्यत्रापि तत एवास्तु। वासनाया अपि नैयत्येन उद्बोधक किञ्चित् बहिरेष्टव्यमिति चेत्, को नामात्र परिपन्थी। किन्तु सादृश्यादिकमपि स्वीकुरु, ततो नीलपीतादिविशेषो वा बहिस्त्यज्यताम्, सादृश्यादिकमपि वा मन्यताम्, नान्यथा प्रमाणमुद्रा मृष्यते। सिद्धे चैव सादृश्यादौ यत्र पूर्वाकारेण सकलनम्, तत्र प्रत्यभिज्ञा प्रमाणम्। अन्यत्र तु प्रत्यक्षमेव। मा भूद् वा बहि सादृश्यादि तथाप्यनुमानवत् प्रमाणमेवेयम्। नह्यनुमानपरिच्छेद्यमपि अग्नित्वादिसामान्य बहिरस्ति तथापि यथा प्रणालिकया तद्विकल्पस्याग्न्यादिस्वलक्षणे प्रतिबन्धात् तत्प्रमाणम्, एव सादृश्यादेरसत्त्वेऽपि सदृशादिस्वलक्षणे तद्विकल्पस्य प्रतिबन्धात् कि नेयमपि तपस्विनी तथा स्यात्। अथ अयमनेन सदृश इति प्रत्यभिज्ञा, प्रत्यक्ष वा। क्वचित् किञ्चिदिति ब्रूम। अनुभूततया परोक्षमप्येक साक्षादिवाध्यवस्यत पश्यतश्चापर प्रत्यभिज्ञैवेयम्। भवति च परोक्षस्यापि साक्षादिवाध्यवसाये प्रत्यक्षसर्वनाम्ना परामर्श। एषोऽग्निरनुमीयते, अयमस्य वाक्यस्यार्थ इति। उभय तु प्रत्यक्षेण लक्षयत प्रत्यक्षमेवैतदिति ॥६॥

तर्कमपि कारणगोचरस्वरूपै प्ररूपयन्ति—

**उपलम्भानुपलम्भसम्भवं त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनं इदमस्मिन् सत्येव भवतीत्याद्या-**

कारं संवेदनमूहापरनामा तर्कः ॥ ७ ॥

उपलम्भानुपलम्भाभ्या प्रमाणमात्रेण ग्रहणाग्रहणाभ्यां सम्भव उत्पत्तिर्यस्येति कारणकीर्तनम्। त्रिकालीकलितयो कालत्रयीवर्त्तिनो साध्यसाधनयोर्गम्यगमकयो सम्बन्धोऽविनाभावो व्याप्तिरित्यर्थ । स आदिर्यस्याशेषदेशकालवर्त्तिवाच्यवाचकसबन्धस्यालम्बन गोचर यस्य तत्तथेति विषयाविष्करणम्। इदमस्मिन् सत्येव भवतीत्यादिशब्दादिदमस्मिन्नसति न भवत्येवेत्याकारम्, साध्यसाधनसबन्धालम्बनम्, एवजातीय शब्द एवजातीयस्यार्थस्य वाचक, सोऽपि तथाभूतस्तथाभूतस्य वाच्य इत्याकार वाच्यवाचकभावालम्बन च सवेदनमिहोपादीयतेति स्वरूपप्रतिपादनम्। एवरूप यद्वेदन स तर्क कीर्त्यते, ऊह इति च सञ्ज्ञान्तर लभते। ये तु ताथागता प्रामाण्यमूहस्य नोहाञ्चक्रिरे। तेषामशेषशून्यत्वपातकापत्ति । आ! किमिदमकाण्डकूष्माण्डाडम्बरोड्डामरमभिधीयते। कथ हि तर्कप्रामाण्यानुपगममात्रेणेदृशमसमञ्जसमापनीपद्येत ?। शृणु! श्रावयामि किल। तर्काप्रामाण्ये तावन्नानुमानस्य प्राणा, प्रतिबन्धप्रतिपत्त्युपायापायात्। तदभावे न प्रत्यक्षस्यापि । प्रत्यक्षेण हि पदार्थान् प्रतिपद्य प्रमाता प्रवर्त्तमान क्वचन सवादादिद प्रमाणमिति, अन्यत्र तु विसवादादिदमप्रमाणमिति व्यवस्थाग्रन्थिमाबध्नीयात्। न खलूत्पत्तिमात्रेणैव प्रमाणाप्रमाणविवेक कर्त्तु शक्य ।तद्दशाया उभयो सौसदृश्यात्। सवादविसवादापेक्षाया च तन्निश्चये निश्चित एवानुमानोपनिपात । नचेद प्रतिबन्धप्रतिपत्तौ तर्कस्वरूपोपायापाये । अनुमानाध्यक्षप्रमाणाभावे च प्रामाणिकमानिनस्ते कौतस्कुती प्रमेयव्यवस्थापीत्यायाता त्वदीयहृदयस्येव सर्वस्य शून्यता। सापि वा न प्राप्नोति । प्रमाणमन्तरेण तस्या अपि प्रतिपत्तुमशक्यत्वादिति, अहो! महति प्रकटकष्टसङ्कटे प्रविष्टोऽय तपस्वी कि नाम कुर्यात्। अथ–

"धूमाधीर्वह्निविज्ञान धूमज्ञानमधीस्तयो ।
प्रत्यक्षानुपलम्भाभ्यामिति पञ्चभिरन्वय "॥१॥ निर्णेष्यते।

अनुपलम्भोऽपि प्रत्यक्षविशेष एवेति प्रत्यक्षमेव व्याप्तितात्पर्यपर्यालोचनचातुर्यवर्य्य, कि तर्कोपक्रमेणेति चेत्, ननु प्रत्यक्ष तावन्नियतधूमाग्निगो-

चरतया प्राक् प्रावृतत् । तद्यदि व्याप्तिरपि तावन्मात्रैव स्यात्तदाऽनुमानमपि तत्रैव प्रवर्त्तेतेति कुतस्त्य धूमान्महीधरकन्धराऽधिकरणाशुशुक्षणिलक्षणम् । तद्बलाद्बभूवान् विकल्प सार्वत्रिकी व्याप्ति पर्याप्नोति निर्णेतुमिति चेत्, को नामैव नामस्त तर्कविकल्पस्योपलम्भानुपलम्भसम्भवत्वेन स्वीकारात्, किन्तु व्याप्तिप्रतिपत्तावयमेव प्रमाण कक्षीकरणीय । अथ तथाप्रवर्त्तमानोऽय प्राक्प्रवृत्तप्रत्यक्षव्यापारमेवाभिमुखयतीति तदेव तत्र प्रमाणम् इति चेत्, तर्हि अनुमानमपि लिङ्गग्राहिप्रत्यक्षस्यैव व्यापारमामुखयतीति तदेव वैश्वानरवेदने प्रमाणम्, नानुमानम् इति किन्न स्यात् । अथ कथमेव वक्तु शक्यम् । लिङ्गप्रत्यक्ष हि लिङ्गगोचरमेव, अनुमान तु साध्यगोचरम् इति कथ तत्तद्व्यापारमामुखयेत्, तर्हि प्रत्यक्ष पुरोवर्त्तिस्वलक्षणेक्षणक्षुण्णमेव । तर्कविकल्पस्तु साध्यसाधनसामान्यावमर्षमनीषीति कथ सोऽपि तद्व्यापारमुद्दीपयेत् । अथ सामान्यममान्यमेव, असत्त्वादिति कथ तत्र प्रवर्तमानस्तर्क प्रमाण स्यात् इति चेत्, अनुमानमपि कथ स्यात्। तस्यापि सामान्यगोचरत्वाव्यभिचारात् ‘अन्यत् सामान्यलक्षण सोऽनुमानस्य विषय ’ इति धर्मकीर्त्तिना कीर्त्तनात्। तत्त्वतोऽप्रमाणमेवैतद्, व्यवहारेणैवास्य प्रामाण्यात्, सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेनेति वचनादिति चेत्, तर्कोऽपि तथाऽस्तु। अथ नाय व्यवहारेणापि प्रमाण, सर्वथा वस्तुसस्पर्शपराङ्मुखत्वात् इति चेत्, अनुमानमपि तथाऽस्तु। अवस्तुनिर्भासमपि परम्परया पदार्थे प्रतिबन्धात् प्रमाणमनुमानमिति चेत्, कि न तर्कोऽपि । अवस्तुत्व च सामान्यस्याद्यापि केसरिकिशोरवक्रक्रोडदष्ट्राङ्कुराकर्षायमाणमस्ति । सदृशपरिणामरूपस्यास्य प्रत्यक्षादिपरिच्छेद्यत्वात् इति तत्त्वत एवानुमानम्, तर्कश्च प्रमाण प्रत्यक्षवदिति पाषाणरेखा ॥ ७ ॥

अत्रोदाहरन्ति–

**यथा यावान् कश्चिद् धूमः स सर्वो वह्नौ सत्येव भवतीति तस्मिन्नसत्यसौ न भवत्येव ॥८॥**

अत्राद्यमुदाहरणमन्वयव्याप्तौ, द्वितीय तु व्यतिरेकव्याप्तौ ॥ ८ ॥

अथानुमानस्य लक्षणार्थं तावत् प्रकारौ प्रकाशयन्ति—

अनुमानं द्विप्रकार स्वार्थं परार्थं च ॥ ९ ॥

नन्वनुमानस्याध्यक्षस्येव सामान्यलक्षणमनाख्यायैव कथमादित एव प्रकारकीर्त्तनमिति चेत् । उच्यते । परमार्थत स्वार्थस्यैवानुमानस्य भावात्, स्वार्थमेव ह्यनुमान कारणे कार्योपचारात् परार्थं कथ्यते । यद्वक्ष्यन्ति तत्रभवन्त "पक्षहेतुवचनात्मक परार्थमनुमानमुपचारात्" इति । नहि गोरुपचरितगोत्वस्य च वाहीकस्यैक लक्षणमस्ति । यत्पुन स्वार्थेन तुल्यकक्षतयाऽस्योपादानम्, तद्वादे शास्त्रे चानेनैव व्यवहाराल्लोकेऽपि च प्रायेणास्योपयोगात् तद्वत् प्राधान्यख्यापनार्थम् । तत्र अनु हेतुग्रहणसबन्धस्मरणयो पश्चान्मीयते परिच्छिद्यतेऽर्थोऽनेनेत्यनुमानम् । स्वस्मै प्रमातुरात्मने इद, स्वस्य वार्थोऽनेनेति स्वार्थम् । स्वावबोधनिबन्धनमित्यर्थ । एव परार्थमपि । अत्र चार्वाकश्चर्चयति—नानुमान प्रमाणम्, गौणत्वात् । गौण ह्यनुमानम्, उपचरितपक्षादिलक्षणत्वात् ।

तथाहि—

"ज्ञातव्ये पक्षधर्मत्वे पक्षो धर्म्यभिधीयते ।
व्याप्तिकाले भवेद्धर्म साध्यसिद्धौ पुनर्द्वयम्" ॥१॥ इति ।

अगौण हि प्रमाण प्रसिद्धम्, प्रत्यक्षवदिति । तत्राय वराकश्चार्वाक स्वारूढा शाखा खण्डयन्नियत भौतमनुकरोति । गौणत्वादिति हि साधनमभिदधानो ध्रुव स्वीकृतवानेवायमनुमान प्रमाणमिति कथमेतदेव दलयेत् ? । नच पक्षधर्मत्व हेतुलक्षणमाचक्ष्महे, येन तत्सिद्धये साध्यधर्मविशिष्टे धर्मिणि प्रसिद्धमपि पक्षत्व धर्मिण्युपचरेम । अन्यथाऽनुपपत्त्येकलक्षणत्वाद्धेतो । नापि व्याप्ति पक्षेणैव ब्रूमहे, येन तत्सिद्धये धर्मे तदारोपयेमहि । साध्यधर्मेणैव तदभिधानात् । नन्वानुमानिकप्रतीतौ धर्मविशिष्टो धर्मी, व्याप्तौ तु धर्म साध्यमित्यभिधास्यत इत्येकत्र गौणमेव साध्यत्वमिति चेत् । मैवम् । उभयत्र मुख्यतल्लक्षणभावेन साध्यत्वस्य मुख्यत्वात् । तत्किमिह द्वय साधनीयम् ? । सत्यम् । नहि व्याप्तिरपि परस्य प्रतीता, ततस्तत्प्रतिपादनेन धर्मविशिष्ट धर्मिणमय प्रत्यायनीय इत्यसिद्ध गौणत्वम् । अथ नोपादीयत एव तत्सिद्धौ कोऽपि हेतुस्तर्हि कथ अप्रमाणिका प्रामाणिकस्येष्टसिद्धि स्यादिति नानुमानप्रामाण्यप्रतिषेध साधीयस्ता दधाति ।

"नानुमान प्रमेत्यत्र हेतु स चेत्
क्वानुमामानताबाधन स्यात् तदा ।
नानुमान प्रमेत्यत्र हेतुर्न चेत्
क्वानुमामानताबाधन स्यात्तदा"॥१॥ इति सग्रहश्लोक ।

कथ वा प्रत्यक्षस्य प्रामाण्यनिर्णय ?। यदि पुनरर्थक्रियासवादात्तत्र तन्निर्णयस्तर्हि कथ नानुमानप्रामाण्यम् ?। प्रत्यपीपदाम च-

प्रत्यक्षेपि परोक्षलक्षणमतेर्येन प्रमारूपता ।
प्रत्यक्षेऽपि कथ भविष्यति मते तस्य प्रमारूपता ॥९॥ इति ।

तत्र स्वार्थं व्यवस्थापयन्ति-

## तत्र हेतुग्रहणसबन्धस्मरणकारणकं साध्यविज्ञानं स्वार्थम् ॥ १० ॥

हिनोत्यन्तर्भावितणिजर्थत्वाद् गमयति परोक्षमर्थमिति हेतु , अनन्तरमेव निर्देक्ष्यमाणलक्षणस्तस्य ग्रहण च प्रमाणेन निर्णय , सबन्धस्मरण च यथैव सबन्धो व्याप्तिनामा प्राक् तर्कणाऽतर्कि, तथैव परामर्शस्ते कारण यस्य तत्तथा । साध्यस्याख्यास्यमानस्य विशिष्ट सशयादिशून्यत्वेन ज्ञान स्वार्थमनुमान मन्तव्यम् ॥१०॥

हेतुस्वरूप निरूपयन्ति-

## निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ॥११॥

अन्यथा साध्य विना, अनुपपत्तिरेव, न मनागप्युपपत्ति । प्रयत्नानन्तरीयकत्वे साध्ये विपक्षैकदेशवृत्तेरनित्यत्वस्यापि गमकत्वापत्ते । ततो निश्चिता निर्णीताऽन्यथानुपपत्तिरेवैका लक्षण यस्य स तादृशो हेतुर्ज्ञेय । अन्यथाऽनुपपत्तिश्चात्र हेतुप्रक्रमात् साध्यधर्मेणैव सार्धं ग्राह्या । तेन तदितरार्थाऽन्यथाऽनुपपन्नै प्रत्यक्षादिज्ञानैर्नातिव्याप्ति ॥११॥

एतद्व्यवच्छेद्य दर्शयन्ति-

## न तु त्रिलक्षणकादिः ॥ १२ ॥

त्रीणि पक्षधर्मत्व-सपक्षसत्त्व-विपक्षासत्त्वानि लक्षणानि यस्य सौगतसम्मतस्य हेतो ।आदिशब्दाद्यौगसङ्गीतपञ्चलक्षणकहेत्ववरोध । ते-

नाऽबाधितविषयत्वाऽसत्प्रतिपक्षत्वयोरपि तल्लक्षणत्वकथनात्। तथाहि । वह्निमत्त्वे साध्ये धूमवत्त्व पक्षस्य पर्वतस्य धर्म ,न शब्दे चाक्षुषत्ववदतद्धर्म । सपक्षे पाकस्थाने सन्, नतु प्राभाकरेण शब्दनित्यत्वे साध्ये श्रावणत्ववत्ततो व्यावृत्तम्। विपक्षे पयस्वति प्रदेशेऽसन् , नतु तत्रैव साध्ये प्रमेयत्ववत् तत्र वर्तमानम्। अबाधितविषयम् , प्रत्यक्षागमाभ्या अबाध्यमानसाध्यत्वाद्, न तु अनुष्णस्तेजोऽवयवी द्रव्यत्वाज्जलवत्, विप्रेण सुरा पेया द्रवत्वात्तद्वदेवेति वत् ताभ्या बाधितविषयम्। असत्प्रतिपक्षम् ,साध्यविपरीतार्थोपस्थापकानुमानरहितम्, न पुनर्नित्य शब्दोऽनित्यधर्मानुपलब्धेरित्यनुमानसमन्वितमनित्य शब्दो नित्यधर्मानुपलब्धेरित्यनुमानमिव सत्प्रतिपक्षम् , इति लक्षणत्रयपञ्चकसद्भावाद् गमकम् । तत एतादृक्षलक्षणलक्षितमेवाक्षूण लिङ्गम्, इति सौगतयौगयोरभिप्राय । न चाय निरपाय ॥ १२ ॥

एतदुपपादयन्ति–

## तस्य हेत्वाभासस्यापि संभवात् ॥१३॥

अनेन अतिव्याप्ति प्रागुक्तलक्षणस्याऽऽचख्यु । स श्याम तत्पुत्रत्वात् प्रेक्ष्यमाणेतरतत्पुत्रवदित्यत्र समग्रतल्लक्षणवीक्षणेऽपि हेतुत्वाभावात् । अत्र विपक्षे असत्त्व निश्चित नास्ति, नहि श्यामत्वासत्त्वे तत्पुत्रत्वेन अवश्यनिवर्तनीयमित्यत्र प्रमाणमस्तीति सौगत । स एव निश्चितान्यथानुपपत्तिमेव शब्दान्तरोपदेशेन शठ शरणीकरोतीति सैव भगवती लक्षणत्वेनास्तु। यौगस्तु गर्जति–अनौपाधिकस्सम्बन्धो व्याप्ति । न चाय तत्पुत्रत्वेऽस्ति । शाकाद्याहारपरिणामाद्युपाधिनिबन्धनत्वात्। साधनाऽव्यापक साध्येन समव्याप्तिक किलोपाधिरभिधीयते। तथाचात्र शाकाद्याहारपरिणाम इति उपाधिसद्भावात् न तत्पुत्रत्वे विपक्षासत्त्वसम्भव इति । सोऽपि न निश्चितान्यथानुपपत्तेरातिरिक्तमुक्तवानिति सैवैकाऽस्तु। नहि अनौपाधिकसम्बन्धे सति किंचिदवशिष्यते, यदपोहाय शेषलक्षणप्रणयनमक्षूण स्यात्। पक्षधर्मत्वाभावे रसवतीधूमोऽपि पर्वते सप्तार्चिष गमयेत् इत्यभिदधानो बौद्धो न बुद्धिमान्। यत पक्षधर्मत्वभावेऽपि कि नैष तत्र त गमयेत्? । ननु कौतुकमेतत्, कथ हि नाम पक्षधर्मतोपगमे रसवतीधर्म सन् धूमो महीध्रकन्धराधिकरण धनञ्जय ज्ञापयतु इति चेत्,

एव तर्हि जलचन्द्रोऽपि नभश्चन्द्र मा जिज्ञपत्। जलचन्द्रस्य जलधर्मत्वात्। अथ जलनभश्चन्द्रान्तरालवर्त्तिनस्तावतो देशस्यैकस्य धर्मित्वेन जलचन्द्रस्य तद्धर्मत्वनिश्चयात् कुतो न तद् ज्ञापकत्वमिति चेद्, एव तर्हि रसवती-पर्वतान्तरालवर्तिवसुन्धराप्रदेशस्य धर्मित्वमस्तु। तथा च महानसधूमस्यापि पर्वतधर्मतानिर्णयात् जलचन्द्रवत् कथ न तत्र तद्गमकत्व स्यात्?। पक्षधर्मता खलूभयत्राऽपि निमित्तम्, ततो यथाऽसौ स्वसमीपदेशे धूमस्य धूमध्वज गमयतोऽम्लानतनुरास्ते, तथा व्यवहितदेशेऽपि पर्वतादौ तदवस्थैव। अन्यथा जलचन्द्रेऽपि नासौ स्याद् देशव्यवधानात्। अथ नेयमेवात्र गमकत्वाङ्गम्, किन्तु कार्यकारणभावोऽपि। कार्य च किमपि कीदृशम्। तादिह कृपीटजन्मा स्वसमीपप्रदेशमेव धूमकार्यमर्जयितुमधीशान, नभश्चन्द्रस्तु व्यवहितदेशमपीति न महानसधूमो महीधरकन्धरकोणचारिणमाशुशुक्षणि गमयतीति चेत्, नन्वेव धूमस्तद्देशेनैव पावकेनान्यथानुपपन्न, नीरचन्द्रमा पुनरतद्देशेनाऽपि नभश्चन्द्रेण, इत्यन्यथाऽनुपपत्तिनिर्णयमात्रसद्भावादेव साध्यसिद्धे सभवात् किं नाम जलाकाशमृगाङ्कमण्डलान्तरालादेर्धर्मित्वकल्पनाकदर्थनमात्रनिमित्तेन पक्षधर्मतावर्णनेन? । यौगस्याप्येवमेव च पक्षधर्मत्वानुपयोगो दर्शनीय । सपक्षसत्त्वमप्यनौपयिकम्। सत्त्वादेरगमकत्वापत्ते । यस्तु पक्षाद् बहिष्कृत्य किमपि कुटादिक दृष्टान्तयति। तस्यापूर्व पाण्डित्यप्रकार। कुटस्यापि पटादिवद् विवादास्पदत्वेन पक्षाद्बहिष्करणाऽनुपपत्ते । तथा च कथमय निदर्शनतयोपदर्श्येत?। प्रमाणान्तरात्तत्रैव क्षणिकत्व प्राक् प्रसाध्य निदर्शनतयोपादानमिति चेद्, ननु तत्रापि क सपक्षीकरिष्यते?। यदि क्षणिकत्वप्रसाधनपूर्व पदार्थान्तरमेव, तदा दुर्वारमनवस्थाकदर्थनम्। अन्यथा तु न सपक्ष कश्चित्। यत एव च प्रमाणात् क्षणिकत्वनिष्टङ्कन कुटे प्रकल्प्यते। तत एव पटादिपदार्थान्तरेष्वपि प्रकल्प्यताम्, किमपरप्रमाणोपन्यासालीकप्रागल्भीप्रकाशनेन?। यस्तु साध्यधर्मवान् सपक्ष इति सपक्ष लक्षयित्वा पक्षमेव सपक्षमाचक्षीत-साध्यधर्मवत्तया हि सपक्षत्व, साध्यत्वेनेष्टतया तु पक्षत्वम्, नच विरोध, वास्तवस्य सपक्षत्वस्येच्छाव्यवस्थितेन पक्षत्वेन निराकर्तुमशक्यत्वादिति स महात्मा निश्चित निर्विण्ण। सत्त्वादे क्षणिकत्वाद्यनु-

माने सपक्षसत्त्वावसायवेलायामेव साध्यधर्मस्यावबोधेनानुमानानर्थक्यात् । पक्षो हि साध्यधर्मवत्तया सपक्षश्चेत् निश्चिक्ये, हेतोश्च तत्र सत्त्वम्, तदा किं नाम पश्चाद्धेतुना साधनीयम्? । किञ्च । एवमनेन पक्षं लक्षयता "साध्यधर्मसामान्येन समानोऽर्थः सपक्षः" इति दिग्नागस्य,

"अनुमेयेऽथ तत्तुल्ये सद्भावो नास्तिताऽसती"

इति धर्मकीर्त्तेश्च वचो निश्चितं वञ्चितमेव स्यात् । यौगश्च केवलान्वयव्यतिरेकमनुमानमनुमन्यमानः कथं पञ्चलक्षणतां लिङ्गस्य संवाहयेत्? इति निश्चितान्यथानुपपत्तिरेवैकं लिङ्गलक्षणमक्षूणम् । तत्त्वमेतदेव, प्रपञ्चं पुनरयमिति चेत्, तर्हि सौगतेनाबाधितविषयत्वमसत्प्रतिपक्षत्वं, ज्ञातत्वं च, यौगेन च ज्ञातत्वं लक्षणमाख्यानीयम् । अथ विपक्षान्निश्चितव्यावृत्तिमात्रेणाबाधितविषयत्वमसत्प्रतिपक्षत्वं च, ज्ञापकहेत्वधिकारात् ज्ञातत्वं च लब्धमेवेति चेत्, तर्हि गमकहेत्वधिकारादशेषमपि लब्धमेवेति किं शेषेणापि प्रपञ्चेनेति ॥१३॥

साध्यविज्ञानमित्युक्तमिति साध्यमभिदधति–

अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥१४॥

अप्रतीतमनिश्चितम्, अनिराकृतं प्रत्यक्षाद्यबाधितम्, अभीप्सितं साध्यत्वेनेष्टम् ॥१४॥

अप्रतीतत्वं समर्थयन्ते–

शङ्कितविपरीतानध्यवसितवस्तूनां साध्यताप्रतिपत्त्यर्थमप्रतीतवचनम् ॥१५॥

एवंविधमेव हि साध्यम्, अन्यथा साधनवैफल्यात् ॥१५॥

अनिराकृतत्वं सफलयन्ति–

प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यतामित्यनिराकृतग्रहणम् ॥१६॥

प्रत्यक्षादिविरुद्धस्य धनञ्जयादौ शैत्यादेः ॥१६॥

अभीप्सितत्वं व्यञ्जयन्ति–

**अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सितपदोपादानम् ।१७॥**

अनभिमतस्य साधयितुमनिष्टस्य ॥१७॥

साध्यत्वं सूत्रत्रयेण विषयविभागेन सङ्गिरन्ते–

**व्याप्तिग्रहणसमयाऽपेक्षया साध्यं धर्म एवान्यथा तदनुपपत्तेः ॥१८॥**

धर्मो वह्निमत्त्वादि, तस्या व्याप्तेरनुपपत्ते ॥१८॥

एतदेव भावयन्ति–

**नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव धरित्री-धरस्याप्यनुवृत्तिरस्ति ॥१९॥**

व्यक्तमेतत् ॥१९॥

**आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षाऽपरपर्याय-स्तद्विशिष्टः प्रसिद्धो धर्मी ॥२०॥**

आनुमानिकी प्रतिपत्तिरनुमानोद्भवा प्रमिति, तद्विशिष्टो व्याप्तिकालापेक्षया साध्यत्वाभिमतेन धर्मेण विशिष्ट ॥२०॥

प्रसिद्धो धर्मीत्युक्तमथ यतोऽस्य प्रसिद्धिस्तदभिदधति–

**धर्मिणः प्रसिद्धिः क्वचिद्विकल्पतः कुत्रचित्प्रमाणतः क्वापि विकल्पप्रमाणाभ्याम् ॥२१॥**

विकल्पोऽध्यवसायमात्रम् ॥२१॥

अथात्र क्रमेणोदाहरन्ति–

**यथा समस्ति समस्तवस्तुवेदी, क्षितिधरकन्धरेयं धूमध्वजवती, ध्वनिः परिणतिमान् ॥२२॥**

अत्राद्योदाहरणे धर्मिणो विकल्पेन सिद्धि । नहि हेतुप्रयोगात् पूर्वं

विकल्प विहाय विश्ववित् कुतोऽपि प्रासिध्यत्। द्वितीये प्रमाणेन प्रत्यक्षादिना, क्षितिधरकन्धरायास्तदानी सवेदनात्। तृतीये तूभाभ्याम्। नहि श्रूयमाणादन्येषा देशकालस्वभावव्यवहितध्वनीना ग्राहक किञ्चित् तदानी प्रमाण प्रवर्तत इति विकल्पादेव तेषा सिद्धि । ननु नास्ति विकल्पसिद्धो धर्मी, तन्मात्रेण सिद्धे कस्याप्यसभवात्। अन्यथाऽहम्प्रथमिकया प्रमाणपर्येषणप्रयास परीक्षकाणामकक्षीकरणीय एव भवेत्। प्रमाणमूलताया पुनरेतस्य प्रमाणसिद्धप्रकारेणैव गतार्थत्वादिति। सोऽय स्वय विकल्पसिद्ध धर्मिणमाचक्षाण परोक्त प्रत्याचक्षाणश्च नियतमुत्स्वप्नायते । यदि हि विकल्पसिद्धो धर्मी नास्त्येव, तदा 'नास्ति विकल्पसिद्धो धर्मी, तन्मात्रेण सिद्धे कस्याप्यसभवात्' इत्यत्र कथ तमेवावोचथा ? । परोपगमादयमस्त्येवेति चेत्।

"यदि परोपगम प्रमितिस्तदा कथमय प्रतिषेधविधिर्भवेत् ।
अथ तथा न तदापि बतोच्यता कथमय प्रतिषेधविधिर्भवेत्"॥ १ ॥

तस्मात् प्रमाणात् पृथग्भूतादपि विकल्पादस्ति काचित्तथाविधा सिद्धि । यामनाश्रयता तार्किकेण न क्षेमेणासितु शक्यत इति ॥२२॥

अधुना परार्थानुमान प्ररूपयन्ति–

## पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् ॥ २३ ॥

पक्षहेतुवचनात्मकत्व च परार्थानुमानस्य व्युत्पन्नमतिप्रतिपाद्यापेक्षयाऽत्रोक्तम्। अतिव्युत्पन्नमतिप्रतिपाद्याऽपेक्षया तु धूमोऽत्र दृश्यत इत्यादि हेतुवचनमात्रात्मकमपि तद्भवति। बाहुल्येन तत्प्रयोगाभावात्तु नैतत्साक्षात्सूत्रे सूत्रितम्, उपलक्षित तु द्रष्टव्यम् । मन्दमतिप्रतिपाद्यापेक्षया तु दृष्टान्तादिवचनात्मकमपि तद्भवति । यद्वक्ष्यन्ति " मन्दमतीस्तु व्युत्पादयितु दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानि" इति। पक्षहेतुवचनस्य च जडरूपतया मुख्यत प्रामाण्याऽयोगे सति उपचारादित्युक्तम् । कारणे कार्योपचारादित्यर्थ । प्रतिपाद्यगत हि यज्ज्ञान तस्य कारण पक्षादिवचनम् । कार्ये कारणोपचाराद्वा । प्रतिपादकगत हि यत्स्वार्थानुमान तस्य कार्य तद्वचनमिति ॥ २३ ॥

सम्प्रति व्याप्तिपुरस्सर पक्षधर्मतोपसहार तत्पूर्विकां वा व्याप्तिमाचक्षाणान् भिक्षून् पक्षप्रयोगमङ्गीकारयितुमाहु —

**साध्यस्य प्रतिनियतधर्मिसंबन्धिताप्रसिद्धये हेतोरुपसहारवचनवत् पक्षप्रयोगोऽप्यवश्यमाश्रयितव्यः ॥२४॥**

'यथा, यत्र धूमस्तत्र धूमध्वज इति हेतो सामान्येनाधारप्रतिपत्तावपि पर्वतादिविशिष्टधर्मिधर्मताधिगतये धूमश्चात्रेत्येवरूपमुपसहारवचनमवश्यमाश्रीयते सौगतै । तथा साध्यधर्मस्य नियतधर्मिधर्मतासिद्धये पक्षप्रयोगोऽप्यवश्यमाश्रयितव्य इति ॥२४॥

अमुमेवार्थ सोपालम्भ समर्थयन्ते—

**त्रिविधं साधनमभिधायैव तत्समर्थनं विदधानः कः खलु न पक्षप्रयोगमङ्गीकुरुते ॥२५॥**

त्रिविध कार्यस्वभावानुपलम्भभेदात् । तस्य साधनस्य समर्थनमासिद्धतादिव्युदासेन स्वसाध्यसाधनसामर्थ्योपदर्शनम् । नहि असमार्थितो हेतु साध्यसिद्ध्यङ्गम् । अतिप्रसङ्गात् । तत पक्षप्रयोगमनङ्गीकुर्वता तत्समर्थनरूप हेतुमनभिधायैव तत्समर्थन विधेयम् ।

"हन्त हेतुरिह जल्प्यते न चेत्, अस्तु कुत्र स समर्थनाविधि ।
तर्हि पक्ष इह जल्प्यते न चेत्, अस्तु कुत्र स समर्थनाविधि ॥१॥
प्राप्यते ननु विवादत स्फुट पक्ष एष किमतस्तदाख्यया ।
तर्हि हेतुरपि लभ्यते ततोऽनुक्त एव तदसौ समर्थ्यताम् ॥२॥
मन्दमतिप्रतिपत्तिनिमित्त सौगत ! हेतुमथाभिदधीथा ।
मन्दमतिप्रतिपत्तिनिमित्त तर्हि न कि परिजल्पसि पक्षम्" ॥३॥२५॥

अथ प्रत्यक्षस्यापि पारार्थ्य समर्थयन्ते—

**प्रत्यक्षपरिच्छिन्नार्थाभिधायि वचनं परार्थं प्रत्यक्षं, परप्रत्यक्षहेतुत्वात् ॥ २६ ॥**

यथाऽनुमानप्रतीतोऽर्थ परस्मै प्रतिपाद्यमानो वचनरूपापन्न परार्थ-

मनुमानमुच्यते, तथा प्रत्यक्षप्रतीतोऽपि तथैव परार्थं प्रत्यक्षमित्युच्यताम्। परप्रत्यायनस्योभयत्राप्याविशिष्टत्वादिति ॥ २६ ॥

एतदुल्लिखन्ति–

**यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिनपतिप्रतिमाम् ॥ २७ ॥**

व्यक्तमद । एव स्मरणादेरपि यथासम्भव पारार्थ्यं प्रतिपत्तव्यम्। तथा च वदन्ति–

"स्मरत्यदो दाशरथिर्भवन् भवानमु वनान्ताद्वनितापहारिणम्।
पयोधिमाबद्धचलज्जलाविल विलङ्घ्य लङ्का निकषा हनिष्यति" ॥१॥

"परिभावय स एवाऽय मुनि पूर्वं नमस्कृत " इत्यादि ॥२७॥

प्रासङ्गिकमभिधाय पक्षहेतुवचनात्मक परार्थमनुमानमिति प्रागुक्त समर्थयन्ते—

**पक्षहेतुवचनलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गं न दृष्टान्तादिवचनम् ॥ २८ ॥**

आदिशब्देनोपनयनिगमनादिग्रह । एव च यद् व्याप्त्युपेत पक्षधर्मतोपसहाररूप सौगतै, पक्षहेतुदृष्टान्तस्वरूप भाट्टप्राभाकरकापिलै, पक्षहेतुदृष्टान्तोपनयनिगमनलक्षण नैयायिकवैशेषिकाभ्यामनुमानमाम्नायि, तदपास्तम्। व्युत्पन्नमतीन् प्रति पक्षहेतुवचसोरेवोपयोगात् ॥२८॥

पक्षप्रयोग प्रतिष्ठाप्य हेतुप्रयोगप्रकार दर्शयन्ति—

**हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारः ॥२९॥**

तथैव साध्यसभवप्रकारेणैवोपपत्तिस्तथोपपत्ति । अन्यथा साध्याभावप्रकारेणानुपपत्तिरेवान्यथानुपपत्ति ॥२९॥

अमू एव स्वरूपतो निरूपयन्ति–

**सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः, असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिः ॥३०॥**

निगदव्याख्यानम् ॥३०॥

प्रयोगतोऽपि प्रकटयन्ति-

**यथा कृशानुमानयं पाकप्रदेशः सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेः, असत्यनुपपत्तेर्वा ॥३१॥**

एतदपि तथैव ॥३१॥

अमुयो प्रयोगौ नियमयन्ति-

**अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वितीय-प्रयोगस्यैकत्रानुपयोगः ॥३२॥**

अयमर्थ -प्रयोगयुग्मेऽपि वाक्यविन्यास एव विशिष्यते नार्थ । स चान्यतरप्रयोगेणैव प्रकटीबभूवेति किमपरप्रयोगेण ? इति ॥३२॥

अथ यदुक्त "न दृष्टान्तादिवचन परप्रतिपत्तेरङ्गम्" इति । तत्र दृष्टान्तवचन तावन्निराचिकीर्षवस्ताद्धि किं परप्रतिपत्त्यर्थ परैरङ्गीक्रियते ?, किंवा हेतोरन्यथानुपपत्तिनिर्णीतये?, यद्वाऽविनाभावस्मृतये ?, इति विकल्पेषु प्रथम विकल्प तावद्दूषयन्ति-

**न दृष्टान्तवचनं परप्रतिपत्तये प्रभवति, तस्यां पक्षहेतुवचनयोरेव व्यापारोपलब्धेः ॥३३॥**

प्रतिपन्नाऽविस्मृतसंबन्धस्य हि प्रमातुरग्निमानयं देशो धूमवत्त्वान्यथानुपपत्तेरित्येतावतैव भवत्येव साध्यप्रतीतिरिति ॥३३॥

द्वितीय विकल्प परास्यन्ति-

**नच हेतोरन्यथानुपपत्तिनिर्णीतये, यथोक्ततर्कप्रमाणादेव तदुपपत्तेः ॥३४॥**

दृष्टान्तवचन प्रभवतीति योग ॥३४॥

अत्रैवोपपत्त्यन्तरमुपवर्णयन्ति-

**नियतैकविशेषस्वभावे च दृष्टान्ते साकल्येन व्याप्तेरयोगतो विप्रतिपत्तौ तदन्तरापेक्षायामनवस्थितेर्दु-**

निवारः समवतारः ॥ ३५ ॥

प्रतिनियतव्यक्तौ हि व्याप्तिनिश्चय कर्तुमशक्य । ततो व्यक्त्यन्तरेषु व्याप्त्यर्थं पुनर्दृष्टान्तान्तर मृग्यम् । तस्यापि व्यक्तिरूपत्वेनापरदृष्टान्तापेक्षायामनवस्था स्यात् ॥ ३५ ॥

तृतीयविकल्प पराकुर्वन्ति–

नाप्यविनाभावस्मृतये, प्रतिपन्नप्रतिबन्धस्य व्युत्पन्नमतेः पक्षहेतुप्रदर्शनेनैव तत्प्रसिद्धेः ॥३६॥

दृष्टान्तवचन प्रभवतीति योग ॥३६॥

अमुमेवार्थं समर्थयन्ते–

अन्तर्व्याप्त्या हेतोः साध्यप्रत्यायने शक्तावशक्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थम् ॥३७॥

अयमर्थ --

"अन्तर्व्याप्ते साध्यससिद्धिशक्तौ बाह्यव्याप्तेर्वर्णन वन्ध्यमेव ।
अन्तर्व्याप्ते साध्यससिद्ध्यशक्तौ बाह्यव्याप्तेर्वर्णन वन्ध्यमेव" ॥१॥

मत्पुत्रोऽय बहिर्वक्ति, एवरूपस्वरान्यथानुपपत्ते , इत्यत्र बहिर्व्याप्त्यभावेऽपि गमकत्वस्य, स श्याम तत्पुत्रत्वात्, इतरतत्पुत्रवत्, इत्यत्र तु तद्भावेऽप्यगमकत्वस्योपलब्धेरिति ॥ ३७ ॥

अथैतयो स्वरूपमाहु –

पक्षीकृत एव विषये साधनस्य साध्येन व्याप्तिरन्तर्व्याप्तिरन्यत्र तु बहिर्व्याप्तिः ॥३८॥

यथाऽनेकान्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेरिति, अग्निमानयं देशो धूमवत्त्वात् य एवं स एव यथा पाकस्थानमिति च ॥३९॥

उपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं कदर्थयन्ते–

नोपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं पक्षहेतुप्रयोगादेव तस्याः सद्भावात् ॥४०॥

न केवल दृष्टान्तम्येत्यपेरर्थ ॥ ४० ॥

एतदेवाहु —

समर्थनमेव परं परप्रतिपत्त्यङ्गमास्तां तदन्तरेण दृष्टान्तादिप्रयोगेऽपि तदसंभवात् ॥४१॥

प्रयुज्यापि हि दृष्टान्तादिकम्, समर्थन हेतोरवश्य वक्तव्यम्। इतरथा साध्यसिद्ध्यसभवादिति तदेवाभिधीयताम्, किं दृष्टान्तादिवचनेन ? इति ॥४१॥

व्युत्पन्नानाश्रित्य परार्थानुमानमभिधाय मन्दमतीनुद्दिश्य तत् प्रपञ्चयन्ति-

मन्दमतींस्तु व्युत्पादयितु दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानि ॥ ४२ ॥

अपिशब्दात्पक्षहेतू, पक्षादिशुद्धयश्च पञ्च ग्राह्या । तत उत्कृष्ट दशाऽवयव परार्थानुमानमित्युक्त भवति । मध्यम तु नवावयवादारभ्य यावत् द्व्यवयवम् । जघन्य पुन साधनमात्रोपन्यासस्वरूपम् । प्रतिपाद्याना मन्दव्युत्पन्नातिव्युत्पन्नत्वात् ।

तदुक्तम्—

"अन्यथाऽनुपपत्त्येकलक्षण लिङ्गमिष्यते ।
प्रयोगपरिपाटी तु प्रतिपाद्यानुसारत" ॥ १ ॥ इति ॥४२॥

अथ दृष्टान्त प्रकटयन्ति—

प्रतिबन्धप्रतिपत्तेरास्पद दृष्टान्तः ॥ ४३ ॥

प्रतिबन्धो व्याप्तिरविनाभाव । तत्स्मरणस्थान महानसादि दृष्टान्तो ज्ञेय ॥ ४३ ॥

भेदतोऽमून् दर्शयन्ति—

स द्वेधा, साधर्म्यतो वैधर्म्यतश्च ॥ ४४ ॥

समानो धर्मो यस्याऽसौ सधर्मा । विसदृशो धर्मो यस्याऽसौ विधर्मा, तयोर्भाव साधर्म्य वैधर्म्य च, तत ॥ ४४ ॥

आद्य प्रकारमाहु –

यत्र साधनधर्मसत्तायामवश्यं साध्यधर्मसत्ता प्रकाश्यते, स साधर्म्यदृष्टान्तः ॥४५॥

यथा यत्र यत्र धूमस्तत्र तत्र वह्निर्यथा महानसः ॥४६॥

द्वितीयभेद दर्शयन्ति–

यत्र तु साध्याभावे साधनस्यावश्यमभावः प्रदर्श्यते, स वैधर्म्यदृष्टान्तः ॥४७॥

यथाऽग्न्यभावे न भवत्येव धूमो, यथा जलाशये ॥४८॥

उपनय वर्णयन्ति–

हेतोः साध्यधर्मिण्युपसहरणमुपनयः ॥४९॥

यथा धूमश्चात्र प्रदेशे ॥५०॥

निगमन लक्षयन्ति–

साध्यधर्मस्य पुनर्निगमनम् ॥५१॥

साध्यधर्मिण्युपसहरणमिति योग ॥५१॥

यथा तस्मादग्निरत्र ॥५२॥

पक्षवचनादीना पूर्वाचार्यप्रवर्तिता सञ्ज्ञां कथयन्ति–

एते पक्षप्रयोगादयः पञ्चाप्यवयवसञ्ज्ञया कीर्त्त्यन्ते ॥५३॥

अपिशब्दात् तच्छुद्धीनामप्यवयवसञ्ज्ञा विज्ञेया ॥५३॥

प्रागुक्तमेव हेतु प्रकारतो दर्शयन्ति–

उक्तलक्षणो हेतुर्द्विप्रकारः, उपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वात् ॥५४॥

अथैतयो साध्यमाहु –

उपलब्धिर्विधिनिषेधयोः सिद्धिनिबन्धनमनुपलब्धिश्च ॥५५॥

यथा चैतदेव तथा वक्ष्यते ॥५५॥

विधिमभिदधति–

विधिः सदंशः ॥५६॥

सदसदंशात्मनो वस्तुनो योऽय सदंशो भावरूप, स विधिरित्यभिधीयते ॥५६॥

प्रतिषेधं प्रकटयन्ति–

प्रतिषेधोऽसदंशः ॥५७॥

तादृशस्यैव वस्तुनो योऽयमसदंशोऽभावस्वभाव, स प्रतिषेध इति गीयते ॥५७॥

अस्यैव प्रकारानाहु –

स चतुर्द्धा प्रागभावः प्रध्वसाभाव इतरेतराभावोऽत्यन्ताभावश्च ॥५८॥

प्राक् पूर्व वस्तूत्पत्तेरभाव , प्रध्वसश्चासावभावश्च, इतरस्येतरस्मिन्नभाव , अत्यन्त सर्वदाऽभाव । विधिप्रकारास्तु प्राक्तनैर्नोचिरे । अत सूत्रकृद्भिरपि नाभिदधिरे ॥ ५८ ॥

तत्र प्रागभावमाविर्भावयन्ति—

यन्निवृत्तावेव कार्यस्य समुत्पत्तिः सोऽस्य प्रागभावः ॥५९॥

यस्य पदार्थस्य निवृत्तावेव सत्याम्, न पुनरनिवृत्तावपि, अतिव्याप्तिप्रसक्ते । अन्धकारस्यापि निवृत्तौ कचिज्ज्ञानोत्पत्तिदर्शनादन्धकारस्यापि ज्ञानप्रागभावत्वप्रसङ्गात् । न चैवमपि रूपज्ञान तन्निवृत्तावेवोत्पद्यत इति तत्प्रति तस्य तत्त्वप्रसक्तिरिति वाच्यम् । अतीन्द्रियदर्शिनि नक्तचरादौ च तद्भावेऽपि तद्भावात् । स इति पदार्थ , अस्येति कार्यस्य ॥५९॥

अत्रोदाहरन्ति–

यथा मृत्पिण्डनिवृत्तावेव समुत्पद्यमानस्य घटस्य मृत्पिण्डः ॥ ६० ॥

प्रध्वसाभाव प्राहु –

यदुत्पत्तौ कार्यस्यावश्यं विपत्तिः सोऽस्य प्रध्वंसाभावः ॥६१॥

यस्य पदार्थस्योत्पत्तौ सत्या प्रागुत्पन्नकार्यस्यावश्य नियमेन, अन्यथातिप्रसङ्गाद् विपत्तिर्विघटनम्, सोऽस्य कार्यस्य प्रध्वसाभावोऽभिधीयते ॥ ६१ ॥

उदाहरन्ति–

यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम् ॥ ६२ ॥

इतरेतराभाव वर्णयन्ति–

स्वरूपान्तरात् स्वरूपव्यावृत्तिरितरेतराभावः ॥ ६३ ॥

स्वभावान्तरान्न पुन स्वस्वरूपादेव तस्याभावप्रसक्ते, स्वरूपव्यावृत्ति स्वस्वभावव्यवच्छेद इतरेतराभावोऽन्यापोहनामा निगद्यते ॥६३॥

उदाहरणमाहु –

यथा स्तम्भस्वभावात् कुम्भस्वभावव्यावृत्तिः ॥ ६४ ॥

अत्यन्ताभावमुपदिशन्ति–

कालत्रयाऽपेक्षिणी हि तादात्म्यपरिणामनिवृत्तिरत्यन्ताभावः ॥ ६५ ॥

अतीताऽनागतवर्त्तमानरूपकालत्रयेऽपि याऽसौ तादात्म्यपरिणामनिवृत्तिरेकत्वपरिणतिव्यावृत्ति, सोऽत्यन्ताभावोऽभिधीयते ॥ ६५ ॥

निदर्शयन्ति–

यथा चेतनाऽचेतनयोः ॥ ६६ ॥

न खलु चेतनमात्मतत्त्वमचेतनपुद्गलात्मकतामचकलत, कलयति, कलयिष्यति वा । तच्चैतन्यविरोधात् । नाप्यचेतन पुद्गलतत्त्व चेतनस्वरूपताम् । अचेतनत्वविरोधात् ॥ ६६ ॥

अथोपलब्धि प्रकारतो दर्शयन्ति–

उपलब्धेरपि द्वैविध्यमविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्च॥६७॥

न केवलमुपलब्ध्यनुपलब्धिभ्या भिद्यमानत्वेन हेतोर्द्वैविध्यमित्यपेरर्थ । अविरुद्धो विरुद्धश्चात्र साध्येन सार्द्ध द्रष्टव्य । ततस्तस्योपलब्धिरिति ॥ ६७ ॥

आद्याया भेदानाहु –

**तत्राविरुद्धोपलब्धिर्विधिसिद्धौ षोढा ॥ ६८ ॥**

तानिङ व्याख्यान्ति–

**साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिः ॥ ६९ ॥**

ततो व्याप्याऽविरुद्धोपलब्धि , कार्याऽविरुद्धोपलब्धि , कारणाऽविरुद्धोपलब्धि , पूर्वचराविरुद्धोपलब्धि , उत्तरचराविरुद्धोपलब्धि , सहचराविरुद्धोपलब्धिरिति षट् प्रकारा भवन्ति । अत्र हि साध्य शब्दस्य परिणामित्वादि तस्याऽविरुद्ध व्याप्यादि प्रयत्नानन्तरीयकत्वादि वक्ष्यमाण तदुपलब्धिरिति । अत्र भिक्षुर्भापते–विधिसिद्धौ स्वभावकार्ये एव साधने साधीयसी, न कारणम् । तस्यावश्यतया कार्योत्पादकत्वाभावात् । प्रतिबद्धावस्थस्य मुर्मुरावस्थस्य चाधूमस्यापि धूमध्वजस्य दर्शनात्, अप्रतिबद्धसामर्थ्यम् , उग्रसामग्रीक च तद्गमकमिति चेत् । एवमेतत्, किन्तु नैतादृशमर्वाग्दृशाऽवसातु शक्यमिति ॥ ६९ ॥

तन्निराकर्तु कीर्तयन्ति–

**तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यनुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र शक्तेरप्रतिस्खलनमपरकारणसाकल्य च ॥ ७० ॥**

तमस्विन्यामिति रूपाप्रत्यक्षत्वसूचनाय । शक्तेरप्रतिस्खलन सामर्थ्यस्याऽप्रतिबन्ध । अपरकारणसाकल्य शेषनि शेपसहकारिसम्पर्क । रजन्यां रस्यमानात्किल रसात् तज्जनकसामग्र्यनुमानम् , ततोऽपि रूपानुमान भवति । प्राक्तनो हि रूपक्षण' सजातीयरूपान्तरक्षणलक्षण कार्य

कुर्वन्नेव विजातीय रसलक्षण कार्यं करोतीति प्राक्तनरूपक्षणात्सजातीयो-त्पाद्यरूपक्षणान्तरानुमान मन्यमानै सौगतैरनुमतमेव किञ्चित्कारण हेतु , यस्मिन् सामर्थ्याप्रतिबन्ध , कारणान्तरसाकल्य च निश्चेतु शक्यते। अथ नैतत् कारणात् कार्यानुमानम् , किन्तु स्वभावानुमानमद । ईदृशरू-पान्तरोत्पादसमर्थमिद रूपमीदृशरसजनकत्वादित्येवं तत्स्वभावभूतस्यैव तज्जननसामर्थ्यस्यानुमानादिति चेत् । नन्वेतदपि प्रतिबन्धाभावकारणा-न्तरसाकल्यनिर्णयमन्तरेण नोपपद्यत एव । तन्निश्चये तु यदि कारणादेव तस्मात् कार्यमनुमास्यते, तदा कि नाम दुश्चरित चेतस्वी विचारयेत् ? । एवमस्त्यत्रच्छाया छत्रादित्यादीन्यव्यभिचारनिश्चयादनुमानान्येवेत्युक्त भवति ।।७०।।

अथ पूर्वचरोत्तरचरयो स्वभावकार्यकारणहेत्वनन्तर्भावाद्भेदान्तर-त्वं समर्थयन्ते–

**पूर्वचरोत्तरचरयोर्न स्वभावकार्यकारणभावौ तयोः कालव्यवहितावनुपलम्भात् ॥७१॥**

साध्यसाधनयोस्तादात्म्ये सति स्वभावहेतौ, तदुत्पत्तौ तु कार्ये कारणे वाऽन्तर्भावो विभाव्येत। न चैते स्त । तादात्म्य हि समसमयस्य प्रयत्ना-नन्तरीयकत्वपरिणामित्वादेरुपपन्नम् । तदुत्पत्तिश्चान्योऽन्यमव्यवहितस्यैव धूमधूमध्वजादे समधिगता। न तु व्यवहितकालस्य। अतिप्रसक्ते ।।७१।। ननु कालव्यवधानेऽपि कार्यकारणभावो भवत्येव, जाग्रद्बोधप्रबोधयोर्म-रणारिष्टयोश्च तथा दर्शनादिति प्रतिजानान प्रज्ञाकर प्रतिक्षिपन्ति–

**न चातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोः प्रबोधो-त्पातौ प्रति कारणत्वं, व्यवहितत्वेन निर्व्यापारत्वात् ॥७२॥**

अयमर्थ । जाग्रद्दशासवेदनमतीतम् , सुप्तावस्थोत्तरकालभाविज्ञान वर्तमान प्रति, मरण चानागत ध्रुवावीक्षणादिकमरिष्ट साम्प्रतिक प्रति व्यवहितत्वेन व्यापारपराङ्मुखम् , इति कथ तत्तत्र कारणत्वमवलम्बेत ? । निर्व्यापारस्यापि तत्कल्पने सर्वं सर्वस्य कारण स्यात् ।।७२।।

इदमेव भावयन्ति-

**स्वव्यापारापेक्षिणी हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था, कुलालस्येव कलशं प्रति ॥७३॥**

अन्वयव्यतिरेकावसेयो हि सर्वत्र कार्यकारणभाव । तौ च कार्यस्य कारणव्यापारसव्यपेक्षावेव युज्येते । कुम्भस्येव कुम्भकारव्यापारसव्यपेक्षाविति ॥७३॥

ननु चातिक्रान्ताऽनागतयोर्व्यवहितत्वेऽपि व्यापार कथ न स्यादित्यारेकामधरयन्ति-

**न च व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेः ॥७४॥**

तयोरतिक्रान्तानागतयोर्जाग्रद्दशासवेदनमरणयो ॥७४॥

अतिप्रसक्तिमेव भावयन्ति-

**परम्पराव्यवहिताना परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वात् ॥ ७५ ॥**

परेषामपि रावणशङ्खचक्रवर्त्यादीनाम् । तत्कल्पनस्य व्यापारकल्पनस्य । अथान्वयव्यतिरेकसमधिगम्य कार्यकारणभाव । ततो व्यवधानाविशेषेऽपि यस्यैव कार्यमन्वयव्यतिरेकावनुकरोति, तदेव तत्कारणम् । अन्यथाऽव्यवधानाविशेषेऽपि किं न काष्ठकृशानुवत्तत्र स्थित एव शर्कराकणनिकरोऽपि धूमकारण स्यात्? ततो नातिप्रसङ्ग इति चेत् । नन्वन्वयस्तद्भावे भाव, स चात्र तावन् नास्त्येव । जाग्रद्दशासवेदनमरणयोरभाव एव सर्वदा तत्कार्योत्पादात् । अथ स्वकाले सतोरेव तयोस्तत्कार्योत्पत्तेरन्वय कथ न स्यादिति चेत्, तर्हीदृशोऽय रावणादिभिरप्यस्यास्त्येव । सत्यम्, अस्त्येव व्यतिरेकस्तु रिक्त इति चेत् । ननु कोऽय व्यतिरेको नाम? तदभावेऽभाव इति चेत्, स तर्हि जाग्रद्दशासवेदनादे कथ स्यात् । तदभाव एव सर्वदा प्रबोधादेर्भावात् । स्वकाले त्वभावस्तस्य नास्त्येवेति कथं व्यतिरेक सिद्धिमधिवसेत्? इति न व्यवहितयो कार्यकारणभाव संभवति ॥ ७५ ॥

सहचरहेतोरपि स्वभावकार्यकारणेषु नान्तर्भाव इति दर्शयन्ति—

**सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः, सहोत्पादेन तदुत्पत्तिविपत्तेश्च, सहचरहेतोरपि प्रोक्तेषु नानुप्रवेशः ॥ ७६ ॥**

यदि हि सहसचरणशीलयोर्वस्तुनोस्तादात्म्यं स्यात्, तदा परस्पर-परिहारेण स्वरूपोपलम्भो न भवेत् । अथ तदुत्पत्ति, तदा पौर्वापर्ये-णोत्पादप्रसङ्गात् सहोत्पादो न स्यात् । न चैवम् । ततो नास्य प्रोक्तेषु स्वभावकार्यकारणेष्वन्तर्भाव ॥ ७६ ॥

इदानीं मन्दमतिव्युत्पत्तिनिमित्त साधर्म्यवैधर्म्याभ्यां पञ्चावयवां व्याप्याविरुद्धोपलब्धिमुदाहरन्ति—

**ध्वनिः परिणतिमान् प्रयत्नानन्तरीयकत्वात्, यः प्रयत्नानन्तरीयकः स परिणतिमान्, यथा स्तम्भो, यो वा न परिणतिमान् स न प्रयत्नानन्तरीयको, यथा वान्ध्येयः; प्रयत्नानन्तरीयकश्च ध्वनिः, तस्मात्परिणतिमानिति व्याप्यस्य साध्येनाऽविरुद्धस्योपलब्धिः साधर्म्येण वैधर्म्येण च ॥७७॥**

अत्र ध्वनि परिणतिमानिति साध्यधर्मविशिष्टधर्म्यभिधानरूपा प्रतिज्ञा। प्रयत्नानन्तरीयकत्वादिति हेतु । य प्रयत्नानन्तरीयक इत्यादी तु व्याप्तिप्रदर्शनपूर्वौ साधर्म्यवैधर्म्याभ्या स्तम्भवान्ध्येयरूपौ दृष्टान्तौ । प्रयत्नानन्तरीयकश्च ध्वनिरित्युपनय । तस्मात्परिणतिमानिति निगमनम् । यद्यपि व्याप्यत्व कार्यादिहेतूनामप्यस्ति, साध्येन व्याप्यत्वात् । तथापि तन्नेह विवक्षितम्, किन्तु साध्येन तदात्मीभूतस्याकार्यादिरूपस्य प्रयत्नानन्तरीयकत्वादे स्वरूपमित्यदोष ॥ ७७ ॥

अथ कार्याऽविरुद्धोपलब्ध्यादीनुदाहरन्ति—

**अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुपलम्भादिति कार्यस्य ॥ ७८ ॥**

साध्येनाऽविरुद्धस्योपलब्धिरिति पूर्वसूत्रादिहोत्तरत्र चानुवर्तनीयम् ॥ ७८ ॥

भविष्यति वर्षं तथाविधवारिवाहविलोकनादिति कारणस्य ॥ ७९ ॥

तथाविधेति सातिशयोन्नतत्वादिधर्मोपेतत्वं गृह्यते ॥७९॥

उदेष्यति मुहूर्त्तान्ते तिष्यतारकाः पुनर्वसूदयदर्शनादिति पूर्वचरस्य ॥ ८० ॥

तिष्यतारकेति पुष्यनक्षत्रम् ॥८०॥

उदगुर्मुहूर्त्तात्पूर्वं पूर्वफल्गुन्य उत्तरफल्गुनीनामुद्गमोपलब्धेरित्युत्तरचरस्य ॥ ८१ ॥

अस्तीह सहकारफले रूपविशेषः समास्वाद्यमानरसविशेषादिति सहचरस्य ॥ ८२ ॥

इयं च साक्षात् षोढाऽविरुद्धोपलब्धिरुक्ता। परम्परया पुनः संभवन्तीयमत्रैवान्तर्भावनीया। तद्यथा, कार्यकार्याऽविरुद्धोपलब्धिः कार्याविरुद्धोपलब्धौ। अभूदत्र कोशः कलशोपलम्भात् इति। कोशस्य हि कार्यं कुशूलस्तस्य चाविरुद्धं कार्यं कुम्भः इत्येवमन्या अप्यत्रैवान्तर्भावनीया ॥८२॥

अधुना विरुद्धोपलब्धिभेदानाहु -

विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्तप्रकारा ॥८३॥

प्रथमप्रकारं प्राक् प्रकाशयन्ति-

तत्राद्या स्वभावविरुद्धोपलब्धिः ॥८४॥

प्रतिषेध्यस्यार्थस्य यः स्वभावः स्वरूपम्, तेन सह यत् साक्षाद् विरुद्धम्, तस्योपलब्धिः स्वभावविरुद्धोपलब्धिः ॥ ८४ ॥

एतामुदाहरन्ति—

**यथा नास्त्येव सर्वथैकान्तोऽनेकान्तस्योपलम्भात् ॥८५॥**

स्पष्टो हि सर्वथैकान्तानेकान्तयो साक्षाद्विरोधो भावाऽभावयोरिव। नन्वयमनुपलब्धिहेतुरेव युक्त "यावान् कश्चित् प्रतिषेध स सर्वोऽनुपलब्धे" इति वचनादिति चेत्। तन्मलीमसम्। उपलम्भाभावस्यात्र हेतुत्वेनानुपन्यासात्। अथ विरुद्धयो सर्वथैकान्तानेकान्तयोरुष्णशीतस्पर्शयोरिव प्रथम विरोध स्वभावानुपलब्ध्या प्रतिपन्न इत्यनुपलब्धिमूलत्वात्स्वभावविरुद्धोपलब्धेरनुपलब्धिरूपत्व युक्तमेवेति चेत्, तर्हि साध्यधर्मिणि भूधरादौ, साधने च धूमादावध्यक्षीकृते सतीदमप्यनुमान प्रवर्तत इति प्रत्यक्षमूलत्वादिदमपि प्रत्यक्ष किं न स्यात्? इति ॥८५॥

विरुद्धोपलब्धेराद्यप्रकार प्रदर्श्य शेषानाख्यान्ति—

**प्रतिषेध्यविरुद्धव्याप्तादीनामुपलब्धयः षट् ॥८६॥**

प्रतिषेध्येनार्थेन सह ये साक्षाद्विरुद्धास्तेषा ये व्याप्तादयो व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचरास्तेषामुपलब्धय षड् भवन्ति। विरुद्धव्याप्तोपलब्धि, विरुद्धकार्योपलब्धि, विरुद्धकारणोपलब्धि, विरुद्धपूर्वचरोपलब्धि, विरुद्धोत्तरचरोपलब्धि., विरुद्धसहचरोपलब्धिश्चेति ॥८६॥

क्रमेणासामुदाहरणान्याहु —

**विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चयस्तत्र सन्देहात् ॥८७॥**

अत्र जीवादितत्त्वगोचरो निश्चय प्रतिषेध्य, तद्विरुद्धश्चानिश्चय, तेन व्याप्तस्य सन्देहस्योपलब्धि ॥८७॥

**विरुद्धकार्योपलब्धिर्यथा न विद्यतेऽस्य क्रोधाद्युपशान्तिर्वदनविकारादेः ॥८८॥**

वदनविकारस्ताम्रतादि, आदिशब्दादधरस्फुरणादिपरिग्रह। अत्र

च प्रतिषेध्य क्रोधाद्युपशम, तद्विरुद्धस्तदनुपशमः, तत्कार्यस्य वदनविकारादेरुपलब्धि ॥८८॥

विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यं वचः समस्ति रागद्वेषकालुष्याऽकलङ्कितज्ञानसंपन्नत्वात् ॥८९॥

प्रतिषेध्येन ह्यसत्येन सह विरुद्धं सत्यम्, तस्य कारण रागद्वेषकालुष्याकलङ्कितज्ञानम्। तत् कुतश्चित्सूक्ताभिधानादे सिद्ध्यत् सत्य साधयति। तच्च सिद्ध्यदसत्यं प्रतिषेधति ॥८९॥

विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्तान्ते पुष्यतारा रोहिण्युद्गमात् ॥९०॥

प्रतिषेध्योऽत्र पुष्यतारोद्गम, तद्विरुद्धो मृगशीर्षोदय, तदनन्तर पुनर्वसूदयस्यैव भावात्। तत्पूर्वचरो रोहिण्युदयस्तस्योपलब्धि ॥९०॥

विरुद्धोत्तरचरोपलब्धिर्यथा नोदगान्मुहूर्तात्पूर्वं मृगशिरः पूर्वफल्गुन्युदयात् ॥९१॥

प्रतिषेध्योऽत्र मृगशीर्षोदय, तद्विरुद्धो मघोदय, अनन्तरमार्द्रोदयादेरेव भावात्। तदुत्तरचर पूर्वफल्गुन्युदयस्तस्योपलब्धि ॥९१॥

विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञान सम्यग्दर्शनात् ॥९२॥

प्रतिषेध्येन हि मिथ्याज्ञानेन सह विरुद्ध सम्यग्ज्ञानम्, तत्सहचर सम्यग्दर्शनम्। तच्च प्राण्यनुकम्पादे कुतश्चिन् लिङ्गात्प्रसिद्ध्यत्सहचर सम्यग्ज्ञान साधयति। इय च सप्तप्रकाराऽपि विरुद्धोपलब्धि प्रतिषेध्येनार्थेन साक्षाद्विरोधमाश्रित्योक्ता, परम्परया विरोधाश्रयणेन त्वनेकप्रकारा विरुद्धोपलब्धि सभवन्त्यऽत्रैवाभियुक्तैरन्तर्भावनीया। तद्यथा कार्यविरुद्धोपलब्धिर्व्यापकविरुद्धोपलब्धि कारणविरुद्धोपलब्धिरिति त्रय स्वभावविरुद्धोपलब्धौ। तत्र कार्यविरुद्धोपलब्धिर्यथा नात्र देहिनि

दु खकारणमस्ति सुखोपलम्भादिति । साक्षादत्र सुखदु खयोर्विरोध । प्रतिषेध्यस्वभावेन तु दु खकारणेन परम्परया । व्यापकविरुद्धोपलब्धिर्यथा न सन्निकर्षादि प्रमाणमज्ञानत्वादिति । साक्षादत्र ज्ञानत्वाज्ञानत्वयोर्विरोध । प्रतिषेध्यस्वभावेन तु ज्ञानत्वव्याप्येन प्रामाण्येन व्यवहित । कारणविरुद्धोपलब्धिर्यथा नासौ रोमहर्षादिविशेषवान् समीपवर्त्तिपावकविशेषादिति । अत्र पावक साक्षाद्विरुद्ध शीतेन । प्रतिषेध्यस्वभावेन तु रोमहर्षादिना शीतकार्येण पारम्पर्येण । ये त न।स्त्यस्य हिमजनितरोमहर्षादिविशेषो धूमात्, प्रतिषेध्यस्य हि रोमहर्षादिविशेषस्य कारण हिम तद्विरुद्धोऽग्निस्तत्कार्य धूम इत्यादय कारणविरुद्धकार्य्योपलब्ध्यादयो विरुद्धोपलब्धेर्भेदा । ते यथासभव विरुद्धकार्य्योपलब्ध्यादिष्वन्तर्भावनीया ॥९२॥

सम्प्रत्यनुपलब्धि प्रकारत प्राहु –

## अनुपलब्धेरपि द्वैरूप्यम्, अविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्च ॥९३॥

अविरुद्धस्य प्रतिषेध्येनार्थेन सह विरोधमप्राप्तस्यानुपलब्धिराविरुद्धाऽनुपलब्धि । एव विरुद्धानुपलब्धिरपि ॥९३॥

सम्प्रत्यविरुद्धानुपलब्धेर्निषेधसिद्धौ प्रकारसङ्ख्यामाख्यान्ति–

## तत्राविरुद्धानुपलब्धिः प्रतिषेधावबोधे सप्तप्रकारा ॥९४॥

अमूनेव प्रकारान् प्रकटयन्ति–

## प्रतिषेध्येनाविरुद्धानां स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचराणामनुपलब्धिः ॥९५॥

एव च स्वभावानुपलब्धि, व्यापकानुपलब्धि, कार्यानुपलब्धि, कारणानुपलब्धि, पूर्वचरानुपलब्धि, उत्तरचरानुपलब्धि, सहचरानुपलब्धिश्चेति ॥९५॥

क्रमेणामूरुदाहरन्ति–

## स्वभावानुपलब्धिर्यथा नास्त्यत्र भूतले कुम्भ उपलब्धि-

लक्षणप्राप्तस्य तत्स्वभावस्यानुपलम्भात् ॥९६॥

उपलब्धिलक्षणप्राप्तस्येति उपलब्धिर्ज्ञानम्, तस्य लक्षणानि कारणानि चक्षुरादीनि, तैर्ह्युपलब्धिर्लक्ष्यते जन्यत इति यावत् तानि प्राप्त, जनकत्वेनोपलब्धिकारणान्तर्भावात् स तथा दृश्य इत्यर्थस्तस्यानुपलम्भात्॥९६॥

व्यापकानुपलब्धिर्यथा नास्त्यत्र प्रदेशे पनसः पादपानुपलब्धेः ॥९७॥

कार्यानुपलब्धिर्यथा नास्त्यत्राप्रतिहतशक्तिकं बीजमङ्कुरानवलोकनात् ॥९८॥

अप्रतिहतशक्तिकत्व हि कार्य प्रत्यप्रतिबद्धसामर्थ्यत्व कथ्यते । तेन बीजमात्रेण न व्यभिचार ॥९८॥

कारणाऽनुपलब्धिर्यथा न सन्त्यस्य प्रशमप्रभृतयो भावास्तत्त्वार्थश्रद्धानाभावात् ॥९९॥

प्रशमप्रभृतयो भावा इति प्रशमसवेगनिर्वेदानुकम्पास्तिक्यलक्षणजीवपरिणामविशेषा । तत्त्वार्थश्रद्धान सम्यग्दर्शनं तस्याऽभाव कुतोऽपि देवद्रव्यभक्षणादे पापकर्मण सकाशात्सिद्ध्यस्तत्त्वार्थश्रद्धानकार्यभूताना प्रशमादीनामभाव गमयति ॥९९॥

पूर्वचरानुपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्तान्ते स्वातिनक्षत्र चित्रोदयादर्शनात् ॥१००॥

उत्तरचरानुपलब्धिर्यथा नोदगमत् पूर्वभद्रपदा मुहूर्त्तात्पूर्वमुत्तरभद्रपदोद्गमानवगमात् ॥१०१॥

सहचरानुपलब्धिर्यथा नास्त्यस्य सम्यग्ज्ञानं सम्यग्दर्शनानुपलब्धेः ॥१०२॥

इयं च सप्तधाऽप्यनुपलब्धि साक्षादनुपलम्भद्वारेण, परम्परया पुनरेषा सम्भवन्त्यत्रैवाऽन्तर्भावनीया । तथाहि । नास्ति एकान्तनिरन्वयं तत्त्वम्, तत्र क्रमाक्रमानुपलब्धेरिति या कार्यव्यापकानुपलब्धि , निरन्वयतत्त्वकार्यस्यार्थक्रियारूपस्य यद्व्यापक क्रमाक्रमरूप तस्यानुपलम्भसद्भावात्, सा व्यापकानुपलब्धावेव प्रवेशनीया । एवमन्या अपि यथासम्भवमास्वेव विशन्ति ॥१०२॥

विरुद्धानुपलब्धि विधिसिद्धौ भेदतो भाषन्ते–

**विरुद्धानुपलब्धिस्तु विधिप्रतीतौ पञ्चधा ॥१०३॥**

तानेव भेदानाहु –

**विरुद्धकार्यकारणस्वभावव्यापकसहचरानुपलम्भभेदात् ॥ १०४ ॥**

विधेयेनार्थेन विरुद्धाना कार्यकारणस्वभावव्यापकसहचराणामनुपलम्भा अनुपलब्धयस्तैर्भेदो विशेषस्तस्मात् । ततश्च विरुद्धकार्यानुपलब्धि , विरुद्धकारणानुपलब्धि , विरुद्धस्वभावानुपलब्धि , विरुद्धव्यापकानुपलब्धि , विरुद्धसहचरानुपलब्धिश्चेति ॥१०४॥

क्रमेणैतासामुदाहरणान्याहु –

**विरुद्धकार्यानुपलब्धिर्यथाऽत्र शरीरिणि रोगातिशयः समस्ति, नीरोगव्यापारानुपलब्धेः ॥१०५॥**

विधेयस्य हि रोगातिशयस्य विरुद्धमारोग्यम्, तस्य कार्यं विशिष्टो व्यापार ,तस्यानुपलब्धिरियम् ॥१०५॥

**विरुद्धकारणानुपलब्धिर्यथा विद्यतेऽत्र प्राणिनि कष्टमिष्टसंयोगाभावात् ॥१०६॥**

अत्र विधेय कष्टम्, तद्विरुद्ध सुखम, तस्य कारण इष्टसयोग , तस्यानुपलब्धिरेषा ॥ १०६ ॥

**विरुद्धस्वभावानुपलब्धिर्यथा वस्तुजातमनेकान्तात्मकमेकान्तस्वभावानुपलम्भात् ॥१०७॥**

वस्तुजातमन्तरङ्गो बहिरङ्गश्च विश्ववर्ती पदार्थसार्थ । अम्यते गम्यते निश्चीयत इत्यन्तो धर्म , न एकोऽनेक , अनेकश्चासावन्तश्चानेकान्त । स आत्मा स्वभावो यस्य वस्तुजातस्य तदनेकान्तात्मक सदसदाद्यनेकधर्मात्मकमित्यर्थ । अत्र हेतु एकान्तस्वभावस्य सदसदाद्यन्यतरधर्मावधारणस्वरूपस्यानुपलम्भादिति । अत्र विधेयेनानेकान्तात्मकत्वेन सह विरुद्ध सदाद्येकान्तस्वभाव , तस्यानुपलब्धिरसौ ॥१०७॥

**विरुद्धव्यापकानुपलब्धिर्यथा अस्त्यत्र च्छाया, औष्ण्यानुपलब्धेः ॥१०८॥**

विधेयया छायया विरुद्धस्ताप , तद्व्यापकमौष्ण्यम्, तस्यानुपलब्धिरियम् ॥१०८॥

**विरुद्धसहचरानुपलब्धिर्यथा अस्त्यस्य मिथ्याज्ञानं, सम्यग्दर्शनानुपलब्धेः ॥१०९॥**

विधेयेन मिथ्याज्ञानेन विरुद्ध सम्यग्ज्ञानम्, तत्सहचरं सम्यग्दर्शनम्, तस्यानुपलब्धिरेषा ॥१०९॥

**इति प्रमाणनयतत्त्वालोकालङ्कारे श्रीरत्नप्रभाचार्यविरचितायां रत्नाकरावतारिकाख्यलघुटीकायां स्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूपनिर्णयस्तृतीयः परिच्छेदः ॥**

अर्हम्

# अथ चतुर्थः परिच्छेदः।

संप्रति परोक्षस्य पञ्चमप्रकारमागमाख्य बहु वक्तव्यत्वात् परिच्छेदान्तरेणोपदिशन्ति—

**आप्तवचनादाविर्भूतमर्थसंवेदनमागमः ॥ १ ॥**

आप्त प्रतिपादयिष्यमाणस्वरूप, तद्वचनाज्जातमर्थज्ञानमागम। आगम्यन्ते मर्यादयाऽवबुध्यन्तेऽर्था अनेनेत्यागम ॥१॥

ननु यद्यर्थसवेदनमागम, तर्हि कथमाप्तवचनात्मकोऽसौ सिद्धान्तविदा प्रसिद्ध इत्याशङ्क्याऽऽहु —

**उपचारादाप्तवचनं च ॥ २ ॥**

प्रतिपाद्यज्ञानस्य ह्याप्तवचन कारणमिति कारणे कार्योपचारात् तदप्यागम इत्युच्यते, अनन्योपायताख्यापनार्थम्। अत्रैव वदन्ति काणादा — शब्दोऽनुमानम्, व्याप्तिग्रहणबलेनार्थप्रतिपादकत्वाद्, धूमवत्, इति। तत्र हेतोरामुखे कूटाकूटकार्षापणनिरूपणप्रवणप्रत्यक्षेण व्यभिचार, तथाभूतस्यापि तत्प्रत्यक्षस्यानुमानरूपताऽपायात्। आ 'कथ प्रत्यक्ष नाम भूत्वा व्याप्तिग्रहणपुरस्सर पदार्थ परिच्छिन्द्यात्? उन्मीलित हि चेल्लोचनम्, जातमेव परीक्षकाणा कूटाकूटविवेकेन प्रत्यक्षमिति क व्याप्तिग्रहणावसर इति चेत्, एतदेवान्यत्रापि प्रतीहि। तथाहि। समुच्चारितश्चेद् ध्वनि, जातमेव जनस्य शब्दार्थसवेदनामिति क व्याप्तिग्रहणावकाश इति। एव तर्हि नालिकेरद्वीपवासिनोऽपि पनसशब्दात् तदर्थसवित्ति स्यादिति चेत्, कि नापरीक्षकस्यापि कार्षापणे कूटाकूटविवेकेन प्रत्यक्षोत्पत्ति ?। अथ यावानेतादृशविशेषसमाकलितकलेवर कार्षापण, तावानशेष कूटोऽकूटो वा निष्टङ्कनीयस्त्वया, इत्युपदेशसाहायकापेक्ष चक्षुरादि तद्विवेके कौशल कलयति, नचापरीक्षकस्याय प्राक् प्रावर्त्तिष्टेति चेत्, तर्हि शब्दोऽपि यावान् पनसशब्दस्तावान् पनसार्थवाचक इति सवित्तिसहाय तत्प्रति-

पादने पटीयान्, नच नालिकेरद्वीपवासिन प्रागिय प्रादुरासीदिति कथ तस्य तत्प्रतीति स्यात्?। अथैतादृशसवेदन व्याप्तिसवेदनरूपमेव, तदपेक्षाया च शब्दार्थज्ञानमनुमानमेव भवेदिति चेत्, कूटाकूटकार्षापणविवेकप्रत्यक्षमपि किन्न तथा?। तत्रापि तथाविधोपदेशस्य व्याप्त्युल्लेखस्वरूपत्वात्। अथ व्याप्ते प्राक् प्रवृत्तावपि तदानीमभ्यासदशापन्नत्वेनानपेक्षणात् प्रत्यक्षमेवैतत्, तदपेक्षाया तु भवत्येवैतदनुमानम्, कूटोऽय कार्षापण, तथाविधविशेषसमन्वितत्वात्, प्राक्प्रेक्षितकार्षापणवत्, इति चेत्, एतदेव समस्तमन्यत्रापि तुल्य विदाङ्करोतु भवान्। न खल्वभ्यासदशाया कोऽपि व्याप्ति शब्देऽप्यपेक्षते, सहसैव तज्ज्ञानोत्पत्ते। अनभ्यासे तु को नाम नानुमानता मन्यते? यथा कस्यचिद्विस्मृतसङ्केतस्य कालान्तरे पनसशब्दश्रवणे, य पनसशब्द स आमूलफलेग्रहिविटपिविशेषवाचक, यथा यज्ञदत्तोक्त प्राक्तन, तथा चायमपि देवदत्तोक्त इति। एव च पक्षैकदेशे सिद्धसाध्यता, शब्दोऽनुमानमित्यत्र सकलवाचकाना पक्षीकृतानामेकदेशस्यानुमानरूपतया स्वीकृतत्वात्। यस्त्वागमरूपतया स्वीकृत शब्द, तत्राभ्यासदशापन्नत्वेन व्याप्तिग्रहणापेक्षैव नास्ति। अन्यथा कूटाकूटकार्षापणप्रत्यक्षेण व्यभिचारापत्ते। तथा च हेतोरसिद्धि। एव च (शब्दत्वस्य व्याप्तिग्रहणानपेक्षत्वे सिद्धे) विवादास्पद शब्दो नानुमानम्, तद्विभिन्नसामग्रीकत्वात्, कूटाकूटकार्षापणविवेकप्रत्यक्षवत्, इति सिद्धम्। किंच। वाचामनुमानमानतामातन्वानोऽसौ कथ पक्षधर्मतादिकमादर्शयेत्?। चैत्र ककुदादिमदर्थविवक्षावान्, गोशब्दोच्चारणकर्तृत्वात्, अहमिव, इतीत्थमिति चेत्, नन्वतो विवक्षामात्रस्यैव प्रतीति स्यात्, तथा च कथमर्थे प्रवृत्तिर्भवेत्?। विवक्षातोऽर्थसिद्धिरिति चेत्। मैवम्। अस्यास्तद्व्यभिचारात्, अनाप्ताना अन्यथाऽपि तदुपलब्धे। अथ यथा प्रोक्ताच्छब्दात् तथाऽऽप्तविवक्षाऽतोऽक्षूणैवार्थसिद्धिर्भविष्यतीति चेत्। सत्यम्। किन्त्वप्रतीतिपराहतैवेयं परम्परा, शब्दश्रुतौ सत्या प्रतीत्यन्तराव्यवहितस्यैव अर्थस्य सवेदनात्, यथा लोचनव्यापारे सति रूपस्य। अपि च। अप्रातीतिकैतादृक्कल्पनामहापातकं क्रियता नाम, यदि नान्या गति स्यात्, अस्ति चेय, शब्दस्य स्वाभाविकवाच्यवाचकभावस-

बन्धद्वारेण अर्थप्रत्यायकत्वोपपत्ते । एतच्च "स्वाभाविकसामर्थ्यसमयाभ्या-" इत्यादि सूत्रे निर्णेष्यते ॥ २ ॥

उदाहरन्ति–

**समस्त्यत्र प्रदेशे रत्ननिधानं सन्ति रत्नसानुप्रभृतयः ॥३॥**

वक्ष्यमाणलौकिकजनकादिलोकोत्तरतीर्थकराद्यपेक्षया क्रमेणोदाहरणोभयी ॥ ३ ॥

आप्तस्वरूप प्ररूपयन्ति–

**अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानं चाभिधत्ते स आप्तः ॥ ४ ॥**

आप्यते प्रोक्तोऽर्थोऽस्मादित्याप्त । यद्वा, आप्ती रागादिदोपक्षय सा विद्यते यस्येत्यर्शआदित्वादति आप्त । जानन्नपि हि रागादिमान् पुमानन्यथाऽपि पदार्थान् कथयेत्, तद्व्यवच्छित्तये यथाज्ञानमिति । तदुक्तम्–

"आगमो ह्याप्तवचनमाप्ति दोषक्षय विदु ।
क्षीणदोपोऽनृत वाक्य न ब्रूयाद्धेत्वसम्भवात्" ॥ १ ॥ इति ।

अभिधान च ध्वने परम्परयाऽप्यत्र द्रष्टव्यम्। तेनाक्षरविलेखनद्वारेण, अङ्कोपदर्शनमुखेन, करपल्लव्यादिचेष्टाविशेपवशेन वा शब्दस्मरणाद्य परोक्षार्थविषय विज्ञान परस्योत्पादयति, सोऽप्याप्त इत्युक्त भवति । स च स्मर्यमाण शब्द आगम इति ॥ ४ ॥

कस्मादमूदृशस्यैवाप्तत्वमित्याहु –

**तस्य हि वचनमविसंवादि भवति ॥ ५ ॥**

यो हि यथावस्थिताभिधेयवेदी, परिज्ञानानुसारेण तदुपदेशकुशलश्च भवति तस्यैव यस्माद्वचन विसवादशून्य सजायते । मूढवञ्चकवचने विसवादसदर्शनात्। ततो यो यस्यावञ्चक , स तस्याप्त इति ऋष्यार्यम्लेच्छसाधारण वृद्धानामाप्तलक्षणमनूदित भवति ॥ ५ ॥

आप्तभेदौ दर्शयन्ति–

**स च द्वेधा लौकिको, लोकोत्तरश्च ॥ ६ ॥**

लोके सामान्यजनरूपे भवो लौकिक । लोकादुत्तर प्रधान मोक्षमार्गोपदेशकत्वाल्लोकोत्तर ॥ ६ ॥

तावेव वदन्ति-

## लौकिको जनकादिर्लोकोत्तरस्तु तीर्थकरादिः ॥ ७ ॥

प्रथमादिशब्देन जनन्यादिग्रह । द्वितीयादिशब्देन तु गणधरादिग्रहणम् । ये तु श्रोत्रिया श्रुतेरपौरुषेयत्वे पौरुप स्फोरयाचक्रु, ते कीदृशी श्रुतिममूमास्थाय, किं वर्णरूपाम्, आनुपूर्वीरूपा वा। यदि प्राचिकीम्, तदस्पष्टम्, उपरिष्टात् "अकारादि पौद्गलिको वर्ण" इत्यत्र वित्रास्यमानत्वादस्या । अथोदीचीनाम्, तर्हि तत्र तत्प्रतीतौ प्रत्यक्षम्, अनुमानम्, अर्थापत्ति, आगमो वा प्रमाण प्रणिगद्येत । न प्रत्यक्षम्, अस्य तादात्विकभावस्वभावावभासमात्रचरित्रपवित्रत्वात् ।

"सम्बद्ध वर्त्तमान च गृह्यते चक्षुरादिना" इति वचनात् ।

यैव श्रुतिर्मया प्रागभ्यगायि, सैवेदानीमपीति प्रत्यभिज्ञाप्रत्यक्षमक्षूण लक्ष्यत एवास्या सदातनत्वमवगोतयदिति चेन, नन्वसौ "समुदयमात्रमिद कलेवरम्" इत्यादिलोकायतागमेऽप्येकरसैवास्तीति तेऽपि तथा स्यु, तथा च तत्पठितानुष्ठाननिष्ठा पटिष्ठता विप्राणामपि प्राप्नोति, अन्यथा प्रत्यवायसभवात् । अथात्रेयमभिधानानन्तरानुपलम्भेन बाध्यते, किं न श्रुतावपि ? । अभिव्यक्त्यभावसभवी तदानीमनुपलम्भ श्रुतौ नाभावनिबन्धन इति चेत्, किं न नास्तिकसिद्धान्तेऽप्येवम्, इति सकल समानम् । किंच । अनुभवानुचरणचतुर प्रत्यभिज्ञानम्, अनुभवश्च प्रायेण प्रत्यभिज्ञा ताद्भविकीम्, जातिस्मृत्यादिमत कस्यापि कतिपयभवविषया च प्रभावयितुं प्रभु, इति कथमनादौ काले केनापि नेयं श्रुति सूत्रिता, इति प्रकटयितुं पटीयसीय स्यात ? । तन्न तत्र प्रत्यक्ष क्षमते। नाप्यनुमानम्, तद्धि कर्त्रस्मरणम्, वेदाध्ययनवाच्यत्वम्, कालत्व वा। तत्रैतेषु सर्वेष्वपि प्रत्यक्षानुमानागमबाधितत्व तावत्पक्षदोष । तत्र प्रत्यक्षबाध तावत्, तथाविधमठपीठिकाप्रतिष्ठशठबठराध्वर्यूद्गातृहोतृप्रायप्रचुरखण्डिकेषु यजु सामर्च उच्चैस्तरा युग-

पत् पूत्कुर्वत्सु कोलाहलमसी कुर्वन्तीति प्रत्यक्ष प्रादुरस्ति, तेन चापौरुपेयत्वपक्षो बाध्यते । अभिव्यक्तिसद्भावादेवेय प्रतीतिरिति चेत्, तर्हि हसपक्षादिहस्तकेष्वपि कि नेय तथा ? इति तेऽपि नित्या स्यु । वर्णयिष्यमाणवर्णव्यक्तिव्यपाकरण चेहाप्यनुसन्धानीयम् । श्रुतिः पौरुषेयी, वर्णाद्यात्मकत्वात्, कुमारसभवादिवत्, इत्यनुमानबाध । पुरुषो हि परिभाव्याभिधेयभावस्वभाव तदनुगुणा ग्रन्थवीथी ग्रश्नाति, तदभावे कौतस्कुतीय सभवेत् ? । यदि हि शङ्खसमुद्रमेघादिभ्योऽपूरुषेभ्योऽपि कदाचित् तदात्मक वाक्यमुपलभ्येत, सदाऽत्रापि सभाव्येत, नचैवम् । अथ वर्णाद्यात्मकत्वमात्र हेतूचिकीर्षित चेत्, तदानीमप्रयोजकम्, वल्मीकस्य कुलालपूर्वकत्वे साध्ये मृद्विकारत्ववत् । अथ लौकिकश्लोकादिविलक्षण तत् तर्हि विरुद्धम्, साधनशून्य च कुमारसभवादिनिदर्शनम्, तत्रैव साध्ये विशिष्टमृद्विकारत्ववत्, कूटदृष्टान्तवचेति चेत् । नैतच्चतुरस्रम । यतस्तन्मात्रमेव हेतु, न चाप्रयोजकम्, विशिष्टवर्णाद्यात्मकत्वस्यैव काप्यसभवाद् । दु श्रवदुर्भणत्वादेस्तु श्रुतिविशेषस्य–

"नाष्ट्रास्त्वाष्ट्रारिराष्ट्रे न, भ्राष्ट्रे नादष्ट्रिणो जना ।
धार्त्तराष्ट्रा सुराष्ट्रे न, महाराष्ट्रे तु नोष्ट्रिण " ॥१॥

इत्यादौ लौकिकश्लोके सविशेषस्य सद्भावात् । अभ्यधिष्महि च–

"यत् कौमारकुमारसभवभवाद् वाक्यान्न किञ्चित् क्वचित् ।
वैशिष्ट्य श्रुतिपु स्थित तत इमा स्यु कर्तृशून्या कथम्" इति ।

"प्रजापतिर्वेदमेकमासीत्, नाहरासीत्, नरात्रिरासीत्, स तपोऽतप्यत, तस्मात्तपन, तपनाच्चत्वारो वेदा अजायन्त " इति स्वकर्तृप्रतिपादकागमबाध । ननु नायमागम प्रमाणम, भूतार्थाभिधायकत्वात्, कार्य एव ह्यर्थे वाचा प्रामाण्यम्, अन्वयव्यतिरेकाभ्या लोके कार्यान्वितेषु पदार्थेषु पदाना शक्त्यवगमादिति चेत् । तदश्लीलम । कुशलोदर्कसम्पर्ककर्कश साधूपास्याप्रसङ्ग इत्यादेर्भूतार्थस्यापि शब्दस्य लोके प्रयोगोपलम्भात् । अथात्रापि कार्यार्थतैव, तस्मादत्र प्रवर्त्तितव्यमित्यवगमादिति चेत्, स तदवगम औपदेशिक औपदेशिकार्थकृतो वा भवेत् । न तावदाद्य, तथाविधोपदेशाश्र-

बणात्। द्वितीयस्तु स्यात्, न पुनस्तत्रोपदेशस्य प्रमाण्यम्, अस्य स्वार्थप्रथामात्रचरितार्थत्वात्। प्रतिपादकत्वेनैव प्रमाणाना प्रामाण्यात्। अन्यथा प्रवृत्ताविव तत्साध्यार्थेऽपि प्रामाण्यप्रसङ्गात्। प्रत्यक्षस्य च विवक्षितार्थवत् तत्साध्यार्थक्रियाऽपि प्रमेया भवेत्, तस्मात् पुरुषेच्छाप्रतिबद्धवृत्ति प्रवृत्तिरस्तु। मा वा भूत्, प्रमाणेन पदार्थपरिच्छेदश्चेत् चक्राण , तावतैव प्रेक्षावतोऽपेक्षाबुद्धे पर्यवसानात्, पुण्य प्रामाण्यमस्यावसेयम्। यद्वा, अस्तु तस्मादत्र प्रवर्त्तितव्यामित्यवगमात् कुशलोदर्केत्यादिवाक्याना प्रामाण्यम्, किंतु तद्वदेव वेदे कर्तृप्रतिपादकागमस्यापि प्रामाण्य प्रासाङ्क्षीदेवेति सिद्ध आगमबाधोऽपि। यत्तु कर्त्रस्मरण साधनम्, तदविशेषण सविशेषण वा वर्ण्येत। प्राक्तन, तावत् पुराणकूपप्रासादारामविहारादिभिर्व्यभिचारि, तेषा कर्त्रस्मरणेऽपि पौरुषेयत्वात्। द्वितीय तु सम्प्रदायाव्यवच्छेदे सति कर्त्रस्मरणादिति व्यधिकरणासिद्धम्, कर्त्रस्मरणस्य श्रुते अन्यत्राश्रये पुंसि वर्त्तनात्। अथापौरुषेयी श्रुति , सम्प्रदायाव्यवच्छेदे सत्यस्मर्यमाणकर्तृकत्वात्, आकाशवत्, इत्यनुमानरचनायामनवकाशा व्यधिकरणासिद्धि। मैवम्। एवमपि विशेषणे सन्दिग्धासिद्धतापत्ते। तथाहि। आदिमतामपि प्रासादादीना सम्प्रदायो व्यवच्छिद्यमानो विलोक्यते, अनादेस्तु श्रुतेरव्यवच्छेदी सम्प्रदायोऽद्यापि विद्यत इति मृतकमुष्टिबन्धमन्वकार्षीत्, तथा च कथ न सन्दिग्धासिद्ध विशेषणम्?। विशेष्यमप्युभयासिद्धम्, वादिप्रतिवादिभ्या तत्र कर्तु स्मरणात्। ननु श्रोत्रिया श्रुतौ कर्त्तार स्मरन्तीति मृषोद्यम्, श्रोत्रियापशदा खल्वमी इति चेत्, ननु यूयमाम्नायमाम्नासिष्ट तावत्, ततो "यो वै वेदांश्च प्रहिणोति" इति, प्रजापति सोम राजानमन्वसृजत् ततस्त्रयो वेदा अन्वसृजन्त" इति च स्वयमेव स्वस्य कर्त्तार स्मरयन्ती श्रुति विश्रुतामश्रुतामिव गणयन्तो यूयमेव श्रोत्रियापशदा किं न स्यात?। किंच। कण्वमाध्यंदिनतित्तिरिप्रभृतिमुनिनामाङ्किता काश्चन शाखा , तत्कृतत्वादेव, मन्वादिस्मृत्यादिवत्। उत्सन्नाना तासा कल्पादौ तैर्दृष्टत्वात्, प्रकाशितत्वाद्वा तन्नामचिह्नेऽनादौ काले ऽनन्तमुनिनामाङ्कितत्व तासा स्यात्। जैनाश्च कालासुरमेतत्कर्त्तार स्मरन्ति। कर्तृविशेषे विप्रतिपत्तेरप्रमाणमेवैतत्स्मरणमिति चेत्। नैवम्।

यतो यत्रैव विप्रतिपत्तिः, तदेवाऽप्रमाणमस्तु, न पुनः कर्तृमात्रस्मरणमपि।

"वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनवाच्यत्वादधुनाऽध्ययनं यथा॥ १॥
अतीतानागतौ कालौ वेदकारविवर्जितौ।
कालत्वात्, तद्यथा कालो वर्त्तमानः समीक्ष्यते"॥२॥

इति कारिकोक्ते वेदाध्ययनवाच्यत्वकालत्वे अपि हेतू, 'कुरङ्गशृङ्ग-भङ्गुर कुरङ्गाक्षीणां चेतः' इति वाक्याध्ययनं गुर्वध्ययनपूर्वकम्, एत-द्वाक्याध्ययनवाच्यत्वात्, अधुनातनाध्ययनवत्, अतीतानागतौ कालौ प्रक्रान्तवाक्यकर्तृवर्जितौ, कालत्वात्, वर्त्तमानकालवत्, इतिवदप्रयो-जकत्वात्, अनाकर्णनीयौ सकर्णानाम्। अथार्थापत्तेरपौरुषेयत्वनिर्णयो वेदस्य। तथाहि— संवादविसंवाददर्शनादर्शनाभ्यां तावदेष निःशेषपुरुषै-प्रामाण्येन निरणायि। तन्निर्णयश्चास्य पौरुषेयत्वे दुरापः।

यतः—

"शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितिः।
तदभावः क्वचित्तावद् गुणवद्वक्तृकत्वतः॥
तद्गुणैरपकृष्टानां शब्दे सङ्क्रान्त्यसंभवात्।
वेदे तु गुणवान् वक्ता निर्णेतुं नैव शक्यते॥
ततश्च दोषाभावोऽपि निर्णेतुं शक्यतां कथम्?।
वक्त्रभावे तु सुज्ञानो दोषाभावो विभाव्यते॥
यस्माद्वक्तुरभावेन न स्युर्दोषा निराश्रयाः"।

ततः प्रामाण्यनिर्णयान्यथानुपपत्तेरपौरुषेयोऽयमिति। अस्तु ताव-दत्र कृपणपशुपरम्पराप्राणव्यपरोपणप्रगुणप्रचुरोपदेशापवित्रत्वादप्रमा-णमेवैष इत्यनुत्तरोत्तरप्रकारः। प्रामाण्यनिर्णयेऽप्यस्य न साध्यसिद्धिः, विरुद्धत्वाद्, गुणवद्वक्तृकतायामेव वाक्येषु प्रामाण्यनिर्णयोपपत्तेः। पुरुषो हि यथा रागादिमान् मृषावादी, तथा सत्यशौचादिमानवितथव-चनः समुपलब्धः। श्रुतौ तु तदुभयाभावे नैरर्थक्यमेव भवेत्। कथं वक्तुर्गुणित्वनिश्चयश्छन्दसीति चेत्, कथं पितृपितामहप्रपितामहादेरप्य-

सौ ते स्यात्? येन तद्धस्तन्यस्ताक्षरश्रेणे, पारम्पर्योपदेशस्य वाऽनुसारेण प्राह्यदेयनिधानादौ नि शङ्क प्रवर्त्तेथा। कचित्सवादाच्चेत्, अत एवान्यत्रापि प्रतीहि। कारीर्यादौ सवाददर्शनात्। कादाचित्कविसवादस्तु सामग्रीवैगुण्यात् त्वयाऽपि प्रतीयत एव, प्रतीताप्तत्वोपदिष्टमन्त्रवत्। प्रतिपादितश्च प्राक् रागद्वेषाज्ञानशून्यपुरुषविशेषानिर्णय। किंच। अस्य व्याख्यान तावत् पौरुषेयमेव, अपौरुषेयत्वे भावनानियोगादिविरुद्धव्याख्याभेदाभावप्रसङ्गात्, तथाच को नामात्र विश्रम्भो भवेत्?। कथ चैतद्ध्वनीनामर्थनिर्णीति? लौकिकध्वन्यनुसारेणेति चेत्, कि न पौरुषेयत्वनिर्णीतिरपि?, तत्रोभयस्यापि विभावनात्। अन्यथा त्वर्द्धजरतीयम्। नच लौकिकार्थानुसारेण मदीयोऽर्थ स्थापनीय इति श्रुतिरेव स्वय वक्ति, नच जैमिन्यादावपि तथा कथयति प्रत्यय इत्यपौरुषेयवचसामर्थोऽप्यन्य एव कोऽपि सभाव्येत। पौरुषेयीणामपि म्लेच्छार्यवाचामैकार्थ्यं नास्ति, कि पुनरपौरुषेयवाचाम्। तत परमकृपापीयूषप्लावितान्त करण कोऽपि पुमान्निर्दोष प्रसिद्धार्थैर्ध्वनिभि स्वाध्याय विधाय व्याख्याति, इदानीतनग्रन्थकारवत्, इति युक्त पश्याम।

अवोचाम च–

'छन्द स्वीकुरुषे प्रमाणमथ चैतद्वाच्यनिश्चायकम्।
कश्चिद्विश्वविद न जल्पसि ततो जातोऽस्यमूल्यक्रयी'॥ इति।

आगमोऽपि नाऽपौरुषेयत्वमाख्याति। पौरुषेयत्वाविष्कारिण एवास्योक्तवत्सद्भावात्। अपि च। इयमानुपूर्वी पिपीलिकादीनामिव देशकृता, अङ्कुरपत्रकन्दलकाण्डादीनामिव कालकृता वा वर्णाना वेदे न सभवति, तेषा नित्यव्यापकत्वात्। क्रमेणाभिव्यक्ते सा सभवतीति चेत्, तर्हि कथमियमपौरुषेयी भवेत्? अभिव्यक्ते पौरुषेयत्वात्। इति सिद्धा पौरुषेयी श्रुति॥ ७॥

आप्तं प्ररूप्य तद्वचनं प्ररूपयन्ति–

वर्णपदवाक्यात्मक वचनम्॥ ८॥

उपलक्षण चैतत् प्रकरणपरिच्छेदादीनामपि॥ ८॥

तत्र वर्णं वर्णयन्ति—

अकारादिः पौद्गलिको वर्णः ॥ ९ ॥

पुद्गलैर्भाषावर्गणापरमाणुभिरारब्ध पौद्गलिक । अत्र याज्ञिका प्रज्ञापयन्ति-वर्णस्याऽनित्यत्वमेव तावद् दुरुपपादम्, कुतस्तरा पुद्गलारब्धत्वमस्य स्यात्?। तथाहि—स एवायं गकार इति प्रत्यभिज्ञा, शब्दो नित्य श्रावणत्वाच्छब्दत्ववादित्यनुमानम्, शब्दो नित्य, परार्थं तदुच्चारणान्यथानुपपत्तेरित्यर्थापत्तिश्चेति प्रमाणानि दिनकरकरनिकरनिरन्तरप्रसरपरामर्शोपजातजृम्भाऽऽरम्भाम्भोजानीव मन प्रसादमस्य नित्यत्वमेव द्योतयन्ति । तदवद्यम् । यत प्रत्यभिज्ञान तावत् कथञ्चिदनित्यत्वेनैवाऽविनाभावमाभेजानम्, एकान्तैकरूपताथा ध्वने स एवायमित्याकारोभयगोचरत्वविरोधात् । कथमात्मनि तद्रूपेऽपि स एवाहमिति प्रत्यभिज्ञेति चेत् । तदशस्यम् । तस्यापि कथञ्चिदनित्यस्यैव स्वीकारात् । प्रत्यभिज्ञाभासश्चायम्, प्रत्यक्षानुमानाभ्या बाध्यमानत्वात्, प्रदीपप्रत्यभिज्ञावत् । प्रत्यक्ष हि तावदुत्पेदे विपेदे च वागियमिति प्रवर्त्तते। नच प्रत्यभिज्ञानेनैवेद प्रत्यक्ष बाधिष्यत इत्यभिधानीयम्, अस्यानन्यथासिद्धत्वात् । अभिव्यक्तिभावाऽभावाभ्यामेवेय प्रतीतिरिति चेत्, कुटकटकटाहकटाक्षादावपि किं नेय तथा?। कुम्भकारमुद्गरादिकारणकलापव्यापारोपलम्भात् तदुत्पत्तिविपत्तिस्वीकृतौ, तालुवातादिहेतुव्यापारप्रेक्षणादक्षरेष्वपि तत्स्वीकारोऽस्तु । तालुवातादेरभिव्यक्त्यनभिव्यक्तिमात्रहेतुत्वे, कुलालादेरपि तदस्तु । नचाभिव्यक्तिभावाऽभावाभ्या तथा प्रतीतिरुपापादि । दिनकरमरीचिराजीव्यज्यमाने, घनतरतिमिरनिकराकीर्यमाणे च कुम्भादावुदपादि व्यपादि चायमिति प्रतीत्यनुत्पत्ते । तिमिरावरणवेलायामपि स्पार्शनप्रत्यक्षेणास्योपलम्भान्न तथेयमिति चेत्, यदा तर्हि नोपलम्भ तदा किं वक्ष्यसि?। अथ क्वापि तिमिरादे तत्सत्त्वाविरोधित्वावधारणात् सर्वत्रानभिव्यक्तिदशाया तत्सत्त्व निश्चीयत इति चेत्, तत्किमावृतावस्थाया शब्दस्य सत्त्वनिर्णायक न किञ्चित् प्रमाणमस्ति?। ओमिति चेत्, तर्हि साधकप्रमाणाभावादसत्त्वमस्तु । अस्त्येव प्रत्यभिज्ञादिक तदिति चेत्। न। अस्य प्रत्यक्षबाधितत्वेनोन्मत्तकु-

मशक्ते । उन्मज्जनेऽपि व्यक्तिभावाभावयो कुम्भाद्वाविवात्राप्युदयव्ययाध्यवसायो न स्यात्। अस्ति चायम्, तस्मादनन्यथासिद्धप्रत्यक्षप्रतिबद्ध एवेति निश्चीयते। अनित्य शब्दस्तीव्रमन्दतादिधर्मोपेतत्वात्, सुखदु खादिवदित्यनुमानबाध । व्यञ्जकाश्रितास्तीव्रतादय तत्राभान्तीति चेत्, किं तत्र व्यञ्जकम्। कोष्ठवायुविशेषा ध्वनय इति चेत्, कथ तर्हि तद्धर्माणा तेषां श्रावणप्रत्यक्षे प्रतिभास स्यात्? ध्वनीनामश्रावणत्वेन तद्धर्माणामप्यश्रावणत्वात् । न खलु मृदुसमीरलहरीतरङ्गयमाणनिष्पङ्कपयोभाजनादौ प्रतिबिम्बितमुखादिगतत्वेन तरलत्वमिव माधुर्यमप्यचाक्षुष चक्षु प्रत्यक्षेण प्रेक्ष्यते । श्रोत्रग्राह्य एव कश्चिदर्थ शब्दस्य व्यञ्जक, तीव्रत्वादिधर्मवान्, अनित्यश्चेष्यत इति चेत् । न । तस्यैव शब्दत्वात् । श्रोत्रग्राह्यत्व हि शब्दलक्षणम्, तल्लक्षणयुक्तस्य च तस्य ततोऽर्थान्तरत्वमयुक्तम् । किं च । कस्य किं कुर्वन्तोऽमी व्यञ्जका ध्वनयो भवेयु ? । शब्दस्य, श्रोत्रस्योभयस्य वा सस्कारमिति चेत्, कोऽय सस्कारोऽत्र ? रूपान्तरोत्पत्ति, आवरणविपत्तिर्वा । आद्यश्चेत्, कथ न शब्दश्रोत्रयोरनित्यत्व स्यात्? स्वभावान्यत्वरूपत्वात्तस्य। अथ रूप धर्म, धर्मधर्मिणोश्च भेदात्, तदुत्पत्तावपि न भावस्वभावान्यत्वमिति चेत्, ननु धर्मान्तरोत्पादेऽपि भावस्वभावोऽजनयद्रूपस्वरूपस्तादृगेव चेत्, तदा पटादिनेव श्रोत्रेण घटादेरिव ध्वनेर्नोपलम्भ सभवेत् । तत्सबन्धिनस्तस्य करणाददोष इति चेत्, स तावत् संबन्धो न सयोग, तस्याऽद्रव्यत्वात्। समवायस्तु कथञ्चिदविष्वग्भावान्नान्यो भवितुमर्हतीति तदात्मकधर्मोत्पत्तौ धर्मिणोऽपि कथञ्चिदुत्पत्तिरनिवार्या । आवरणापगम सस्कारः क्षेमकार इति चेत्, स तर्हि शब्दस्यैव संभाव्यते, ततश्चैकत्रावरणविगमे समग्रवर्णाऽऽकर्णनं स्यात् । प्रतिवर्ण पृथगावरणमिति यस्यैवावरणविरमणम्, तस्यैवोपलब्धिरिति चेत्। तन्नावितथम्। अपृथग्देशवर्त्तमानैकेन्द्रियग्राह्याणा प्रतिनियताऽऽवरणाऽऽवार्यत्वविरोधात् । यत् खलु प्रतिनियतावरणावार्यम्, तत् पृथग्देशे वर्तमानम्, अनेकेन्द्रियग्राह्यं च दृष्ट, यथा घटपटौ, यथा वा रूपरसाविति । अपृथग्देशवर्त्तमानैकेन्द्रियग्राह्यत्वादेव च नास्य प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमपि। अस्तु वैतत्तथाऽप्ययमभि-

व्यज्यमानं सामस्त्येन, प्रदेशतो वा व्यज्येत । नाद्य पक्ष क्षेमकर । सकलशरीरिणा युगपत्तदुपलम्भापत्ते । द्वितीयविकल्पे तु कथ सकर्णस्यापि सपूर्णवर्णाकर्णन भवेत् ? । न खलु निखिलावृताङ्गराजाङ्गनानामपटुपवनापनीयमानवसनाञ्चलत्वेन चलनाङ्गुलिकोटिप्रकटताया विकस्वरशिरीषकुसुमसुकुमारसमग्रविग्रहयष्टिनिष्टङ्कन विशिष्टेक्षणानामपीक्ष्यते । प्रदेशाभिव्यक्तौ चास्य सप्रदेशत्व प्रसज्यते । ततो व्यञ्जकस्य कस्यचिच्छब्दे सभवाभावात्, तद्गता एव तीव्रतादय इति नासिद्धो हेतु । यदपि श्रावणत्वादित्यनुमानम्, तदपि–

"कान्तकीर्त्तिप्रथाकाम कामयेत स्वमातरम् ।
ब्रह्महत्यां च कुर्वीत स्वर्गकाम सुरा पिबेत्" ॥ १ ॥

इत्याद्यानुपूर्व्या सव्याभिचारम् । नित्यैवेयमिति चेत्, तर्हि प्रेरणावत् प्रामाण्यप्रसङ्ग, तदर्थानुष्ठानाश्रद्धाने च प्रत्यवायापत्ति । उदात्तस्वरिततीव्रमन्दसुस्वरविस्वरत्वादिधर्मैश्च व्यभिचार, तेषा नित्यत्वे सदाप्येकाकारप्रत्ययप्रसक्ते । नित्यत्वेऽप्यमीषामभिव्यक्ति कादाचित्कीति चेत् । तदचारु । परस्परविरुद्धानामेकत्र समावेशासभवात् । प्रभाकरेण शब्दत्वास्वीकारादुभयविकलश्च त प्रत्यत्र दृष्टान्त । अथ भट्ट एवेत्थमनुमानयति । प्रभाकरस्तु देशकालभिन्ना गोशब्दव्यक्तिबुद्धय एकगोशब्दगोचरा, गोरित्युत्पद्यमानत्वात्, अद्योच्चारितगोशब्दव्यक्तिबुद्धिवदिति वदतीति चेत् । तदप्यनवदातम् । अत्र प्रतिबन्धाऽभावात्, तडित्तन्तुनित्यत्वसिद्धावप्येवविधानुमानस्य कर्तु शक्यत्वात् । याऽप्यर्थापत्ति प्रत्यपादि, तत्रायमर्थ –अनित्यत्वे सति यो गृहीतसबन्ध शब्द, स तदैव दध्वसे इति व्यवहारकालेऽन्य एवागृहीतसबन्ध कथमुच्चार्येत ? उच्चार्यते च, तस्मान्नित्य एवायमिति । तदयुक्तम् । अनेन न्यायेनार्थस्यापि नित्यैकतापत्ते, अन्यथा बाहुलेये गृहीतसबन्धोऽपि गोशब्द शाबलेयादिष्वगृहीतसबन्ध कथ प्रतिपत्ति कुर्यात् ? । सामान्यस्यैव शब्दार्थत्वाददोष इति चेत् । न । लम्बकम्बल ककुद्मान, वृत्तशृङ्गश्चाय गौरिति सामानाधिकरण्याभावप्रसक्ते । तत सामान्यविशेषात्मैव शब्दार्थ, स च नैकान्तेनाऽन्वेतीति न नित्यैकरूपोऽभ्युपेय स्यात् । कथ च धूमव्य-

क्ति पर्वते पावक गमयेत्? धूमत्वसामान्यमेव गमकमिति चेत्, वाचकमपि सामान्यमेवास्तु। अथ शब्दत्वम्, गोशब्दत्वम्, क्रमाभिव्यज्यमानगत्वौत्वादिक वा तद्भवेत्। आद्यपक्षे प्रतिनियतार्थप्रतिपत्तिर्न स्यात्, सर्वत्र शब्दत्वस्याविशेषात्। गोशब्दत्व तु नास्त्येव, गोशब्दव्यक्तेरेकस्या दस्याश्चित्तदाधारभूताया असभवात्, क्रमेण व्यज्यमान हि वर्णद्वयमेवैतत्। क्रमाभिव्यज्यमानेत्यादिपक्षोऽप्यसभवी, गत्वादिसामान्यस्याविद्यमानत्वात्, सर्वत्र गकारादेरेकत्वात्। अत्रोच्यते। अस्तु तार्तीयीक कल्प, नच गकारादेरैक्यम्, गर्गभर्गवर्गस्वर्गादौ भूयासोऽमी गकारा इति तद्भेदोपलम्भात्। व्यञ्जकभेदादयमिति चेत्, अकाराद्यशेषशेषवर्णेष्वप्येषोऽस्त्वित्येक एव वर्ण स्यात्। अथ यथा अयमपि गकार, अयमपि गकार, इत्येकाकारा प्रतीति, तथा नाकाराद्यशेषवर्णेष्वपीति चेत्। नैवम्। अयमपि वर्ण, अयमपि वर्ण, इत्येकप्रत्यवमर्शोत्पत्ते.। सामान्यनिमित्तक एवायमिति चेत्, तर्हि गकारादावपि तथास्तु। अथाकारेकारादौ विशेषोऽनुभूयते, न तु गर्गादिगकारेषु, तेषा तुल्यस्थानास्यप्रयत्नादित्वादिति चेत्, एव तर्हि–

"सहर्ष हेषन्ते हरिहरिति हम्मीरहरय"

इत्यादिहकारात् कण्ठ्याद्वह्निजिह्वादिहकारस्य

"ह उरस्यो वह्निजिह्वादौ वर्गपञ्चमसयुत"

इति वचनादुरस्यत्वेन स्थानभेदप्रतीते, ततो भिन्नोऽय वर्णो भवेत्। नच गकारे नास्ति विशेषावभास, तीव्रोऽय मन्दोऽयं गकार इति तीव्रतादिविशेषस्फुरणात्। व्यञ्जकगतास्तीव्रतादय तत्र स्फुरन्तीति चेत्, कृतोत्तरमेतत्। अकारेकारादावप्यनुभूयमान स स विशेष तद्गत एवाऽस्तु, तथाचैक एव वर्ण किं न भवेत्?। मा भूद्वा विशेषावभासो गकारेषु भेदावभासस्तु विद्यत एव, बहवोऽमी गकारा इति प्रतीते। भवति च विशेषावभास विनापि भेदस्फूर्त्ति., सर्षपराशौ गुरुलाघवादिविशेषावभास विनापि तद्भेदप्रतिभासवत्। इति सिद्धो गकारभेद। तथा च तदादिवर्णवर्त्तिसामान्यानामेव वाचकत्वमस्तु। तत्त्वतस्तु गोशब्दत्वमेव सदृशपरिणामात्मक वाचकम्। क्रमाभिव्यज्यमानं वर्णद्व-

यमेवैतत्, नैका गोशब्दद्व्यक्तिरिति च न वाच्यम् । नित्यत्वाऽप्रसिद्धा-वद्याप्यस्योत्तरस्य कूर्परकोटिसटङ्कितगुडायमानत्वात् । तस्मात् क्रमो-त्पदिष्णुतत्तद्गकारादिपर्यायोपहितभाषाद्रव्यात्मको गोशब्द एव सदृश-परिणामात्मा वाचकोऽस्तु । तथा च क्षीणाऽर्थापत्ति । अस्त्वनित्यो ध्वनि, किन्तु नायं पौद्गलिक सगच्छत इति यौगा' सङ्गिरमाणा सप्र-णयप्रणयिनीनामेव गौरवार्हा । यत कोऽत्र हेतु, स्पर्शशून्याश्रयत्वम्, अतिनिबिडप्रदेशे प्रवेशनिर्गमयोरप्रतिघात., पूर्वं पश्चाच्चाऽवयवानुपल-ब्धि, सूक्ष्ममूर्त्तद्रव्यान्तराऽप्रेरकत्व, गगनगुणत्व वा । नाद्य पक्ष । यत' शब्दपर्यायस्याश्रये भाषावर्गणारूपे स्पर्शाऽभावो न तावदनुपल-ब्धिमात्रात् प्रसिद्ध्यति, तस्य सव्यभिचारत्वात् । योग्यानुपलब्धिस्त्व-सिद्धा, तत्र स्पर्शस्यानुद्भूतत्वेनोपलब्धिलक्षणप्राप्तत्वाऽभावात्, उपल-भ्यमानगन्धाधारद्रव्यवत् । अथ घनसारगन्धसारादौ गन्धस्य स्पर्शा-व्यभिचारनिश्चयादत्रापि तन्निर्णयेऽप्यनुपलम्भादनुद्भूतत्व युक्तम्, नेतरत्र, तन्निर्णायकाभावात्, इति चेत्, मा भूत्तावत्तन्निर्णायक कि-ञ्चित् । किन्तु पुद्गलानामुद्भूतानुद्भूतस्पर्शानामुपलब्धे शब्देऽपि पौद्गलिकत्वेन परै प्रणिगद्यमाने, बाधकाभावे च सति सन्देह एव स्यात्, नत्वभावनिश्चय', तथा च सन्दिग्धासिद्धो हेतु । नच नास्ति तन्निर्णा-यकम् । तथाहि–शब्दाश्रय स्पर्शवान्, अनुवातप्रतिवातयोर्विप्रकृष्टनि-कटशरीरिणोपलभ्यमानाऽनुपलभ्यमानेन्द्रियार्थत्वात्, तथाविधगन्धा-धारद्रव्यवत्, इति । द्वितीयकल्पेऽपि गन्धद्रव्येण व्यभिचार वर्त्तमान-जात्यकस्तूरिकाकर्पूरकश्मीरजादिगन्धद्रव्य हि पिहितकपाटसंपुटाऽपव-रकस्यान्तर्विशति, बहिश्च निस्सरति, नचाऽपौद्गलिकम् । अथ तत्र सूक्ष्म-रन्ध्रसभवेनातिनिबिडत्वाभावात् तत्प्रवेशनिष्काशौ, अत एव तदल्पीय-स्ता, नत्वपावृतद्वारदशायामिव तदेकार्णवत्वम्, सर्वथा नीरन्ध्रे तु प्रदेशे नैतौ सम्भवत इति चेत्, एव तर्हि शब्देऽपि सर्वस्य तुल्ययोगक्षेमत्वाद-सिद्धता हेतोरस्तु । पूर्वं पश्चाच्चावयवानुपलब्धि, सौदामिनीदामोल्कादि-भिरनैकान्तिकी । सूक्ष्ममूर्त्तद्रव्यान्तराप्रेरकत्वमपि गन्धद्रव्यविशेषसूक्ष्म-रजोधूमादिभिर्व्यभिचारी । नहि गन्धद्रव्यादिकमपि नसि निविशमान

तद्विवरद्वारदेशोद्भिन्नश्मश्रुप्रेरक प्रेक्ष्यते । गगनगुणत्वं त्वसिद्धम् । तथाहि । न गगनगुण शब्द अस्मदादिप्रत्यक्षत्वात्, रूपादिवदिति । पौद्गलिकत्वसिद्धि पुनरस्य, शब्द पौद्गलिक, इन्द्रियार्थत्वात्, रूपादिवदेवेति ॥ ९ ॥

पदवाक्ये व्याकुर्वन्ति–

वर्णानामन्योन्यापेक्षाणां निरपेक्षा संहतिः पदम्, पदानां तु वाक्यम् ॥ १० ॥

वर्णौ च वर्णाश्चेत्येकशेषात्, ब्रह्मसबोधने क इत्यादौ द्वयो, गौरित्यादौ बहूना च वर्णानाम् । अन्योन्यापेक्षाणाम्, पदार्थे प्रतिपत्तौ कर्त्तव्याया परस्पर सहकारितया स्थितानाम् । निरपेक्षा, पदान्तरवर्त्तिवर्णनिर्वर्त्तितोपकारपराङ्मुखी, सहतिर्मेलक । पदमभिधीयते, पद्यते गम्यते स्वयोग्योऽर्थोऽनेनेति व्युत्पत्ते । प्रायिकत्वाच्च वर्णद्वयादेरेव पदत्व लक्षितम् । यावता विष्णुवाचकैकाक्षराकारादिकमपि पदान्तरवर्त्तिवर्णनिर्वर्त्तितोपकारपराङ्मुखत्वरूपेण निरपेक्षत्वलक्षणेन पदत्वेन लक्षित द्रष्टव्यम् । पदानां पुन स्वोचितवाक्यार्थप्रत्यायने विधेयेऽन्योन्यनिर्मितोपकारमनुसरता वाक्यान्तरस्थपदापेक्षारहिता सहतिर्वाक्यमभिधीयते, उच्यते स्वसमुचितोऽर्थोऽनेनेति व्युत्पत्ते ॥ १० ॥

अथ सकेतमात्रेणैव शब्दोऽर्थं प्रतिपादयति, नतु स्वाभाविकसंबन्धवशादिति गदतो नैयायिकान्, समयादपि नाऽय वस्तु वदतीति वदतः सौगताश्च पराकुर्वन्ति–

स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्दः॥११॥

स्वाभाविकम्, सहजम् । सामर्थ्यम्, शब्दस्याऽर्थप्रतिपादनशक्ति योग्यतानाम्नी । समयश्च सकेत । ताभ्यामर्थप्रतिपत्तिकारण शब्द इति । तत्र नैयायिकान् प्रत्येव विधेयानुवाद्यभाव, योऽयमर्थबोधनिबन्धनं शब्दोऽभ्युपगतोऽस्ति, स स्वाभाविकसामर्थ्यसमयाभ्यां द्वाभ्यामपि, न पुन समयादेव केवलात् । समयो हि पुरुषायत्तवृत्ति, नच पुरुषेच्छया वस्तु-

नियमो युज्यते । अन्यथा तदिच्छाया अव्याहतप्रसरत्वादर्थोऽपि वाचक , शब्दोऽपि वाच्य स्यात् । अथ गत्वौत्वादिसामान्यसबन्धो यस्य भवति, स वाचकत्वे योग्य , इतरस्तु वाच्यत्वे, यथा द्रव्यत्वाविशेषेऽप्यग्नित्वादिसामान्यविशेषवत एव दाहजनकत्वम् , न जलत्वादिसामान्यविशेषवत इति चेत् । तदयुक्तम् । अतीन्द्रिया शक्तिं विनाऽग्नित्वादेरपि कार्यकारणभावनियामकत्वानुपपत्ते । अग्नित्व हि दाहवह्निजातीयकारणजन्यकार्येष्वपि तुल्यरूपम् । न हि दाह प्रत्येवाग्नेरग्नित्वम् , यथा पुत्रापेक्ष पितु पितृत्वम् । ततश्चाग्निर्दाहवत्पिपासामपनोदमपि विदध्यादिति नातीन्द्रिया शक्तिमन्तरेणाग्नित्वादीना कार्यकारणभावव्यवस्थाहेतुत्वम्, तद्वदेव च गत्वौत्वादिसामान्यानामपि न वाच्यवाचकभावनियमहेतुत्वमिति नियामिका शक्ति स्वीकर्त्तव्यैव । अथ किमनेनातीन्द्रियशक्तिकल्पनाक्लेशेन? । करतलानलसयोगादिसहकारिकारणनिकरपरिकरित कृपीटयोनिस्वरूप हि स्फोटघटनपाटव प्रकटयिष्यति, किमवशिष्ट यदनया करिष्यते । तथा च जयन्त –

"स्वरूपादुद्भवत्कार्यं सहकार्युपबृंहितात् ।
नहि कल्पयितुं शक्त शक्तिमन्यामतीन्द्रियाम्" ॥ १ ॥

यत्तूक्तम्– अग्निर्दाहवत्पिपासापनोदमपि विदध्यादिति । तन्न सत् । न हि वयमद्य कश्चिदभिनव भावानां कार्यकारणभावमुत्थापयितु शक्नुमः किंतु यथाप्रवृत्तमनुसरन्तो व्यवहराम । नह्यस्मदिच्छया आप शीतं शमयन्ति, कृशानुर्वा पिपासाम् , किन्तु तत्र दाहादावन्वयव्यतिरेकाभ्यां वा, वृद्धव्यवहाराद्वा ज्वलनादेरेव कारणत्वमवगच्छाम इति तदेव तदर्थिन उपाददमहे, न जलादि । तदेतदतथ्यम् । यतो यथाभूतादेव विभावसोर्दाहोत्पत्ति प्रतीयते, तथाभूतादेव मणिमन्त्रयन्त्रतन्त्रौषधादिसान्निधाने सति न प्रतीयते । यदि हि दृष्टमेव रूप स्फुट स्फोट घटयेत् , तदा तदानीं तस्य समस्तस्य सद्भावात्तदनुत्पादो न स्यात् । अस्ति चासौ, ततो दृष्टरूपस्य व्यभिचारं प्रपञ्चयन्नतीन्द्रियाया शक्ते सत्त्व समर्पयति । तथा च–

"स्वरूपात्काप्यनुद्यत्तत् सहकार्युपबृंहितात् ।
किन्न कल्पयितु शक्त शक्तिमन्यामतीन्द्रियाम्?" ॥ १ ॥

यत्तूक्तम्–दाहादावन्वयव्यतिरेकाभ्या वा, वृद्धव्यवहाराद्वा ज्वलनादेरेव कारणत्वमवगच्छाम इति। तदुक्तिमात्रमेव। यत एव हि दाहदहनयो कार्यकारणभावनियम प्रसिद्धिपद्धतिप्रतिबद्ध एव, तत एव प्रसङ्ग प्रवर्त्त्यते। यदि कृशानु स्वरूपमात्रादेव दाहमुत्पादयेत्, तर्हि तदविशेषादुदन्याऽपनोदमपि विदध्यादिति। अथ न मणिमन्त्रादिप्रतिबन्धकनैकट्ये स्फोटानुत्पत्तिरदृष्ट रूपमाक्षिपति। यथा ह्यन्वयव्यतिरेकाभ्यामवधृतसामर्थ्यो दहनो दाहहेतु, तथा प्रतिबन्धकाभावोऽपि। स च प्रतिबन्धकयोगे विनिवृत्त इति सामग्रीवैगुण्यादेव दाहस्यानुत्पत्ति, न तु शक्तिवैकल्यादिति चेत्। तदयुक्तम्। यत प्रतिबन्धकाभावो भावादेकान्तव्यतिरिक्त कथं किञ्चित्कार्यं कुर्यात्? कूर्मरोमराजीवत्। ननु नित्यानां कर्मणामकरणात्प्रागभावस्वभावात् प्रत्यवाय उत्पद्यते, अन्यथा नित्याकरणे प्रायश्चित्तानुष्ठान न स्याद्, वैयर्थ्यात्। तन्न तथ्यम्। नित्याकरणस्वभावात् क्रियान्तरकरणादेव प्रत्यवायोत्पत्तेरभ्युपगमात्, त्वन्मतस्य तस्य तद्धेतुत्वासिद्धे।

यदप्युच्यते—

"सुखदु.खसमुत्पत्तिरभावे शत्रुमित्रयो।
कण्टकाभावमालक्ष्य पाद पथि निधीयते"॥१॥

तत्राप्यमित्रमित्रकण्टकाभावज्ञानानामेव सुखदु खाङ्घ्रिनिधानकार्यकारित्वम्, नत्वभावानाम्। तज्ज्ञानमप्यमित्रमित्रकण्टकविविक्तप्रतियोगिवस्त्वन्तरसम्पादितमेव, न तु त्वदभिमताभावकृतम्। अथ भाववदभावोऽपि भावजननसमर्थोऽस्तु, को दोष? । न हि नि शेषसामर्थ्यरहितत्वमभावलक्षणम्, अपि तु नास्तीतिज्ञानगम्यत्वम्। सत्प्रत्ययगम्यो हि भाव उच्यते, असत्प्रत्ययगम्यस्त्वभाव इति चेत्। तदयुक्तम्। त्वदभ्युपगताभावस्य भावात्सर्वथा पार्थक्येन स्थितस्य भावोत्पादकत्वविरोधात्। तथाहि–विवादास्पदीभूतोऽभावो भावोत्पादको न भवति, भावादेकान्तव्यतिरिक्तत्वात्, यदेवं तदेव यथा तुरङ्गशृङ्गम्, तथा चायं तस्मात् तथा। प्रागभावप्रध्वंसाभावपरस्पराभावस्वभावो ह्यभावो वस्तुनो व्यतिरिक्तमूर्त्तिर्भावोत्पादकः परैरिष्ट., सोऽत्र विवादपदशब्दितः। अन्यथा जैनस्य भावाविष्व-

म्भूताभावैर्भावोत्पादकत्वेनाङ्गीकृतैर्बाधा स्यात् । यौगस्य चात्यन्ताभावेन भावानुत्पादकेन सिद्धसाध्यता भवेत् । नन्वय धर्मित्वेनोपात्तोऽभावो भवद्भि प्रतिपन्नो नवा । यदि प्रतिपन्न., किं प्रत्यक्षाद्, अनुमानाद्, विकल्पाद्वा, उपमानादेरत्रानुचितत्वात् । यदि प्रत्यक्षात्,तदा कथमभावस्य भावोत्पादनापवाद सूपपाद स्यात् ? प्रत्यक्षस्यैवोत्पादितत्वात् । अनुमानात्तु तत्प्रतिपत्तौ, तत्राप्यभावधर्मिण प्रतीतिरनुमानान्तरादेव, इत्यत्रानवस्थादौस्थ्यस्थेमा । विकल्पादपि तत्प्रतीति, प्रमाणमूलात्, तन्मात्रादेव वा । न प्रथमात्, प्रमाणप्रवृत्तेस्तत्र तिरस्कृतत्वात् । विकल्पमात्रात्तु तत्प्रतीतिरसत्कल्पा, तत कस्यापि प्रतिपत्तेरनुपपत्त । अन्यथा प्रामाणिकाना प्रमाणपर्येषणमरमणीय स्यात् । तथाचाश्रयासिद्धो हेतु । अथाप्रतिपन्न , तर्हि कथ धर्मितयोपादायि ? । उपात्ते चास्मिन् हेतुराश्रयासिद्ध एव । अत्रोच्यते । विकल्पमात्रादेव तत्प्रतिपत्ति ब्रूमहे । नचाश्रयासिद्धि, अवस्तुनि विकल्पात्प्रसिद्धेरवश्याश्रयणीयत्वात् । अन्यथा वन्ध्यास्तनन्धयादिशब्दानुच्चारणप्रसङ्गात् । नच नोच्चार्यत एवाय मयेति वाच्यम् । वान्ध्येयोऽस्ति, नास्ति वेति पर्यनुयोगे पृथ्वीपतिपरिषद्यवश्य विधिनिषेधान्यतराभिधायिवचनस्यावकाशात् । तूष्णीं पुष्णतोऽस्याप्रतिपित्सितम्, किञ्चिदुच्चारयतो वा पिशाचकित्वप्रसङ्गात् । तथाविधवचनोच्चारणे च कथमेतदिति प्रमाणगवेषणेऽनुमानमुच्चार्यमाणमाश्रयासिद्धिग्रस्तम् । समस्त निष्प्रमाणक वचनमात्र प्रेक्षावता प्रश्नकृताऽनपेक्षितमेव । नचोभयाभावोऽभिधातुं शक्य । विधिनिषेधयोर्भावाभावस्वभावत्वात्, एकनिषेधेनापरविधानात् । विधिप्रतिषेधो हि निषेध, निषेधप्रतिषेधश्च विधि । अस्तु वोभयप्रतिषेधप्रतिज्ञा, हेतोस्तु तत्रोपादीयमानस्य नाश्रयासिद्धिपरिहार ।

तदुक्तम्–

"धर्मस्य कस्यचिदवस्तुनि मानसिद्धा
बाधाविधिव्यवहृति किमिहास्ति नो वा ।
अस्त्येव चेत्, कथमियन्ति न दूषणानि ?
नास्त्येव चेत्, स्ववचनप्रतिरोधसिद्धि " ॥१॥

अवस्तुनि बाधाविधिव्यवहारो नास्तीत्येतदनेनैव स्ववचनेन प्रतिरुध्यते, नास्तीतिप्रतिषेधस्य स्वयकृतत्वात्, इत्यन्त्यपादस्यार्थ । तुरङ्गशृङ्गदृष्टान्तोऽपि विकल्पादेव प्रसिद्ध स्वीकर्तव्य । तत्र च वस्त्वेकान्तव्यतिरेके सति भावानुत्पादकत्वमपि प्रतीतम्, इति नास्य साध्यसाधनोभयवैकल्यम्। ननु जैनैर्भावादभिन्नस्याभावस्याभ्युपगमाद्, वाद्यसिद्धो हेतुरिति चेत्। तदसत्। पराभ्युपगताभावस्य धर्मीकृतत्वात्, तस्य च भावादेकान्तेन पृथग्भूततया जैनैरपि स्वीकारात्। न खल्ववस्तु वस्तुभूताद्भावादभिन्नमिति मन्यन्ते जैना.। ततो नाभावो भावोत्पादकस्तवास्तीति सिद्धम्। किंच। यदा प्रतिबन्धकाभावो विभावसुस्वरूपादेकान्तभिन्नोऽभ्युपागामि, तदा विभावसु प्रतिबन्धकस्वभाव स्वीकृत स्यात्, प्रतिबन्धकाभावाद्यावर्तमानत्वात्, मणिमन्त्रादिप्रतिबन्धकस्वरूपवत्। तथा च कथ कदाचिद्दाहादिकार्योत्पादो भवेद् ? विभावसोरेव प्रतिबन्धकत्वात्। अथ कथ विभावसु प्रतिबन्धक स्यात् ? तत्र प्रतिबन्धकप्रागभावस्य विद्यमानत्वात्। तदनवदातम्। एतावता हि तत्र वर्तमान. प्रतिबन्धकप्रागभाव एव प्रतिबन्धकस्वभावो मा भूत्, विभावसुस्वरूप तु तदभावाद्यावर्तमानं प्रतिबन्धकता कथं न कलयेत्?। यथा हि प्रतिबन्धक स्वभावाद्यावर्त्तमान प्रतिबन्धकता दधाति, तथा तनूनपादपि प्रतिबन्धकाभावाद्यावर्त्तमानमूर्त्ति कथं न प्रतिबन्धकरूपता प्रतिपद्येत?। स्याद्वादिना तु भावाभावोभयात्मकं वस्त्विति प्रतिबन्धकाभावात्मन कृष्णवर्त्मनो न प्रतिबन्धकरूपता । किंच। प्रतिबन्धकाभावस्य कारणत्वे, प्रतिबन्धकस्य कस्यचिन्नैकस्येऽपि प्रतिबन्धकाभावान्तराणामनेकेषा भावात्कथ न कार्योत्पाद ?। न हि कुम्भकारकारण कुम्भ कुम्भकारस्यैकस्याभावेऽपि कुम्भकारान्तरव्यापाराम्न भवति। नचैक एव कश्चित्प्रतिबन्धकाभाव कारणम्, यदभावात् तदानीं न कार्यं जायते, तद्वदेव त्वन्मतेन सर्वेषामवधृतसामर्थ्यत्वात्। अथ सर्वे प्रतिबन्धकाभावा समुदिता एव कारणम्, न पुनरेकैकश कुम्भकारवत्, तर्हि कदाचिदपि दाहादिकार्योत्पत्तिर्न स्यात्, तेषां सर्वेषा कदाचिदभावाद्, भुवने मणिमन्त्रतन्त्रादिप्रतिबन्धकानां भूयसा संभवात्। अथ ये प्रतिबन्धकास्त तनूनपातं

प्रतिबद्धुं प्रसिद्धसामर्थ्या, तेषामेवाभावा सर्वे कारणम्, न तु सर्वेषाम्; सर्वशब्दस्य प्रकारकार्त्स्न्ये वर्त्तमानस्य स्वीकारात्, इति चेत्। ननु प्रसिद्धसामर्थ्या इति सामर्थ्यशब्दस्यातीन्द्रिया शक्ति, स्वरूपं वा प्रतिबन्धकाना वाच्यं स्यात्। प्राच्यपक्षकक्षीकारे, क्षीण' क्षणेनावयो' कण्ठशोष, अतीन्द्रियशक्तिस्वीकारात्। द्वितीयपक्षे तु त एव तं प्रति प्रतिबन्धका, नापरे, इति कौतस्कुती नीति ?। स्वरूपस्योभयेषामपि भावात्। न खलु मणिमन्त्रादे कश्चिदेव जातवेदसमाश्रित्य तत्स्वरूपम्, न पुनर्जातवेदोऽन्तरमिति। तथा न प्रतिबन्धकस्यात्यन्ताभावस्तावत् कारणतया वक्तुं युक्त, तस्यासत्त्वात्, अन्यथा जगति प्रतिबन्धककथा प्रत्यस्तमयप्रसङ्गात्। अपरे पुन प्रतिबन्धकाभावा एकैकश सहकारिता दधीरन्, द्वित्रा वा। प्रथमपक्षे, प्रागभाव, प्रध्वसाभाव, परस्पराभाव, य कश्चिद्वा सहकारी स्यात्। न प्रथम, प्रतिबन्धकप्रध्वसेऽपि पावकस्य प्लोषकार्योपलम्भात्। न द्वितीय, प्रतिबन्धकप्रागभावेऽपि दहनस्य दाहोत्पादकत्वात्। न तृतीय, प्रतिबन्धकसबन्धबन्धोरपि धनञ्जयस्य स्फोटघटनप्रसङ्गात्, तस्य तदानीमपि भावात्। न चतुर्थ, प्ररूपयिष्यमाणानियतहेतुकत्वदोषानुषङ्गात्। द्वित्रप्रतिबन्धकाभावभेदे तु किं प्रागभावप्रध्वसाभावौ, प्रागभावपरस्पराभावौ, प्रध्वसाभावपरस्पराभावौ, त्रयोऽपि वा हेतवो भवेयु। नाद्य पक्ष, उत्तम्भकनैकट्ये तावन्तरेणापि पावकस्य प्लोषकार्यार्जनदर्शनात्। न द्वितीयतृतीयतुरीया', प्रतिबन्धकपरस्पराभावस्य प्राक् तदकारणत्वेन वर्णितत्वात्, भेदत्रयस्यापि चास्य परस्पराभावसंवलितत्वात्। अथ प्रागभावप्रध्वंसाभावोत्तम्भकमणिमन्त्रतन्त्रादयो यथायोग कारणमिति चेत्। तदस्फुटम्। स्फोटादिकार्यस्यैवमनियतहेतुकत्वप्रसङ्गात्। अनियतहेतुकं चाहेतुकमेव। तथाहि—अन्वयव्यतिरेकावधार्य कार्यकारणभावो भावानाम्, धूमधूमध्वजयोरिव। प्रस्तुते तु प्लोषादि यदेकदैकस्मादुत्पद्यमानमीक्षामासे, तदन्यदा यद्यन्यतोऽपि स्यात्, तर्हि तत्कारणकमेव तन्न भवेदिति कथ नाहेतुक स्यात् ?। अथ गोमयाद्, वृश्चिकाच्च वृश्चिकोत्पाद प्रेक्ष्यते। नच तत्रानियतहेतुकत्व स्वीकृत त्वयाऽपीति चेन्। तदपि त्रपापात्रम्।

सर्वत्र हि शालूकगोमयादौ वृश्चिकडिम्भाऽऽरम्भशक्तिरेकास्ति, इति यानि तच्छक्तियुक्तानि, तानि तत्कार्योत्पादकानि, इति नायं न कलङ्क सङ्क्रामति। भवता पुनरत्राप्ययं प्रादुर्भवन् दुष्प्रतिषेध , येषां वृश्चिकगोमयसाधारणमेक किञ्चिन्नास्ति। न च प्रागभावप्रध्वंसाभावोत्तम्भकादीनामप्येकं किञ्चित्तुल्यं रूपं वर्त्तते। इति नानियतहेतुकत्वेन दुर्विधदैवेनेवामी मुच्यन्ते। एतेन 'भावस्वभावोऽप्यभाव एवास्तु हेतुर्नत्वतीन्द्रियशक्तिस्वीकार सुन्दर' इत्यप्युच्यमानमपास्तम्। उक्ताभावविकल्पानामत्राप्यविशेषात्। अथ शक्तिपक्षप्रतिक्षेपदीक्षिता आक्षपादा एव साक्षेपमाचक्षते– ननु भवत्पक्षे प्रतिबन्धकोऽकिञ्चित्कर , किञ्चित्करो वा भवेत्। अकिञ्चित्करप्रकारे, अतिप्रसङ्ग , शृङ्गभृङ्गभृङ्गारादेरप्यकिञ्चित्करस्य प्रतिबन्धकत्वप्रसङ्गात्। किञ्चित्करस्तु किञ्चिदुपचिन्वन्, अपचिन्वन् वा स्यात्। प्राचि पक्षे, किं दाहशक्तिप्रतिकूला शक्ति जनयेत्, तस्या एव धर्मान्तरं वा। न प्रथम , प्रमाणाभावात्। दाहाभावस्तु, प्रतिबन्धकसन्निधिमात्रेणैव चरितार्थ इति न तामुपपादयितुमीश्वर । धर्मान्तरजनने तदभावे सत्येव दाहोत्पाद इत्यभावस्य कारणत्वस्वीकार , त्वदुक्ताशेषप्रागभावादिविकल्पावकाशश्च। अपचयपक्षे तु प्रतिबन्धकस्तां शक्तिं विकुट्टयेत्, तद्धर्मं वा। प्रथमप्रकारे, कुतस्त्यं कृपीटयोने पुन स्फोटघटनपाटवम्। तदानीमन्यैव शक्ति सञ्जातेति चेत्। ननु सा सञ्जायमाना किमुत्तम्भकात्, प्रतिबन्धकाभावाद्, देशकालादिकारकचक्राद्, अतीन्द्रियार्थान्तराद्वा जायते। आद्यभिदायाम्, उत्तम्भकाभावेऽपि प्रतिबन्धकाभावमात्रात्कौतस्कुत कार्यार्जनं जातवेदस । द्वितीये भेदे, तत एव स्फोटोत्पत्तिसिद्धे शक्तिकल्पनावैयर्थ्यम्। तृतीये, देशकालादिकारकचक्रस्य प्रतिबन्धककालेऽपि सद्भावेन शक्त्यन्तरप्रादुर्भावप्रसङ्ग । चतुर्थे, अतीन्द्रियार्थान्तरनिमित्तकल्पने तत एव स्फोट स्फुटं भाविष्यति, किमनया कार्यम्? तन्न शक्तिनाश श्रायस , तद्वदेव तद्धर्म्मनाशपक्षोऽपि प्रतिक्षेपणीय । अत्राभिदध्महे। एतेषु शक्तिनाशपक्ष एव कक्षीक्रियत इत्यपरविकल्पशिल्पकल्पनाजल्पाकता कण्ठशोषायैव व सवभूव। यत्तूक्तम्–कुत पुनरसावुत्पद्यतेति। तत्र शक्त्यन्तरसहकृतात्कृपीटयोनेरेवेति ब्रूम । ननु प्रतिबन्धकदशायां

सा शक्तिरस्ति नवा । नास्ति चेत्, कुत पुनरुत्पद्येत । शक्त्यन्तरसहकृतादग्नेरेवेति चेत्, तर्हि साऽपि शक्त्यन्तरसध्रीचस्तस्मादेवोन्मज्जेदित्यनवस्था । अथास्ति, तदा तदानीमपि स्फोटोत्पादिका शक्ति सपादयेत्, ततोऽपि स्फोट स्फुट स्यादेवेति । अत्रोच्यते । प्रतिबन्धकावस्थायामप्यस्त्येव शक्त्यन्तरम्, घटयति च स्फोटघटनलम्पटा शक्ति तदाऽपि । यस्तु तदा स्फोटानुत्पाद, स प्रतिबन्धकेनोत्पन्नोत्पन्नायास्तस्या प्रध्वसात् । प्रतिबन्धकापगमे तु स्फोट स्फुटीभवत्येवेत्यतीन्द्रियशक्तिसिद्धि । अत्राऽऽशङ्कान्तरपरीहारप्रकारमौक्तिककणप्रचयावचाय. स्याद्वादरत्नाकरात्तार्किकै कर्त्तव्य । एवं च स्वाभाविकशक्तिमान् शब्दोऽर्थं बोधयतीति सिद्धम् । अथ तदङ्गीकारे तत एवार्थसिद्धे सङ्केतकल्पनाऽनर्थिकैव स्यादिति चेत् । नैवम् । अस्य सहकारितया स्वीकारात्, अङ्कुरोत्पत्तौ पय पृथिव्यादिवत् । अथ स्वाभाविकसबन्धाभ्युपगमे देशभेदेन शब्दानामर्थभेदो न भवेद्, भवति चायम्, चौरशब्दस्य दाक्षिणात्यैरोदने प्रयोगादिति चेत् । तदशस्यम् । सर्वशब्दाना सर्वार्थप्रत्यायनशक्तियुक्तत्वात् । यत्र च देशे यदर्थप्रतिपादनशक्तिसहकारी संकेत, स तमर्थं तत्र प्रतिपादयतीति सर्वमवदातम् । सौगतांस्तु प्रत्येव विधेयानुवाद्यभाव —योऽय शब्दो वर्णात्माऽऽवयो प्रसिद्ध, स स्वाभाविकसामर्थ्यसमयाभ्या कृत्वा ऽर्थबोधनिबन्धनमेवेति । अथ स्वाभाविकसामर्थ्यसमयाभ्या शब्दस्यार्थे सामान्यरूपे, विशेषलक्षणे, तदुभयस्वभावे वा वाचकत्वं व्याक्रियेत । न प्रथमे, सामान्यस्यार्थक्रियाकारित्वाभावेन नभोऽम्भोजसन्निभत्वात् । न द्वैतीयीके, विशेषस्य स्वलक्षणलक्षणस्य वैकल्पिकविज्ञानागोचरत्वेन सकेतास्पदत्वासभवात् । तत्सम्भवेऽपि विशेषस्य व्यवहारकालाननुयायित्वेन सकेतनैरर्थक्यात् । तार्तीयीके तु स्वतन्त्रयो, तादात्म्यापन्नयोर्वा सामान्यविशेषयोस्तद्गोचरता सगीर्येत । नाद्य पक्ष, प्राचिकविकल्पोपदर्शितदोषानुषङ्गात् । न द्वितीय, सामान्यविशेषयोर्विरुद्धधर्म्माध्यासितत्वेन तादात्म्यायोगादिति नार्थो वाच्यो वाचाम्, अपि तु परमार्थत सर्वतो व्यावृत्तस्वरूपेषु स्वलक्षणेष्वेकार्थकारित्वेन, एककारणत्वेन चोपजायमानैकप्रत्यवमर्शरूपविकल्पस्याकारो बाह्यत्वेनाभिमन्यमानो बुद्धिप्रतिबिम्ब-

व्यपदेशभागपोह', शब्दश्रुतौ सत्यां तादृशोल्लेखशेखरस्यैव वेदनस्योत्पादात्। अपोहत्व चास्य स्वाकारविपरीताकारोन्मूलकत्वेनावसेयम्। अपोह्यते स्वाकाराद्विपरीत आकारोऽनेनेत्यपोह इतिव्युत्पत्ते'। तत्त्वतस्तु न किञ्चिद्वाच्य वाचक वा विद्यते, शब्दार्थतया कथिते बुद्धिप्रतिबिम्बात्मन्यपोहे कार्यकारणभावस्यैव वाच्यवाचकतया व्यवस्थापितत्वात्।

"अथ श्रीमदनेकान्तसमुद्घोषपिपासित।
अपोहमापिबामि द्राग् वीक्षन्ता भिक्षव क्षणम्"॥१॥

इह तावद्विकल्पाना तथाप्रतीतिपरिहृतविरुद्धधर्माध्यासकथञ्चित्तादात्म्यापन्नसामान्यविशेषस्वरूपवस्तुलक्षणाक्षूणदीक्षादीक्षितत्व प्राक् प्राकट्यत। ततस्तत्त्वत शब्दानामपि तत्प्रसिद्धमेव। यतोऽजल्पि युष्मदीये "स एव शब्दाना विषयो यो विकल्पानाम्" इति कथमपोह. शब्दार्थ स्यात्। अस्तु वा तथाऽप्यनुमानवत् कि न शब्द प्रमाणमुच्यते। अपोहगोचरत्वेऽपि परम्परया पदार्थे प्रतिबन्धात् प्रमाणमनुमानमिति चेत्, तत एव शब्दोऽपि प्रमाणमस्तु। अतीतानागताम्बरसरोजादिष्वसत्स्वपि शब्दोपलम्भान्नात्रार्थप्रतिबन्ध इति चेत्, तर्ह्यभूद् वृष्टि, गिरिनदीवेगोपलम्भाद्, भावी भरण्युदय, रेवत्युदयात्, नास्ति रासभशृङ्गम्, समग्रप्रमाणैरनुपलम्भात्, इत्यादेरर्थाभावेऽपि प्रवृत्तेऽनुमानेऽपि नार्थप्रतिबन्ध स्यात्। यदि वचोवान्यापोहोऽपि पारम्पर्येण पदार्थप्रतिष्ठ स्यात्, तदानीमलाबूनि मज्जन्तीत्यादिविप्रतारकवाक्यापोहोऽपि तथा भवेदिति चेत्, अनुमेयापोहेऽपि तुल्यमेतत्, प्रमेयत्वादिहेत्वनुमेयापोहेऽपि पदार्थप्रतिष्ठताप्रसक्ते। प्रमेयत्वं हेतुरेव न भवति, विपक्षासत्त्वतल्लक्षणाभावादिति कुतस्त्या तदपोहस्य तन्निष्ठतेति चेत्, तर्हि विप्रतारकवाक्यमप्यागम एव न भवति, आप्तोक्तत्वतल्लक्षणाभावादित्यादि समस्तं समानम्। यस्तु नाप्तोक्तत्वं वचसि विवेचयितुं शक्यमिति शाक्यो वक्ति, स पर्यनुयोज्य। किमाप्तस्यैव कस्याप्यभावादेवमभिधीयेत, भावेऽप्यस्य निश्चयाभावात्, निश्चयेऽपि मौनव्रतिकत्वाद्, वक्तृत्वेऽप्यनाप्तवचनात्, तद्वचसो विवेकावधारणाभावाद्वा। सर्वमप्येतच्चार्वाकादिवाचा प्रपञ्चात्, मातापितृपुत्रभ्रातृगुरुसुगतादिवचसा विशेषमातिष्ठमानैरप्रकटनीयमेव। नच नास्ति

विशेषस्वीकार ,तत्पठितानुष्ठानघटनायामेव प्रवृत्तेर्निर्निबन्धनत्वापत्ते । अथानुमानिक्येवाप्तशब्दादर्थप्रतीति , ( कथम् ? )-

पादपार्थविवक्षावान् पुरुषोऽय प्रतीयते ।
वृक्षशब्दप्रयोक्तृत्वात्, पूर्वावस्थास्वह यथा ॥ १ ॥

इति विवक्षामनुमाय, सत्या विवक्षेयम्, आप्तविवक्षात्वात्, मद्विवक्षावदिति वस्तुनो निर्णयादिति चेत्। तदचतुरस्रम्। अमूदृशव्यवस्थाया अनन्तरोक्तवैशेषिकपक्षप्रतिक्षेपेण कृतनिर्वचनत्वात्। किंच। शाखादिमति पदार्थे वृक्षशब्दसङ्केते सत्येतद्विवक्षाऽनुमानमातन्येत, अन्यथा वा। न तावदन्यथा। केनचित्कक्षे वृक्षशब्द सकेत्य तदुच्चारणात्, उन्मत्तसुप्तशुकसारिकादिना गोत्रस्खलनवता चान्यथाऽपि तत्प्रतिपादनाच्च हेतोर्व्यभिचारापत्ते । सकेतपक्षे तु यद्येष तपस्वी शब्दस्तद्वशाद्वस्त्वेव वदेत्, तदा किं नाम क्षूणं स्यात्। न खल्वेषोऽर्थाद्बिभेति। विशेषलाभश्चैवं सति यदेवविधाननुभूयमानपारपर्यपरित्याग इति। यदकथि-परमार्थत सर्वतोऽन्यावृत्तस्वरूपेषु स्वलक्षणेष्वेकार्थकारित्वेनेत्यादि। तदवद्यम्। यतोऽर्थस्य वाहदोहादेरेकत्वम्, अद्विरूपत्व, समानत्व वा विवक्षितम्। न तावदाद्य पक्ष, षण्डमुण्डादौ कुण्डकाण्डभाण्डादिवाहादेरर्थस्य भिन्नभिन्नस्यैव सदर्शनात्। द्वितीयपक्षेऽपि सदृशपरिणामास्पदत्वम्, अन्यव्यावृत्त्यधिष्ठितत्वं वा समानत्व स्यात्। न प्राच्य प्रकार, सदृशपरिणामस्य सौगतैरस्वीकृतत्वात्। न द्वितीय, अन्यव्यावृत्तेरतात्त्विकत्वेन वान्ध्येयस्येव स्वलक्षणेऽधिष्ठानासभवात्। किंच। अन्यत सामान्येन, विजातीयाद्वा व्यावृत्तिरन्यव्यावृत्तिर्भवेत्। प्रथमपक्षे, न किञ्चिदसमानं स्यात्, सर्वस्यापि सर्वतो व्यावृत्तत्वात्। द्वितीये तु विजातीयत्वं वाजिकुञ्जरादिकार्याणा वाहादिसजातीयत्वे सिद्धे सति स्यात्, तच्चान्यव्यावृत्तिरूपमन्येषां विजातीयत्वे सिद्धे सति, इति स्पष्टं परस्पराश्रयत्वमिति। एवं च कारणैक्य, प्रत्यवमर्शैक्य च विकल्प्य दूषणीयम्। अपिच। यदि बुद्धिप्रतिबिम्बात्मा शब्दार्थ स्यात्, तदा कथमतो बहिरर्थे प्रवृत्ति स्यात्?। स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायाच्चेत्। ननु कोऽयमर्थाध्यवसायो नाम। अर्थसमारोप इति चेत्, तर्हि सोऽयमर्थानर्थयोरग्निमाणवकयोरिव तद्वि-

कल्पविषयभावे सत्येव समुत्पत्तुमर्हति। नच समारोपविकल्पस्य स्वलक्षण कदाचन गोचरतामञ्चति। यदि चानर्थेऽर्थसमारोप स्यात्, तदा वाहदोहाद्यर्थक्रियार्थिन सुतरा प्रवृत्तिर्न स्यात्। नहि दाहपाकाद्यर्थी समारोपितपावकत्वे माणवके कदाचित्प्रवर्त्तते। रजतरूपताऽवभासमानशुक्तिकायामिव रजतार्थिनो अर्थक्रियार्थिनो विकल्पात्तत्र प्रवृत्तिरिति चेत्। भ्रान्तिरूपस्तर्ह्ययं समारोप, तथाच कथं तत प्रवृत्तोऽर्थक्रियार्थी कृतार्थ स्यात्। यथा शुक्तिकाया प्रवृत्तो रजतार्थक्रियार्थीति। यदपि प्रोक्तम्—कार्यकारणभावस्यैव वाच्यवाचकतया व्यवस्थापितत्वादिति। तदप्ययुक्तम्। यतो यदि कार्यकारणभाव एव वाच्यवाचकभाव स्यात्, तदा श्रोत्रज्ञाने प्रतिभासमान शब्द स्वप्रतिभासस्य भवत्येव कारणमिति तस्याप्यसौ वाचक स्यात्। यथा च विकल्पस्य शब्द कारणम्, एव परपरया स्वलक्षणमपि, अतस्तदपि वाचक भवेदिति प्रतिनियतवाच्यवाचकभावव्यवस्थान प्रलयपद्धतिमनुधावेत्। तत शब्द सामान्यविशेषात्मकार्थावबोधनिबन्धनमेवेति स्थितम्॥ ११॥

स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धन शब्द इत्युक्तम्। अथ किमस्य शब्दस्य स्वाभाविक रूप, किंच परापेक्षमिति विवेचयन्ति–

**अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवद्यथार्थायथार्थत्वे पुनः पुरुषगुणदोषावनुसरतः॥१२॥**

अर्थप्रकाशकत्वम्, अर्थावबोधसामर्थ्यम्। अस्य शब्दस्य। स्वाभाविकं परानपेक्षम्। प्रदीपवत्। यथा हि प्रदीप प्रकाशमान शुभमशुभ वा यथासन्निहित भावमवभासयति, तथा शब्दोऽपि वक्त्रा प्रयुज्यमान श्रुतिवर्त्तिनीमवतीर्ण सत्येऽनृते वा, समन्वितेऽसमन्विते वा, सफले निष्फले वा, सिद्धे साध्ये वा वस्तुनि प्रतिपत्तिमुत्पादयतीति तावदेवास्य स्वाभाविक रूपम्। अयं पुन प्रदीपाच्छब्दस्य विशेष—यदसौ संकेतव्युत्पत्तिमपेक्षमाण पदार्थप्रतीतिमुपजनयति, प्रदीपस्तु तन्निरपेक्ष। यथार्थत्वायथार्थत्वे सत्यार्थत्वासत्यार्थत्वे पुन प्रतिपादकनराधिकरणशुद्धत्वाशुद्धत्वे अनुसरत.। पुरुषगुणदोषापेक्षे इत्यर्थ.। तथाहि—सम्यग्दर्शिनि

शुचौ पुरुषे वक्तरि यथार्थां शाब्दी प्रतीतिरन्यथा तु मिथ्यार्थेति । स्वाभाविके तु याथार्थ्ये मिथ्यार्थत्वे चास्या स्वीक्रियमाणे विप्रतारकेतरपुरुषप्रयुक्तवाक्येषु व्यभिचाराव्यभिचारनियमो न भवेत् । पुरुषस्य च करुणादयो गुणा द्वेषादयो दोषा प्रतीता एव । तत्र यदि पुरुषगुणाना प्रामाण्यहेतुत्व नाभिमन्यते जैमिनीयै:, तर्हि दोषाणामप्यप्रामाण्यनिमित्तता मा भूत् । दोषप्रशमनचरितार्था एव पुरुषगुणा ; प्रामाण्यहेतवस्तु न भवन्तीत्यत्र च कोशपानमेव शरण श्रोत्रियाणामिति ॥ १२ ॥

इह यथैवान्तर्बहिर्वा भावराशि स्वरूपमाबिभर्त्ति, तथैव त शब्देन प्रकाशयता प्रयोक्तृणा प्रावीण्यमुपजायते । त च तथाभूत सप्तभङ्गीसमनुगत एव शब्द प्रतिपादयितु पटीयानित्याहु —

**सर्वत्रायं ध्वनिर्विधिप्रतिषेधाभ्यां स्वार्थमभिधानः सप्तभङ्गीमनुगच्छति ॥१३॥**

सदसन्नित्यानित्यादिसकलैकान्तपक्षविलक्षणानेकान्तात्मके वस्तुनि विधिनिषेधविकल्पाभ्या प्रवर्त्तमान शब्द सप्तभङ्गीमङ्गीकुर्वाण एव प्रवर्त्तेत इति भाव ॥ १३ ॥

अथ सप्तभङ्गीमेव स्वरूपतो निरूपयन्ति—

**एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादविरोधेन व्यस्तयोः समस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितः सप्तधा वाक्प्रयोगः सप्तभङ्गी ॥१४॥**

एकत्र जीवादौ वस्तुन्येकैकसत्त्वादिधर्मविषयप्रश्नवशादविरोधेन प्रत्यक्षादिबाधापरिहारेण पृथग्भूतयो समुदितयोश्च विधिनिषेधयो पर्यालोचनया कृत्वा स्याच्छब्दलाञ्छितो वक्ष्यमाणै सप्तभि प्रकारैर्वचनविन्यास सप्तभङ्गी विज्ञेया । भज्यन्ते भिद्यन्तेऽर्था यैस्ते भङ्गा वचनप्रकारास्तत सप्तभङ्गा समाहृता सप्तभङ्गीति कथ्यते । नानाव-

स्वाश्रयविधिनिषेधकल्पनया शतभङ्गीप्रसङ्गनिवर्त्तनार्थमेकत्र वस्तुनीत्युपन्यस्तम्। एकत्रापि जीवादिवस्तुनि विधीयमाननिषिध्यमानानन्तधर्मपर्यालोचनयाऽनन्तभङ्गीप्रसक्तिव्यावर्त्तनार्थमेकैकधर्मपर्यनुयोगवशादित्युपात्तम्। अनन्तेष्वपि हि धर्मेषु प्रतिधर्मं पर्यनुयोगस्य सप्तधैव प्रवर्त्तमानत्वात्। तत्प्रतिवचनस्यापि सप्तविधत्वमेवोपपन्नमित्येकैकस्मिन् धर्मे एकैकैव सप्तभङ्गी साधीयसी। एवं चानन्तधर्मापेक्षया सप्तभङ्गीनामानन्त्यं यदायाति, तदभिमतमेव। एतच्चाग्रे सूत्रत एव निर्णेष्यते। प्रत्यक्षादिविरुद्धसदाद्येकान्तविधिप्रतिषेधकल्पनयाऽपि प्रवृत्तस्य वचनप्रयोगस्य सप्तभङ्गीत्वानुषङ्गभङ्गार्थमविरोधेनेत्याभिहितम्।

अवोचाम च–

या प्रश्नाद्विधिपर्युदासभिदया बाधच्युता सप्तधा
धर्मं धर्ममपेक्ष्य वाक्यरचनाऽनेकात्मके वस्तुनि।
निर्दोषा निरदेशि देव! भवता सा सप्तभङ्गी यया
जल्पन् जल्परणाङ्गणे विजयते वादी विपक्ष क्षणात् ॥१॥

इदं च सप्तभङ्गीलक्षण प्रमाणनयसप्तभङ्ग्यो साधारणमवधारणीयम्। विशेषलक्षण पुनरनयोरग्रे वक्ष्यते ॥१४॥

अथास्या प्रथमभङ्गोल्लेखं तावद्दर्शयन्ति–

## तद्यथा–स्यादस्त्येव सर्वमिति विधिविकल्पनया प्रथमो भङ्गः ॥१५॥

स्यादित्यव्ययमनेकान्तावद्योतक स्यात्कथञ्चित्स्वद्रव्यक्षेत्रकालभावरूपेणास्त्येव सर्वं कुम्भादि, न पुन परद्रव्यक्षेत्रकालभावरूपेण। तथाहि–कुम्भो द्रव्यत पार्थिवत्वेनास्ति, न जलादिरूपत्वेन, क्षेत्रत पाटलिपुत्रकत्वेन, न कान्यकुब्जादित्वेन, कालत शैशिरत्वेन, न वासन्तिकादित्वेन, भावत श्यामत्वेन, न रक्तत्वादिना। अन्यथेतररूपापत्त्या स्वरूपहानिप्रसङ्ग इति। अवधारण चात्र भङ्गेऽनभिमतार्थव्यावृत्त्यर्थमुपात्तम्। इतरथाऽनभिहिततुल्यतैवास्य वाक्यस्य प्रसज्येत, प्रतिनियतस्वार्थानभिधानात्।

तदुक्तम्—

"वाक्येऽवधारण तावदनिष्टार्थनिवृत्तये ।
कर्त्तव्यमन्यथाऽनुक्तसमत्वात् तस्य कुत्रचित्"॥ १ ॥

तथाऽप्यस्त्येव कुम्भ इत्येतावन्मात्रोपादाने कुम्भस्य स्तम्भाद्यस्तित्वेनापि सर्वप्रकारेणास्तित्वप्राप्ते. प्रतिनियतस्वरूपानुपपत्ति स्यात् , तत्प्रतिपत्तये स्यादिति प्रयुज्यते, स्यात्कथञ्चित्स्वद्रव्यादिभिरेवायमस्ति, न परद्रव्यादिभिरपीत्यर्थ । यत्रापि चासौ न प्रयुज्यते तत्रापि व्यवच्छेदफलैवकारवद् बुद्धिमद्भि. प्रतीयत एव ।

यदुक्तम्—

" सोऽप्रयुक्तोऽपि वा तज्ज्ञै सर्वत्रार्थात्प्रतीयते ।
यथैवकारो योगादिव्यवच्छेदप्रयोजन "॥ १ ॥ १५ ॥

अथ द्वितीयभङ्गोल्लेख ख्यापयन्ति—

## स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयः ॥१६॥

स्वद्रव्यादिभिरिव परद्रव्यादिभिरपि वस्तुनोऽसत्त्वानिष्टौ हि प्रतिनियतस्वरूपाभावाद्वस्तुप्रतिनियमविरोध । नचास्तित्वैकान्तवादिभिरत्र नास्तित्वमसिद्धमित्यभिधानीयम् । कथञ्चित्तस्य वस्तुनि युक्तिसिद्धत्वात्साधनवत् । नहि कचिदनित्यत्वादौ साध्ये सत्त्वादिसाधनस्यास्तित्व विपक्षे नास्तित्वमन्तरेणोपपन्नम्, तस्य साधनाभासत्वप्रसङ्गात् । अथ यदेव नियत साध्यसद्भावेऽस्तित्व तदेव साध्याभावे साधनस्य नास्तित्वमभिधीयते, तत्कथ प्रतिषेध्यम्? स्वरूपस्य प्रतिषेधत्वानुपपत्ते , साध्यसद्भावे नास्तित्व तु यत्तत्प्रतिषेध्यम्, तेनाविनाभावित्वे साध्यसद्भावास्तित्वस्य व्याघातात्तेनैव स्वरूपेणास्ति नास्ति चेति प्रतीत्यभावादिति चेत् । तदसन् । एव हेतोस्त्रिरूपत्वविरोधात् । विपक्षासत्त्वस्य तात्त्विकस्याभावात् । यदि चाय भावाभावयोरेकत्वमाचक्षीत, तदा सर्वथा न कश्चित्प्रवर्त्तेत । नापि कुतश्चिन्निवर्त्तेत । प्रवृत्तिनिवृत्तिविषयस्य भावस्याभावपरिहारेणासभवात् , अभावस्य च भावपरिहारेणेति वस्तुनोऽस्तित्वनास्तित्वयो रूपान्तरत्व-

मेष्टव्यम् । तथाचास्तित्व नास्तित्वेन प्रतिषेध्येनाविनाभावि सिद्धम् । यथा च प्रतिषेध्यमस्तित्वस्य नास्तित्व तथा प्रधानभावत क्रमार्पितोभयत्वादिधर्मपञ्चकमपि वक्ष्यमाण लक्षणीयम् ॥ १६ ॥

अथ तृतीयं भङ्गमुल्लेखतो व्यक्तीकुर्वन्ति–

**स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयः ॥ १७ ॥**

सर्वमिति पूर्वसूत्रादिहोत्तरत्र चानुवर्त्तनीयम् । ततोऽयमर्थ । क्रमार्पितस्वपरद्रव्यादिचतुष्टयापेक्षया क्रमार्पिताभ्यामस्तित्वनास्तित्वाभ्या विशेषितं सर्वं कुम्भादि वस्तु स्यादस्त्येव स्यान्नास्त्येवेत्युल्लेखेन वक्तव्यमिति ॥ १७ ॥

इदानीं चतुर्थभङ्गोल्लेखमाविर्भावयन्ति–

**स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः ॥ १८ ॥**

द्वाभ्यामस्तित्वनास्तित्वाख्यधर्माभ्या युगपत्प्रधानतयाऽर्पिताभ्यामेकस्य वस्तुनोऽभिधित्साया तादृशस्य शब्दस्यासंभवादवक्तव्य जीवादि वस्त्विति । तथाहि—सदसत्त्वगुणद्वय युगपदेकत्र सदित्यभिधानेन वक्तुमशक्यम् । तस्यासत्त्वप्रतिपादनासमर्थत्वात् । तथैवासदित्यभिधानेन न तद्वक्तु शक्यम् । तस्य सत्त्वप्रत्यायने सामर्थ्याभावात् । साङ्केतिकमेक पदं तदभिधातुं समर्थमित्यपि न सत्यम् । तस्यापि क्रमेणार्थद्वयप्रत्यायने सामर्थ्योपपत्ते । शतृशानचौ सदिति शतृशानचो सङ्केतितसच्छब्दवत् । द्वन्द्ववृत्तिपद तयो सकृदभिधायकमित्यप्यनेनापास्तम् । सदसत्त्वे इत्यादि पदस्य क्रमेण धर्मद्वयप्रत्यायने समर्थत्वात् । कर्मधारयादिवृत्तिपदमपि न तयोरभिधायक तत एव वाक्य तयोरभिधायकमनेनैवापास्तमिति सकलवाचकरहितत्वादवक्तव्य वस्तु युगपत् सदसत्त्वाभ्या प्रधानभावार्पिताभ्यामाक्रान्तं व्यवतिष्ठते । अयं च भङ्ग. कैश्चित्तृतीयभङ्ग-

स्थाने पठ्यते, तृतीयश्चैतस्य स्थाने । नचैवमपि कश्चिद्दोष., अर्थविशेषस्याभावात् ॥ १८ ॥

अथ पञ्चमभङ्गोल्लेखमुपदर्शयन्ति–

**स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चमः ॥ १९ ॥**

स्वद्रव्यादिचतुष्टयापेक्षयाऽस्तित्वे सत्यस्तित्वनास्तित्वाभ्या सह वक्तुमशक्यं सर्व वस्तु । तत स्यादस्त्येव स्यादवक्तव्यमेवेत्येव पञ्चमभङ्गेनोपदर्श्यत इति ॥ १९ ॥

अथ षष्ठभङ्गोल्लेख प्रकटयन्ति–

**स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगंपद्विधिनिषेधकल्पनया च षष्ठः ॥ २० ॥**

परद्रव्यादिचतुष्टयापेक्षया नास्तित्वे सत्यस्तित्वनास्तित्वाभ्या यौगपद्येन प्रतिपादयितुमशक्य समस्तं वस्तु । तत स्यान्नास्त्येव स्यादवक्तव्यमेवेत्येव षष्ठभङ्गेन प्रकाश्यते ॥ २० ॥

संप्रति सप्तमभङ्गमुल्लिखन्ति–

**स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तम इति ॥२१॥**

इतिशब्द सप्तभङ्गीसमाप्त्यर्थ । स्वपरद्रव्यादिचतुष्टयापेक्षयाऽस्तित्वनास्तित्वयो सतोरस्तित्वनास्तित्वाभ्या समसमयमभिधातुमशक्यमखिलं वस्तु तत एवमनेन भङ्गेनोपदर्श्यते ॥२१॥

अथास्यामेव सप्तभङ्ग्यामेकान्तविकल्पान्निराचिकीर्षव सूत्राण्याहु -

**विधिप्रधान एव ध्वनिरिति न साधु ॥२२॥**

प्राधान्येन विधिमेव शब्दोऽभिधत्ते इति न युक्तम् ॥२२॥

अत्र हेतुमाहु –

निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥२३॥

तस्मादितिशब्दात् ॥२३॥

आशङ्कान्तर निरस्यन्ति–

अप्राधान्येनैव ध्वनिस्तमभिधत्ते इत्यप्यसारम् ॥२४॥

तमिति निषेधम् ॥२४॥

अत्र हेतुमाचक्षते–

क्वचित्कदाचित्कथञ्चित्प्राधान्येनाप्रतिपन्नस्य तस्याप्राधान्यानुपपत्तेः ॥२५॥

न खलु मुख्यत स्वरूपेणाप्रतिपन्न वस्तु क्वचिदप्रधानभावमनुभवतीति ॥२५॥

इत्थ प्रथमभङ्गैकान्त निरस्येदानीं द्वितीयभङ्गैकान्तनिरासमतिदिशन्ति–

निषेधप्रधान एव शब्द इत्यपि प्रागुक्तन्यायादपास्तम् ॥२६॥

व्यक्तम् ॥२६॥

अथ तृतीयभङ्गैकान्त पराकुर्वन्ति–

क्रमादुभयप्रधान एवायमित्यपि न साधीयः ॥२७॥

अयमितिशब्द ॥२७॥

एतदुपपादयन्ति–

अस्य विधिनिषेधान्यतरप्रधानत्वानुभवस्याप्यबाध्यमानत्वात् ॥२८॥

प्रथमद्वितीयभङ्गगतैकैकप्रधानत्वप्रतीतेरप्यबाधितत्वान्न तृतीयभङ्गैकान्ताभ्युपगम श्रेयान् ॥२८॥

अथ चतुर्थभङ्गैकान्तपराभवाय प्राहु —

युगपद्विधिनिषेधात्मनोऽर्थस्यावाचक एवासाविति

च न चतुरस्रम् ॥ २९ ॥

स्यादवक्तव्यमेवेति चतुर्थभङ्गैकान्तो न श्रेयानित्यर्थः ॥२९॥

कुत इत्याहुः–

तस्यावक्तव्यशब्देनाप्यवाच्यत्वप्रसङ्गात् ॥३०॥

अथ पञ्चमभङ्गैकान्तमपास्यन्ति–

विध्यात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपदवाचक एव स इत्येकान्तोऽपि न कान्तः ॥३१॥

अत्र निमित्तमाहुः –

निषेधात्मनः सह द्वयात्मनश्चार्थस्य वाचकत्वावाचकत्वाभ्यामपि शब्दस्य प्रतीयमानत्वात् ॥३२॥

निषेधात्मनोऽर्थस्य वाचकत्वेन सह, विधिनिषेधात्मनोऽर्थस्यावाचकत्वेन च शब्दः षष्ठभङ्गे प्रतीयते यतः, ततः पञ्चमभङ्गैकान्तोऽपि न श्रेयान् ॥३२॥

षष्ठभङ्गैकान्तमपाकुर्वन्ति–

निषेधात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपदवाचक एवायमित्यप्यवधारणं न रमणीयम् ॥ ३३ ॥

अत्र हेतुमुपदर्शयन्ति–

इतरथाऽपि संवेदनात् ॥ ३४ ॥

आद्यभङ्गादिषु विध्यादिप्रधानतयाऽपि शब्दस्य प्रतीयमानत्वादित्यर्थः ॥ ३४ ॥

अथ सप्तमभङ्गैकान्तमपाकुर्वन्ति–

क्रमाक्रमाभ्यामुभयस्वभावस्य भावस्य वाचकश्चावाचकश्च ध्वनिर्नान्यथेत्यपि मिथ्या ॥ ३५ ॥

अत्र बीजमाख्यान्ति-

विधिमात्रादिप्रधानतयाऽपि तस्य प्रसिद्धेः ॥ ३६ ॥

नन्वेकस्मिन् जीवादौ वस्तुन्यनन्ताना विधीयमाननिषिध्यमानानां धर्माणामङ्गीकरणादनन्ता एव वचनमार्गा स्याद्वादिनां भवेयु, वान्ये-यत्ताऽऽयत्तत्वाद् वाचकेयत्ताया, ततो विरुद्धैव सप्तभङ्गीति ब्रुवाणं निरस्यन्ति-

एकत्र वस्तुनि विधीयमाननिषिध्यमानानन्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतैव सप्तभङ्गीति न चेतसि निधेयम् ॥ ३७ ॥

अत्र हेतुमाहु -

विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तुन्यनन्तानामपि सप्तभङ्गीनामेव संभवात् ॥ ३८ ॥

एकैक पर्यायमाश्रित्य वस्तुनि विधिनिषेधविकल्पाभ्या व्यस्तसमस्ताभ्या सप्तैव भङ्गा सभवन्ति, न पुनरनन्ता । तत्कथमनन्तभङ्गीप्रसङ्गादसङ्गतत्व सप्तभङ्ग्या समुद्भाव्यते ? ॥ ३८ ॥

कुत. सप्तैव भङ्गा सभवन्तीत्याहु -

प्रतिपर्याय प्रतिपाद्यपर्यनुयोगानां सप्तानामेव संभवात् ॥

एतदपि कुत इत्याहु-

तेषामपि सप्तत्व सप्तविधतज्जिज्ञासानियमात् ॥ ४० ॥

अथ सप्तविधतज्जिज्ञासानियमे निमित्तमाहु -

तस्या अपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥

तस्या अपीति प्रतिपाद्यजिज्ञासायाः। तत्संदेहसमुत्पादादिति प्रतिपाद्यसशयसमुत्पत्ते. ॥ ४१ ॥

सन्देहस्यापि सप्तधात्वे कारणमाहुः—

**तस्यापि सप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेः ॥ ४२ ॥**

तस्य प्रतिपाद्यगतसन्देहस्य । स्वगोचरवस्तुधर्माणां सन्देहविषयीकृतानामस्तित्वादिवस्तुपर्यायाणाम् ॥ ४२ ॥

इयं सप्तभङ्गी किं सकलादेशस्वरूपा, विकलादेशस्वरूपा वेत्यारेकां पराकुर्वन्ति—

**इयं सप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥४३॥**

एकैको भङ्गोऽस्याः संबन्धी सकलादेशस्वभावः, विकलादेशस्वभावश्चेत्यर्थः ॥४३॥

अथ सकलादेशं लक्षयन्ति—

**प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनः कालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचः सकलादेशः ॥४४॥**

कालादिभिरष्टाभिः कृत्वा यदभेदवृत्तेर्धर्मधर्मिणोरपृथग्भावस्य प्राधान्यं तस्मात्, कालादिभिर्भिन्नात्मनामपि धर्मधर्मिणामभेदाध्यारोपाद्वा समकालमभिधायकं वाक्यं सकलादेशः प्रमाणवाक्यमित्यर्थः। अयमर्थः—यौगपद्येनाशेषधर्मात्मकं वस्तु कालादिभिरभेदवृत्त्या, अभेदोपचारेण वा प्रतिपादयति सकलादेशः, तस्य प्रमाणाधीनत्वात्। विकलादेशस्तु क्रमेण भेदोपचाराद्, भेदप्राधान्याद्वा तदभिधत्ते, तस्य नयायत्तत्वात् । कः पुनः क्रमः ? किं वा यौगपद्यम् ? । यदाऽस्तित्वादिधर्माणां कालादिभिर्भेदविवक्षा, तदैकस्य शब्दस्यानेकार्थप्रत्यायने शक्त्यभावात् क्रमः; यदा तु तेषामेव धर्माणां कालादिभिरभेदेन वृत्तमात्मरूपमुच्यते, तदैकेनापि शब्देनैकधर्मप्रत्यायनमुखेन तदात्मकतामापन्नस्यानेकाशेषरूपस्य वस्तुनः प्रति-

पादनसभवाद्यौगपद्यम् । के पुन कालादय ? । काल, आत्मरूपं, अर्थ, सबन्ध, उपकार, गुणिदेश, ससर्ग, शब्द, इत्यष्टौ । तत्र स्याज्जीवादि वस्त्वस्त्येवेत्यत्र यत्कालमस्तित्व तत्काला शेषानन्तधर्मा वस्तुन्येकत्रेति तेषा कालेनाभेदवृत्ति १ । यदेव चास्तित्वस्य तद्गुणत्वमात्मरूपम्, तदेव चान्यानन्तगुणानामपीत्यात्मरूपेणाभेदवृत्ति २ । य एव चाधारोऽर्थो द्रव्याख्योऽस्तित्वस्य, स एवान्यपर्यायाणामित्यर्थेनाभेदवृत्ति ३ । य एव चाविष्वग्भाव कथञ्चित्तादात्म्यलक्षण सबन्धोऽस्तित्वस्य, स एवाशेषविशेषाणामिति सबन्धेनाभेदवृत्ति ४ । य एव चोपकारोऽस्तित्वेन स्वानुरक्तत्वकरणम्, स एव शेषैरपि गुणैरित्युपकारेणाभेदवृत्ति ५ । य एव गुणिन सबन्धी देश क्षेत्रलक्षणोऽस्तित्वस्य, स एवान्यगुणानामिति गुणिदेशेनाभेदवृत्ति ६ । य एव चैकवस्त्वात्मनाऽस्तित्वस्य संसर्ग, स एवाशेषधर्माणामिति ससर्गेणाभेदवृत्ति । ननु प्रागुक्तसंबन्धादस्य क प्रतिविशेष ? । उच्यते । अभेदप्राधान्येन भेदगुणभावेन च प्रागुक्त सबन्ध, भेदप्राधान्येनाभेदगुणभावेन चैष ससर्ग इति ७ । य एवास्तीति शब्दोऽस्तित्वधर्मात्मकस्य वस्तुनो वाचक, स एव शेषानन्तधर्मात्मकस्यापीति शब्देनाभेदवृत्ति ८ ॥ पर्यायार्थिकनयगुणभावे द्रव्यार्थिकनयप्राधान्यादुपपद्यते । द्रव्यार्थिकगुणभावेन पर्यायार्थिकप्राधान्ये तु न गुणानामभेदवृत्ति संभवति, समकालमेकत्र नानागुणानामसंभवात्, संभवे वा तदाश्रयस्य तावद्धा भेदप्रसङ्गात् १ । नानागुणानां सबन्धिन आत्मरूपस्य च भिन्नत्वात्, आत्मरूपाभेदे तेषा भेदस्य विरोधात् २ । स्वाश्रयस्यार्थस्यापि नानात्वात्, अन्यथा नानागुणाश्रयत्वविरोधात् ३ । सबन्धस्य च संबन्धिभेदेन भेददर्शनात्, नानासबन्धिभिरेकत्रैकसबन्धाघटनात् ४ । तै क्रियमाणस्योपकारस्य च प्रतिनियतरूपस्यानेकत्वात्, अनेकैरुपकारिभि. क्रियमाणस्योपकारस्यैकस्य विरोधात् ५ । गुणिदेशस्य च प्रतिगुणं भेदात्, तदभेदे भिन्नार्थगुणानामपि गुणिदेशाभेदप्रसङ्गात् ६ । ससर्गस्य च प्रतिसंसर्गि भेदात्, तदभेदे ससर्गिभेदविरोधात् ७ । शब्दस्य च प्रतिविषयं नानात्वात्, सर्वगुणानामेकशब्दवाच्यतायां सर्वार्थानामेकशब्दवाच्यताऽऽपत्ते. शब्दान्तरवैफल्यापत्ते. ८ ॥ तत्त्वतोऽस्तित्वादीनामेकत्र

वस्तुन्येवमभेदवृत्तेरसंभवे कालादिभिर्भिन्नात्मनामभेदोपचारः क्रियते । तदेताभ्यामभेदवृत्त्यभेदोपचाराभ्यां कृत्वा प्रमाणप्रतिपन्नानन्तधर्मात्मकस्य वस्तुनः समसमयं यदभिधायकं वाक्यं स सकलादेशः प्रमाणवाक्यापरपर्याय इति स्थितम् ।

"कालात्मरूपसंबन्धाः संसर्गोपक्रिये तथा ।
गुणिदेशार्थशब्दाश्चेत्यष्टौ कालादयः स्मृताः" ॥१॥४४॥

अधुना नयवाक्यस्वभावत्वेन नयविचारावसरलक्षणीयस्वरूपमपि विकलादेशं सकलादेशस्वरूपनिरूपणप्रसङ्गेनात्रैव लक्षयन्ति—

**तद्विपरीतस्तु विकलादेशः ॥ ४५ ॥**

नयविषयीकृतस्य वस्तुधर्मस्य भेदवृत्तिप्राधान्याद्, भेदोपचाराद्वा क्रमेण यदभिधायकं वाक्यम्, स विकलादेशः । एतदुल्लेखस्तु नयस्वरूपानभिज्ञश्रोतॄणां दुरवगाह इति नयविचारावसर एव प्रदर्शयिष्यते ॥४५॥

प्रमाणं निर्णीयाथ यतः कारणात् प्रतिनियतमर्थमेतद्व्यवस्थापयति, तत्कथयन्ति—

**तद् द्विभेदमपि प्रमाणमात्मीयप्रतिबन्धकापगमविशेषस्वरूपसामर्थ्यतः प्रतिनियतमर्थमवद्योतयति ॥ ४६ ॥**

प्रत्यक्षपरोक्षरूपतया द्विप्रकारमपि प्रागुपवर्णितस्वरूपं प्रमाणं स्वकीयज्ञानावरणाद्यदृष्टविशेषक्षयक्षयोपशमलक्षणं योग्यतावशात्प्रतिनियतं नीलादिकमर्थं व्यवस्थापयति ॥ ४६ ॥

एतद्व्यवच्छेद्यमाचक्षते—

**न तदुत्पत्तितदाकारताभ्याम्, तयोः पार्थक्येन सामस्त्येन च व्यभिचारोपलम्भात् ॥ ४७ ॥**

तथाहि— ज्ञानस्य तदुत्पत्तितदाकारताभ्यां व्यस्ताभ्यां, समस्ताभ्यां वा प्रतिनियतार्थव्यवस्थापकत्वं स्यात् । यदि प्राच्यः पक्षः, तदा कपालक्षणः कलशान्त्यक्षणस्य व्यवस्थापकः स्यात्, तदुत्पत्तेः केवलायाः सद्भावात् । स्तम्भः स्तम्भान्तरस्य च व्यवस्थापकः स्यात्, तदाकारता-

यास्तदुत्पत्तिरहिताया संभवात्। अथ द्वितीय, तदा कलशस्योत्तरक्षणः पूर्वक्षणस्य व्यवस्थापको भवेत्, समुदितयोस्तदुत्पत्तितदाकारतयोर्विद्यमानत्वात्। अथ विद्यमानयोरप्यनयोर्ज्ञानमेवार्थस्य व्यवस्थापकम्, नार्थ, तस्य जडत्वादिति मतम्। तदपि न न्यायानुगतम्, समानार्थसमनन्तरप्रत्ययोत्पन्नैर्ज्ञानैर्व्यभिचारात्। तानि हि यथोक्तार्थव्यवस्थापकत्वलक्षणस्य समग्रस्य सद्भावेऽपि प्राच्य जनकज्ञानक्षण न गृह्णन्ति। अपि च। किमिदमर्थाकारत्व वेदनाना? यद्वशात्प्रतिनियतार्थपरिच्छेद स्यात्। किमर्थाकारोल्लेखित्वम्, अर्थाकारधारित्व वा। प्रथमप्रकारे, अर्थाकारोल्लेखोऽर्थाकारपरिच्छेद एव, ततश्च ज्ञानं प्रतिनियतार्थपरिच्छेदात्प्रतिनियतमर्थमवद्योतयतीति साध्याविशिष्टत्व स्पष्टमुपढौकते। द्वितीयप्रकारे पुनरर्थाकारधारित्व ज्ञानस्य सर्वात्मना, देशेन वा। प्रथमपक्षे, जडत्वादर्थस्य ज्ञानमपि जडं भवेत्, उत्तरार्थक्षणवत्। प्रमाणरूपत्वाभावश्चोत्तरार्थक्षणवदेवास्य प्रसज्येत, सर्वात्मना प्रमेयरूपताऽनुकरणात्। अथ देशेन नीलत्वादिनाऽर्थाकारधारित्वमिष्यते ज्ञानस्य, तर्हि तेनाजडाकारेण जडताप्रतिपत्तेरसभवात् कथ तद्विशिष्टत्वमर्थस्य प्रतीयेत?। न हि रूपज्ञानेनाप्रतिपन्नरसेन तद्विशिष्टता सहकारफलादौ प्रतीयते। किंच। देशेनार्थाकारधारित्वान्नीलार्थवन्निःशेषार्थानामपि ज्ञानेन ग्रहणापत्ति, सत्त्वादिमात्रेण तस्य सर्वत्रार्थाकारधारित्वाविशेषात्। अथ तदविशेषेऽपि नीलाद्याकारवैलक्षण्यान्निखिलार्थानामग्रहणम्, तर्हि समानाकाराणा समस्ताना ग्रहणप्राप्ति। अथ यत एव ज्ञानमुत्पद्यते, तस्यैवाकारानुकरणद्वारेण ग्राहकम्, हन्त! एवमपि समानार्थसमनन्तरप्रत्ययस्य तद्ग्राहक स्यादित्युक्तम्। ततो न तदुत्पत्तितदाकारताभ्या ज्ञानस्य प्रतिनियतार्थावभास, किंतु प्रतिबन्धकापगमविशेषादिति सिद्धम्॥४७॥

**इति प्रमाणनयतत्त्वालोकालङ्कारे श्रीरत्नप्रभाचार्यविरचितायां रत्नाकरावतारिकाख्यलघुटीकायामागमस्वरूपनिर्णयो नाम चतुर्थः परिच्छेदः।**

---

अर्हम्

# अथ पञ्चमः परिच्छेदः ।

इत्थं प्रमाणस्य स्वरूपसंख्ये समाख्याय विषयमाचक्षते—

## तस्य विषयः सामान्यविशेषाद्यनेकान्तात्मकं वस्तु ॥१॥

तस्य प्रमाणस्य। विसीयन्ते निबध्यन्ते विषयिणोऽस्मिन्निति विषयो गोचरः परिच्छेद्यमिति यावत्। सामान्यविशेषौ वक्ष्यमाणलक्षणावादिर्यस्य सदसदाद्यनेकान्तस्य तत्तदात्मकं तत्स्वरूपं वस्त्विति। एवं च केवलस्य सामान्यस्य, विशेषस्य, तदुभयस्य वा स्वतन्त्रस्य प्रमाणविषयत्वं प्रतिक्षिप्तं भवति। अथैतदाकर्ण्य कर्णाम्रेडपीडिता इव यौगाः संगिरन्ते। नन्वहो जैनाः! केनेदं सुहृदा कर्णपुटविटङ्कितमकारि युष्माकम्, स्वतन्त्रौ सामान्यविशेषौ न प्रमाणभूमिरिति। सर्वगतं हि सामान्यं गोत्वादि, तद्विपरीतास्तु शबलशाबलेयबाहुलेयादयो विशेषाः, ततः कथमेषामैक्यमाकर्णयितुमपि सकर्णैः शक्यम्?। तथा च सामान्यविशेषावत्यन्तभिन्नौ, विरुद्धधर्माध्यस्तत्वात्, यावेवं तावेवम्, यथा पाथःपावकौ, तथा चैतौ, तस्मात्तथा, ततो न सामान्यविशेषात्मकत्वं घटादेर्घटते। तदेतत्परमप्रणयपरायणप्रणयिनीप्रियालापप्रायं वासवेश्मान्तरेव राजते। तथाहि—यदिदं सर्वगतत्वं सामान्यस्य न्यरूपि, तत् किं व्यक्तिसर्वगतत्वम्, सर्वसर्वगतत्वं वा स्वीकृत्य। यदि प्राक्तनम्, तदा तर्णकोत्पाददेशे तदविद्यमानं वर्णनीयम्, अन्यथा व्यक्तिसर्वगतत्वव्याघातात्। तत्रोत्पन्नायां च व्यक्तौ कुतस्तत् तत्र भवेत्? किं व्यक्त्या सहैवोत्पद्येत, व्यक्त्यन्तराद्वा समागच्छेत्?। नाद्यः पक्षः, नित्यत्वेनास्य स्वीकृतत्वात्। द्वितीयपक्षे तु ततस्तदागच्छत् पूर्वव्यक्तिं परित्यज्यागच्छेत्, अपरित्यज्य वा। प्राचिकविकल्पे, प्राक्तनव्यक्तेर्निःसामान्यताऽऽपत्तिः। द्वितीयपक्षे तु किं व्यक्त्या सहैवागच्छेत्, केनचिदंशेन वा। आद्ये शाबलेयेऽपि बाहुलेयोऽयमिति प्रतीतिः स्यात्। द्वितीयपक्षे तु सामान्यस्य सांशताऽऽपत्तिः, सांशत्वे चास्य व्यक्तिवदनित्यत्वप्राप्तिः। अथ

विचित्रा वस्तूनां शक्ति , यथा मन्त्रादिसंस्कृतमस्त्रमुदरस्थ व्याधिविशेषं छिनत्ति, नोदरम्, तद्वदिहापि सामान्यस्येदृशी शक्ति , यथा स्वहेतुभ्य समुत्पद्यमानेऽर्थे पूर्वस्थानादचलदेव तत्र वर्त्तत इति चेत्। स्यादेतदेवम्, यद्येकान्तेनैक्य सामान्यस्य प्रमाणेन प्रसिद्ध स्यात्, नचैवम्, तस्यैव तत्त्वतो विचारयितुमुपक्रान्तत्वात्। तथाहि-यद्यस्यैकान्तैक्य कीर्त्यते, तदा भिन्नदेशकालासु व्यक्तिषु वृत्तिर्न स्यादिति। यदि तु स्वभाववादालम्बनमात्रेणैवेयमुपपाद्यते, तदा किममुना सामान्येन ?, कितरां वाऽन्येनापि भूयसा वस्तुना परिकल्पितेन ?। एकैव काचित् पद्मनिधीयमाना व्यक्तिरभ्युपगम्यताम् । सा हि तथास्वभावत्वात् तथा तथा प्रथिष्यत इति लाभाभिलाषुकस्य मूलोच्छेद । तन्न व्यक्तिसर्वगतत्वमेतस्य सङ्गतिगोचरीभावमभजत् । नापि सर्वसर्वगतत्वम्, खण्डमुण्डादिव्यक्त्यन्तरालेऽपि तदुपलम्भप्रसङ्गात्। अव्यक्तत्वात्तत्र तस्यानुपलम्भ इति चेत्, व्यक्तिस्वात्मनोऽप्यनुपलम्भोऽत एव तत्रास्तु। अन्तराले व्यक्त्यात्मन. सद्भावावेदकप्रमाणाभावादसत्त्वादेवानुपलम्भे, सामान्यस्यापि सोऽसत्त्वादेव तत्रास्तु, विशेषाभावात्। किंच। प्रथमव्यक्तिसमाकलनवेलाया तदभिव्यक्तस्य सामान्यस्य सर्वात्मनाऽभिव्यक्तिर्जातैव, अन्यथा व्यक्ताव्यक्तस्वभावभेदेनानेकत्वानुषङ्गादसामान्यस्वरूपताऽऽपत्ति । तस्मादुपलब्धिलक्षणप्राप्तस्य स्वव्यक्त्यन्तराले सामान्यस्यानुपलम्भादसत्त्वम्, व्यक्तिस्वात्मवत्। अपि च। अव्यक्तत्वात् तत्र तस्यानुपलम्भस्तदा सिध्येद्, यदि व्यक्त्यभिव्यङ्ग्यता सामान्यस्य सिद्धा स्यात्, नचैवम्, नित्यैकरूपस्यास्याभिव्यक्तेरेवानुपपत्ते । तथाहि-व्यक्तिरुपकार कञ्चित्कुर्वती सामान्यमभिव्यञ्जयेत्, इतरथा वा। कुर्वती चेत्, कोऽनया तस्योपकार क्रियते। तज्ज्ञानोत्पादनयोग्यता चेत्, सा ततो भिन्ना, अभिन्ना वा विधीयेत। भिन्ना चेत्, तत्करणे सामान्यस्य न किञ्चित्कृतमिति तदवस्थाऽस्यानभिव्यक्ति। अभिन्ना चेत, तत्करणे सामान्यमेव कृत स्यात्, तथा चानित्यत्वप्राप्ति.। तज्ज्ञान चेदुपकार, तर्हि कथं सामान्यस्य सिद्धि ?, अनुगतज्ञानस्य व्यक्तिभ्य एव प्रादुर्भावात्। तत्सहायस्यास्यैवात्र व्यापार इत्यपि श्रद्धामात्रम्। यतो यदि घटोत्पत्तौ दण्डाद्युपेतकुम्भकारवद् व्यक्त्युपेत सामान्यमनु-

गतज्ञानोत्पत्तौ व्याप्रियमाणं प्रतीयेत, तदा स्यादेतत्, तच्च नास्त्येव। न किञ्चित् कुर्वत्याश्च व्यञ्जकत्वे, विजातीयव्यक्तेरपि व्यञ्जकत्वप्रसङ्ग.। तत्राव्यक्तत्वात् तत्र तस्यानुपलम्भ, किन्त्वसत्त्वादेव, इति न सर्वसर्वगतमप्येतद्भवितुमर्हति, किन्तु प्रतिव्यक्ति कथञ्चिद्भिन्नम्, कथञ्चित्तदात्मकत्वाद्, विसदृशपरिणामवत्। यथैव हि काचिद्व्यक्तिरुपलभ्यमानाव्यक्त्यन्तराद्विशिष्टा विसदृशपरिणामदर्शनादवतिष्ठते, तथा सदृशपरिणामात्मकसामान्यदर्शनात् समानेति, तेनाय समानो गौ, सोऽनेन समान इति प्रतीते। नच व्यक्तिस्वरूपादभिन्नत्वात् सामान्यरूपताव्याघातोऽस्य, रूपादेरप्यत एव गुणरूपताव्याघातप्रसङ्गात्। कथञ्चिद्व्यतिरेकस्तु रूपादेरिव सदृशपरिणामस्याप्यस्त्येव। ननु प्रथमव्यक्तिदर्शनवेलाया कथं न समानप्रत्ययोत्पत्ति ?, तत्र सदृशपरिणामस्य भावादिति चेत्, तवापि विशिष्टप्रत्ययोत्पत्तिस्तदानी कस्मान्न स्याद् ?, वैसदृश्यस्यापि भावात्। परापेक्षत्वात् तस्याप्रसङ्गोऽन्यत्रापि तुल्य.। समानप्रत्ययोऽपि हि परापेक्ष, परापेक्षामन्तरेण क्वचित् कदाचिदप्यभावात्, अणुमहत्त्वादिप्रत्ययवत्। विशेषा अपि नैकान्तेन सामान्याद्विपरीतधर्माणो भवितुमर्हन्ति। यतो यदि सामान्यं सर्वगतं सिद्धं भवेत्, तदा तेषामव्यापकत्वेन ततो विरुद्धधर्माध्यास स्यात्, नचैवम्, सामान्यस्य विशेषाणा च कथञ्चित्परस्पराव्यतिरेकेणैकानेकरूपतयावस्थितत्वात्। विशेषेभ्योऽव्यतिरिक्तत्वाद्धि सामान्यमप्यनेकमिष्यते, सामान्यात्तु विशेषाणामव्यतिरेकात्तेऽप्येकरूपा इति। एकत्वं च सामान्यस्य सग्रहनयार्पणात् सर्वत्र विज्ञेयम्। प्रमाणार्पणात्तस्य सदृशपरिणामरूपस्य विसदृशपरिणामवत् प्रतिव्यक्ति भेदात्। एव चासिद्धं सर्वथा विरुद्धधर्माध्यस्तत्वं सामान्यविशेषयो। यदि पुन कथञ्चिदेव विरुद्धधर्माध्यस्तत्व हेतुश्चिकीर्षितम्, तदा विरुद्धमेव, कथञ्चिद्विरुद्धधर्माध्यासस्य कथंचिद्भेदेनैवाविनाभूतत्वात्। पाथ पावकस्वरूपो दृष्टान्तोऽप्युभयविकल, तयोरपि कथचिदेव विरुद्धधर्माध्यस्तत्वेन भिन्नत्वेन च स्वीकरणात्। पयस्त्वपावकत्वादिना हि तयोर्विरुद्धधर्माध्यासो भेदश्च, द्रव्यत्वादिना पुनस्तद्वैपरीत्यमिति। तथा च कथ न सामान्यविशेषात्म-

कत्व घटादेर्घटत इति ॥ १ ॥

अधुना सामान्यविशेषस्वरूपानेकान्तात्मकवस्तुसमर्थनार्थं साक्षाद्धेतुद्वयमभिदधाना सदसदाद्यनेकान्तात्मकवस्तुप्रसाधकहेतून् सूचयन्ति-

## अनुगतविशिष्टाकारप्रतीतिविषयत्वात्, प्राचीनोत्तराकारपरित्यागोपादानावस्थानस्वरूपपरिणत्याऽर्थक्रियासामर्थ्यघटनाच्च ॥ २ ॥

अनुगताकाराऽनुवृत्तस्वभावा गौर्गौरित्यादिप्रतीतिः, विशिष्टाकारा व्यावृत्तरूपा शबल श्यामल इत्यादिप्रतीतिस्तद्गोचरत्वात्, इति तिर्यक्सामान्यगुणाख्यविशेषलक्षणानेकान्तात्मकवस्तुसिद्धौ हेतु । प्राचीनोत्तराकारयो यथासङ्ख्येन ये परित्यागोपादाने, ताभ्या यदवस्थानम्, तत्स्वरूपपरिणामेनार्थक्रियासामर्थ्यघटनात् कार्यकरणोपपत्ते, इत्यूर्ध्वतासामान्यपर्यायाख्यविशेषस्वरूपानेकान्तात्मकवस्तुसिद्धौ हेतु । चकारात् सदसदाद्यनेकान्तसमर्थकहेतव सदसदाकारप्रतीतिविषयत्वादयो द्रष्टव्याः ॥ २ ॥

इदानीं सामान्य प्रकारत प्ररूपयन्ति-

## सामान्यं द्विप्रकार तिर्यक्सामान्यमूर्ध्वतासामान्यं च ॥ ३ ॥

तिर्यगुल्लेखिनाऽनुवृत्ताकारप्रत्ययेन गृह्यमाण तिर्यक्सामान्यम्, ऊर्ध्वमुल्लेखिनाऽनुगताकारप्रत्ययेन परिच्छिद्यमानमूर्ध्वतासामान्य चेति ॥ ३ ॥

तत्राद्यभेदस्य स्वरूप सोदाहरणमुपदर्शयन्ति-

## प्रतिव्यक्ति तुल्या परिणतिस्तिर्यक्सामान्यम्, शबलशाबलेयादिपिण्डेषु गोत्वं यथा ॥ ४ ॥

व्यक्तिं व्यक्तिमधिश्रित्य समाना परिणतिस्तिर्यक्सामान्यं विज्ञेयम्। अत्र सौगताः सङ्गिरन्ते- गौर्गौरित्याद्यनुगताकारप्रतिपत्तेरन्यव्यावृत्ति-

मात्रेणैव व्यक्तिषु प्रसिद्धेरनवसर एव सदृशपरिणामस्वरूपसामान्यस्वीकार । सर्वतो व्यावृत्तानि हि स्वलक्षणानि न मनागप्यात्मानमन्येन मिश्रयन्तीति । तदेतन्मरुमरीचिकाचक्रोदकाऽऽचान्तये ऽञ्जलिपुटप्रसारणम् । यत इयमन्यव्यावृत्तिर्बहि , अन्तर्वा भवेत् । तत्र खण्डमुण्डादिविशेषप्रतिष्ठैकान्यव्यावृत्तेर्बहि सद्भावे सामान्यरूपता दुर्निवार. । आन्तरत्वे तु तस्या. कथं बहिरर्थाभिमुख्येनोल्लेख स्यात् ? । नान्त , बहिर्वा सेत्यपि स्वाभिप्रायप्रकटनमात्रम् । तथाभूतं ह्यन्यव्यावृत्तिस्वरूपं किञ्चित्, न किञ्चिद्वा । किञ्चिच्चेत्, नूनमन्तर्बहिर्वा तेन भाव्यम्, तत्र च प्रतिपादितदोषानतिक्रम । न किञ्चिच्चेत्, कथ तथाभूतप्रत्ययहेतु ? । वासनामात्रनिर्मित एवायमिति चेत्, तर्हि बहिरर्थापेक्षा न भवेत् । न ह्यन्यकारणको भावोऽन्यदपेक्षते, धूमादें सलिलाद्यपेक्षाप्रसङ्गात् । किञ्च । वासनाऽप्यनुभूतार्थविषयैवोपजायते । नचात्यन्तासत्त्वेन त्वन्मते सामान्यानुभवसम्भव । अपि च । वासना तथाभूत प्रत्यय विषयतयोत्पादयेत्, कारणमात्रतया वा । प्राचि पक्षे सकलविशेषानुयायिनी पारमार्थिकी परिच्छेद्यस्वभावा वासनेति पर्यायान्तरेण सामान्यमेवाभिहित भवेत् । कारणमात्रतया तु वासनाया सदृशप्रत्ययजनने विषयोऽस्य वक्तव्य', निर्विषयस्य प्रत्ययस्यैवासभवात् । नच सदृशपरिणामं विमुच्यापरस्तद्विषय सङ्गच्छते, प्रागुदीरितदोषानुषङ्गात् । किञ्च । इयमन्यव्यावृत्ति स्वयमसमानाकारस्य, समानाकारस्य वा वस्तुन' स्यात् । प्राक्तनविकल्पकल्पनायामतिप्रसङ्ग , कुरङ्गतुरङ्गतरङ्गादिष्वपि तत्सभवापत्ते , तथा च तेष्वनुगताकारैकप्रत्ययानुषङ्ग । स्वय समानाकारस्य तु वस्तुनोऽभ्युपगमे समुपस्थित एवायमतिथि सदृशपरिणाम कथ पराणुद्यताम् ? । ननु यया प्रत्यासत्त्या केचन भावा स्वय सदृशपरिणाम बिभ्रति, तयैव स्वयमतदात्मका अपि सन्तस्तथा किन्नावभासेरन् ? इति चेत् । तदनुचितम् । चेतनेतरभेदाभावप्रसङ्गात् । ययैव हि प्रत्यासत्त्या चेतनेतरस्वभावान् भावा स्वीकुर्वन्ति, तयैव स्वयमतदात्मका अपि सन्तस्तथा कि नावभासेरन् ? इत्यपि ब्रुवाणस्य ब्रह्माद्वैतवादिनो न वक्त्रं बक्रीभवेत् । चेतनेतरव्यातिरिक्तस्य ब्रह्मणोऽसत्त्वात्

कथमस्य तथाऽवभासनम्? इत्यन्यत्रापि तुल्यम्। न खलु सदृशपरिणामशून्यं स्वलक्षणमप्यस्ति, यत् तथाऽवभासेत। ननु स्वलक्षणस्य विसदृशाकारात्मनः सदृशपरिणामात्मकत्वं विरुध्यते। नैवम्। ज्ञानस्य चित्राकारतावत्, विकल्पेतराकारतावच्चैकस्योभयात्मकत्वाविरोधात्। ततो व्यावृत्तप्रत्ययहेतुविसदृशाकारतावद् वस्तुनः सदृशपरिणामात्मकत्वमप्यनुयायिप्रत्ययहेतुः स्वीकार्यम्॥ ४॥

अथ सामान्यद्वितीयभेदं सनिदर्शनमुपदर्शयन्ति-

**पूर्वापरपरिणामसाधारणं द्रव्यमूर्ध्वतासामान्यं कटककङ्कणाद्यनुगामिकाञ्चनवत्॥ ५॥**

पूर्वापरपर्याययोरनुगतमेकं द्रव्यम्, द्रवति तांस्तान् पर्यायान् गच्छतीति व्युत्पत्त्या त्रिकालानुयायी यो वस्त्वंशः, तदूर्ध्वतासामान्यमित्यभिधीयते। निदर्शनमुत्तानमेव। अत्रैकस्य कालत्रयानुयायिताया जनुषाऽन्धः शौद्धोदनिशिष्यः समाचष्टे-अहो! कष्टं शिष्टैरुपक्रान्तोऽयमेकस्यानेककालावस्थितिवादः। प्रतिक्षणभङ्गुरभावावभासनायामेव हि प्रमाणमुद्रा साक्षिणी। तथाहि-यत् सत्, तत्क्षणिकम्, सश्च विवादाध्यासितः शब्दादिः। सत्त्वं तावद् यत् किञ्चिदन्यत्रास्तु, प्रस्तुते तावदर्थक्रियाकारित्वमेव मे संमतम्, तच्च शब्दादौ धर्मिणि प्रत्यक्षप्रमाणप्रतीतमेव। विपक्षाच्च व्यापकानुपलब्ध्या व्यावृत्तम्। सत्त्वस्य हि क्षणिकत्ववत् क्रमाक्रमावपि व्यापकावेव। न हि क्रमाक्रमाभ्यामन्यः प्रकारः शङ्कितुमपि शक्यते, व्याघातस्योद्भटत्वात्, न क्रम इति निषेधादेवाक्रमोपगमात्, नाक्रम इति निषेधादेव च क्रमोपगमात्। तौ च क्रमाक्रमौ स्थिराद्व्यावर्त्तमानावर्थक्रियामपि ततो व्यावर्त्तयतः। वर्त्तमानार्थक्रियाकरणकाले ह्यतीतानागतयोरप्यर्थक्रिययोः समर्थत्वे तयोरपि करणप्रसङ्गः। असमर्थत्वे पूर्वापरकालयोरप्यकरणापत्तिः। समर्थोऽप्यपेक्षणीयासन्निधेर्न करोति, तत्सन्निधेस्तु करोतीति चेत्। ननु किमर्थं सहकारिणामपेक्षा? किं स्वरूपलाभार्थम्, उतोपकारार्थम्, अथ कार्यार्थम्। न प्रथमः, स्वरूपस्य कारणाधीनस्य नित्यस्य वा पूर्वसिद्धत्वात्। न द्वितीयः, स्वयं सामर्थ्येऽसामर्थ्ये वा तस्यानुपयोगात्।

तथाच–

"भाव स्वतः समर्थश्चेद्, उपकार किमर्थक ? ।
भाव स्वतोऽसमर्थश्चेद्, उपकार किमर्थक "? ॥ १ ॥

अत एव न तृतीय । उपकारवत् सहकारिणामप्यनुपयोगात् ।

तथाच–

"भाव स्वत समर्थश्चेत्, पर्याप्त सहकारिभि ।
भाव स्वतोऽसमर्थश्चेत्, पर्याप्त सहकारिभि "॥ १ ॥

अनेकाधीनस्वभावतया कार्यमेव तानपेक्षत इति चेत् । न । तस्यास्वतन्त्रत्वात्, स्वातन्त्र्ये वा कार्यत्वव्याघातात्, तद्धि तत्साकल्येऽपि स्वातन्त्र्यादेव न भवेदिति । एव च यत् क्रमाक्रमाभ्यामर्थक्रियाकारि न भवति, तदसत्, यथा गगनेन्दीवरम्, तथा चाक्षणिकाभिमतो भाव इति व्यापकानुपलब्धिरुत्तिष्ठते । तथा च क्रमयोगपद्ययोर्व्यापकयो व्यावृत्तेरक्षणिकाद्व्यावर्त्तमानार्थक्रिया क्षणिके विश्राम्यतीति प्रतिबन्धसिद्धि ॥ अत्राचक्ष्महे । ननु क्षणाभिदेलिमभावाभिधायिभिक्षुणा कारणग्राहिण, कार्यग्राहिण, तद्द्वयग्राहिणो वा प्रत्यक्षादर्थक्रियाकारित्वप्रतीति प्रोच्येत, यतस्तत्र शब्दादौ धर्मिणि प्रत्यक्षप्रमाणप्रतीतमेवेत्युक्त युक्त स्यात् । न तावत्पौरस्त्यात्, तस्य कारणमात्रमन्त्रणपरायणत्वेन कार्यकिंवदन्तीकुण्ठत्वात् । नापि द्वितीयात्, तस्य कार्यमात्रपरिच्छेदविदग्धत्वेन कारणावधारणवन्ध्यत्वात् । तदुभयावभासे चेदमस्य कारणम्, कार्यं चेत्यर्थक्रियाकारित्वावसायोत्पादात् । वस्तुस्वरूपमेव कारणत्वम्, कार्यत्वं चेति तदन्यतरपरिच्छेदेऽपि तद्बुद्धिसिद्धिरिति चेत्, एवं तर्हि नालिकेरद्वीपवासिनोऽपि वह्निदर्शनादेव तत्र धूमजनकत्वनिश्चयस्य, धूमदर्शनादेव वह्निजन्यत्वनिश्चयस्य च प्रसङ्ग । नापि तृतीयात्, कार्यकारणोभयीग्राहिण प्रत्यक्षस्यासभवात्, तस्य क्षणमात्रजीवित्वात्, अन्यथाऽनेनैव हेतोर्व्यभिचारात् । तदुभयसामर्थ्यसमुद्भूतविकल्पप्रसादात्तदवसाय इति चेत्, तर्हि कथ प्रत्यक्षेण तत्प्रतीति ? । प्रत्यक्षव्यापारपरामर्शित्वात् विकल्पस्य तद्द्वारेण प्रत्यक्षमेव तल्लक्षकमिति चेत् । ननु न कार्यकारणग्राहिणोरन्यतरेणापि प्रत्यक्षेण प्राक्कार्यकारणभावो भासयामासे, तत् कथं

विकल्पेन तद्व्यापार परामृश्येत ? इति न क्षणिकवादिन' क्वाप्यर्थक्रिया-प्रतीतिरस्तीति वाद्यसिद्ध सत्त्वम्। सादिग्धानैकान्तिक च, क्षणिकाक्षणिके क्षणिकैकान्तविपक्षे क्रमाक्रमव्यापकानुपलम्भस्यासिद्धत्वेन तद्व्याप्तार्थ-क्रियायास्ततो व्यावृत्त्यनिर्णयात्। किंचित् कृत्वाऽन्यस्य करण हि क्रम। अय चे कलशस्य कथंचिदेकरूपस्यैव क्रमवत्सहकारिकारणकलापोप-ढौकनवशेन क्रमेण घटचोटिकामस्तकोपरिपर्यटनात्तासां क्रमं कुर्वत-सुप्रतीत एव। अत्र हि भवानत्यन्ततार्किकमन्योऽप्येतदेव वक्तु शक्नोति, यस्मादक्षेपक्रियाधर्मण समर्थस्वभावादेकं कार्यमुदपादि, स एव चेत् पूर्व-मप्यस्ति, तदा तत्कालवत्तदैव तद्विदधान कथ वार्यताम् ?।

"कार्याणि हि विलम्बन्ते कारणाऽसन्निधानत ।
समर्थहेतुसद्भावे क्षेपस्तेषा नु किंकृत ?"॥१॥ इति ।

नचैतदवदातम्। एकान्तेनाक्षेपाक्रियाधर्मत्वानभ्युपगमात्। द्रव्य-रूपशक्त्यपेक्षया हि तत् समर्थमभिधीयते, पर्यायशक्त्यपेक्षया त्वसमर्थ-मिति। यदेव हि कुशूलमूलावलम्बि बीजद्रव्यम्, तदेवावनिवनपवनात-पसमर्पितातिशयविशेषस्वरूपपर्यायशक्तिसमन्वितमङ्कुर करोति। नन्व-सौ पर्यायशक्ति कुशूलमूलावस्थानाऽवस्थायामविद्यमाना, क्षेत्रक्षितिक्षे-पक्षणे तु संपद्यमाना बीजद्रव्याद्भिन्ना वा स्यात्, अभिन्ना वा, भिन्ना-भिन्ना वा। यदा भिन्ना, तदा किमनया काणनेत्राञ्जनरेखाप्रख्यया ?, विभिन्ना सान्निधिभाज संवेदनकोटीमुपागता सहकारिण एवासताम्। अथ सहकारिण' कमपि बीजस्यातिशेषविशेषमपोषयन्त कथ सहका-रितामपि प्राप्नुयु ? इति चेत्, तर्ह्यतिशयोऽप्यतिशयान्तरमनारचयन् कथ तत्ता प्राप्नुयात् ?। अथायमारचयति तदन्तरम्, तर्हि समुपस्थित-मनवस्थादौस्थ्यम्। अथाभिन्ना भावात् पर्यायशक्ति, तर्हि तत्करणे स एव कृत इति कथ न क्षणिकत्वम् ?। भिन्नाभिन्नपर्यायशक्तिपक्षोऽप्यंशे क्षणिकत्वमनर्पयन्न कुशलीति ॥ अत्र ब्रूम–एषु चरम एव पक्षः कक्षीक्रियते। नचात्र कलङ्क कश्चित्, द्रव्याशद्वारेणाऽक्षणिके वस्तुनि पर्यायाशद्वारेण क्षणिकत्वोपगमात्, क्षणिकैकान्तस्यैव कुट्टयितुमुप-क्रान्तत्वात्। क्षणिकपर्यायेभ्योऽव्यतिरेकात् क्षणिकमेव द्रव्यं प्राप्नो-

सीति चेत् । न । व्यतिरेकस्यापि संभवात् । नच व्यतिरेकाव्यतिरेकावेकस्य विरुध्येते । न हि नञ प्रयोगाप्रयोगमात्रेण विरोधगति, अतिप्रसङ्गात् ।

"दलति हृदय गाढोद्वेग द्विधा न तु भिद्यते
वहति विकल कायो मोह न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाह करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्"॥ १ ॥

इत्यादिष्वपि तत्प्राप्ते । नच स्थिरभावस्यापि येनैव रूपेण व्यतिरेकम्, तेनैवाव्यतिरेक व्याकुर्महे, द्रव्यमेतत्, एते च पर्याया इतिरूपेण हि व्यतिरेक, वस्त्वेतदितिरूपेण त्वव्यतिरेक । एकमेव च विज्ञानक्षण सविकल्पाविकल्पकम्, भ्रान्ताभ्रान्तम्, कार्य कारण चाय स्वयमेव स्वीकरोति, भेदाभेदे तु विरोधप्रतिरोधमभिदधातीति महासाहसिक, इति क्षणिकाक्षणिकेऽपि क्रमाक्रमाभ्यामर्थक्रियाया सभवात् सिद्ध सदिग्धानैकान्तिक सत्त्वम् । क्षणिकैकान्ते ताभ्यामर्थक्रियाया अनुपपत्तेर्विरुद्ध वा । तथाहि—क्रमस्तावद् द्वेधा, देशक्रम, कालक्रमश्च । तत्र देशक्रमो यथा तरलतरतरङ्गपरम्परोत्तरणरमणीयश्रेणीभूतश्वेतच्छदमिथुनानाम् । कालक्रमस्त्वेकस्मिन् कलशे क्रमेण मधुमधूकबन्धूकशम्बूकादीनां धारणक्रिया कुर्वाणे । क्षणिकैकान्ते तु द्वयोरप्येतयोरभाव एव । येन हि वस्तुना क्वचिद्देशे, काले वा किंचित्कार्यमर्जयामासे, तत्तत्रैव, तदानीमेव च निरन्वयमनश्यत्, ततो देशान्तरकालान्तरानुसरणव्यसनशालिन कस्याप्येकस्यासभवात् क नाम क्षणिकैकान्ते क्रमोऽस्तु । नाप्यत्र यौगपद्यमनवद्यम् । यत क्षणिकानशस्वरूप रूप युगपदेव स्वकार्याणि कार्याणि कुर्वाण येनैव स्वभावेन स्वोपादेय रूपमुत्पादयति तेनैव ज्ञानक्षणमपि, यद्वा येनैव ज्ञानक्षण तेनैव रूपक्षणमपि, स्वभावान्तरेण वा । प्राचि पक्षे, ज्ञानस्य रूपस्वरूपत्वापत्ति, रूपोत्पादकैकस्वभावाभिनिर्वर्त्यत्वात्, रूपस्वरूपवत् । द्वितीये, रूपस्य ज्ञानरूपताऽऽपत्ति, ज्ञानोत्पादनैकस्वभावसपाद्यत्वात्, ज्ञानस्वरूपवत् । तृतीये, रूपक्षणस्य क्षणिकानशस्वरूपस्यापत्ति, स्वभावभेदस्य भेदकस्य सद्भावात् । अथान-

शैकस्वरूपमपि रूपं सामग्रीभेदाद्भिन्नकार्यकारि भविष्यति को दोष इति चेत्, तर्हि नित्यैकरूपोऽपि पदार्थस्तत्तत्सामग्रीभेदात् तत्तत्कार्यकर्त्ता भविष्यतीति कथं क्षणिकैकान्तसिद्धि स्यात् ? । ततो न क्षणिकैकान्ते क्रमयौगपद्याभ्यामर्थक्रिया संभवतीति सिद्ध विरुद्धं सत्त्वमिति ॥ यदप्याचक्षते भिक्षव क्षणक्षयिकान्तप्रसाधनाय प्रमाणम्–ये यद्भावं प्रत्यनपेक्षा:, ते तद्भावनियता, यथाऽन्त्या कारणसामग्री स्वकार्यजनने, विनाशं प्रत्यनपेक्षाश्च भावा इति । तत्र विनाशं प्रत्यनपेक्षत्वमसिद्धतावष्टब्धमेवं नोच्छ्वसितुमपि शक्नोतीति कथ वस्तूनां विनाशनैयत्यसिद्धौ सावधानता दध्यात् ? । तथाहि–तरस्विपुरुषप्रेरितप्रचण्डमुद्गरसपर्कात् कुम्भादयो ध्वसमाना समीक्ष्यन्ते । नन्वेतत्साधनसिद्धिबद्धकक्षेष्वस्मासु सत्सु कथमासिद्धताऽभिधातुं शक्या ? । तथाहि– वेगवन्मुद्गरादिर्नाशहेतुर्नश्वर वा भाव नाशयति, अनश्वर वा । तत्रानश्वरस्य नाशहेतुशतोपानिपातेऽपि नाशानुपपात्ति , स्वभात्रस्य गीर्वाणप्रभुणाऽप्यन्यथाकर्तुमशक्यत्वात् । नश्वरस्य च नाशे तद्धेतूना वैयर्थ्यम् । नहि स्वहेतुभ्य एवाप्तस्वभावे भावे भावान्तरव्यापार फलवान्, तदनुपरतिप्रसक्ते । उक्त च–

"भावो हि नश्वरात्मा चेत्, कृत प्रलयहेतुभि ।
अथाप्यनश्वरात्माऽसौ, कृतं प्रलयहेतुभि "॥१॥

अपि च । भावात्पृथग्भूतो नाशो नाशहेतुभ्य स्यात्, अपृथग्भूतो वा । यद्यपृथग्भूत , तदा भाव एव तद्धेतुभि कृत स्यात्, तस्य च स्वहेतोरेवोत्पत्ते कृतस्य करणायोगात्तदेव तद्धेतुवैयर्थ्यम् । अथ पृथग्भूतोऽसो, तदा भावसमकालभावी, तदुत्तरकालभावी वा स्यात् । तत्र समकालभावित्वे निर्भरप्रतिबन्धबन्धुरबान्धवयोरिव भावाभावयो समकालमेवोपलम्भो भवेत्, अविरोधात् । तदुत्तरकालभावित्वे तु घटादेः किमायातम्, ? येनासौ स्वोपलम्भ स्वार्थक्रिया च न कुर्यात् । न हि तन्त्वादे समुत्पन्ने पटे घट स्वोपलम्भं स्वार्थक्रिया च कुर्वन् केनचित्प्रतिषेद्धु शक्य । ननु पटस्याविरोधित्वान्न तदुत्पत्तौ तदभाव, अभावस्य तु तद्विपर्ययादसौ स्यात् । ननु किमिदमस्य विरोधित्वं

नाम ?। नाशकत्वम्, नाशस्वरूपत्वं वा। नाशकत्व चेत्, तर्हि मुद्गरादिवन्नाशोत्पादद्वारेणानेन घटादिरुन्मूलनीय, तथाच तत्रापि नाशेऽयमेव पर्यनुयोग इत्यनवस्था। नाशस्वरूपत्व चेत्। नन्वेवमर्थान्तरत्वाविशेषात् कथं कुटस्यैवासौ स्यात् ?, अन्यस्यापि कस्मान्नोच्यते ?। तत्संबन्धित्वेन करणादिति चेत्, क संबन्ध ?, कार्यकारणभाव, संयोग, विशेषणीभाव, अविष्वग्भावो वा। न प्राच्य पक्ष, मुद्गरादिकार्यत्वेन तदभ्युपगमात्। न द्वितीय, तस्याद्रव्यत्वात्, कुटादिसमकालतापत्तेश्च। न तृतीय, भूतलादिविशेषणतया तत्कक्षीकारात्। तुरीये त्वविष्वग्भाव सर्वथाऽभेद, कथञ्चिदभेदो वा भवेत्। नाद्य पक्ष, पृथग्भूतत्वेनास्य कक्षीकारात्। न द्वितीय, विरोधावरोधात्। इति नाशहेतोरयोगत सिद्धं वस्तूना त प्रत्यनपेक्षत्वमिति। तदेतदेतस्य समस्तमुत्पादेऽपि समान पश्यत प्रध्वस एव पर्यनुयुञ्जानस्य लुप्तैकलोचनतामाविष्करोति। तथाहि—उत्पादहेतुरपि सत्स्वभावस्य, असत्स्वभावस्य वा भावस्योत्पादक स्यात्। न सत्स्वभावस्य, तस्य कृतोपस्थायिताप्रसङ्गात्। नाप्यसत्स्वभावस्य, स्वभावस्यान्यथाकर्तुमशक्ते, अभ्युपगमविरोधाच्च। न ह्यसत्स्वभावजन्योत्पादकत्वमिष्यते त्वया। अथानुत्पन्नस्यासत्त्वादुत्पन्नस्य सत्स्वभावत्वाद्व्यर्थो विकल्पयुगलोपन्यासपरिश्रम इति चेत्। नैवम्। नष्टेतरविकल्पापेक्षयाऽस्य नाशेऽपि तुल्यत्वात्।

तथाच—

"भावो भवत्स्वभावश्चेत् कृतमुत्पादहेतुभि ।
अथाभवत्स्वभावोऽसौ कृतमुत्पादहेतुभि "॥ १ ॥

तथाऽयमुत्पद्यमानाद्व्यतिरिक्त, अव्यातिरिक्तो वा। तत्र जन्याव्यतिरिक्तोत्पादजनकत्वे न जन्यस्योत्पाद, जन्याव्यतिरिक्तत्वेनोत्पादस्य कस्यचिदयोगात्। न हि कथञ्चिद्भिन्नमुत्पादमन्तरेण तदेवोत्पद्यत इत्यपि वक्तु शक्यते, किन्तु वस्त्विदमित्येव वक्तु शक्यम्, नच तथा तदुत्पाद कथित स्यात्। उत्पद्यमानाद्व्यतिरिक्तोत्पादजनकताया न तस्योत्पाद, तद्वदन्यस्यापि वा कथमसौ न भवेत्?। तस्यैव संबन्धिनस्तस्य करणादिति चेत्। तदप्यवद्यम्। उत्पादेनापि साकं कार्यकारणभावादेस्त्वन्मतेन संबन्धस्या-

सभवात्। तस्मान्नेयमीदृग्विकल्पपरिकल्पजल्पाकता परिशीलनीया। इदं पुनरिहैदपर्यम्- यथा दण्डचक्रचीवरादिकारणकलापसहकृतात् मृत्पिण्डलक्षणोपादानकारणात् कुम्भ उत्पद्यते, तथा वेगवन्मुद्गरसहकृतात् तस्मादेव विनश्यत्यपि। नचैकान्तेन विनाश. कलशाद्भिन्न एव, मृल्लक्षणैकद्रव्यतादात्म्यात्। विरोधित्व चास्य विनाशरूपत्वमेव। नचैव घटवत्पटस्यापि तदापत्ति, मृद्द्रव्यतादात्म्येनैवावस्थानादुत्पादवत्। नच सर्वथा तादात्म्यम्, तदन्यतरस्यासत्त्वापत्ते। नचैवमत्र विरोधावरोध:,चित्रैकज्ञानवदन्यथोत्पादेऽपि तदापत्ते। इत्यसिद्धं विनाशं प्रत्यनपेक्षत्वमर्थानाम्। अत कथ क्षणभिदेलिमभावस्वभावसिद्धि स्यात्? । एव च सिद्ध पूर्वापरपरिणामव्यापकमेकमूर्ध्वतासामान्यस्वभाव समस्त वस्त्विति ॥५॥

अथ विशेषस्य प्रकारौ प्रकाशयन्ति-

## विशेषोऽपि द्विरूपो गुणः पर्यायश्च ॥ ६ ॥

सर्वेषा विशेषाणा वाचकोऽपि पर्यायशब्दो गुणशब्दस्य सहवर्त्तिविशेषवाचिन सन्निधानेन क्रमवर्त्तिविशेषवाची गोबलीवर्दन्यायात् अत्र गृह्यते ॥ ६ ॥

तत्र गुण लक्षयन्ति-

## गुणः सहभावी धर्मो यथाऽऽत्मनि विज्ञानव्यक्तिशक्त्यादिः॥

सहभावित्वमत्र लक्षणम्। यथेत्यादिकमुदाहरणम्। विज्ञानव्यक्तिर्यत्किञ्चित् ज्ञान तदानीं विद्यमानम्। विज्ञानशक्तिरुत्तरज्ञानपरिणामयोग्यता। आदिशब्दात् सुखपरिस्पन्दयौवनादयो गृह्यन्ते ॥ ७ ॥

पर्याय प्ररूपयन्ति-

## पर्यायस्तु क्रमभावी यथा तत्रैव सुखदुःखादिः ॥८॥

धर्म इत्यनुवर्त्तनीयम्। क्रमभावित्वमिह लक्षणम्। परिशिष्ट तु निदर्शनम्। तत्रेत्यात्मनि। आदिशब्देन हर्षविषादादीनामुपादानम्। अयमर्थ'- ये सहभाविन' सुखज्ञानवीर्यपरिस्पन्दयौवनादय', ते गुणा', ये तु क्रमवृत्तय सुखदु खहर्षविषादादय, ते पर्याया:। नन्वेवं त एव गुणास्त एव पर्याया इति कथं तेषां भेद ? इति चेत्। मैवम्। कालाभेदविभेदवि-

वक्षया तद्भेदस्यानुभूयमानत्वात् । नचैवमेषा सर्वथा भेद इत्यपि मन्तव्यम्, कथञ्चिदभेदस्याप्यविरोधात् । न खल्वेषा स्तम्भकुम्भवद्भेद, नापि स्वरूपवदभेद, किन्तु धर्म्यपेक्षयाऽभेद, स्वरूपापेक्षया तु भेद इति । अथ तदाकर्ण्य यौगा शाल्ककण्टकाक्रान्तमर्माण इवोत्प्लवन्ते– यदि धर्म्यपेक्षया धर्मिणो धर्मा अभिन्ना भवेयु, तदा तद्वत् तस्यापि भेदापत्ते प्रत्यभिज्ञाप्रतिपन्नैकत्वव्याहतिरिति । तन्नावितथम् । कथञ्चित्तद्भेदस्याभीष्टत्वात्, प्रत्यभिज्ञायाश्च कथञ्चिदेकत्वगोचरत्वेनावस्थानात्, नित्यैकान्तस्य प्रमाणाभूमित्वात् । तथाहि–यद्यसौ नित्यैकस्वरूप पदार्थो वर्त्तमानार्थक्रियाकरणकालवत्पूर्वापरकालयोरपि समर्थ स्यात्, तदा तदानीमपि तत्क्रियाकरणप्रसङ्ग । अथासमर्थ पूर्वं पश्चाद्वाऽय स्यात्, तदा तदानीमिव वर्त्तमानकालेऽपि तत्करण कथ स्यात् ? । अथ समर्थोऽप्ययमपेक्षणीयासन्निधेर्न करोति, तत्सन्निधौ तु करोतीति चेत् । ननु केयमपेक्षा नाम ?, किं तैरुपकृत करोतीत्युपकारभेद ?, किं वा तै सह करोतीत्यन्वयपर्यवसायी स्वभावभेद, अथ तैर्विना न करोतीति व्यतिरेकनिष्ठ स्वरूपम, यद्वा सहकारिषु सत्सु करोति, तद्विरहे तु न करोतीति तद्द्वयावलम्बि वस्तुरूपम् । तत्र प्राच्य प्रकारस्तावदसार, अनवस्थाराक्षसीकटाक्षितत्वात् । तथाहि–उपकारेऽपि कर्त्तव्ये सहकार्यन्तरमपेक्षणीयम, उपकरणीय च तेनापीत्युपकारपरम्परा समापततीत्यनवस्था । तथाऽमी उपकारमारभमाणा भावस्वभावभूतम्, अतत्स्वभाव वाऽऽरभेरन् । स्वभावभूतोपकारारम्भभेदे भावस्याप्युत्पत्तिरापतति । नह्यनुत्पद्यमानस्योत्पद्यमान स्वभावो भवति, विरुद्धधर्माध्यासात् । द्वितीयपक्षे तु धर्मिण किमायातम् ? । नह्यन्यस्मिन जाते नष्टे वाऽन्यस्य किञ्चिद्भवति, अतिप्रसङ्गात, अथ तेनापि तस्य किञ्चिदुपकारान्तरमारचनीयमित्येषा पराऽनवस्था । तै सह करोतीत्यादिपक्षोऽपि नाक्षूण, स्वभावस्य तादवस्थ्यात् । न ह्यस्य सहकारिव्यावृत्तौ स्वभावव्यावृत्तिरिति तैर्विनाऽपि कुर्यात् । ननु यत एव सहकारिव्यावृत्तावस्य स्वभावो न व्यावर्त्तते, अत एव तैर्विनाऽपि न करोति । कुर्वाणो हि तै सहैव करोतीति स्वभाव जह्यात् । स तर्हि स्वभावभेद सहकारिसाहित्ये सति कार्यकरणनियत सहकारिणो न जह्यात्

प्रत्युत पलायमानानपि गलेपादिकयोपस्थापयेत्, अन्यथा स्वभावहानिप्रसङ्गात्। अत एव न तृतीयोऽपि। कर्तृस्वभावापरावृत्ते। अथ तद्विरहाकर्तृस्वभाव, तर्हि कालान्तरेऽपि स्वहेतुवशादुपसर्पतोऽपि सहकारिण पराणुद्य न कुर्यात्, तद्विरहाकर्तृशील खल्वयमिति। तुरीयभेदे विरुद्धधर्माध्यास, य खलु सहकारिसहित, स कथ तद्विरहित स्यात्?, तथाच भावभेदो भवेत्। अथाय कालभेदेन सुपरिहर एव, अन्यदा हि सहकारिसाकल्यम्, अन्यदा च तद्वैकल्यमिति। तदसत्। धर्मिणोऽनतिरेकात्। कालभेदेऽपि ह्येक एव धर्मी स्वीचक्रे। तथाचास्य कथ तत्साकल्यवैकल्ये स्याताम्?, सत्त्वे वा सिद्धो धार्मिभेद। अथ सहकारिसाकल्यम्, तद्वैकल्य च धर्म। नच धर्मभेदेऽपि धर्मिण किञ्चित्, ततो भिन्नत्वात् तेषा इति चेत्। अस्तु तावदेकान्तभिन्नधर्मधर्मिवादापवाद एव प्रष्ठ परिहार। तत्त्वेऽपि न साकल्यमेव कार्यमर्जयति, किंतु सोऽपि पदार्थ। तथाच तस्य भावस्य यादृशश्चरमक्षणेऽक्षेपक्रियाधर्मस्वभाव, तादृश एव चेत्प्रथमक्षणेऽपि, तदा तदेवासौ प्रसह्य कुर्वाणो गीर्वाणशापेनापि नापहस्तयितु शक्य। यथा हि विरुद्धधर्माध्यासेन भेदप्रसङ्गपरिहाराय साकल्यवैकल्यलक्षणौ धर्मौ भिन्नस्वभावौ परिकल्पितौ तौ, तथा न सोऽप्यक्षेपक्रियाधर्मस्वभावो भावाद्भिन्न एवाभिधातु शक्य, भावस्याकर्तृत्वप्रसङ्गात्। तत सिद्धो विरुद्धधर्माध्यास। एव च यद्विरुद्धधर्माध्यस्त, तद्भिन्न, यथा शीतोष्णे, विरुद्धधर्माध्यस्तश्च विवादास्पदीभूतो भाव इति न नित्यैकान्तसिद्धि। एव चोपस्थितमिद नित्यानित्यात्मक वस्तु, उत्पादव्ययध्रौव्यात्मकत्वान्यथानुपपत्तेरिति। तथाहि-सर्व वस्तु द्रव्यात्मना नोत्पद्यते, विपद्यते वा, परिस्फुटमन्वयदर्शनात्। लूनपुनर्जातनखादिष्वन्वयदर्शनेन व्यभिचार इति न वाच्यम्। प्रमाणेन बाध्यमानस्यान्वयस्यापरिस्फुटत्वात्। नच प्रस्तुतोऽन्वय प्रमाणविरुद्ध, सत्यप्रत्यभिज्ञानसिद्धत्वात्। ततो द्रव्यात्मना स्थितिरेव सर्वस्य वस्तुन। पर्यायात्मना तु सर्व वस्तूत्पद्यते, विपद्यते च। अस्खलितपर्यायानुभवसद्भावात्। नचैव शुक्ले शङ्खे पीतादिपर्यायानुभवेन व्यभिचार, तस्य स्खलद्रूपत्वात्। न खलु सोऽस्खलद्रूपो येन पूर्वा-

काराविनाशाजहद्वृत्तोत्तराकारोत्पादाविनाभावी भवेत्। नच जीवादौ वस्तुनि हर्षामर्षौदासीन्यादिपर्यायपरम्पराऽनुभव स्खलद्रूप, कस्यचिद्बाधकस्याभावात्। ननूत्पादादय परस्परं भिद्यन्ते, नवा। यदि भिद्यन्ते, कथमेक वस्तु त्र्यात्मकम्?। न भिद्यन्ते चेत्, तथापि कथमेक त्र्यात्मकम्?।

तथाच–

"यद्युत्पत्त्यादयो भिन्ना कथमेक त्रयात्मकम्?।
अथोत्पत्त्यादयोऽभिन्ना कथमेक त्रयात्मकम्?" ॥१॥

इति चेत्। तदयुक्तम्। कथञ्चिद्भिन्नलक्षणत्वेन तेषा कथञ्चिद्भेदाभ्युपगमात्। तथाहि- उत्पादविनाशध्रौव्याणि स्याद्भिन्नानि, भिन्नलक्षणत्वात्, रूपादिवत्। नच भिन्नलक्षणत्वमसिद्धम्। असत आत्मलाभ, सत सत्तावियोग, द्रव्यरूपतयाऽनुवर्त्तन च खलूत्पादादीना परस्परमसंकीर्णानि लक्षणानि सकललोकसाक्षिकाण्येव। नचामी भिन्नलक्षणा अपि परस्परानपेक्षा, खपुष्पवदसत्त्वापत्ते। तथाहि–उत्पाद केवलो नास्ति, स्थितिविगमरहितत्वात्, कूर्मरोमवत्, तथा विनाश केवलो नास्ति, स्थित्युत्पत्तिरहितत्वात्, तद्वत्, एव स्थिति केवला नास्ति, विनाशोत्पादशून्यत्वात्, तद्वदेव, इत्यन्योन्यापेक्षाणामुत्पादादीना वस्तुनि सत्त्वं प्रतिपत्तव्यम्। तथाच कथ नैक त्र्यात्मकम्?। किंच। अपरमप्यधिष्महि पञ्चाशति–

प्रध्वस्ते कलशे शुशोच तनया मौलौ समुत्पादिते
पुत्र प्रीतिमुवाह कामपि नृप शिश्राय मध्यस्थताम्।
पूर्वाकारपरिक्षयस्तदपराकारोदयस्तद्द्वया-
धारश्चैक इति स्थित त्रयमय तत्त्व तथाप्रत्ययात् ॥१॥

तथाच स्थित नित्यानित्यानेकान्त कान्त एवेति। एव सदसदनेकान्तोऽपि। नन्वत्र विरोध। कथमेकमेव कुम्भादि वस्तु सच्च, असच्च भवति?। सत्त्व ह्यसत्त्वपरिहारेण व्यवस्थितम्, असत्त्वमपि सत्त्वपरिहारेण, अन्यथा तयोरविशेष स्यात्। ततश्च तद्यदि सत्, कथमसत्?, अथासत्, कथ सदिति?। तदनवदातम्। यतो यदि येनैव प्रकारेण सत्त्वम्,

तेनैवाऽसत्त्वम्, येनैव चासत्त्वम्, तेनैव सत्त्वमभ्युपेयेत, तदा स्याद्विरोध। यदा तु स्वरूपेण घटादित्वेन, स्वद्रव्येण हिरण्मयादित्वेन, स्वक्षेत्रेण नागरादित्वेन, स्वकालत्वेन वासन्तिकादित्वेन सत्त्वम्, पररूपादिना तु पटत्वतन्तुत्वग्राम्यत्वग्रैष्मिकत्वादिनाऽसत्त्वम्, तदा क्व विरोधगन्धोऽपि। ये तु सौगता परासत्त्व नाभ्युपयन्ति, तेषां घटादे सर्वात्मकत्वप्रसङ्ग। तथाहि– यथा घटस्य स्वरूपादिना सत्त्वम्, तथा यदि पररूपादिनाऽपि स्यात्, तथा सति स्वरूपादित्ववत् पररूपादित्वप्रसक्ते कथ न सर्वात्मकत्व भवेत्?। परासत्त्वेन तु प्रतिनियतोऽसौ सिध्यति। अथ न नाम नास्ति परासत्त्वम्, किंतु स्वसत्त्वमेव तदिति चेत्। अहो! नूतन कोऽपि तर्कवितर्ककर्कश समुल्लाप। न खलु यदेव सत्त्वम्, तदेवासत्त्व भवितुमर्हति, विधिप्रतिषेधरूपतया विरुद्धधर्माध्यासेनानयोरैक्यायोगात्। अथ पृथक् तन्नाभ्युपगम्यते, नच नाभ्युपगम्यत एवेति किमिदमिन्द्रजालम्?। ततश्चास्यानक्षरमसत्त्वमेवोक्तं भवति। एवं च यथा स्वासत्त्वासत्त्वात्स्वसत्त्वं तस्य, तथा परासत्त्वासत्त्वात्परसत्त्वप्रसक्तिरनिवारितप्रसरा, विशेषाभावात्। अथ नाभावनिवृत्त्या पदार्थो भावरूप, प्रतिनियतो वा भवति, अपि तु स्वसामग्रीत स्वस्वभावनियत एवोपजायत इति किं परासत्त्वेनेति चेत्?। न किञ्चित्। केवल स्वसामग्रीत स्वस्वभावनियतोत्पत्तिरेव परासत्त्वात्मकत्वव्यतिरेकेण नोपपद्यते, पारमार्थिकस्वासत्त्वासत्त्वात्मकस्वसत्त्वेनेव परासत्त्वासत्त्वात्मकपरसत्त्वेनाप्युत्पत्तिप्रसङ्गात्। यौगास्तु प्रगल्भन्ते– सर्वथा पृथग्भूतपरस्पराभावाभ्युपगममात्रेण पदार्थप्रतिनियमप्रसिद्धे पर्याप्त तेपामसत्त्वात्मकत्वकल्पनाकदर्थनेनेति। तदसुन्दरम्। यतो यदा पटाद्यभावरूपी घटो न भवति, तदा घट पटादिरेव स्यात्। यथाच घटस्य घटाभावाद्भिन्नत्वाद्घटरूपता, तथा पटादेरपि स्यात्, घटाभावाद्भिन्नत्वादेव। किञ्च। अमीषां भावाना स्वतो भिन्नानाम्, अभिन्नानां वा भिन्नाभावेन भेद क्रियते। नाद्य पक्ष, स्वहेतुभ्य एव भिन्नानामेषामुत्पत्ते। नापि द्वितीय, स्वयमभिन्नानामन्योन्याभावासभवात्। भावाभावयोश्च भेद स्वत एव वा स्यात्, अभावान्तरेण वा। प्राचि पक्षे, भावानामपि

स्वरूपेणैवायमस्तु, किमपरेणाभावेन परिकल्पितेन ? । द्वितीये, पुनरनव-स्थानापत्ति, अभावान्तरेष्वप्यभावान्तराणा भेदकानामवश्यस्वीकरणीय-त्वात् । कथञ्चिदभिन्ने तु भावादभावे न कश्चिदमूदृशकलङ्कावकाश । वस्त्वेव हि तत्तथा, सदसदंशयोस्तथापरिणतिरेव हि घट' पटो वाऽभि-धीयते, न केवल सदश , तत कथ घटादि परेणात्मान मिश्रयेत् ? । इति सूक्त सदसदनेकान्त । एवमपरेऽपि भेदाभेदानेकान्तादय स्वय चतुरैर्विवेचनीया' ॥८॥

इति प्रमाणनयतत्त्वालोकालङ्कारे श्रीरत्नप्रभाचार्यविरचि-तायां रत्नाकरावतारिकाख्यलघुटीकायां प्रमेयस्वरूप-निर्णयो नाम पञ्चमः परिच्छेदः ॥ ५ ॥



अर्हम्

# अथ षष्ठः परिच्छेदः ।

एवं प्रमाणस्य लक्षणसंख्याविषयानाख्याय फलं स्फुटयन्ति–

## यत्प्रमाणेन प्रसाध्यते तदस्य फलम् ॥१॥

यद्वक्ष्यमाणमज्ञाननिवृत्त्यादिकं प्रत्यक्षादिना प्रमाणेन साधकतमेन साध्यते, तदस्य प्रमाणस्य फलमवगन्तव्यम् ॥१॥

अथैतत्प्रकारतो दर्शयन्ति–

## तद्द्विविधमानन्तर्येण पारम्पर्येण च ॥२॥

तत्राद्यभेदमादर्शयन्ति–

## तत्रानन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्तिः फलम् ॥३॥

अज्ञानस्य विपर्ययादेर्निवृत्तिं प्रध्वंसं स्वपरव्यवसितिरूपां फलं बोद्धव्यम् ॥३॥

अथापरप्रकारं प्रकाशयन्ति–

## पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यम् ॥ ४ ॥

औदासीन्यं साक्षात्समस्तार्थानुभवेऽपि हानोपादानेच्छाविरहान्माध्यस्थ्यमुपेक्षेत्यर्थः । कुत इति चेत् । उच्यते । सिद्धप्रयोजनत्वात् केवलिनां सर्वत्रौदासीन्यमेव भवति, हेयस्य संसारतत्कारणस्य हानादुपादेयस्य मोक्षतत्कारणस्योपादानात् सिद्धप्रयोजनत्वं नासिद्धं भगवताम् ॥४॥

अथ केवलव्यतिरिक्तप्रमाणानां परम्पराफलं प्रकटयन्ति–

## शेषप्रमाणानां पुनरुपादानहानोपेक्षाबुद्धयः ॥५॥

पारम्पर्येण फलमिति संबन्धनीयम् । तत उपादेये कुङ्कुमकामिनीकर्पूरादावर्थे ग्रहणबुद्धिः, हेये हिममकराङ्गारादौ परित्यागबुद्धिः, उपेक्षणी-

येऽर्थानर्थाप्रसाधकत्वेनोपादानहानानर्हे जरत्तृणादौ वस्तुन्युपेक्षाबुद्धि पारम्पर्येण फलमिति ॥५॥

प्रमाणात् फलस्य भेदाभेदैकान्तवादिनो यौगसौगतान्निराकर्त्तुं स्वमत च व्यवस्थापयितु प्रमाणयन्ति–

**तत्प्रमाणतः स्याद्भिन्नमभिन्नं च प्रमाणफलत्वान्यथानुपपत्तेः ॥६॥**

तदिति प्रकृत फल परामृश्यते ॥ ६ ॥

अथात्राशङ्क्य व्याभिचारमपसारयन्ति–

**उपादानबुद्ध्यादिना प्रमाणाद्भिन्नेन व्यवहितफलेन हेतोर्व्यभिचार इति न विभावनीयम् ॥७॥**

प्रमाणफल च भविष्यति, प्रमाणात् सर्वथा भिन्न च भविष्यति, यथोपादानबुद्ध्यादिकमिति न परामर्शनीय यौगैरित्यर्थ ॥७॥

अत्र हेतु –

**तस्यैकप्रमातृतादात्म्येन प्रमाणादभेदव्यवस्थितेः ॥८॥**

एकप्रमातृतादात्म्यमपि कुत सिद्धमित्याशङ्क्याहु –

**प्रमाणतया परिणतस्यैवात्मनः फलतया परिणतिप्रतीते ॥९॥**

यस्यैवात्मन प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेद ॥९॥

एतदेव भावयन्ति–

**यः प्रमिमीते स एवोपादत्ते परित्यजत्युपेक्षते चेति सर्वसंव्यवहारिभिरस्खलितमनुभवात् ॥१०॥**

न खल्वन्य प्रमाता प्रमाणपर्यायतया परिणमतेऽन्यश्चोपादानहानोपेक्षाबुद्धिपर्यायस्वभावतयेति कस्यापि सचेतसोऽनुभव समस्तीत्यर्थ ॥ १० ॥

यथोक्तार्थानभ्युपगमे दूषणमाहु –

**इतरथा स्वपरयोः प्रमाणफलव्यवस्थाविप्लवः प्रसज्येत ॥११॥**

इतरथेत्येकस्यैव प्रमातु प्रमाणफलतादात्म्यानङ्गीकारे इमे प्रमाणफले स्वकीये, इमे च परकीये इति नैयत्य न स्यादिति भाव । तादित्थमुपादानादौ व्यवहिते फले प्रमाणादभेदस्यापि प्रसिद्धेर्न तेन प्रकृतहेतोर्व्यभिचार इति सिद्धम् ॥११॥

अथ व्यभिचारान्तर पराकुर्वन्ति–

**अज्ञाननिवृत्तिस्वरूपेण प्रमाणादभिन्नेन साक्षात्फलेन साधनस्यानेकान्त इति नाशङ्कनीयम् ॥१२॥**

प्रमाणफल च स्यात्, प्रमाणात् सर्वथाऽप्यभिन्न च स्यात्, यथाऽज्ञाननिवृत्तिरित्यनयोर्नैकान्तिकत्व प्रमाणफलत्वान्यथानुपपत्तेर्हेतोरिति न शङ्कनीय शाक्यै ॥१२॥

कुत इत्याह—

**कथञ्चित्तस्यापि प्रमाणाद्भेदेन व्यवस्थानात् ॥१३॥**

कथञ्चिदिति वक्ष्यमाणेन प्रकारेण ॥१३॥

तमेव प्रकार प्रकाशयन्ति–

**साध्यसाधनभावेन प्रमाणफलयोः प्रतीयमानत्वात् ॥१४॥**

ये हि साध्यसाधनभावेन प्रतीयेते, ते परस्पर भिन्नेते, यथा कुठारच्छिदे, साध्यसाधनभावेन प्रतीयेते च प्रमाणाज्ञाननिवृत्त्याख्यफले ॥१४॥

अस्यैव हेतोरसिद्धता परिजिहीर्षव प्रमाणस्य साधनता तावत्समर्थयन्ते—

**प्रमाणं हि करणाख्यं साधनम्, स्वपरव्यवसितौ साधकतमत्वात् ॥ १५ ॥**

यत् खलु क्रियाया साधकतमम्, तत् करणाख्य साधन, यथा परश्वध, साधकतम च स्वपरव्यवसितौ प्रमाणमिति ॥१५॥

अथ फलस्य साध्यत्व समर्थयन्ते-

**स्वपरव्यवसितिक्रियारूपाज्ञाननिवृत्त्याख्यं फलं तु साध्यम्, प्रमाणनिष्पाद्यत्वात् ॥ १६ ॥**

यत्प्रमाणनिष्पाद्यम्, तत् साध्य, यथोपादानबुद्ध्यादिक, प्रमाणनिष्पाद्यं च प्रकृत फलमिति। तत्र प्रमाणादेकान्तेन फलस्याभेद साधीयान्। सर्वथा तादात्म्ये हि प्रमाणफलयोर्न व्यवस्था, तद्भावविरोधात्। न हि सारूप्यमस्य प्रमाणम्, अधिगति फलमिति सर्वथा तादात्म्ये सिध्यति, अतिप्रसक्ते। ननु प्रमाणस्यासारूप्यव्यावृत्ति सारूप्यम्, अनधिगतिव्यावृत्तिरधिगतिरिति व्यावृत्तिभेदादेकस्यापि प्रमाणफलव्यवस्थेति चेत्। नैवम्। स्वभावभेदमन्तरेणान्यव्यावृत्तिभेदस्याप्यनुपपत्ते। कथ च प्रमाणस्याप्रमाणाफलव्यावृत्त्या प्रमाणफलव्यवस्थावत्प्रमाणान्तरफलान्तरव्यावृत्त्या अप्रमाणत्वस्याफलत्वस्य च व्यवस्था न स्यात्? इति ॥ १६ ॥

अथ प्रसङ्गत कर्तुरपि सकाशात्प्रस्तुतफलस्य भेद समर्थयन्ते-

**प्रमातुरपि स्वपरव्यवसितिक्रियायाः कथञ्चिद्भेदः ॥१७॥**

कर्तुरात्मन किं पुन प्रमाणादित्यपिशब्दार्थ ॥ १७ ॥

अत्र हेतुमाहु -

**कर्तृक्रिययोः साध्यसाधकभावेनोपलम्भात् ॥१८॥**

ये साध्यसाधकभावेनोपलभ्येते, ते भिन्ने, यथा देवदत्तदारुच्छिदिक्रिये, साध्यसाधकभावेनोपलभ्येते च प्रमातृस्वपरव्यवसितिलक्षणाक्रिये॥

एतद्धेत्वसिद्धता प्रतिषेधन्ति—

**कर्त्ता हि साधकः, स्वतन्त्रत्वात्; क्रिया तु साध्या, कर्तृनिर्वर्त्यत्वात् ॥१९॥**

स्वमात्मा तन्त्र प्रधानमस्येति स्वतन्त्रस्तद्भावस्तत्त्वं तस्मात्। य क्रियाया स्वतन्त्र स साधको, यथा दारुच्छिदाया व्रश्चन., स्वतन्त्रश्च स्वप-

रव्यवसितिक्रियाया प्रमातेति। स्वतन्त्रत्व कर्त्तु कुत सिद्धम्? इति चेत्। क्रियासिद्धावपरायत्ततया प्राधान्येन विवक्षितत्वात् । स्वपरव्यवसितिलक्षणा क्रिया पुन साध्या, कर्तृनिर्वर्त्यत्वात्, या कर्तृनिर्वर्त्या क्रिया, सा साध्येतिव्यवहारयोग्या, यथा सम्प्रतिपन्ना, तथा च स्वपरव्यवसितिक्रियेति। तदेव कर्तृक्रिययो साध्यसाधकभावेन प्रतीयमानत्वादुपपन्नः कथञ्चिद्भेद ॥ १९ ॥

एनमेवार्थं द्रढयन्ति—

**न च क्रिया क्रियावतः सकाशादभिन्नैव, भिन्नैव वा; प्रतिनियतक्रियाक्रियावद्भावभङ्गप्रसङ्गात् ॥२०॥**

अभिन्नैवेत्यनेन सौगतस्वीकृतमभेदैकान्तं, भिन्नैवेत्यनेन तु वैशेषिकाद्यभिमतं भेदैकान्त प्रतिक्षिपन्ति—क्रियाया क्रियावत एकान्तेनाभेदे हि क्रियावन्मात्रमेव तात्त्विक स्यात्, न तु द्वयम्, अभेदप्रतिज्ञाविरोधात्। एकान्तभेदे तु क्रियाक्रियावतोर्विवक्षितपदार्थस्यैवेय क्रियेति सबन्धावधारण न स्याद्, भेदाविशेषादशेषवस्तूनामप्यसौ किन्न भवेत्?। नच समवायोऽत्र नियामकतया वक्तु युक्त, तस्यापि व्यापकत्वेन तन्नियामकतायामपर्याप्तत्वात्। तस्माद्भेदाभेदैकान्तपक्षयो प्रतिनियतक्रियाक्रियावद्भावभङ्गप्रसङ्ग सुव्यक्त इति कथञ्चिदविष्वग्भूतेव क्रिया क्रियावत. सकाशादङ्गीकर्त्तुमुचिता ॥ २० ॥

कश्चिदाह—कल्पनाशिल्पिनिर्मिता सर्वोऽपि प्रमाणफलव्यवहृतिरिति विफल एवाय प्रमाणफलालम्बन स्याद्वादिनां भेदाभेदप्रतिष्ठोपक्रम इति तन्मतमिदानीमपाकुर्वन्ति—

**संवृत्त्या प्रमाणफलव्यवहार इत्यप्रामाणिकप्रलापः, परमार्थतः स्वाभिमतासिद्धिविरोधात् ॥२१॥**

अयमर्थ —सांवृतप्रमाणफलव्यवहारवादिनाऽपि सांवृतत्व प्रमाणफलयो परमार्थवृत्त्या तावदेष्टव्यम्। तच्चासौ प्रमाणादभिमन्यते, अप्रमाणाद्वा। न तावदप्रमाणात्, तस्याकिञ्चित्करत्वात्। अथ प्रमाणात्। तन्न। यत सांवृतत्वग्राहक प्रमाण सांवृतम्, असांवृत वा स्यात्। यदि सांवृतम्।

कथ तस्मादपारमार्थिकात् पारमार्थिकस्य सकलप्रमाणफलव्यवहारसावृतत्वस्य सिद्धि ?। तथाच पारमार्थिक एव समस्तोऽपि प्रमाणफलव्यवहार प्राप्त । अथ प्रमाणफलसावृतत्वग्राहक प्रमाण स्वयमसावृतमिष्यते, तर्हि क्षीणा सकलप्रमाणफलव्यवहारसावृतत्वप्रतिज्ञा अनेनैव व्यभिचारात्। तदेव सावृतसकलप्रमाणफलव्यवहारवादिनो व्यक्त एव परमार्थत स्वाभिमतसिद्धिविरोध इति ॥२१॥

प्रस्तुतमेवार्थं निगमयन्ति–

**ततः पारमार्थिक एव प्रमाणफलव्यवहारः सकलपुरुषार्थसिद्धिहेतुः स्वीकर्त्तव्यः ॥२२॥**

एव प्रमाण स्वरूपादिभि प्ररूप्येदानी हेयज्ञाने सति तद्धानादुपादेय सम्यगुपादातु पार्यते, अतस्तत्स्वरूपाद्याभासमप्याहु –

**प्रमाणस्य स्वरूपादिचतुष्टयाद्विपरीत तदाभासम् ॥२३॥**

पूर्वपरिच्छेदप्रतिपादितात्प्रमाणसबन्धिन स्वरूपादिचतुष्टयात् स्वरूपसङ्ख्याविषयफललक्षणाद्विपरीतमपर स्वरूपादिचतुष्टयाभास स्वरूपाभास, सङ्ख्याभास, विषयाभास, फलाभास चेत्यर्थस्तद्वदाभासत इति कृत्वा ॥ २३ ॥

तत्र स्वरूपाभास तावदाहु –

**अज्ञानात्मकानात्मप्रकाशकस्वमात्रावभासकनिर्विकल्पकसमारोपाः प्रमाणस्य स्वरूपाभासाः ॥२४॥**

अज्ञानात्मक च, अनात्मप्रकाशक च, स्वमात्रावभासक च, निर्विकल्पक च, समारोपश्चेति प्रमाणसबन्धिन स्वरूपाभासा प्रमाणाभासा प्रत्येया ॥२४॥

अथ क्रमेण दृष्टान्तमाचक्षते–

**यथा सन्निकर्षाद्यस्वसंविदितपरानवभासकज्ञानदर्शनविपर्ययसशयानध्यवसायाः ॥२५॥**

अत्र सन्निकर्षादिकमज्ञानात्मकस्य दृष्टान्त , अस्वसंविदितज्ञानमनात्मप्रकाशकस्य, परावभासकज्ञान बाह्यार्थापलापिज्ञानस्य, दर्शन निर्विकल्पकस्य, विपर्ययादयस्तु समारोपस्येति ॥२५॥

कथमेषा तत्स्वरूपाभासता ? इत्यत्र हेतुमाहु –

**तेभ्यः स्वपरव्यवसायस्यानुपपत्तेः ॥२६॥**

यथा चैतेभ्य स्वपरव्यवसायो नोपपद्यते तथा प्रागुपदर्शितमेव ॥२६॥

सामान्यत प्रमाणस्वरूपाभासमभिधाय विशेषतस्तदभिधित्सव साव्यवहारिकप्रत्यक्षाभास तावदाहु –

**साव्यवहारिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥२७॥**

साव्यवहारिकप्रत्यक्षमिन्द्रियानिन्द्रियनिबन्धनतया द्विप्रकार प्रागुपवर्णितस्वरूपम् ॥२७॥

उदाहरन्ति–

**यथाऽम्बुधरेषु गन्धर्वनगरज्ञानं, दुःखे सुखज्ञानं च ॥२८॥**

अत्राद्य निदर्शनमिन्द्रियनिबन्धनाभासस्य, द्वितीय पुनरानिन्द्रियनिबन्धनाभासस्य। अवग्रहाभासादयस्तु तद्भेदा स्वयमेव प्राज्ञैर्विज्ञेया ॥२८॥

पारमार्थिकप्रत्यक्षाभास प्रादुष्कुर्वन्ति–

**पारमार्थिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥२९॥**

पारमार्थिकप्रत्यक्ष विकलसकलस्वरूपतया द्विभेद प्रागुक्तम् ॥२९॥

उदाहरन्ति–

**यथा शिवाख्यस्य राजर्षेरसंख्यातद्वीपसमुद्रेषु सप्तद्वीपसमुद्रज्ञानम् ॥३०॥**

शिवाख्यो राजर्षि स्वसमयप्रसिद्ध , तस्य किल विभङ्गापरपर्यायमवध्याभास तादृश वेदनमाविर्बभूवेत्याहु सैद्धान्तिका । मन पर्यायकेवलज्ञानयोस्तु विपर्यय कदाचिन्न सभवति, एकस्य सयमविशुद्धिप्रादुर्भूतत्वात्, अन्यस्य समस्तावरणक्षयसमुत्थत्वात्। ततश्च नात्र तदाभासचिन्तावकाश ॥३०॥

अथ परोक्षाभासं विवक्षव स्मरणाभास तावदाहु -

अननुभूते वस्तुनि तदितिज्ञानं स्मरणाभासम् ॥३१॥

अननुभूते प्रमाणमात्रेणानुपलब्धे ॥३१॥

उदाहरन्ति-

अननुभूते मुनिमण्डले तन्मुनिमण्डलमिति यथा ॥ ३२॥

प्रत्यभिज्ञाभास प्ररूपयन्ति-

तुल्ये पदार्थे स एवायमिति, एकस्मिश्च तेन तुल्य इत्यादि-ज्ञानं प्रत्यभिज्ञानाभासम् ॥ ३३ ॥

प्रत्यभिज्ञान हि तिर्यगूर्ध्वतासामान्यादिगोचरमुपवर्णित, तत्र तिर्यक्सामान्यालिङ्गिते भावे स एवायामिति ऊर्ध्वतासामान्यस्वभावे चैकस्मिन् द्रव्ये तेन तुल्य इति ज्ञानम्, आदिशब्दादेवजातीयकमन्यदपि ज्ञान प्रत्यभिज्ञानाभासमिति ॥३३॥

उदाहरन्ति-

यमलकजातवत् ॥३४॥

यमलकजातयोरेकस्या स्त्रिया एकदिनोत्पन्नयो पुत्रयोर्मध्यादेकत्र द्वितीयेन तुल्योऽयमिति जिज्ञासिते स एवायमिति, अपरत्र स एवायमिति बुभुत्सिते तेन तुल्योऽयमिति च ज्ञान प्रत्यभिज्ञानाभासम् ॥३४॥

तर्काभासमादर्शयन्ति-

असत्यामपि व्याप्तौ तदवभासस्तर्काभासः ॥३५॥

व्याप्तिरविनाभाव ॥३५॥

उदाहरन्ति-

स श्यामो मैत्रतनयत्वादित्यत्र यावान्मैत्रतनयः स श्याम इति यथा ॥३६॥

नहि मैत्रतनयत्वहेतो श्यामत्वेन व्याप्तिरस्ति, शाकाद्याहारपरिणतिपूर्वकत्वाच्छ्यामताया. । यो हि जनन्युपभुक्तशाकाद्याहारपरिणामपूर्वकस्तनय , स एव श्याम इति सर्वोक्षेपेण य प्रत्यय , स तर्क इति ॥३६॥

अनुमानाभासमाख्यान्ति—

**पक्षाभासादिसमुत्थं ज्ञानमनुमानाभासमवसेयम् ॥ ३७ ॥**

पक्षाभासो वक्ष्यमाण आदिर्येषां हेत्वाभासादीनां भणिष्यमाणस्वरूपाणां तेभ्यः समुत्था समुत्पत्तिरस्येति पक्षाभासादिसमुत्थं ज्ञानमनुमानाभासमभिधीयते। एतच्च यदा स्वप्रतिपत्त्यर्थं तदा स्वार्थानुमानाभासं, यदा तु परप्रतिपत्त्यर्थं पक्षादिवचनरूपापन्नं तदा परार्थानुमानाभासमवसेयमिति ॥ ३७ ॥

पक्षाभासास्तावदाहुः —

**तत्र प्रतीतनिराकृतानभीप्सितसाध्यधर्मविशेषणास्त्रयः पक्षाभासाः ॥ ३८ ॥**

प्रतीतसाध्यधर्मविशेषणः, निराकृतसाध्यधर्मविशेषणः, अनभीप्सितसाध्यधर्मविशेषणश्चेति त्रयः पक्षाभासा भवन्ति, अप्रतीतानिराकृताभीप्सितसाध्यधर्मविशिष्टधर्मिणः सम्यक्पक्षत्वेन प्रागुपवर्णितत्वादेतेषां च तद्विपरीतत्वात् ॥ ३८ ॥

तत्राद्यं पक्षाभासमुदाहरन्ति—

**प्रतीतसाध्यधर्मविशेषणो यथाऽऽर्हतान्प्रत्यवधारणवर्जं परेण प्रयुज्यमानः समस्ति जीव इत्यादिः ॥३९॥**

अवधारणं वर्जयित्वा परोपन्यस्तः समस्तोऽपि वाक्प्रयोग आर्हतानां प्रतीतमेवार्थं प्रकाशयति। ते हि सर्वं जीवादिवस्त्वनेकान्तात्मकं प्रतिपन्नाः, ततस्तेषामवधारणरहितं प्रमाणवाक्यं, सुनयवाक्यं वा प्रयुज्यमानं प्रसिद्धमेवार्थमुद्भावयतीति व्यर्थस्तत्प्रयोगः। सिद्धसाधनः, प्रसिद्धसंबन्ध इत्यपि सञ्ज्ञाद्वयमस्याविरुद्धम् ॥ ३९ ॥

द्वितीयपक्षाभासं भेदतो नियमयन्ति—

**निराकृतसाध्यधर्मविशेषणः प्रत्यक्षानुमानागमलोकस्ववचनादिभिः साध्यधर्मस्य निराकरणादनेकप्रकारः ॥ ४० ॥**

प्रत्यक्षनिराकृतसाध्यधर्मविशेषण , अनुमाननिराकृतसाध्यधर्मविशेषण , आगमनिराकृतसाध्यधर्मविशेषण , लोकनिराकृतसाध्यधर्मविशेषण , स्ववचननिराकृतसाध्यधर्मविशेषण , आदिशब्दात्स्मरणनिराकृतसाध्यधर्मविशेषण , प्रत्यभिज्ञाननिराकृतसाध्यधर्मविशेषण , तर्कनिराकृतसाध्यधर्मविशेषणश्चेति ॥ ४० ॥

एषु प्रथम प्रकार प्रकाशयन्ति—

**प्रत्यक्षनिराकृतसाध्यधर्मविशेषणो यथा नास्ति भूतविलक्षण आत्मा ॥४१॥**

स्वसंवेदनप्रत्यक्षेण हि पृथिव्यप्तेजोवायुभ्य शरीरत्वेन परिणतेभ्यो भूतेभ्यो विलक्षणोऽन्य आत्मा परिच्छिद्यते, इति तद्विलक्षणात्मनिराकरणप्रतिज्ञाऽनेन बाध्यते, यथाऽनुष्णोऽग्नि , इति प्रतिज्ञा बाह्येन्द्रियप्रत्यक्षेण ॥ ४१ ॥

द्वितीयप्रकार प्रकाशयन्ति—

**अनुमाननिराकृतसाध्यधर्मविशेषणो यथा नास्ति सर्वज्ञो वीतरागो वा ॥ ४२ ॥**

अत्र हि य कश्चिन्निर्ह्रासातिशयवान् , स क्वचित्स्वकारणजनितनिर्मूलक्षय यथा कनकादिमलो, निर्ह्रासातिशयवती च दोषावरणे इत्यनेनानुमानेन सुव्यक्तैव बाधा । एतस्मात्खल्वनुमानादत्र क्वचन पुरुषधौरेये दोषावरणयो सर्वथा प्रक्षयप्रसिद्धि , स एव सर्वज्ञो वीतरागश्चेति। एवमपरिणामी शब्द इत्यादिरपि प्रतिज्ञा परिणामी शब्द कृतकत्वान्यथाऽनुपपत्तेरित्याद्यनुमानेन बाध्यमानाऽत्रोदाहरणीया ॥ ४२ ॥

अथ तृतीय भेदमाहु —

**आगमनिराकृतसाध्यधर्मविशेषणो यथा जैनेन रजनिभोजनं भजनीयम् ॥४३॥**

"अत्थ गयमि आइच्चे पुरत्था य अणुग्गए ।
आहारमाइय सव्व मणसा वि न पत्थए" ॥ १ ॥

इत्यादिना हि प्रसिद्धप्रामाण्येन परमागमवाक्येन क्षपाभक्षणपक्ष प्रतिक्षिप्यमाणत्वान्न साधुत्वमास्कन्दति । एवं जैनेन परकलत्रमभिलषणीयमित्याद्युदाहरणीयम् ॥४३॥

चतुर्थं प्रकार प्रथयन्ति—

लोकनिराकृतसाध्यधर्मविशेषणो यथा न पारमार्थिकः प्रमाणप्रमेयव्यवहारः ॥ ४४ ॥

लोकशब्देनात्र लोकप्रतीतिरुच्यते । ततो लोकप्रतीतिनिराकृतसाध्यधर्मविशेषण इत्यर्थ । सर्वोऽपि हि लोकस्य प्रतीतिरीदृशी यत्पारमार्थिकं प्रमाण, तेन च तत्त्वातत्त्वविवेक पारमार्थिक एव क्रियते। ननु लोकप्रतीतिरप्रमाण, प्रमाण वा ? । अप्रमाणं चेत्, कथ तया बाध कस्यापि कर्तु शक्य ? । प्रमाण चेत्, प्रत्यक्षाद्यतिरिक्त, तदन्यतरद्वा । न तावदाद्यः पक्ष , प्रत्यक्षाद्यतिरिक्तप्रमाणस्यासभवात् । अन्यथा "प्रत्यक्ष च परोक्ष च" इत्यादिविभागस्यासमञ्जस्यापत्ते । द्वितीयपक्षे तु प्रत्यक्षनिराकृतसाध्यधर्मविशेषणादिपक्षाभासेष्वेवास्यान्तर्भूतत्वात् न वाच्य प्रकृत पक्षाभास इति चेत् । सत्यमेतत्, किन्तु लोकप्रतीतिरत्रोत्कलितत्वेन प्रतिभातीति विनेयमनीषोन्मीलनार्थमस्य पार्थक्येन निर्देश । एंव शुचि नरशिर कपालप्रमुख, प्राण्यङ्गत्वात्, शङ्खशुक्तिवदित्याद्यपि दृश्यम् ॥४४॥

पञ्चमप्रकार कीर्त्तयन्ति—

स्ववचननिराकृतसाध्यधर्मविशेषणो यथा नास्ति प्रमेयपरिच्छेदकं प्रमाणम् ॥ ४५ ॥

सर्वप्रमाणाभावमभ्युपगच्छत स्वमपि वचन स्वाभिप्रायप्रतिपादनपर नास्तीति वाचंयमत्वमेव तस्य श्रेय , ब्रुवाणस्तु नास्ति प्रमाण प्रमेयपरिच्छेदकमिति स्ववचन प्रमाणीकुर्वन् ब्रूत इति स्ववचनेनैवासौ व्याहन्यते, एव निरन्तरमह मौनीत्याद्यपि दृश्यम् । ननु स्ववचनस्य शब्दरूपत्वात्तन्निराकृतसाध्यधर्मविशेषण पक्षाभास प्राग्गदितागमनिराकृतसाध्यधर्मविशेषण एव पक्षाभासेऽन्तर्भवतीति किमर्थमस्य भेदेन कथनमिति चेत् । एवमेतत्, तथापि शिष्यशेमुषीविकाशार्थमस्यापि पार्थक्येन

कथनमिति न दोष । आदिशब्दसूचितास्तु पक्षाभासास्त्रय स्मरणप्रत्यभिज्ञानतर्कनिराकृतसाध्यधर्मविशेषणा । तत्र स्मरणनिराकृतसाध्यधर्मविशेषणो यथा, स सहकारतरु फलशून्य इति, अय पक्ष कस्यचित्सहकारतरु फलभरभ्राजिष्णु सम्यक् स्मर्तु स्मरणेन बाध्यते। प्रत्यभिज्ञाननिराकृतसाध्यधर्मविशेषणो यथा, सदृशेऽपि क्वचन वस्तुनि कश्चन कञ्चनाधिकृत्योर्द्ध्वतासामान्यभ्रान्त्या पक्षीकुरुते, तदेवेदमिति । तस्याय पक्षस्तिर्यक्सामान्यावलम्बिना तेन सदृशमिदमिति प्रत्यभिज्ञानेन निराक्रियते । तर्कनिराकृतसाध्यधर्मविशेषणो यथा, यो यस्तत्पुत्र, स श्याम इति व्याप्तिं समीचीनेति । अस्याय पक्षो यो जनन्युपभुक्तशाकाद्याहारपरिणामपूर्वकस्तत्पुत्र, स श्याम इति व्याप्तिग्राहिणा सम्यक्तर्केण निराक्रियते ॥४५॥

द्वितीय पक्षाभास सभेदमुपदर्श्य तृतीयमुपदर्शयन्ति-

अनभीप्सितसाध्यधर्मविशेषणो यथा स्याद्वादिनः शाश्वतिक एव कलशादिरशाश्वतिक एव वेति वदतः ॥ ४६ ॥

स्याद्वादिनो हि सर्वत्रापि वस्तुनि नित्यत्वैकान्त, अनित्यत्वैकान्तो वा नाभीप्सित, तथापि कदाचिदसौ सभाक्षोभादिनैवमपि वदेत्। एव नित्य शब्द इति ताथागतस्य वदत प्रकृत पक्षाभास । ये त्वप्रसिद्धविशेषणाप्रसिद्धविशेष्याप्रसिद्धोभया पक्षभासा परै प्रोचिरे, नामी समीचीना । अप्रसिद्धस्यैव विशेषणस्य साध्यमानत्वात्, अन्यथा सिद्धसाध्यताऽवतारात्। अथात्र सार्वत्रिक प्रसिद्ध्यभावो विवक्षितो नतु तत्रैव धर्मिणि, यथा साङ्ख्यस्य विनाशित्वं क्वापि धर्मिणि न प्रसिद्धम्, तिरोभावमात्रस्यैव सर्वत्र तेनाभिधानात् । तदयुक्तम्। एव सति क्षणिकता साधयतो भवत कथ नाप्रसिद्धविशेषणत्वं दोषो भवेत् ?, क्षणिकताया सपक्षे क्वाप्यप्रसिद्धे । विशेष्यस्य तु धर्मिण सिद्धिर्विकल्पादपि प्रतिपादितेति कथमप्रसिद्धताऽस्य ? । एतेनाप्रसिद्धोभयोऽपि परास्त ॥ ४६ ॥

पक्षाभासान्निरूप्य हेत्वाभासानाहु –

असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः ॥ ४७ ॥

'निश्चितान्यथाऽनुपपत्त्याख्यैकहेतुलक्षणविकलत्वेनाहेतवोऽपि हेतुस्थाने निवेशाद्धेतुवदाभासमाना हेत्वाभासा '॥४७॥

तत्रासिद्धमभिदधति–

यस्यान्यथानुपपत्तिः प्रमाणेन न प्रतीयते सोऽसिद्धः॥

अन्यथाऽनुपपत्तेर्विपरीतोया अनिश्चितायाश्च विरुद्धानैकान्तिकत्वेन कीर्त्तयिष्यमाणत्वादिह हेतुस्वरूपाप्रतीतिद्वारेणैवान्यथाऽनुपपत्त्यप्रतीतिरवशिष्टा द्रष्टव्या, हेतुस्वरूपाप्रतीतिश्चेयमज्ञानात्, सन्देहाद्, विपर्ययाद् वा विज्ञेया ॥४८॥

अथामु भेदतो दर्शयन्ति–

स द्विविध उभयासिद्धोऽन्यतरासिद्धश्च ॥ ४९ ॥

उभयस्य वादिप्रतिवादिसमुदायस्यासिद्ध , अन्यतरस्य वादिन , प्रतिवादिनो वाऽसिद्ध ॥४९॥

तत्राद्यभेद वदन्ति–

उभयासिद्धो यथा परिणामी शब्दश्चाक्षुषत्वात् ॥५०॥

चक्षुषा गृह्यत इति चाक्षुषस्तस्य भावश्चाक्षुषत्वं तस्मात् । अय च वादिप्रतिवादिनोरुभयोरप्यसिद्ध , श्रावणत्वाच्छब्दस्य ॥ ५० ॥

द्वितीय भेद वदन्ति–

अन्यतरासिद्धो यथा अचेतनास्तरवो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वात् ॥५१॥

ताथागतो हि तरूणामचैतन्य साधयन् विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वादिति हेतूपन्यास कृतवान् । स च जैनाना तरुचैतन्यवादिनामासिद्ध । तदागमे द्रुमेष्वपि विज्ञानेन्द्रियायुषा प्रमाणत प्रतिष्ठितत्वात् । इद च प्रतिवाद्यसिद्ध्यपेक्षयोदाहरणम् । वाद्यसिद्ध्यपेक्षया तु

अचेतना सुखादय, उत्पत्तिमत्त्वादिति। अत्र हि वादिन साख्यस्योत्पत्तिमत्त्वमप्रसिद्धम्, तेनाविर्भावमात्रस्यैव सर्वत्र स्वीकृतत्वात्।

नन्वित्थमसिद्धप्रकारप्रकाशनं परैश्चक्रे– स्वरूपेणासिद्ध, स्वरूप वाऽसिद्ध यस्य सोऽय स्वरूपासिद्ध, यथा अनित्य शब्द, चाक्षुषत्वादिति। ननु चाक्षुषत्व रूपादावस्ति, तेनास्य व्यधिकरणासिद्धत्व युक्तम्, न, रूपाद्यधिकरणत्वेनाप्रतिपादितत्वात्। शब्दधर्मिणि चोपदिष्ट चाक्षुषत्व न स्वरूपतोऽस्तीति स्वरूपासिद्धम्। विरुद्धमधिकरण यस्य स चासावसिद्धश्चेति व्यधिकरणासिद्धो यथा, अनित्य शब्द, पटस्य कृतकत्वादिति। ननु शब्देऽपि कृतकत्वमस्ति, सत्य, न तु तथा प्रतिपादितम्। नचान्यत्र प्रतिपादितमन्यत्र सिद्ध भवति। मीमासकस्य वा कुर्वतो व्यधिकरणासिद्धम्। २। विशेष्यमसिद्ध यस्यासौ विशेष्यासिद्धो यथा, अनित्य शब्द, सामान्यवत्त्वे सति चाक्षुषत्वात्। ३। विशेषणासिद्धो यथा, अनित्य शब्द, चाक्षुषत्वे सति सामान्यवत्त्वात्। ४। पक्षैकदेशासिद्धपर्याय पक्षभागेऽसिद्धत्वात् भागासिद्धो यथा, अनित्य शब्द, प्रयत्नानन्तरीयकत्वात्। ननु च वाद्यादिसमुत्थशब्दानामपीश्वरप्रयत्नपूर्वकत्वात् कथ भागासिद्धत्वम्?। नैतत्। प्रयत्नस्य तीव्रमन्दादिभावानन्तर शब्दस्य तथाभावो हि प्रयत्नानन्तरीयकत्व विवक्षितम्। नचेश्वरप्रयत्नस्य तीव्रादिभावोऽस्ति, नित्यत्वात्। अनभ्युपगतेश्वरं प्रति वा भागासिद्धत्वम्। ५। आश्रयासिद्धो यथा, अस्ति प्रधानं, विश्वस्य परिणामिकारणत्वात्। ६। आश्रयैकदेशासिद्धो यथा, नित्या प्रधानपुरुषेश्वरा, अकृतकत्वात्। अत्र जैनस्य पुरुष सिद्धो न प्रधानेश्वरौ। ७। सन्दिग्धाश्रयासिद्धो यथा, गोत्वेन सन्दिह्यमाने गवये आरण्यकोऽय गौ, जनदर्शनोत्पन्नत्रासत्वात्। ८। सन्दिग्धाश्रयैकदेशासिद्धो यथा, गोत्वेन सन्दिह्यमाने गवये गवि च आरण्यकावेतौ गावौ, जनदर्शनोत्पन्नत्रासत्वात्। ९। आश्रयसन्दिग्धवृत्त्यसिद्धो यथा, आश्रयहेत्वो स्वरूपनिश्चये आश्रये हेतुवृत्तिसशये मयूरवानय प्रदेश, केकायितोपेतत्वात्। १०। आश्रयैकदेशसन्दिग्धवृत्त्यसिद्धो यथा, आश्रयहेत्वो स्वरूपनिश्चये सत्येवाश्रयैकदेशे हेतुवृत्तिसशये मयूरवन्तावेतौ सहकारकर्णिकारौ, तत-

एव । ११ । व्यर्थविशेषणासिद्धो यथा, अनित्यः शब्दः, सामान्यवत्त्वे सति कृतकत्वात् । १२ । व्यर्थविशेष्यासिद्धो यथा, अनित्यः शब्दः, कृतकत्वे सति सामान्यवत्त्वात् । १३ । सन्दिग्धासिद्धो यथा, धूमबाष्पादिविवेकानिश्चये कश्चिदाह —वह्निमानयं प्रदेशः, धूमवत्त्वात् । १४ । संदिग्धविशेष्यासिद्धो यथा, अद्यापि रागादियुक्तः कपिलः, पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात् । १५ । संदिग्धविशेषणासिद्धो यथा, अद्यापि रागादियुक्तः कपिलः, सर्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वात् । १६ । एकदेशासिद्धो यथा, प्रागभावो वस्तु, विनाशोत्पादधर्मकत्वात् । १७ । विशेषणैकदेशासिद्धो यथा, तिमिरमभावस्वभावं, द्रव्यगुणकर्मातिरिक्तत्वे सति कार्यत्वात् । अत्र जैनान् प्रति तिमिरे द्रव्यातिरेको न सिद्धः । १८ । विशेष्यैकदेशासिद्धो यथा, तिमिरमभावस्वभावं, कार्यत्वे सति द्रव्यगुणकर्मातिरिक्तत्वात् । १९ । संदिग्धैकदेशासिद्धो यथा, नायं पुरुषः सर्वज्ञः, रागवक्तृत्वोपेतत्वात् । अत्र लिङ्गादनिश्चिते रागित्वे सन्देहः । २० । संदिग्धविशेषणैकदेशासिद्धो यथा, नायं पुरुषः सर्वज्ञः, रागवक्तृत्वोपेतत्वे सति पुरुषत्वात् । २१ । सन्दिग्धविशेष्यैकदेशासिद्धो यथा, नायं पुरुषः सर्वज्ञः, पुरुषत्वे सति रागवक्तृत्वोपेतत्वात् । २२ । व्यर्थैकदेशासिद्धो यथा, अग्निमानयं पर्वतप्रदेशः, प्रकाशधूमोपेतत्वात् । २३ । व्यर्थविशेषणैकदेशासिद्धो यथा, गुणः शब्दः, प्रमेयत्वसामान्यवत्त्वे सति बाह्यैकेन्द्रियग्राह्यत्वात् । अत्र बाह्यैकेन्द्रियग्राह्यस्यापि रूपत्वादिसामान्यस्य गुणत्वाभावाद्व्यभिचारपरिहाराय सामान्यवत्त्वे सतीति सार्थकम्, प्रमेयत्वं तु व्यर्थम् । २४ । व्यर्थविशेष्यैकदेशासिद्धो यथा, गुणः शब्दो बाह्यैकेन्द्रियग्राह्यत्वे सति प्रमेयत्वसामान्यवत्त्वात् । २५ । एवमन्येऽप्येकदेशासिद्ध्यादिद्वारेण भूयासोऽसिद्धभेदाः स्वयमभ्यूह्य वाच्याः । उदाहरणेषु चैतेषु दूषणान्तरस्य सम्भवतोऽप्यप्रकृतत्वादनुपदर्शनम् । त एते भेदा भवद्भिः कथं नाभिहिताः ? ॥

उच्यते । एतेषु ये हेत्वाभासतां भजन्ते, ते यदोभयवाद्यसिद्धत्वेन विवक्ष्यन्ते, तदोभयासिद्धेऽन्तर्भवन्ति । यदा त्वन्यतरासिद्धत्वेन तदाऽन्यतरासिद्ध इति । व्यधिकरणासिद्धस्तु हेत्वाभासो न भवत्येव ।

व्यधिकरणादपि पित्रोर्ब्राह्मण्यात्पुत्रे ब्राह्मण्यानुमानदर्शनात्, नटभटादीनामपि ब्राह्मण्य कस्मान्नाय साधयतीति चेत् । पक्षधर्मोऽपि पर्वतद्रव्यता, तत्र चित्रभानु किमिति नानुमापयति ? इति समानम्, व्यभिचाराच्चेत्, तदपि तुल्यम्। तत्पित्रोर्ब्राह्मण्य हि तद्गमकम्। एवं तर्हि प्रयोजकसबन्धेन सबद्धो हेतु कथ व्यधिकरण ? इति चेत्। ननु यदि साध्याधिगमप्रयोजकसबन्धाभावाद्वैयधिकरण्यमुच्यते । तदानीं संमतमेवैतदस्माक दोष, किन्तु प्रमेयत्वादयोऽपि व्यधिकरणा एव वाच्या, स्युर्न व्यभिचार्यादय । तस्मात्पक्षान्यधर्मत्वाभिधानादेव व्यधिकरणो हेत्वाभासस्ते सम्मत, स चागमक इति नियम प्रत्याचक्ष्महे। अथ प्रतिमोहशक्त्याऽन्यथाभिधानेऽपि ब्राह्मणजन्यत्वादित्येव हेत्वर्थे प्रतिपद्य साध्य प्रतिपद्यते इति चेदेवं तर्हि प्रतिमोहशक्त्यैव पटस्य कृतकत्वादित्यभिधानेऽपि पटस्य कृतकत्वादनित्यत्व दृष्टम्, एव शब्दस्यापि तत एव तदस्त्विति प्रतिपत्तौ नायमपि व्यधिकरण स्यात्, तस्माद्यथोपात्तो हेतुस्तथैव तद्गमकत्वं चिन्तनीयम् । नच यस्मात्पटस्य कृतकत्व तस्मात्तदन्येनाप्यनित्येन भवितव्यमित्यस्ति व्याप्ति । अतोऽसौ व्यभिचारादेवागमक । एव काककार्ष्ण्यादिरपि। कथ वा व्यधिकरणोऽपि जलचन्द्रो नभश्चन्द्रस्य, कृत्तिकोदयो वा शकटोदयस्य गमक स्यात् ? इति नास्ति व्यधिकरणो हेत्वाभास ।आश्रयासिद्धताऽपि न युक्ता। अस्ति सर्वज्ञ, चन्द्रोपरागादिज्ञानान्यथाऽनुपपत्तेरित्यादेरपि गमकत्वनिर्णयात्। कथमत्र सर्वज्ञधर्मिण सिद्धि ? इति चेत्, असिद्धिरपि कथमिति कथ्यताम् ?। प्रमाणागोचरत्वादस्येति चेत्, एव तर्हि तवापि तत्सिद्धि कथ स्यात् ?। ननु को नाम सर्वज्ञधर्मिणमभ्यधात्, येनैष पर्यनुयोग सोपयोग स्यादिति चेत् । नैवम्। प्रमाणागोचरत्वादित्यत सर्वज्ञो धर्मी न भवतीति सिषाधयिषितत्वात्। अन्यथेदमम्बर प्रति निशिततरतरवारिव्यापारप्राय भवेत ।

एव च-

आश्रयासिद्धता तेऽनुमाने न चेत्, साऽनुमाने मदीये तदा किं भवेत् ?।
आश्रयासिद्धता तेऽनुमानेऽस्ति चेत्,साऽनुमाने मदीये तदा किं भवेत् ?।

यदि त्वदीयानुमानेनाश्रयासिद्धिरस्ति तदा प्रकृतेऽप्यसौ मा भूद्,